

॥ श्रीगणेशाय नमः ॥

# अथ ब्रह्मपुराणं प्रारभ्यते ॥

महर्षि श्रीवेदव्यासकृतं ॥

——०※०※०——

## ॐ नमो भगवते वासुदेवाय ॥

यस्मात्सर्वमिदं प्रपञ्चरचितं मायाजगज्जायते यस्मिंस्तिष्ठति लीयते तु समये कल्पानुकल्पे पुनः ॥ यंध्यात्वा मुनयः प्रपञ्चरहितं विन्दन्ति मोक्षं ध्रुवं तम्वन्दे पुरुषोत्तमाख्यममलं नित्यं विभुं निश्चलम् ॥ १ ॥ यंध्यायन्ति बुधाः समाधिसमये शुद्धं वियत्सन्निभं नित्यानन्दपदं प्रपन्नममलं सर्वेश्वरं निर्गुणं ॥ व्यक्ताव्यक्तपरं प्रपंचरहितं ध्यानैकगम्यं विभुं तं संसारविनाशहेतुमजरं वन्दे हरिं मुक्तिदम् ॥२॥ सुपुण्ये नैमिषारण्ये पवित्रे च मनोहरे ॥ नानामुनिजनाकीर्णे नानापुष्पोपशोभिते ॥३ शालैश्चकर्णिकारैश्च पनसैर्द्धवखादिरैः ॥ आम्रजम्बूकपित्थैश्च न्यग्रोधैर्देवदारुभिः ॥ ४ ॥ अश्वत्थैः पारिजातैश्च चन्दनागुरुपाटलैः ॥ वकुलैः सप्तपर्णैश्च पुन्नागैर्नागकेशरैः ॥५॥ शालैस्तालैस्तमालैश्च नारिकेलैस्तथार्जुनैः ॥ अन्यैश्च वृक्षभिर्दिव्यैश्चम्पकाद्यैश्च शोभिते ॥६॥ नाना पक्षिगणाकीर्णे नानामृगगणैर्युते ॥ नानाजलाशयैः पुण्यैर्दीर्घिकाद्यैरलंकृते ॥७॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च जातिभिः ॥ वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः ॥८॥ सम्पन्नैर्गोकुलैश्चैव

सर्वत्रसमलंकृते ॥ यत्रगोधूमचणकै र्माषमुद्गतिलेक्षुभिः ॥९॥ शा
लिभिश्चतथामेध्यैः सस्यैर्धान्यैश्च शोभिते ॥ तत्रदीप्तेहुतवहे हूयमाने
महामखे ॥ १० ॥ यजतां नैमिषेयाणां सत्रेद्वादश वार्षिके ॥ आज
ग्मु स्तत्र मुनय स्तथान्येपि द्विजातयः ॥ ११ ॥ तानागतान् द्विजां
स्तेतु पूजाञ्चक्रुर्यथोदिताम् ॥ तेषुतत्रोपविष्टेषु ऋत्विग्भिः सहितेषु
च ॥१२॥ तत्राजगामसूतस्तु मतिमांल्लोमहर्षणः ॥ तंदृष्ट्वातेमुनि
वराः पूजाञ्चक्रुर्मुदान्विताः ॥१३॥ सोपितान्प्रतिपूज्यैवसम्विवेश
वरासने ॥ कथाञ्चक्रु स्तदान्योन्यं सूतेनसहिता द्विजाः ॥ १४ ॥
कथा न्तेवैव्यासशिष्यं पप्रच्छुःसंशयंमुदा ॥ ऋत्विग्भिः सहिताः सर्वे
सदस्यैःसह दीक्षिताः ॥१५॥ मुनयऊचुः ॥ पुराणागमशास्त्राणि से
तिहासानि सत्तम ॥ जानासि देवदैत्यानां चरितं जन्मकर्मच ॥१६॥
न तेस्त्यविदितं किञ्चि द्देवेशास्त्रेचभारते ॥ पुराणे मोक्षशास्त्रेच
सर्व्वज्ञोसिमहामते ॥१७॥ यथापूर्व्व मिदंसर्व्व मुत्पन्नंसचराचरं ॥
ससुरासुरगन्धर्व्व सयक्षोरगराक्षसम् ॥१८॥ श्रोतुमिच्छामहे सूत
ब्रूहिसर्वं यथाजगत् ॥ बभूवभूयश्चयथा महाभागभविष्यति ॥ १९ ॥
यतश्चैवजगत्सूतं यत श्चैवचराचरम् ॥ लयमासीत्तथायत्र लयमेष्यति
यत्र च ॥२०॥ लोमहर्षणउवाच ॥ अविकाराय शुद्धाय नित्याय
परमात्मने ॥ सदैकरूपरूपाय विष्णवे सर्व्वजिष्णवे ॥२१॥ नमो
हिरण्यगर्भाय हराय शङ्कराय च ॥ वासुदेवायताराय सर्गस्थित्य
न्तकर्मणे ॥२२॥ एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ॥ अव्य

क्ताव्यक्तभूताय विष्णवेमुक्तिहेतवे ॥२३॥ सर्गस्थितिविनाशानां ज
गतो योजगन्मयः॥ मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥२४॥
आधारभूतंविश्वस्य महतस्ताप्यणीयसः॥ प्रणम्यसर्व्वभूतस्य मच्युतं
पुरुषोत्तमं॥२५॥ ज्ञानस्वरूप मत्यन्तं निर्मलम्परमार्थतः॥ तमेवार्थ
स्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥२६॥ विष्णुंग्रसिष्णुं विश्वस्य स्थिति
सर्गं तथा प्रभुं॥ सर्व्वज्ञं जगतामीश मजमक्षय मव्ययम्॥२७॥ आद्यं
सूक्ष्म ञ्च विश्वेशं ब्रह्मादीन्प्रणिपत्यवै॥ इतिहासपुराणज्ञं वेदवेदा
ङ्गपारगम्॥२८॥ सर्वशास्त्रार्थतत्त्वज्ञं पराशरसुतं प्रभुम्॥ गुरुंप्र
णम्य वक्ष्यामि पुराणन्वेदसम्मितम्॥२९॥ कथयामियथा पूर्वं दक्षाद्यै
र्मुनिसत्तमैः॥ पृष्टः प्रोवाच भगवा नब्जयोनिः पितामहः॥३०॥ शृ
णुध्वंसंप्रवक्ष्यामि कथांपापप्रमोचिनीं॥ कथ्यमानां मयाचित्रां बहू
र्थां श्रुतिविस्तरां॥३१॥ यस्त्वेमांधारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः॥
स्ववंशधारणंकृत्वा स्वर्गलोकेमहीयते॥३२॥ अव्यक्तंकारणंयत्तन्नित्यं
सदसदात्मकम्॥ प्रधानंपुरुषंतस्मा न्निर्ममे विश्वमीश्वरः॥३३॥
तम्बुद्ध्यध्वंमुनिश्रेष्ठा ब्रह्माण ममितौजसं॥ स्रष्टारंसर्व्वभूताना मजं
नारायणम्परम्॥ अहंकारस्तु महत स्तस्मा द्भूतानिजज्ञिरे॥ भूत
भेदाश्च भूतेभ्य इतिसर्गः सनातनः॥३५॥ विस्तारावयव ञ्चैव यथा
प्रज्ञंयथाश्रुतं॥ कीर्त्यमानंशृणुध्वम्वः सर्वेषांकीर्त्तिवर्द्धनं॥३६॥ कीर्त्त
नं स्थिरकीर्त्तीनां सर्वेषांपुण्यकर्मणां॥ ततःस्वयम्भूर्भगवा न्सिसृक्षुर्वि
विधाः प्रजाः॥३७॥ अपएव ससर्ज्जादौ तासु वीर्य्य मवासृजत्॥

आपोनारा इतिप्रोक्ता आपोवै नरसूनवः ॥३८॥ अयनन्तस्य ताः पू
र्वं तेन नारायणः स्मृतः ॥ हिरण्यवर्णमभवत्तदण्डमुदकेशयम् ॥३९
तत्रजज्ञे स्वयंब्रह्मा स्वयम्भूरिति नः श्रुतं ॥ हिरण्यगर्भो भगवा नु
षित्वा परिवत्सरम् ॥४०॥ तदण्डमकरोद्द्वैधं दिवं भुवमथापिच ॥
तयोः शकलयोर्मध्ये आकाशमकरोत्प्रभुः ॥४१॥ अप्सु पारिप्लवां पृ
थ्वीं दिशश्च दशधा दधे ॥ तत्र कालं मनोवाचं कामं क्रोध मथो र
तिम् ॥४२॥ ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन्प्रजापतीन् ॥ मरीचि
मत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ॥४३॥ वशिष्ठञ्च महातेजाः सोऽसृ
जत्सप्तमानसान् ॥ सप्तब्रह्माण इत्येते पुराणे निश्चयं गताः ॥४४॥ ना
रायणात्मकानान्तु सप्तानां ब्रह्मजन्मनां ॥ ततोऽसृजत्पुरा ब्रह्मा रु
द्रं रोषात्मसम्भवं ॥४५॥ सनत्कुमारञ्च विभुं पूर्वेषा मपि पूर्व्वजं ॥
सप्तस्वेता अजायन्त प्रजा रुद्राश्च भोद्विजाः ॥४६॥ स्कन्दः सनत्कु
मारश्च तेजः संक्षिप्य तिष्ठतः ॥ तेषां सप्तमहावंशा दिव्या देवगणा
न्विताः ॥४७॥ क्रियावन्तः प्रजावन्तो महर्षिभिरलंकृताः ॥ विद्युतो
ऽशनिमेघांश्च रोहितेन्द्रधनूंषिच ॥४८॥ वयांसिच ससर्जादौ पर्ज
न्यञ्च ससर्ज्जह ॥ ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये ॥४९॥
साध्यानन्यां स्तथा देवा नित्येव मनुशुश्रुम ॥ उच्चावचानि भूतानि
गात्रेभ्य स्तस्य जज्ञिरे ॥५०॥ आपवस्य प्रजा सर्गं सृजतोपि प्रजाप
तेः ॥ द्विधा कृत्वात्मनो देह मर्द्धेन पुरुषोऽभवत् ॥५१॥ अर्द्धेन नारी
तस्यान्तु सोऽसृजत् द्विविधाः प्रजाः ॥ दिवञ्च पृथिवीञ्चैव महिम्ना

न्याप्य तिष्ठतः ॥५२॥ विराजमसृजद्विष्णुः सोऽसृजत्पुरुषं विरा
ट् ॥ पुरुषन्तं मनुं विद्यात्तस्य मन्वन्तरं स्मृतं ॥५३॥ द्वितीयस्मानस
स्यैतन्मनोरन्तरमुच्यते ॥ सवै राजः प्रजासर्गं ससर्ज्ज पुरुषं प्रभुः ॥५४
नारायणविसर्गस्य प्रजास्तस्याप्ययोनिजाः ॥ आयुष्मान्कीर्त्तिमान्
धन्यः प्रजावांश्च भवेन्नरः॥५५॥ आदिसर्गं विदित्वेमं यथेष्टां चाप्नुया
द्गतिं ॥५६॥ लोमहर्षण उवाच ॥ सिसृक्षुस्तु प्रजास्त्वेव मापवोवै प्र
जापतिः॥ लेभेवै पुरुषः पत्नीं शतरूपामयोनिजां ॥५७॥ आपवस्य
महिम्नातु दिवमावृत्य तिष्ठतः॥ धर्मेणैव मुनिश्रेष्ठाः शतरूपा व्यजा
यत ॥५८॥ सातु वर्षायुतं तप्त्वा तपः परमदुश्चरं ॥ भर्त्तारं दीप्ततपसं
पुरुषं प्रत्यपद्यत ॥५९॥ सवै स्वायम्भुवो विप्राः पुरुषो मनुरुच्यते ॥
तस्यैकसप्ततियुगं मन्वन्तरमिहोच्यते ॥६०॥ वैराजात्पुरुषाद्वीरं श
तरूपा व्यजायत ॥ प्रियव्रतोत्तानपादौ वीरात्काम्याव्यजायत ॥६१॥
काम्यानाम मुनिश्रेष्ठाः कर्द्दमस्य प्रजापतेः॥ काम्यापुत्रास्तु चत्वारः
सम्राट् कुक्षि र्विराट् प्रभुः ॥ ६२॥ उत्तानपादं जग्राह पुत्रमत्रिः
प्रजापतिः ॥ उत्तानपादाच्चतुरः सूनृता सुषुवे सुतान् ॥६३॥ धर्मस्य
कन्या सुश्रोणी सूनृतानामविश्रुता ॥ उत्पन्ना वाजिमेधेन ध्रुवस्य ज
ननी शुभा॥६४॥ ध्रुवञ्च कीर्त्तिमन्तञ्च आयुष्मन्तं वसुं तथा॥ उत्ता
नपादोऽजनयत्सूनृतायां प्रजापतिः॥६५॥ ध्रुवो वर्षसहस्राणि त्रीणि
दिव्यानि भोद्विजाः ॥ तपस्तेपे महाभागः प्रार्थयन्सुमहद्यशः ॥६६॥
तस्मै ब्रह्मा ददौ प्रीतः स्थानमात्मसमं प्रभुः ॥ अचलं चैव पुरतः सप्त

र्षीणां प्रजापतिः ॥६७॥ तस्याभिमानं ऋद्धिं च महिमानं निरीक्ष्य वै ॥ देवासुराणा माचार्यः श्लोकं माप्युशना जगौ ॥६८॥ अहोऽस्य तपसो वीर्यं महो श्रुतमहोऽद्भुतम् ॥ यमद्य पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥६९॥ तस्माच्छ्लिष्टिञ्च भव्यञ्च ध्रुवाच्छंभुर्व्यजायत ॥ श्लिष्टेराधत्त सुच्छाया पञ्चपुत्रानकल्मषान् ॥७०॥ रिपुं पुरञ्जयं पुत्रं वृकलं वृकतेजसं ॥ रिपो राधत्त वृहती चाक्षुषं सर्व्वतेजसं ॥७१॥ अजीजनत्पुष्करिण्यां वीरिण्यां चाक्षुषं मनुं ॥ प्रजापते रात्मजाया मरण्यस्य महात्मनः ॥७२॥ मनो रजायन्तदश नड्वलायां महौजसः ॥ कन्यायां मुनिशार्दूला वैराजस्य प्रजापतेः ॥७३॥ कुत्सः पुरुः शतद्युम्न स्तपस्वी सत्यवाक्कविः ॥ अग्निष्टुतोऽतिरात्रश्च सुद्युम्नश्चापि तेनव ॥७४॥ अभिमन्युश्च दशमो नड्वलायां महौजसः ॥ पुरो रजनयत्पुत्रान् षडाग्नेयी महाप्रभान् ॥७५॥ अंगं सुमनसं ख्यातिं क्रतुमांगिरसं गयं ॥ अंगात्सुनीथापत्यम्वै वेनमेक मजायत ॥७६॥ अपचारेण वेनस्य प्रकोपः सुमहानभूत् ॥ प्रजार्थमृषयो यस्य ममन्थुर्दक्षिणं करं ॥७७॥ वेनस्य मथिते पाणौ सम्बभूव महान्नृपः ॥ तं दृष्ट्वा मुनयः प्राहुरेषवै मुदिताः प्रजाः ॥७८॥ करिष्यति महातेजा यशश्च प्राप्स्यते महत् ॥ सधन्वी कवची जातो ज्वलज्ज्वलनसप्रभः ॥७९॥ पृथुर्वैन्यस्तदा चेमां ररक्ष क्षत्रपूर्व्वजः ॥ राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः ॥ तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ ॥८०॥ तेनेयं गौर्मुनिश्रेष्ठा दुग्धा सस्यानि भूभृता ॥ प्रजानां वृत्तिकामेन देवैः सर्षिग

णैः सह ॥ ८१ ॥ पितृभि र्द्दानवै श्चैव गन्धर्वाप्सरसांगणैः ॥ सर्प्पैः
पुण्यजनैश्चैव वीरुद्भिःपर्व्वतैस्तथा ॥८२॥ तेषुतेषुचपात्रेषु दुह्यमाना
वसुन्धरा ॥ प्रादा द्यथेप्सितंक्षीरं तेनप्राणा नधारयन् ॥८३॥ पृथोस्तु
पुत्रौ धर्म्मज्ञौ जज्ञातेऽन्तर्द्धियातिनौ ॥ शिखण्डिनीहविर्द्धान मन्त
र्द्धानाद्व्यजायत ॥८४॥ हविर्द्धानात्षडाग्नेयी धिषणाजनयत्सुतान् ॥
प्राचीनवर्हिषंशुक्लं गयंकृष्णंव्रजाजिनौ ॥८५॥ प्राचीनवर्हिर्भगवा न्म
हानासी त्प्रजापतिः ॥ हविर्द्धाना न्मुनिश्रेष्ठा येनसम्वर्द्धिताःप्रजाः
॥८६॥ प्राचीनवर्हिं र्भगवा न्पृथिवीतलचारिणः ॥ समुद्रतनयायान्तु
कृतदारोऽभवत्प्रभुः ॥८७॥ महतस्तपसःपारे सवर्णायांमहीपतिः ॥
सवर्णाधत्तसामुद्री दशप्राचीनवर्हिषः ॥ सर्व्वान्प्रचेतसो नाम धनुर्वे
दस्य पारगान् ॥८८॥ अपृथग्धर्मचरणा स्तेपुस्तेपि महत्तपः ॥ दश
वर्षसहस्राणि समुद्रसलिलेशयाः ॥८९॥ तपश्चरत्सुपृथिवीं प्रचेतस्सु
महीरुहाः ॥ अरक्ष्यमाणामावव्रु र्बभूवाथप्रजाक्षयः ॥९०॥ नाशकन्मा
रुतोवातुं वृतं समभवद्द्रुमैः ॥ दशवर्षसहस्राणि नशेकु श्चेष्टितुं प्र
जाः ॥९१॥ तदुपश्रुत्यतपसा युक्ताः सर्वेप्रचेतसः ॥ मुखेभ्योवायुमग्नि
ञ्च सहृजुर्जातमन्यवः ॥९२॥ उन्मूलानथतान्वृक्षा न्कृत्वावायुरशो
षयत् ॥ तानग्नि रदह द्घोर एवमासीद्द्रुमक्षयः ॥९३॥ द्रुमक्षयमथो
वुध्वा किञ्चिच्छिष्टेषुशाखिषु ॥ उपगम्याब्रवीदेता नथ सोमःप्रजा
पतीन् ॥९४॥ कोपंयच्छतराजानः सर्वेप्राचीन वर्हिषः ॥ वृक्षशून्या
कृता पृथ्वी शाम्येतामग्निमारुतौ ॥९५॥ रत्नभूता चकन्येयं वृक्षाणां

वरवर्णिनी ॥ भविष्यं जानता ह्यातु धृतागर्भेणवै मया ॥९६॥ मारिषा
नामकन्येषा वृक्षाणामिति निर्मिता ॥ भार्य्यावोऽस्तु महाभागाः सेयं
वंशविवर्द्धिनी ॥९७॥ युष्माकंतेजसोर्द्धेन ममचार्द्धेन तेजसा ॥ अ
स्यामुत्पत्स्यतेविद्वान् दक्षोनामप्रजापतिः ॥९८॥ स इमांदग्धभूयिष्टां
युष्मत्तेजोमयेनवै ॥ अग्निनाग्निसमोभूयः प्रजाःसंवर्द्धयिष्यति ॥९९॥
ततःसोमस्यवचना ज्जगृहुस्तेतपोधनाः ॥ संहृत्य कोपंवृक्षेभ्यः पत्नीं
धर्मेण मारिषां ॥१००॥ दशभ्यस्तुप्रचेतोभ्यो मारिषायांप्रजापतिः ॥
दक्षोयज्ञेमहातेजाः सोमस्यांशेनभोद्विजाः ॥१०१॥ अचरांश्च चरां
श्चैव द्विपदोथ चतुष्पदः ॥ स दृष्ट्वामनसादक्षः पश्चादसृजत स्त्रि
यः ॥१०२॥ ददौसदशधर्माय कश्यपायत्रयोदश ॥ शिष्टाःसोमाय रा
ज्ञे च नक्षत्राख्या ददौप्रभुः ॥१०३॥ तासुदेवाःखगागावो नागादिति
ज दानवाः ॥ गन्धर्वाप्सरसश्चैवजज्ञिरेऽन्याश्च जातयः ॥१०४॥ ततः
प्रभृति विप्रेन्द्राः प्रजा मैथुनसंभवाः ॥ सङ्कल्पाद्दर्शनात्स्पर्शा त्पूर्वेषां
प्रोच्यतेप्रजा ॥१०५॥ मुनयऊ० देवानांदानवानांच गंधर्वोरगरक्षसां ॥
संभवस्तुश्रुतोऽस्माभि र्दक्षस्यचमहात्मनः ॥१०६॥ अंगुष्ठाद्ब्रह्मणोजज्ञे
दक्षःकिलशुभव्रतः ॥ वामांगुष्ठात्तथाचैव तस्यपत्नीव्यजायत ॥१०७॥
कथंप्राचेतसत्वंसपुनर्लेभे महातपाः ॥ एतत्तुसंशयंसूत व्याख्यातुंवैत्व
मर्हसि ॥१०८॥ दौहित्रश्चैवसोमस्यकथंश्वशुरतांगतः ॥ लोमहर्षणउ०
उत्पत्तिश्चनिरोधश्च नित्यंभूतेषुभोद्विजाः ॥ ऋषयोऽत्र नमुह्यन्ति
विद्यावन्तश्च येजनाः ॥१०९॥ युगेयुगे भवन्त्यत्र सर्वे दक्षादयो नृपाः ॥

पुनश्चैव निबद्धास्ते विद्यां स्तत्र नमुञ्चति ॥११०॥ ज्यैष्ठश्रेष्ठानिष्ठश्रम
ष्येषां पूर्वं नासी द्विजोत्तमाः ॥ तपएव गरीयोऽभू त्प्रभावश्चैव कार
णम् ॥१११॥ इमां विसृष्टिं दक्षस्य योविद्यात्सचराचरां ॥ प्रजावाना
युषापूर्णः स्वर्गलोके महीयते॥११२॥ मुनयऊ० ॥ देवानां दानवाना
ञ्च गन्धर्वोरगरक्षसां॥ उत्पत्तिं विस्तरेणैव लोमहर्षणकीर्त्तय॥११३॥
लोमहर्षणउ० ॥ प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षःस्वयम्भुवा ॥ यथा
ससर्ज भूतानि तथा शृणुत भोद्विजाः ॥११४॥ मानसान्येव भूतानि
प्रजापति रथासृजत् ॥ ऋषी न्देवा न्सगन्धर्वा नसुरा न्यक्षराक्षसा
न् ॥११५॥ यदास्य मानसीतात नव्यवर्द्धत वैप्रजा ॥ तदा सञ्चिन्त्य
धर्मात्मा प्रजाहेतोः प्रजापतिः॥११६॥ समैथुनेन धर्मेण सिसृक्षुर्विवि
धाः प्रजाः ॥ असिक्नीमावहत्पत्नीं वीरणस्य प्रजापतेः ॥११७॥ सु
तां सुतपसाजुष्टां महतीं लोकधारिणीं॥ अथपुत्रसहस्राणि वैरण्यां
पञ्च वीर्य्यवान् ॥११८॥ असिक्न्यां जनयामास दक्षएव प्रजापतिः ॥
तांस्तु दृष्ट्वा महाभागा न्सम्विवर्द्धयिषू न्प्रजाः ॥११९॥ देवर्षिः प्रिय
सम्वादो नारदः प्राब्रवी दिदं ॥ नाशाय वचनं तेषां शापायैवात्मन
स्तथा ॥१२०॥ यं कश्यपः सुतवरं पारमेष्ठ्यं व्यजीजनत् ॥ दक्षस्यवै
दुहितरि दक्षशापभया न्मुनिः ॥१२१॥ पूर्वं सहि समुत्पन्नो नारदः
परमेष्ठिनः॥ असिक्न्यामथवैरण्यां भूयो देवर्षिसत्तमः॥१२२॥ तंभूयो
जनयामास पितेव मुनिपुंगवम् ॥ तेन दक्षस्य पुत्रावै हर्यश्वा इति वि
श्रुताः ॥१२३॥ निर्मथ्य नाशिताःसर्वे विधिना च नसंशयः॥ तस्योद्यत
स्तदा दक्षो नाशाया मितविक्रमः ॥१२४॥ ब्रह्मर्षीं न्पुरतः कृत्वा याचि

तःपरमेष्ठिना ॥ ततोभिसन्धिं चक्रेवै दक्षस्तु परमेष्ठिना ॥१२५॥ कन्या
यां नारदो मह्यं तवपुत्रो भवेदिति ॥ ततोदक्षः सुतांप्रादात्प्रियांस्वैप
रमेष्ठिने ॥१२६॥ सतस्यां नारदो जज्ञे भूयः शापभयादृषिः ॥१२७॥
मुनयऊ० ॥ कथं प्रणाशिताः पुत्रा नारदेन महर्षिणा ॥ प्रजापतेस्तु
भगवञ्छ्रोतुमिच्छाम तत्त्वतः ॥१२८॥ लोमहर्षणउ० ॥ दक्षस्य पुत्रा ह
र्यश्वाविवर्द्धयिषवः प्रजाः ॥ समायाता महावीर्या नारदस्तानुवाच
ह ॥१२९॥ वालिशावतयूयंवै नास्याजानीत वैभुवः ॥ प्रमाणं स्रष्टु
कामावै प्रजाः प्राचेतसात्मजाः ॥१२९॥ अन्तमूर्द्ध्वं मधश्चैव कथं स्र
क्ष्यथवै प्रजाः ॥ तेतु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशं ॥ अद्यापि
ननिवर्त्तंते समुद्रेभ्य इवापगाः ॥ १३१ ॥ हर्यश्वेष्वथ नष्टेषु दक्षः प्रा
चेतसःपुनः ॥ वैरण्यामथ पुत्राणां सहस्रमसृजत्प्रभुः ॥१३२॥ वि
वर्द्धयिषवस्तेतु शवलाश्वास्तथाप्रजाः ॥ पूर्वोक्तं वचनं तेतु नारदे
नैवचोदिताः ॥१३३॥ अन्योन्यमूचु स्तेसर्वे सम्यगाह महानृषिः ॥
भ्रातृणां पदवीं ज्ञातुं गन्तव्यं नात्र संशयः ॥१३४॥ ज्ञात्वा प्रमाणं
पृथ्व्याश्च सुखं स्रक्ष्यामहे प्रजाः ॥ तेपि तेनैव मार्गेण प्रयाताः स
र्व्वतो दिशं ॥१३५॥ अद्यापि ननिवर्त्तंते समुद्रेभ्य इवापगाः ॥ तदा
प्रभृतिवै भ्राता भ्रातुरन्वेषणेरतः ॥ प्रयातो नश्यति क्षिप्रं तन्नकार्यं
विपश्चिता ॥१३६॥ तांश्चैव नष्टान्विज्ञाय पुत्रान्दक्षःप्रजापतिः ॥
षष्टिस्ततोऽसृजत्कन्या वैरण्यामतिविश्रुताः ॥१३७॥ तास्तदाप्रति
जग्राह भार्यार्थं कश्यपःप्रभुः ॥ सोमोधर्मश्च भोविप्रा स्तथैवान्ये म
हर्षयः ॥१३८॥ ददौ सदशधर्माय कश्यपाय त्रयोदश ॥ सप्तविंशति

सोमाय चतस्रोऽरिष्टनेमिने ॥१३९॥ द्वेचैव बहुपुत्राय द्वेचैवाङ्गिरसे तथा ॥ द्वेकृशाश्वाय विदुषे तासां नामानि बोधत ॥१४०॥ अरुन्धती वसुर्यामी लम्बाभानु मरुत्वती॥ संकल्पाच मुहूर्त्ताच साध्याविश्वा चभोद्विजाः ॥१४१॥ धर्मपत्न्यो दश त्वेता स्ता स्वपत्या न्निबोधत ॥ विश्वेदेवास्तु विश्वायाः साध्या साध्या न्व्यजायत ॥१४२॥ मरुत्वत्या मरुत्वन्तो वसोस्तु वसवः स्मृताः ॥ भानोस्तु भानवः पुत्रा मुहूर्त्तास्तु मुहूर्त्तजाः ॥१४३॥ लम्बाया श्चैव घोषश्च नागवीथी च यामिजा ॥ पृथिव्याविषयं सर्वं मरुन्धत्यां व्यजायत ॥१४४॥ संकल्पायास्तु सर्वात्मा जज्ञे संकल्पएवहि ॥ नागवीथ्यां च यामिन्यां वृषतश्च व्यजायत ॥१४५॥ सराजा सोमपत्न्य स्तु दक्षः प्राचेतसो ददौ ॥ सर्वा नक्षत्र नान्म्य स्ता ज्योतिषे परिकीर्त्तिताः ॥ १४६ ॥ ये त्वन्ये ख्यातिमन्तोवै देवा ज्योतिःपुरोगमाः ॥ वसवोऽष्टौ समाख्याता स्तेषां वक्ष्यामि विस्तरम् ॥१४७॥ अपो ध्रुवश्च सोमश्च धरश्चैवानिलो नलः ॥ प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः ॥१४८॥ अपस्य पुत्रो वैतण्ड्यः श्रमः श्रान्तो मुनि स्तथा ॥ ध्रुवस्य पुत्रो भगवा न्कालो लोकान्तक स्ततः ॥१४९॥ सोमस्य भगवान्वर्चाः वर्चस्वी येन जायते ॥ धरस्य पुत्रो द्रविणो हुतहव्यवह स्तथा ॥१५०॥ मनोहरायाः शिशिरः प्राणोथरमण स्तथा ॥ अनिलस्य शिवाभार्या यस्याः पुत्रो मनोजवः ॥१५१॥ अविज्ञातगति श्चैव द्वौ पुत्रावनिलस्य च ॥ अग्निपुत्रः कुमारस्तु शरस्तम्बेषु योष्टतः ॥१५२॥ तस्य शाखो विशाख श्च नैगमेयश्च पृष्ठजः ॥ अपत्यं कृत्तिकानान्तु कार्त्तिकेय इति स्मृतः ॥१५३॥ प्रत्यूषस्य विदुः पुत्र मृषिं

नाम्नाथ देवलं ॥ द्वौपुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ॥१५४॥ बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मवादिनी ॥ योगसिद्धा जगत्कृत्स्नम सक्ता विचचार ह ॥१५५॥ प्रभासस्यतु साभार्या वसूनामष्टमस्यहि ॥ विश्वकर्मा महाभागो यस्यां जज्ञे प्रजापतिः ॥१५६॥ कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वार्द्धकिः ॥ भूषणानाञ्च सर्वेषां कर्त्ता शिल्पवतां वरः ॥१५७॥ यः सर्वेषां विमानानि देवतानाञ्चकार ॥ मानुषा श्चोपजीवन्ति यस्य शिल्पं महात्मनः ॥१५८॥ सुरभीकश्यपाद्रुद्रानेकादश विनिर्ममे ॥ महादेवप्रसादेन तपसा भाविता सती ॥१५९॥ अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च वीर्यवान् ॥ हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ॥१६०॥ वृषाकपिश्च शंभुश्च कपर्दी रैवतस्तथा ॥ मृगव्याधश्च सर्वश्च कपाली च द्विजोत्तमाः ॥१६१॥ एकादशेति विख्याता रुद्रास्त्रिभुवनेश्वराः ॥ शतं त्वेवं समाख्यातं रुद्राणाममितौजसां ॥१६२॥ पुराणे मुनिशार्दूला यैर्व्याप्तं सचराचरं ॥ दाराञ्छृणुध्वं विप्रेन्द्राः कश्यपस्य प्रजापतेः ॥१६३॥ अदिति र्दिति र्दनु श्चैव अरिष्टासुरसा तथा ॥ सुरभिर्विनता चैव ताम्राक्रोधवशाइला ॥१६४॥ कद्रु र्मुनिश्च भोविप्रा स्तास्वपत्यं न्यबोधत ॥१६५॥ पूर्वमन्वन्तरे श्रेष्ठाद्वादशासन्सुरोत्तमाः ॥ तुषितानामतेऽन्योन्यमूचुर्वै वस्वतेऽन्तरे ॥१६६॥ उपस्थितेतियशस श्चाक्षुषस्यान्तरे मनोः ॥ हितार्थं सर्वलोकानां समागम्य परस्परं ॥१६७॥ आगच्छत द्रुतं देवा अदितिं संप्रविश्यवै ॥ मन्वन्तरे प्रसूयाम स्तन्नः श्रेयो भविष्यति ॥१६८॥ लोमहर्षणउ० ॥ एवमुक्त्वातु तेसर्वे चाक्षुषस्यान्तरे मनोः ॥ मारीचा त्कश्यपाज्जातास्तेदित्यां दक्षकन्य

यां ॥ १५४ ॥ तत्रविष्णुश्चशक्रश्च जज्ञातेपनरेवहि ॥ अर्य्यमाचैव
धाताच त्वष्टापूषातथैवच ॥ १५५ ॥ विवस्वान्सविताचैव मित्रोवरु
णएवच ॥ अंशोभगश्चातितेजा आदित्याद्वादशस्मृताः ॥ १५६ ॥
चाक्षुषस्यान्तरेपूर्व्वं मासंस्तेतुषिताःसुराः ॥ वैवस्वतेन्तरेतेवै आदि
त्याद्वादशस्मृताः ॥ १५७ ॥ सप्तविंशतियाःप्रोक्ताः सोमपत्न्योमहा
व्रताः ॥ तासामपत्यान्यभवन् दीप्तान्यमिततेजसः ॥ १५८ ॥ अरि
ष्टनेमिपत्नीना मपत्यानीहषोडश ॥ बहुपुत्रस्यविदुषः स्वतस्रोविद्युतः
स्मृताः ॥ १५९ ॥ प्रत्यंगिरःसुताःश्रेष्ठा ऋचांब्रह्मर्षिसत्कृताः ॥ कृ
शाश्वस्यतुदेवर्षे र्देवप्रहरणाःसुताः ॥ १६० ॥ एतेयुगसहस्रांते जा
यन्तेपनरेवहि ॥ सर्वेदेवगणास्तत्र त्रयस्त्रिंशत्स्वकामजाः ॥ १६१ ॥
तेषामपिचभोविप्रा निरोधोत्पत्तिरुच्यते ॥ यथासूर्य्यस्यगगने उदया
स्तमनाविह ॥ १६२ ॥ एवंदेवनिकायास्ते संभवन्तियुगेयुगे ॥ दित्याः
पुत्रद्वयंजज्ञे कश्यपादितिनःश्रुतं ॥ १६३ ॥ हिरण्यकशिपुश्चैव हिर
ण्याक्षश्चवीर्य्यवान् ॥ सिंहिकाचाभवत्कन्या विप्रचित्तेःपरिग्रहः ॥
१६४ ॥ सैंहिकेयाइतिख्याताः यस्याःपुत्रामहाबलाः ॥ हिरण्यकशि
पोःपुत्रा श्चत्वारःप्रथितौजसः ॥ १६५ ॥ ह्लादश्चानुह्लादश्च प्रह्लादश्चै
ववीर्य्यवान् ॥ संह्लादश्चचतुर्थोभूत् ह्लादपुत्रोह्रदस्तथा ॥ १६६ ॥ ह्रद
स्यपुत्रोमायावी शिवःकालस्तथैवच ॥ विरोचनश्चप्राह्लादि र्बलिर्ज
ज्ञेविरोचनात् ॥ १६७ ॥ बलेःपुत्रशतंत्वासी द्बाणज्येष्टंतपोधनाः ॥
धृतराष्ट्रश्चसूर्य्यश्च चन्द्रमाश्चेन्द्रतापनः ॥ १६८ ॥ कुंभोनभोगर्दभा

षः शुचिरित्येवमादयः ॥ वाणस्तेषामतिबलो ज्येष्ठःपाशुपतोवश ॥ १६९ ॥ पुराकल्पेतुवाणेन प्रसाद्योमापतिंप्रभुं ॥ पार्श्वतोविहरिष्यामि इत्येवंयाचितोवरः ॥ १७० ॥ हिरण्याक्षसुताःपञ्च विद्वांसश्च महाबलाः ॥ झर्झरःशकुनिश्चैव भूतसन्तापनस्तथा ॥ १७१ ॥ महानाभश्चविक्रान्तः कालनाभस्तथैवच ॥ अभवन्दनुपुत्राश्च शतंतीव्रपराक्रमाः ॥ १७२ ॥ तपस्विनोमहावीर्य्याः प्राधान्येनब्रवीमितान् ॥ द्विमूर्द्धाशंकुकर्णश्च तथाहयशिराविभुः ॥ १७३ ॥ अयोमुखः शंवरश्च कपिलोवामनस्तथा ॥ मारिचिर्मेघवांश्चैव इल्वलःखमयस्तथा ॥ १७४ ॥ विक्षोभणश्चकेतुश्च केतुवीर्य्यशतह्रदौ ॥ इन्द्रजित्सर्व्वजिच्चैव वज्रनाभस्तथैवच ॥ १७५ ॥ एकचक्रोमहाबाहु स्तारकश्च महाबलः ॥ वैश्वानरःपुलोमाच विद्रावणमहासुरौ ॥ १७६ ॥ स्वर्भानुर्वृषपर्व्वाच विप्रचित्तिश्चवीर्य्यवान् ॥ सर्व्वएतेदनोःपुत्राः कश्यपादितिजज्ञिरे ॥ १७७ ॥ विप्रचित्तिप्रधानास्ते दानवाःसुमहाबलाः ॥ एतेषांयदपत्यन्तु नतच्छक्यंद्विजोत्तमाः ॥ प्रसंख्यातुंबहुत्वाच्च पुत्रपौत्रमनन्तकं ॥ १७८ ॥ स्वर्भानोस्तुप्रभाकन्या पुलोम्नस्तुशचीसुता ॥ उपदानवीहयशिराः शर्मिष्ठावार्षपर्व्वणी ॥ १७९ ॥ पुलोमाकालकाचैव वैश्वानरसुतेउभे ॥ वह्वपत्येमहासत्वे मारीचेस्तुपरिग्रहः ॥ १८० ॥ तयोःपुत्रसहस्राणि षष्टिर्दानवनन्दनात् ॥ चतुर्दशशतानन्यान् हिरण्यपुरवासिनः ॥ १८१ ॥ मारीचिर्जनयामास महतातपसान्वितः॥ पौलोमाःकालकेयाश्च दानवाश्चातिदारुणाः

॥ १८२ ॥ सिंहिकायामथोत्पन्ना विप्रचित्तेः सुतास्तथा ॥ दैत्यदानव
संयोगा ज्जातास्तीव्रपराक्रमाः ॥ १८३ ॥ सैंहिकेयाइतिख्याता स्त्र
योदशमहावलाः ॥ व्यंसः शल्यश्चवलिनौ नलश्चैवतथावलः ॥१८४॥
वातापीनमुचिश्चैव इल्वलश्चस्टपस्तथा ॥ अञ्जिकोनरकश्चैव कालना
भस्तथैवच ॥ १८५ ॥ सरमानस्तथाचैव सुरकल्पश्चवीर्यवान् ॥ सूक
श्चैव तुहुंडश्चह्रदपुत्रौ वभूवतुः ॥ १८६ ॥ मारीचःसुन्दपुत्रस्तु ता
टकायांव्यजायत ॥ एतेवैदानवश्रेष्ठा दनोर्वंशविवर्द्धनाः ॥ १८७ ॥
तेषांपुत्राश्चपौत्राश्च शतशोथसहस्रशः ॥ संहादस्यतुदैत्यस्य निवा
तकवचाःकुले ॥ १८८ ॥ समुत्पन्नाः सुमहता तपसाभावितात्मनः ॥
वैद्युताःसुमहाभागा स्ताम्रायांपरिकीर्तिताः ॥ १८९ ॥ तिस्रःको
ट्यःसुतास्तेषां मणिमत्यांनिवासिनः ॥ अवध्यास्तेपिदेवाना मर्जु
नेननिपातिताः ॥ १९० ॥ क्रौचीचश्येनीभासीच सुग्रीवींसुचिगृध्रि
का ॥ क्रौचीतुजनयामास उलूकप्रत्युलूककान् ॥ १९१ ॥ श्येनीश्ये
नान्तथाभासी भासानुगृध्रांश्चगृध्र्यपि ॥ शुचिरौदकान्पक्षिगणा
न्सुग्रीवीतुद्विजोत्तमाः ॥ १९२ ॥ अश्वानुष्ट्रानुगर्दभांश्चताम्रावंशाः
प्रकीर्तिताः ॥ विनतायाश्चपुत्रौद्वौ अरुणोगरुडस्तथा ॥ १९३ ॥
सुपर्णःपततांश्रेष्ठो दारुणःस्वेनकर्मणा ॥ सुरसायाःसहस्रन्तु सर्पा
णाममितौजसां ॥ १९४ ॥ अनेकशिरसांविप्राः खेचराणां महौज
सां ॥ काद्रवेयास्तुवलिनः सहस्रंत्वमितौजसां ॥ १९५ ॥ सुपर्णव
शगानागा जज्ञिरेनैकमस्तकाः ॥ येषांप्रधानाःशततंशेषवासुकितत

काः ॥ १९६ ॥ ऐरावतोमहापद्मः कम्बलाश्वतरावुभौ ॥ एलापत्र
श्च शंखश्च कर्कोटक धनञ्जयौ ॥ १९७॥ महानील महाकर्णौ
धृतराष्ट्रवलाहकौ ॥ कुहरःपुष्पदंष्ट्रश्च दुर्मुखः सुमुखस्तथा ॥ १९८॥
शंखश्चशंखपालश्च कपिलो मानसस्तथा ॥ नहुषः शंखरोमाच
मणिरित्येवमादयः ॥ १९९ ॥ तेषां पुत्राश्च पौत्राश्च शतशोथ सह
स्रशः ॥ चतुर्दश सहस्राणि क्रूराणां मनिलाशिनां ॥ २०० ॥ गणं
क्रोध वशंविप्रा स्तस्यसर्व्वेच दंष्ट्रिणः ॥ स्थलपक्षिणो जलचराश्च ध
रायाः प्रसवाःस्मृताः ॥ २०१ ॥ गास्तुवै जनयामास सुरभि र्महिषी
स्तथा ॥ इराश्चलता वल्लस्तृणजातीश्च सर्व्वशः ॥ २०२ ॥ खसा
तु यक्षरक्षांसि मुनि रप्सरसस्तथा ॥ अरिष्टातु महासत्वान् गन्ध
र्वा नमितौजसः ॥ २०३ ॥ एतेकश्यप दायादाः कीर्तिताः स्थाणु
जङ्गमाः ॥ येषां पुत्राश्च पौत्राश्च शतशोथ सहस्रशः ॥ २०४ ॥ ए
षमन्वन्तरे विप्रासर्गः स्वारोचिषे स्मृतः ॥ वैवस्वतेति महति वार
णे वितनेक्रतौ ॥ २०५ ॥ जुह्वानस्य ब्रह्मणांवै प्रजासर्गं इहोच्यते ॥
पूर्व्वंयत्र समुत्पन्नान् ब्रह्मर्षीन् सप्तमानसान् ॥ २०६ ॥ पुत्रत्वे कल्प
यामास स्वयमेव पितामहः ॥ ततो विरोधे देवानां दानवानां च
भो द्विजाः ॥ २०७ ॥ दिति विंनष्ट पुत्रावै तोषयामास कश्यपं ॥
कश्यपस्तु प्रसन्नात्मा सम्यगाराधितस्तया ॥ २०८ ॥ वरेण छन्द
यामास सा च वव्रे वरं तदा ॥ पुत्रमिन्द्र वधार्थाय समर्थममितौ
जसं ॥ २०९ ॥ स च तस्यै वरं प्रादात्प्रार्थितः सुमहा तपाः ॥ द

त्वा च वरमव्ययो मारीचस्तामभाषत ॥ २१० ॥ इन्द्रं पुत्रो निह
न्ता ते गर्भं वै शरदां शतं ॥ यदि धारयसे शौच तत्पराव्रतमास्थि
ता ॥ २११ ॥ तथेत्यभिहितो भक्त्या तया देव्या महातपाः ॥ धार
यामास गर्भन्तु शुचिः सा मुनि सत्तमाः ॥ २१२ ॥ ततोऽभ्युपगमा
द्दित्यां गर्भमाधाय कश्यपः ॥ रोचयद्वै गणश्रेष्ठं देवाना ममितौज
सां ॥ २१३ ॥ तेजःसंहृत्य दुर्द्धर्ष मवध्यममरैरपि ॥ जगाम पर्व्वता
यैव तपसेसंशितव्रतः ॥२१४॥ तस्य स्चैवांतरप्रेप्सु रभवत्पाकशासनः॥
जातेवर्षशते चास्यादददर्शांतर मच्युतः ॥ २१५ ॥ अकृत्वा पाद
योःशौचं दितिःशयनमाविशत् ॥ निद्रा चाहारयामास तस्याःकुक्षिं
प्रविश्यसः ॥ २१६ ॥ वज्रपाणिस्ततोगर्भं सप्तधातंन्य कृंतयत् ॥ सपा
त्यमानो गर्भोथ वज्रेण प्ररुरोदह ॥ २१७ ॥ मारोदीरिति तंवा
लं शक्रःपुनरथाब्रवीत् ॥ सोऽभवत्सप्तधा गर्भः तमिन्द्रो रुषितःपुनः
॥ २१८ ॥ एकैकं सप्तधाचक्रे वज्रेणैवारि कर्षणः ॥ मरुतोनाम ते
वाला वभूवुर्द्दिजसत्तमाः ॥ २१९ ॥ यथाक्तंवै मघवता तथैवमरुतोऽ
भवन् ॥ देवाश्चैकोनपंचाश त्सहाया वज्रपाणिनः ॥ २२० ॥ तेषा
मेव प्रवृत्तानां भूतानां द्विजसत्तमाः ॥ रोचयन्वै गणश्रेष्ठं देवाना
ममितौजसां ॥ २२१ ॥ निकाये षु निकाये षु हरिःप्रादा त्प्रजा
पतिं ॥ क्रमश स्तानि राज्यानि पृथु पूर्व्वाणि भो द्विजाः ॥
२२२ ॥ स हरिः पुरुषो वीरः कृष्णो विष्णुः प्रजापतिः ॥ पर्ज
न्य स्तपनोव्यक्त स्तस्य सर्व मिदं जगत् ॥ २२३ ॥ भूतसर्ग मिदं

सम्य ग्ज्ञानतो द्विज सत्तमाः ॥ नास्तिभय मस्तीह परलोक
भयंकुतः ॥ २२४ ॥

इत्यादि ब्रह्मपुराणे देवासुराणा मुत्पत्तिर्नाम
प्रथमोऽध्यायः १ ॥

---

लोमहर्षण उवाच॥ अभिषिंच्याधिराजेन्द्रं पृथुंवैन्यं पितामहः॥
ततःक्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ॥ १ ॥ द्विजानां वीरुधां चै
व नक्षत्रग्रहयोस्तथा ॥ यज्ञानां तपसांचैव सोमंराज्येऽभिषेचयत् ॥
२ ॥ अपान्तु वरुणंराज्ये राज्ञांवै श्रवणंपतिं ॥ आदित्यानां तथा
विष्णुं वसूनामथपावकं ॥ ३ ॥ प्रजापतीनां दक्षंतु मरुतामथ वास
वं ॥ दैत्यानां दानवानांवै प्रल्हाद ममितौजसं ॥ ४ ॥ वैवस्वतं पि
तॄणांवै यमंराज्ये भ्यषेचयत् ॥ यक्षाणां राक्षसानांच पार्थिवानां त
थैवच ॥ ५ ॥ सर्वभूतपिशाचानां गिरिशं शूलपाणिनं ॥ शैलानां
हिमवन्तंच नदीनामथ सागरं ॥ ६ ॥ गन्धर्व्वाणा मधिपतिं चक्रे
चित्ररथंप्रभुं ॥ नागानां वासुकिंचक्रे सर्पाणामथ तक्षकं ॥ ७ ॥
वारणानान्तु राजान मैरावत मथादिशत् ॥ उच्चैःश्रवस मश्वानां
गरुडंचैव पक्षिणां ॥ ८ ॥ मृगाणामथ शार्दूलं गोवृषंतु गवांपतिं॥
वनस्पतीनां राजानं प्लक्षमेवाभिषेचयत् ॥ ९ ॥ एवंविभज्य राज्या
नि क्रमेणच पितामहः ॥ दिशापालानथ ततः स्थापयामास सप्र
भुः ॥ १० ॥ पूर्वस्यांदिशि पुत्रंवै वैराजस्य प्रजापतेः ॥ दिशापालं

सुधन्वानं राजानं सोऽभ्यषेचयत्॥ ११॥ दक्षिणस्यां महात्मानं क र्द्दमस्य प्रजापतेः॥ पुत्रं शंखपदंनाम राजानं सोऽभ्यषेचयत्॥ १२॥ पश्चिमस्यान्दिशितथा रजसः पुत्रमच्युतं॥ केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत्॥ १३॥ तथाहिरण्यरोमाणं पर्ज्जन्यस्य प्रजापतेः॥ उदीच्यान्दिशि दुर्द्धर्षं राजानं सोऽभ्यषेचयत्॥ १४॥ तैरियं पृथिवी सर्व्वा सप्तद्वीपा सपत्तना॥ यथाप्रदेशमद्यापि ध र्म्मेण प्रतिपाल्यते॥ १५॥ राजसूये भिषिक्तस्तु पृथुरेभिर्नराधि पैः॥ वेददृष्टेन विधिना राजराज्ये नराधिपः॥ १६॥ ततोमन्वन्त रेऽतीते चाक्षुषेऽमिततेजसि॥ वैवस्वताय मनवे पृथिव्यां राज्य मादिशत्॥ १७॥ तस्यविस्तरमाख्यास्ये मनोर्वैवस्वतस्यह॥ भव तामनुकूल्याय यदिश्रोतु मिहेच्छथ॥ १८॥ महदेतदधिष्ठानं पुराणे परिनिष्ठितं॥ मुनयऊचुः॥ विस्तरेण पृथोर्जन्म लोमहर्ष ण कीर्त्तय॥ १९॥ यथा महात्मनातेन दुग्धाचेयं वसुन्धरा॥ य थाच पितृभिर्दुग्धा यथादेवैर्यथर्षिभिः॥ २०॥ यथादैत्यैश्च नागै श्च यथायक्षै र्यथाद्रुमैः॥ यथाशैलैः पिशाचैश्च गन्धर्वैश्च द्विजोत्तमैः॥ २१॥ राक्षसैश्च महासत्त्वै र्यथादुग्धा वसुन्धरा॥ तेषांपात्र विशे षांश्च वक्तुमर्हसि सुव्रत॥ २२॥ वत्सान्क्षीर विशेषांश्च दोग्धार मनुपूर्व्वशः॥ यस्माच्च कारणात्पाणि र्वेनस्य मथितःपुरा॥ २३॥ क्रुद्धैर्महर्षिभिस्तात कारणं तच्चकीर्त्तय॥ लोमहर्षण उवाच॥ शृ णुध्वं कीर्त्तयिष्यामि पृथोर्वैन्यस्य विस्तरम्॥ २४॥ एकाग्राः प्रय

तास्त्वैव शृणुध्वंवै द्विजोत्तमाः ॥ नाशुचैः क्षुद्रमनसो नाभिष्यस्याब्र तस्यचा ॥ २५ ॥ कीर्त्तयेयदिदं विप्राः कृतप्राया हितायच ॥ स्वर्ग्यं यशस्यमायुष्यं धन्यंवेदैस्त सम्मितम् ॥ २६ ॥ रहस्यमृषिभिः प्रोक्तं शृणुध्वंवै यथातथा ॥ यस्त्वैनं कथयेन्नित्यं पृथ्वांवैनस्य विस्तरं ॥ २७ ॥ ब्राह्मणेभ्यो नमस्कृत्य नमश्चेन्द्रकारकृतम् ॥ आसीद्धर्मस्य संगोप्ता पूर्वमत्रिसमः प्रभुः ॥ २८ ॥ अत्रिवंशे समुत्पन्न स्त्वङ्गानाम प्रजा पतिः ॥ तस्यपुत्रो ऽभवद्वेनो नात्यर्थं धर्म्मकाविदः ॥ २९ ॥ जातो मृत्युसुतायास्तु सुनीथायाम् प्रजापतिः ॥ समाता महदोषेण तेन कालात्मकात्मनः ॥ ३० ॥ स्वधर्मं पृष्ठतःकृत्वा कामाल्लोभेय वर्त्त त ॥ मर्यादाम् भेदयामास धर्म्मोपेतान्सपार्थिवः ॥ ३१ ॥ वेदधर्म्मा नतिक्रम्य सोऽधर्म्मनिरतो ऽभवत् ॥ निःस्वाध्याय वषट्काराः प्रजा स्तस्मिन्प्रजापतौ ॥ ३२ ॥ प्रवृत्तं नपपुः सोमं हुतंयज्ञेषु देवताः ॥ नयष्टव्य नहोतव्यमिति तस्यप्रजापतेः ॥ ३४ ॥ आसीत्प्रतिज्ञा क्रूरे यं विनाशे प्रत्युपस्थिते ॥ अहमीज्यश्च यष्टाच यज्ञश्चेति भगुद्वह ॥ २५ ॥ मयियज्ञा विधातव्या मयिहोतव्य मित्यपि ॥ समतिक्रान्त मर्य्यादं माददान मसाम्प्रतम् ॥ २६ ॥ ऊचुर्महर्षयः सर्वे मरीचि प्रमुखास्तदा ॥ वयन्दीक्षाम् प्रवेक्ष्यामः सम्वत्सर गणान्वहून् ॥ २७ ॥ अधर्म्मं कुरुमावेन एषधर्म्मः सनातनः ॥ राजन्नत्रिप्रसूत स्त्वं प्रजापतिरसंशयं ॥ २८ ॥ प्रजाश्च पालयिष्येह मितीह सम यःकृतः ॥ तांस्तथा ब्रुवतःसर्व्वा न्महर्षीन्प्रा ब्रवीत्तदा ॥२९ ॥

वेनःपृष्टश्च दुर्बुद्धिरिदमर्थ मनर्थवित् ॥ वेन उवाच ॥ स्रष्टाधर्मस्यक
स्यान्यश्श्रोतव्यः कश्चनामया ॥ ३० ॥ श्रुतवीर्यतपः सत्यैर्मयावाक्तः
समोभुवि ॥ प्रभवं सर्व्वभूतानां धर्म्माणाञ्च विशेषतः ॥ २१ ॥
संमूढानविदुर्नूनं भवन्तोमामचेतसः ॥ इच्छेदहेयं पृथिवीं प्लाव
येयञ्जलैस्तथा ॥ ३२ ॥ द्यांचैभुवं च रुंधेयं नात्रकार्या विचार
णा ॥ यदानशक्यते मोहादवलेपाच्च पार्थिवः ॥ ३३ ॥ अपनेतुं त
दावेनं ततःक्रुद्धा महर्षयः ॥ तन्निगृह्य महात्मानो विस्फुरन्तम्महा
बलम् ॥ ३४ ॥ ततोस्य सव्यमूरुं ते ममंथुर्जात मन्यवः ॥ तस्मिंस्तु
मथ्यमानेवै राज्ञऊरौ प्रजज्ञिवान् ॥ ३५ ॥ ह्रस्वोतिमात्रः पुरुषः
कृष्णश्चाति बभूवह ॥ सभीतः प्राञ्जलिर्भूत्वा तस्थिवान् द्विजसत्त
माः ॥ ३६ ॥ तमत्रिर्विह्वलं दृष्ट्वा निषीदेत्यब्रवीत्तदा ॥ निषादवंश
कर्त्तासौ बभूववदतांवर: ॥ ३७ ॥ धीवरानसृजच्चापि वेनकल्मष
सम्भवान् ॥ येचान्ये विंध्यनिलया स्तुषारास्तुंबुरास्तथा ॥ ३८ ॥
अधर्म्मरुचयो विप्रास्तेतु वैवेनकल्मषाः ॥ ततः पुनर्म्महात्मानो पा
र्थिवेनस्य दक्षिणम् ॥ ३९ ॥ अरणीमिव संरब्धा ममंथुर्जात मन्य
वः ॥ पृथुस्तस्मात्समुत्पन्नः कराज्ज्वलन सन्निभः ॥ ४० ॥ दीप्यमानः
स्ववपुषा साक्षादग्नि रिवज्वलन् ॥ आद्यमाजगवन्नाम धनुर्गृह्य म
हारवम् ॥ ४१ ॥ शरांश्चदिव्यान् रक्षार्थं कवचञ्च महाप्रभम् ॥
तस्मिन्जातेथ भूतानि संप्रहृष्टानि सर्व्वशः ॥ ४२ ॥ समापेतु र्महा
भागा वेनस्तु त्रिदिवंययौ ॥ समुत्पन्नेन भोविप्राः सत्पुत्रेण महा

त्मना ॥ ४३ ॥ ज्ञातःसपुरुष व्याघ्रः पुन्नाम्नो नरकात्तथा ॥ तंसमु
द्राश्च नद्यश्च रत्नान्यादाय सर्व्वशः ॥ ४४ ॥ तोयानि चाभिषेकार्थं
सर्व्वएवोपतस्थिरे ॥ पितामहश्च भगवान् देवैःसाङ्गिरसैःसह ॥४५॥
स्थावराणि च भूतानि जङ्गमानि च सर्व्वशः ॥ समागम्य तदा वैन्य
मभ्यषिञ्चन्नराधिपम् ॥ ४६ ॥ महता राजराजेन प्रजास्ते नानुर
ञ्जिताः ॥ सोभिषिक्तो महातेजा विधिवद्धर्म्मकोविदैः ॥ ४७ ॥
अधिराज्ये तदाराजा पृथुर्वैन्यः प्रतापवान् ॥ पित्रापरञ्जिता स्तस्य
प्रजास्ते नानुरञ्जिताः ॥ ४८ ॥ अनुरागा त्ततस्तस्य नाम राजाभ्य
जायत ॥ आपस्तस्तम्भिरे तस्य समुद्र मभियास्यतः ॥ ४९ ॥ पर्व्वता
श्च ददुर्म्मार्गं ध्वजभङ्गश्च नाभवत् ॥ अकृष्टपच्या पृथिवी सिद्ध्यन्त्य
न्नानि चिन्तया ॥ ५० ॥ सर्व्वकामदुघा गावः पुटकेपुटके मधु ॥
एतस्मिन्नेवकालेतु यज्ञे पैतामहेशुभे ॥ ५१ ॥ सूतः सूत्यां समुत्पन्नः
सौत्येहनि महामतिः ॥ तस्मिन्नेव महायज्ञे सूतोथ मागधस्त
तः ॥ ५२ ॥ पृथोःस्तवार्थं तौतत्र समाहूतौ महर्षिभिः ॥ तावूचु ऋ
षयः सर्वे स्तूयतामेष पार्थिवः ॥ ५३ ॥ कर्मैतदनु रूपञ्च पात्रञ्चायं
नराधिपः ॥ तावूचतु स्तदासर्व्वां स्तान्दषी न्सूतमागधौ ॥ ५४ ॥
आवांदेवा नृषींश्चैव प्रीणयावः स्वकर्म्मभिः ॥ नचास्य विद्मोवै कर्म्म
नतथा लक्षणंयशः ॥ ५५ ॥ स्तोत्रं येनास्य कुर्व्वोवै राज्ञस्तेजस्वि
नो द्विजाः ॥ ऋषिभिस्तौ नियुक्तौतौ भविष्यैः स्तूयतामिति ॥ ५६ ॥
यानिकर्म्माणि कृतवान् पृथुःपश्चा न्महाबलः ॥ ततःप्रभृति त्रैलोक्ये

स्तवेषु मुनिसत्तमाः ॥ ५७ ॥ आशीर्व्वादाः प्रयुज्यन्ते सूतमागधव
न्दिभिः ॥ तयोःस्तवात्तु सुप्रीतः पृथुःप्रादा त्प्रजेश्वरः ॥ ५८ ॥अनू
पदेशं सूताय मगधम्मागधायच ॥ तंदृष्ट्वा परमप्रीताः प्रजाः प्राह
र्मनीषिणः ॥ ५९ ॥ वृत्तीना मेषवोदाता भविष्यति नराधिपः ॥ त
तोवैन्य म्महात्मानं प्रजाःसमनु दुद्रुवुः ॥ ६० ॥ त्वन्नोवृत्तिं विधत्स्वे
ति महर्षिवचना त्तदा ॥ सोपहूतः प्रजाभिस्तु प्रजाहित चिकीर्ष
या ॥ ६१ ॥ धनुर्गृह्य पृषत्कांश्च पृथिवी मार्दयद्बली ॥ ततोवैन्य भ
यत्रस्ता गौर्भूत्वा प्राद्रवन्मही ॥ ६२ ॥ तांपृथुर्धनु रादाय द्रवतीम
न्वधावत ॥ सालोका न्ब्रह्मलोकादी न्गत्वावैन्य भयात्तदा ॥ ६३ ॥
प्रददर्शाग्रतोवैन्यं प्रगृहीत शरासनम् ॥ ज्वलद्भि र्निशितैर्बाणै र्दी
प्ततेज समच्युतम् ॥ ६४ ॥ महायोग म्महात्मानं दुर्द्धर्षममरैरपि ॥
अलभन्तीतु सात्राणं वैन्यमेवान्वपद्यत ॥ ६५ ॥ कृताञ्जलिपुटा भू
त्वा पूज्यालोकै स्त्रिभिस्तदा ॥ उवाच वैन्यंनाधर्म्मं स्त्रीवधे परिप
श्यसि ॥ ६६ ॥ कथन्धारयिता चासिप्रजाराज न्विनामया ॥ मयि
लोकाःस्थिरा राजन् मयैवन्धार्य्यते जगत् ॥ ६७ ॥ मद्विनाशे विन
श्येयुः प्रजाः पार्थिव विद्धितत् ॥ नमामर्हसि हन्तुंवै श्रेयश्चे त्त्वञ्चि
कीर्षसि ॥ ६८ ॥ प्रजानां पृथिवीपाल शृणुचेद ञ्वचोमम ॥ उपा
यतः समारब्धाः सर्व्वेसिध्यं त्युपक्रमाः ॥ ६९ ॥ उपायम्पश्य येनत्वं
धारयेथाः प्रजामिमाम् ॥ हत्वापिमां नशक्तस्त्वं प्रजाना म्पोषणे
नृप ॥ ७० ॥ अनुकूला भविष्यामि यच्छकोप म्महीपते ॥ अवध्यां

च स्त्रियंप्राहु स्तिर्यग्योनि गतेष्वपि॥ ७१॥ समपश्यन् पृथिवीपा
ल नधर्म्मं त्यक्तुमर्हसि॥ एवम्बहुविधम्वाक्यं श्रुत्वाराजा महाम
नाः॥ ७२॥ कोपंनिगृह्यधर्म्मात्मा वसुधामिदमब्रवीत्॥ पृथुरुवाच॥
एकस्यार्थाय योहन्यादात्मनो वापरस्यवा॥ ७३॥ बहून्वा प्राणिनो
यैकं भवेत्तस्येह पातकम्॥ सुखमेधन्ति बहवो यस्मिंस्तु निहते
शुभे॥ ७४॥ तस्मिन्हते नातिचरेत्पातकन्नोपपातकम्॥ सोऽहंप्र
जानिमित्तंत्वां हनिष्यामि वसुन्धरे॥ ७५॥ यदिमे वचनंनाद्य क
रिष्यसि जगद्धितम्॥ त्वान्निहत्याद्यवाणेन मच्छासन पराङ्मु
खीम्॥ ७६॥ आत्मानं प्रथयित्वाहं प्रजाधारयितास्वयम्॥ सात्वं
शासनमास्थाय ममधर्म्मभृताम्वरे॥ ७७॥ सञ्जीवय प्रजाः सर्वाः
समर्थाह्यसि धारणे॥ दुहितृत्वञ्चमेगच्छ ततएनं महच्छरम्॥ ७८॥
नियच्छेयं त्वद्वधार्थं सुद्यतं घोरदर्शनम्॥ वसुधोवाच॥ सर्वमेत
दहम्वीर विधास्यामि नसंशयः॥ ७९॥ वत्सं त्वं ममसंयच्छ क्षरेयं
येन वत्सला॥ समाञ्चकुरु सर्वत्र माञ्चधर्म्मभृताम्वर॥ ८०॥ य
थाहिस्यन्दमानं मे क्षीरंसर्वत्र भावयेत्॥ लोमहर्षण उवाच॥ तत
उत्सारयामास शैलाञ्छतसहस्रशः॥ ८१॥ धनुःकोट्या तदावैन्य
स्तेनशैला विवर्द्धिताः॥ नहिपूर्वे विसर्गेवै विषमेपृथिवीतले॥ ८२॥
संविभागः पुराणांवा ग्रामाणां मभवत्तदा॥ नशस्यानि नगोरक्ष्यं
नकृषिर्नवणिक्पथः॥ ८३॥ नैवसत्यानृतन्तत्र नलोभो नचमत्सरः।
वैवस्वतेन्तरेतस्मि न्सांप्रतंसमुपस्थिते॥ ८४॥ वैन्यात्प्रभृति भो

प्राः सर्व्वश्चैतद्यसम्भवः ॥ यत्रयत्र समंत्वस्या भूमेरासी त्तदाद्वि
जाः ॥ ८५ ॥ तत्रतत्र प्रजाःसर्व्वा निवासं समरोचयन् ॥ आहारः
फलमूलानि प्रजानामभवत्तदा ॥ ८६ ॥ कृच्छ्रेण महतायुक्ता इत्येव
मनुशुश्रुम ॥ सङ्कल्पयित्वा वत्सन्तु मनुंस्वायम्भुवं प्रभुं ॥ ८७ ॥ स्वे
पाणौ पृथुरव्यग्रो दुदोह पृथिवीं ततः ॥ शस्यजातानि सर्व्वाणि पृ
थुर्वैन्यः प्रतापवान् ॥ ८८ ॥ तेनान्नेन प्रजाःसर्व्वा वर्त्ततेद्यापि सर्व्व
तः ॥ ऋषयश्च तदादेवाः पितरोथ सरीसृपाः ॥ ८९ ॥ दैत्यागच्चाः
पुण्यजनाः गन्धर्व्वाः पर्व्वतानगाः ॥ एतेपुरा द्विजश्रेष्टा दुदुहुर्धर
णींकिल ॥ ९० ॥ चीरंवत्सश्च पात्रञ्च तेषांदोग्धा पृथक्पृथक् ॥
ऋषीणा मभवत्सोमो वत्सोदोग्धा वृहस्पतिः ॥ ९१ ॥ चीरंतेषां त
पोब्रह्म पात्रंछन्दांसि भोद्विजाः ॥ देवानां काञ्चनं पात्रं वत्सस्ते
षां शतक्रतुः ॥ ९२ ॥ चीरमूर्ज्जस्करञ्चैव दोग्धा च भगवान्रविः ॥
पितृृणां राजतंपात्रं यमोवत्सः प्रतापवान् ॥ ९३ ॥ अन्तकश्चाभव
द्दोग्धा चीरंतेषां सुधामृता ॥ नागानां तक्षकोवत्सः पात्रञ्चालाबु
संज्ञितम् ॥ ९४ ॥ दोग्धाचैरावतोनाग स्तेषांचीरं विषंसृतम् ॥
असुराणां मधुर्दोग्धा चीरम्मायामयं स्मृतम् ॥ ९५ ॥ विरोचनस्तु
वत्सोभू दायसंपात्रमेवच ॥ यक्षाणा मामसंपात्रं वत्सोवै श्रवणःप्र
भुः ॥ ९६ ॥ दोग्धारजतनाभस्तु चीरान्तर्द्धानमेवच ॥ सुमालीरा
चसेन्द्राणां वत्सःचीरं सुशोणितम् ॥ ९७ ॥ दोग्धा रजतनाभस्तु
कपालं पात्रमेवच ॥ गन्धर्व्वाणां चित्ररथो वत्सःपात्र ञ्च पङ्क

जम् ॥ ९८ ॥ दोग्धा वसुरुचिःक्षीरं तेषांगन्धः सुचिःस्मृतः ॥ शै
लंपात्रं पर्व्वतानां क्षीरंरत्नौषधी स्तथा ॥ ९९ ॥ वत्सस्तु हिमवाना
सीद्दोग्धा मेरुर्म्महागिरिः ॥ वृक्षोद्भवस्तु वत्सोभूद्दोग्धा शालस्तु
पुष्पितः ॥ १०० ॥ पालाशपात्रं क्षीरं च्च छिन्नदग्ध प्ररोहणम् ॥
सेयंधात्री विधात्रीच पावनी च वसुन्धरा ॥ १ ॥ चराचरस्य सर्व्व
स्य प्रतिष्ठा योनिरेवच ॥ सर्व्वकामदुहा दोग्धी सर्व्वशस्य प्ररोह
णी ॥ २ ॥ आसीदियं समुद्रान्ता मेदिनीपरिविश्रुता ॥ मधुकैटभ
योः कृत्स्नामेदसा समभिप्लुता ॥ ३ ॥ तेनेयं मेदिनीदेवी प्रोच्यते
ब्रह्मवादिभिः ॥ ततोभ्युपगमाद्राज्ञो पृथोर्वैन्यस्य भोद्विजाः ॥ ४ ॥
दुहितृत्वमनुप्राप्ता देवीपृथ्वीतिवोच्यते॥ पृथुनाप्रविभक्ताच शोधिता
च वसुन्धरा ॥ ५ ॥ शस्याकरवती स्फीता पुरपत्तन मालिनी ॥ एवं
प्रभावोवैन्यःस राजासी द्राजसत्तमः ॥ ६ ॥ नमस्यश्चैव पूज्यश्च भूत
ग्रामै र्नसंशयः ॥ ब्राह्मणैश्च महाभागै र्वेदवेदाङ्ग पारगैः ॥ ७ ॥पृथु
रेव नमस्कार्य्यो ब्रह्मयोनिः सनातनः ॥ पार्थिवैश्च महाभागैः पा
र्थिवत्वमिहेप्सुभिः ॥ ८ ॥ आदिराजो नमस्कार्य्यः पृथुर्वैन्यः प्रताप
वान् ॥ योधैरपि च विक्रांतैः प्राप्तुकामै र्जयंयुधि ॥ ९ ॥ आदिरा
जो नमस्कार्य्यो वृत्तिदाता महायशाः ॥ योहियोधारणं यातिकी
र्त्तयित्वा पृथुंनृपम् ॥ १० ॥ सघोररूपान्संग्रामा न्सुखंतरतिकीर्तिमा
न् ॥ वैश्यैरपि च वित्तार्थै र्वैश्यवृत्ति विधायिभिः ॥ ११ ॥ पृथुरेव न
मस्कार्य्यो वृत्तिदाता महायशाः ॥ तथैवशूद्रैः शुचिभि स्त्रिवर्णपरि

वारिभिः ॥ १२ ॥ एभ्युरेव नमस्कार्य्यः श्रेयःपरमिच्छेप्सुभिः ॥ एते वत्स विशेषाय दोग्धारं चीरमेव च ॥ १३ ॥ पावनानि च मयोक्तानि किंभूयो वर्णयामि वः ॥

इत्यादि ब्रह्मपुराणे पृथोर्जन्ममहात्म्यं नाम
द्वितीयोऽध्यायः २ ॥

———

ऋषय ऊचुः ॥ मन्वन्तराणि सर्व्वाणि विस्तरेण महामते ॥ तेषांपूर्व्वविसृष्टिं च लोमहर्षण कीर्त्तय ॥ १ ॥ यावन्तो मनवश्चैव यावन्तं कालमेव च ॥ मन्वन्तराणि भोसूत श्रोतुमिच्छाम तत्वतः ॥ २ ॥ लोमहर्षण उवाच ॥ नशक्योविस्तरो विप्रा वक्तुंवर्षशतैरपि ॥ मन्वन्तराणां सर्वेषां संक्षेपाच्छृणु तद्विजाः ॥ ३ ॥ स्वायंभुवोमनुः पूर्व्वं मनुः स्वारोचिषस्तथा ॥ उत्तमस्तामसश्चैवरैवतश्चाक्षुषस्तथा ॥ ४ ॥ वैवस्वतश्च भोविप्राः सांप्रतश्चनुरुच्यते ॥ सावर्णिश्च मनुस्तद्वदुत्तमो रौच्यएवच ॥ ५ ॥ तथैवमेरु सावर्णि श्चत्वारोमनवस्तथा ॥ अतीता वर्त्तमाना श्च तथैवानागताद्विजाः ॥ ६ ॥ कीर्तिता मनवस्तुभ्यं मयैवैतेयथाश्रुताः ॥ ऋषींस्तेषां प्रवक्ष्यामि पुत्रान् देवगणांस्तथा ॥ ७ ॥ मरीचिरत्रि र्भगवा नंगिराः पुलहःक्रतुः ॥ पुलस्त्यश्च वशिष्ठश्च सप्तैते ब्रह्मणःसुताः ॥ ८ ॥ उत्तरस्यांदिशि तथा द्विजाः सप्तर्षय स्तथा ॥ अग्नीमश्चाग्निबाहुश्च मेधामेधा तिथिर्वसुः ॥ ९ ॥ ज्योतिष्मान् द्युतिमा न्हव्यः मनुपुत्र स्तथैव च ॥ मनोः स्वायंभुव

स्तै दशपुत्रामहौजसः ॥ १० ॥ एतद्वैप्रथमंविप्रा मन्वन्तरमुदाहृतं ॥ और्व्वो वशिष्ठपुत्रश्च स्तम्बःकश्यप एवचा ॥ ११ ॥ प्राणोबृहस्पतिश्चैव दत्तोत्रिश्च्यवनस्तथा ॥ एतेमहर्षयो विप्रा वायुप्रोक्तामहाव्रताः ॥ १२ ॥ देवाश्च तुषितानाम स्मृताः स्वारोचिषेन्तरे ॥ हविघ्रःसुकृतिर्ज्योति रापोमूर्त्तिरयः स्मृतः ॥ १३ ॥ प्रतीचश्च नभस्यश्च नभऊर्ज्जस्तथैव च ॥ स्वारोचिषस्य पुत्रास्ते मनोर्विप्रा महात्मनः ॥ १४ ॥ कीर्त्तिताःपृथिवीपाला महावीर्य्यं पराक्रमाः ॥ द्वितीयमेत त्कथितं विप्रा मन्वन्तर मया ॥ १५ ॥ इदंतृतीयं वक्ष्यामि तद्बुध्यध्वं द्विजोत्तमाः ॥ वशिष्ठपुत्राः सप्तासन् वाशिष्ठा इतिविश्रुताः ॥ १६ ॥ हिरण्यगर्भस्य सुताः ऊर्ज्जानाम सुतेजसः ॥ ऋषयोऽत्र मया प्रोक्ताः कीर्त्यमाना न्निबोधत ॥ १७ ॥ औत्तमेया न्मुनिश्रेष्ठा दशपुत्रान्मनोरिमान् ॥ इषऊर्ज्जस्तनूर्ज्जश्च मधुर्माधव एवच ॥ १८ ॥ शुचिः शुक्रः सहश्चैव नभस्योनभएव च ॥ भानवस्तत्रदेवाश्चमन्वन्तर मुदाहृतम् ॥ १९ ॥ मन्वन्तरञ्चतुर्थं वः कथयिष्यामि सांप्रतम् ॥ काव्यः पृथुस्तथैवाग्निर्जन्हुर्द्धाता द्विजोत्तमाः ॥ २० ॥ कपीवानकपीवांश्च तत्रसप्तर्षयो द्विजाः ॥ पुराणेकीर्त्तिता विप्राः पुत्राःपौत्रा द्विजोत्तमाः ॥ २१ ॥ सत्यादेवगणाश्चैव तामस स्यांतरेमनोः ॥ द्युतिस्तपस्यः सुतपास्तपोमूलः सनातनः ॥ २२ ॥ तपोरतिस्तु कल्माषस्तन्वी धन्वी परंतपः ॥ तामसस्य मनोरेते दशपुत्राः प्रकीर्त्तिताः ॥ २३ ॥ वायुप्रोक्तास्त्र भोविप्रा सतुर्यं चैतदन्तरम् ॥

देववाङ्क यदुध्रश्च मुनि र्वेदशिरा स्तथा ॥ २४ ॥ हिरण्यरोमा पर्जन्य ऊर्द्ध्ववाङ्क स्सोमजः ॥ सत्यनेत्र स्तथात्रेय एतेसप्तर्षयो परे ॥ २५ ॥ देवाश्चाभुतरजस स्तथाप्रकृतयःस्मृताः ॥ पारिप्लवश्च रैभ्यश्च मनोरन्तरमुच्यते ॥ २६ ॥ अथ पुत्रा निमांस्तस्य निबोध गदतो मम ॥ धृतिमान व्ययोयुक्त स्तत्वदर्शी निरुत्सुकः ॥ २७ ॥ आरण्य श्च प्रकाशश्च निर्म्मोहः सत्यवाक् कृती ॥ रैवतस्य मनोः पुत्राः पञ्चम श्चैतदन्तरम् ॥ २८ ॥ षष्ठं वः संप्रवक्ष्यामि तद्बुध्य ध्वं द्विजोत्तमाः ॥ भृगुर्नभो विवस्वांश्च सुधामा विरजस्तथा ॥ २९ ॥ अतिनामा सहिष्णु श्च सप्तैते च महर्षयः ॥ चाक्षुषस्यान्तरे ह्येते मनोर्देवास्त्विमे स्मृताः ॥ ३० ॥ अप्रस्तुताश्च ऋषयः पृथुकाश्च दिवौकसः ॥ लेखाश्च नामतो विप्रा पञ्च देवगणाः स्मृताः ॥ ३१ ॥ रूरेरङ्गिरसः पुत्रा महात्मानो महौजसः ॥ नाडूलेया मुनिश्रेष्ठा दश पुत्राश्च विश्रुताः ॥ ३२ ॥ रुरुप्रभृतयो विप्रा श्चाक्षुषांन्तरे मनोः ॥ षष्ठंमन्वन्तरं प्रोक्तं सप्तमंतु निबोधत ॥ ३३ ॥ अत्रिर्वशिष्ठो भगवान् काश्यपश्च महानृषिः ॥ गौतमो ऽथभरद्वाजो विश्वामित्र स्तथैव च ॥ ३४ ॥ तथैव पुत्रो भगवान्नृचीकस्य महात्मनः ॥ सप्तमो जम दग्नि श्च ऋषयः सांप्रतं दिवि ॥ ३५ ॥ साध्या रुद्राश्च विश्वे च वस वो मरुतस्तथा ॥ आदित्या श्चाश्विनौ चापि देवौ वैवस्वतौ स्मृतौ ॥ ३६ ॥ मनो र्वैवस्वतस्यैते वर्त्तन्ते सांप्रतेन्तरे ॥ इक्ष्वाकु प्रमु खास्तस्यैव दशपुत्रा महात्मनः ॥ ३७ ॥ एतेषां कीर्तितानान्तु महर्षी

यांमहौजसाम् ॥ तेषांपुत्राश्च पौत्राश्च दिव्युसर्व्वास्तुभोद्विजाः ॥ ३८ ॥
मन्वन्तरेषु सर्वेषु प्रथिताः सप्तसप्तकाः ॥ लोकधर्म्म व्यवस्थार्थं लोक
संरक्षणाय च ॥ ३९ ॥ मन्वन्तरे व्यतिक्रान्ते चत्वारःसप्तकागणाः ॥
कृत्वाकर्म्म दिवं यान्ति ब्रह्मलोक मनामयं ॥ ४० ॥ ततोन्ये तपसा
युक्ताः स्थानं तत्पूरयंत्युत ॥ अतीता वर्त्तमाना च क्रमेणैतेन भो
द्विजाः ॥ ४१ ॥ अनागता च सप्तैते स्मृता दिवि महर्षयः ॥ मनोर
न्तर मासाद्य सावर्णस्यो दिताद्विजाः ॥ ४२ ॥ रामोव्यास स्तथात्रे
यो दीप्तिवन्तो बहुश्रुताः ॥ भारद्वाज स्तथाद्रौणि रश्वत्थामा महा
द्युतिः ॥ ४३ ॥ गौतमस्यात्मज श्चैव शरद्वान्राम गौतमः ॥ कौशिको
गालवश्चैव ध्रौव्यःकाश्यप एवच ॥ ४४ ॥ सावर्ण्यस्यमनोः पुत्राभवि
ष्या मुनिसत्तमाः ॥ एतेषां कल्यमुत्थाय कीर्त्तनात्सुख मेधते ॥ ४५ ॥
यशश्चाप्नोति सुमह दायुष्मां श्च भवेत्सदा ॥ अतीता नागतानांवै
महर्षीणां सदानरः ॥ ४६ ॥ एतान्युक्तानि भोविप्रा सप्तसप्त च तत्व
तः ॥ मन्वन्तराणि संक्षेपा च्छृणुता नागतानिमे ॥ ४७ ॥ सावर्णा
मनवस्तात पञ्चतांश्च निबोध मे ॥ एकोवैवस्वत स्तेषां चत्वारस्तु
प्रजापतेः ॥ ४८ ॥ परमेष्ठि सुताविप्रा मेरुसावर्ण्यतांगताः ॥ दक्ष
स्यैतेहिदौहित्राः प्रियायास्तनयान्नृपाः ॥ ४९ ॥ महता तपसायुक्तामे
रुपृष्ठे महौजसः ॥ रुचेःप्रजापतेः पुत्रोरौच्योनाम मनुःस्मृतः ॥ ५० ॥
भूत्यां चोत्पादितो देव्यां भौमोनाम रुचेःसुतः ॥ अनागताश्च सप्तै
ते कल्पेस्मिन् मनवःस्मृताः ॥ ५१ ॥ तैरियं पृथिवीसर्व्वा सद्वीपा च

सपत्तना ॥ पूर्णंयुगसहस्रन्तु परिपाल्या द्विजोत्तमाः ॥ ५२ ॥ प्रजा
पतिस्च तपसा संहारान्तेषु नित्यशः ॥ युगानि सप्ततिस्तानि साग्रा
णि कथितानि च ॥ ५३ ॥ कृतंत्रेतादि युक्तानि मनोरन्तर मुच्यते ॥
चतुर्द्दशैते मनवः कथिताः कीर्तिवर्द्धनाः ॥ ५४ ॥ वेदेषु सपुराणेषु
सर्वेषुप्रभविष्णव: ॥ प्रजानां पतयोविप्राः धन्यमेषांप्रकीर्त्तनं ॥ ५५ ॥
मन्वन्तरेषु संहाराः संहारां तेषु सम्भवाः ॥ नशक्यमन्तं तेषांवै वक्तुं
वर्षशतैरपि ॥ ५६ ॥ विसर्गस्य प्रजानांवै संहारस्य च भोद्विजाः ॥
मन्वन्तरेषु संहाराः श्रूयंतेभरतर्षभ ॥ ५७ ॥ सशेषास्तत्र तिष्ठन्ति
देवाः सप्तर्षिभिःसह ॥ तपसा ब्रह्मचर्य्येण श्रुतेन च समन्विताः ॥ ५८ ॥
पूर्णंयुग सहस्रेतु कल्पोनिःशेष उच्यते ॥ तत्रभूतानि सर्व्वाणिदग्धा
न्यादित्य रश्मिभिः ॥ ५९ ॥ ब्रह्माण मग्रतःकृत्वा सहादित्यगणैर्वि
भुम् ॥ प्रविशन्ति सुरश्रेष्ठं हरिन्नारायणं प्रभुम् ॥ ६० ॥ स्रष्टारंस
र्व्वभूतनां कल्पान्तेषु पुनःपुनः ॥ अव्यक्तः शाश्वतोदेव स्तस्यसर्व्वमि
दंजगत् ॥ ६१ ॥ अत्रते कीर्त्तयिष्यामि मनोर्वैवस्वतस्यवै ॥ विसर्गंमु
निशार्दूलाः सांप्रतस्य महाद्युतेः ॥ ६२ ॥ अन्निवंशप्रसंगेन कथ्यमा
नंपुरातनम् ॥ यत्रोत्पन्नो महात्मासौ हरिर्वृष्णिकुलोद्भवः ॥ ६३ ॥

इत्यादि ब्रह्मपुराणे मन्वन्तरकीर्त्तनं नाम
तिस्रोऽध्यायः ३ ॥

लोमहर्षण उवाच ॥ विवस्वा न्कश्यपाज्जज्ञे दाक्षायिण्यां द्विजोत्त
माः ॥ १ ॥ तस्यभार्य्याभवत्संज्ञा त्वाष्ट्रीदेवी विवस्वतः ॥ सुरेणुरिति

विख्याता त्रिषुलोकेषु भाविनी ॥ २ ॥ सावैभार्य्या भगवतो मार्त्तण्ड स्यमहात्मनः ॥ भर्तृरूपेण नातुष्य द्रूपयौवनशालिनी ॥ ३ ॥ संज्ञा नाम स्वतपसा सुदीप्तेन समन्विता ॥ आदित्यस्यहि तद्रूपं मण्डल स्य सुतेजसः ॥ ४ ॥ गात्रेषु परिदग्धंवै नातिकान्त मिवाभवत् ॥ न खल्वयं मृतोंडस्य इतिस्नेहा दभाषत ॥ ५ ॥ अजानन्काश्यप स्त स्मान्मार्त्तण्ड इतिहोच्यते ॥ तेजस्त्व भ्यधिकं तस्य नित्यमेव विवस्व तः ॥ ६ ॥ येनाति तापयामास त्रीन्लोका न्कश्यपात्मजः ॥ त्रीण्य पत्यानि कौरव्य संज्ञायां तपतांवरः ॥ ७ ॥ आदित्यो जनयामास कन्यांद्वौ च प्रजापती ॥ मनुर्वैवस्वतः पूर्वंश्राद्धदेवः प्रजापतिः ॥ ८ ॥ यमश्च यमुनाचैव यमजौ संबभूवतुः ॥ श्यामवर्णन्तुतद्रूपं संज्ञादृष्ट्वा विवस्वतः ॥ ९ ॥ असहन्तीतु स्वांछायां सवर्णां निर्म्ममेततः ॥ मा यामयीतु सासंज्ञा तस्याश्छाया समुत्थिता ॥ १० ॥ प्राञ्जलिः प्रण ताभूत्वा छायासंज्ञां च भामिनी ॥ उवाच किम्मयाकार्यं कथयाशु शुचिस्मिते ॥ ११ ॥ स्थितास्मि तवनिर्देशे शाधिमांवर वर्णिनि ॥ संज्ञोवाच ॥ अहंयास्यामि भद्रन्ते स्वमेव भवनंपितुः ॥ १२ ॥ त्वयैव भवनंमह्यं वस्तव्यं निर्विशंकया ॥ इमौ च बालकौमह्यं कन्याचेयं सु मध्यमा ॥ १३ ॥ संभाव्यास्तेनचाख्येय मिदंभगवतेशुभे ॥ सवर्णोवाच ॥ आकचग्रहणाद्देवि आशापान्नैव कर्हिचित् ॥ १४ ॥ आख्यास्यामि मतंतुभ्यं गच्छदेवि यथासुखम् ॥ लोमहर्षण उवाच ॥ समादिश्य सवर्णांतु तथेत्युक्ता तयाप्यसा ॥ १५ ॥ त्वष्टुःसमीप मगम द्व्रीडितेव

तपस्विनौ ॥ पितुःसमीपं गत्वातु पित्रा निर्भर्त्सितापुरा ॥ १६ ॥ भर्तुःसमीपंगच्छेति नियुक्ताच पुनःपुनः ॥ आगच्छ द्वडवाभूत्वाच्छा दरूप मनिन्दिता ॥ १७ ॥ कुरूनथो त्तरान्गत्वा तृणान्यथ चचा रह ॥ द्वितीयायांतु संज्ञायां संज्ञेयमिति चिन्तयन् ॥ १८ ॥ आदि त्योजनयामास पुत्रमात्मसमन्तदा ॥ पूर्व्वजस्य मनोर्विप्राः सदृशो यमितिप्रभुः ॥ १९ ॥ मनुरेवा भवन्नाम्ना सावर्ण इतिचोच्यते ॥ द्वितीयोयः सुतस्तस्याः सविज्ञेयः शनैश्वरः ॥ २० ॥ संज्ञातु पार्थिवी विप्राः स्वस्यपुत्रस्य वैतदा ॥ चकाराभ्यधिकं स्नेहं नतथा पूर्व्वजे षुवै ॥ २१ ॥ मनुस्तस्याः चमत्तत्तु यमस्तस्या नचक्षमे ॥ सवैरोषाच्च बाल्याच्च भाविनोर्थस्य वानघ ॥ २२ ॥ यदा संतर्ज्जयामास संज्ञांवैव स्वतोयमः ॥ तंशशाप ततःक्रोधात्सावर्णि जननीतदा ॥ २३ ॥ चर णःपतता मेषस्तवेति भृशदुःखितः ॥ यमस्तु तत्पितुःसर्वं प्राञ्जलिः प्रत्यवेदयत् ॥ २४ ॥ भृशंशापभयोद्विग्नः संज्ञाशापै र्विर्वोजितः ॥ शा पोयंविनिवर्त्तेत प्रोवाच पितरंतदा ॥ २५ ॥ मात्रास्नेहेन सर्वेषु व र्तितव्यंसुतेषुवै ॥ सेयमस्मा नपाहाय यवीयांसं बुभूषति ॥ २६ ॥ त स्यामयोद्यतःपादो नतुदेहे निपातितः ॥ बाल्याद्वा यदिवामोहात्तद भवान् क्षंतुमर्हति ॥ २७ ॥ शप्तोहमस्मिलोकेश जनन्या तपतांवर ॥ भवत्प्रसादाच्चरणो नपतेन्ममगोपते ॥ २८ ॥ विवस्वानुवाच ॥ अ संशयं पुत्रमहद् भविष्य त्यत्रकारणम् ॥ येनत्वामाविशत्क्रोधो धर्म्मज्ञंसत्यवादिनम् ॥ २९ ॥ नशक्य मेतन्मिथ्यातु कर्त्तुं मातृवचस्तव ॥

कृमयोमांसमादाय पत्स्यंत्यत्र महीतले ॥ २० ॥ कृतमेवं वचस्तथ्यं मातुस्तव भविष्यति ॥ मांसस्य परिहारेण त्वञ्च त्रातो भविष्यसि ॥ २१ ॥ आदित्यस्त्वब्रवीत्संज्ञां किमर्थं तनयेषुवै ॥ तुल्येष्वभ्यधिकः स्नेहः एकस्मिन् क्रियतेत्वया ॥ २२ ॥ सातत्परिहरन्तीतु नाचचक्षेविवस्वते ॥ सचात्मानं समाधाय योगात्तथ्य मपश्यत् ॥ २३ ॥ तांशप्तुकामो भगवान्नाशाय मुनिसत्तमाः ॥ ततःसर्वं यथावृत्त माचचक्षेविवस्वते ॥ २४ ॥ विवस्वानथ तच्छ्रुत्वा क्रुद्धस्त्वष्टुर्गृहं ययौ ॥ त्वष्टातु तंयथान्याय मर्चयित्वा विभावसुं ॥ २५ ॥ निर्दग्धुकामं रोषेण सांत्वयामास वैतदा ॥ त्वष्टोवाच ॥ तवातितेजसाविष्ट मिदं रूपं नशोभते ॥ २६ ॥ अनुकूलंतु तदेव यदिस्यान्मम संमतम् ॥ रूपंनिर्वर्त्तयाम्यद्य तवकान्त मरिन्दम ॥ २७ ॥ ततोभ्युपगमात्तस्य मार्तण्डस्य विवस्वतः ॥ भ्रमिमारोप्यतत्तेजः शातयामासवैतदा ॥ २८ ॥ ततोनिर्भासितं रूपं तेजसा संहतेनवै ॥ कान्तात्कान्ततरं द्रष्टुमधिकंशुशुभेतदा ॥ २९ ॥ ददर्श योगमास्थाय स्वाम्भार्य्यां वडवांततः ॥ अधृष्यां सर्व्वभूतानां तेजसा नियमेन च ॥ ४० ॥ वडवावपुषं विप्राश्चरन्तीम कुतोभयं ॥ सोऽश्वरूपेण भगवांस्तांमुखे समभावयत् ॥ ४१ ॥ मैथुनाय विचेष्टन्तीं परपुरुषशङ्कया ॥ सातंनिरवमच्छुक्रं नासिकाभ्यां विवस्वतः ॥ ४२ ॥ देवौतस्यां मजायेता मश्विनौभिषजांवरौ ॥ नासत्यश्चैव दस्रश्च स्मृतौ-द्वावश्विनाविति ॥ ४३ ॥ मार्त्तण्डस्यात्मजावेता वष्टमस्य प्रजापतेः ॥ तांस्तुरूपेण कांतेन दर्शयामास

भास्करः ॥ ४४ ॥ सावुहत्वै वभर्त्तारं तुतोष मुनिसत्तमाः ॥ यमस्तु कर्म्मणातेन भृशंपीडित मानसः ॥ ४५ ॥ धर्मेण रञ्जयामास धर्म्म राजइमाः प्रजाः ॥ सलेभे कर्म्मणातेन शुभेन परमद्युतिः ॥ ४६ ॥ पितृणा मधिपत्यञ्च लोकपाल त्वमेवच ॥ मनुःप्रजापति स्त्वासी त्सावर्णिः सतपोधनाः ॥ ४७ ॥ भाव्यः सोनागतेतस्मि न्मनुःसावर्णि केन्तरे ॥ मेरुपृष्टे तपोनित्य मद्यापि च चरत्युत ॥ ४८ ॥ भ्राताशनै श्चरस्तस्य ग्रहत्वं सतुलब्धवान् ॥ त्वष्टातु तेजसातेन विष्णोश्च क्रम कल्पयत् ॥ ४९ ॥ तदप्रतिहतं युद्धे दानवान्तनिवर्हणम् ॥ यवीयसी तुयायासीत् यमीकन्या यशस्विनी ॥ ५० ॥ अभवच्च सरिच्छ्रेष्ठा यमुना लोकभाविनी ॥ मनुरेत्युच्यते लोके सावर्णइति वोच्यते ॥ ५१ ॥ द्वितीयस्तु ततस्तस्य मनोर्भ्राता शनैश्चरः ॥ ग्रहत्वंस च लेभेवै सर्व्व लोकाभि पूजितम् ॥ ५२ ॥ यइदं जन्मदेवानां शृणुयात् धारयीत वा ॥ आपदं प्राप्यमुच्येत प्राप्नुयाच्च महद्यशः ॥ ५३ ॥

इत्यादि ब्रह्मपुराणे आदित्योत्पत्ति र्न्नाम

चतुर्थो ऽध्यायः ४ ॥

---

लोमहर्षण उवाच ॥ मनो र्वैवस्वतस्यासन् पुत्रावै नवतत्समाः ॥ इ क्ष्वाकुश्चैव नाभागो धृष्टःसर्य्याति रेवतु ॥ १ ॥ नरिष्यन्तश्च दंष्ट्रश्च नेदिष्टश्चैव सप्तमः ॥ करूषश्च पृषध्रश्च नवैतेमुनिसत्तमाः ॥ २ ॥ अ करोत्पुत्र कामस्तु मनुरिष्टिं प्रजापतिः ॥ मित्रावरुणयो र्विप्राः पू

र्व्वसेव महामतिः ॥ ३ ॥ समुत्पन्नेषु बहुषु पुत्रेष्वेतेषु भो द्विजाः ॥
तस्यात्र वर्त्तमानाया मिष्टया त्र द्विजसत्तमाः ॥ ४ ॥ मित्रावरुण
योरंशे मनुराहुति मावपत् ॥ तत्र दिव्याम्बरधरा दिव्याभरणभू
षिता ॥ ५ ॥ दिव्यसंहननाचैव इलाजज्ञ इतिश्रुतिः ॥ तामिलेती
तिहोवाच मनुर्दण्डधरस्तदा ॥ ६ ॥ अनुगच्छस्व मांभद्रे तमिला
प्रत्युवाचह ॥ धर्म्मयुक्त मिदंवाक्यं पुत्रकामं प्रजापतिम् ॥ ७ ॥
इलोवाच ॥ मित्रावरुणयो रंशेजातास्मि वदताम्वर ॥ तयोः सका
शंयास्यामि नमांधर्म्मो हतोवधीत् ॥ ८ ॥ सैवमुक्त्वा मनुंदेवं मि
त्रावरुणयो रिला ॥ गत्वान्तिकं वरारोहा प्राञ्जलि र्वाक्यमब्र
वीत् ॥ ९ अंशेस्मि न्युवयोर्जाता देवौकिंकरवाणिवां ॥ मनुनाचा
हमुक्तावै अनुगच्छस्व मामिति ॥ १० ॥ तांतथा वादिनीं साध्वी
मिलां धर्म्मपरायणाम् ॥ मित्रश्च वरुणश्चोभा वूचतु र्यन्नरोत्त
माः ॥ ११ ॥ अनेनतवधर्मेण प्रश्रयेण दमेन च ॥ सत्येनचैव सुश्रो
णि प्रीतौच वरवर्णिनि ॥ १२ ॥ आवयोस्त्वं महाभागे ख्यातिंकन्ये
ति यास्यसि ॥ मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि ॥ १३ ॥ सु
द्युम्नइति विख्यात स्त्रिषुलोकेषु विश्रुतः ॥ जगत्प्रियो धर्मशीलो
मनुवंश विवर्द्धनः ॥ १४ ॥ निवृत्तासातु तच्छ्रुत्वा गच्छन्ती पितुर
न्तिकं ॥ बुधेनान्तर मासाद्य मैथुनायोपमंत्रिता ॥ १५ ॥ सोमपु
त्राद्बुधाद्राजं स्तस्याञ्जज्ञे पुरूरवाः ॥ जनयित्वा ततःसात मिला
सुद्युम्नतांगता ॥ १६ ॥ सुद्युम्नस्यतु दायादास्त्रयः परमधार्मिकाः ॥

उत्कलश्च गयश्चैव विनताश्वश्च भोद्विजाः ॥ १७ ॥ उत्कल
श्चोत्कलाविप्रा विनताश्वस्य पश्चिमा ॥ दिक्पूर्वा मुनिशार्दूला ग
यस्यतु गयास्मृता ॥ १८ ॥ प्रविष्टेतु मनोर्विप्रा दिवाकर मरिन्द
मम् ॥ दशधातन् पुनःक्षत्र मकरोत्पृथिवीमिमाम् ॥ १९ ॥ इक्ष्वा
कुर्ज्येष्ठदायादो मध्यदेश मवाप्तवान् ॥ कन्याभावात्तु सुद्युम्नो नैत
द्राज्य मवाप्तवान् ॥ २० ॥ वशिष्टवचनात्त्वासीत् प्रतिष्ठाने महात्म
नः ॥ प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य द्विजोत्तमाः ॥ २१ ॥
तत्पुरूरवसे प्रादाद्राज्यं प्राप्य महायशाः ॥ मानवेयो मुनिश्रेष्टाः
स्त्रीपुंसो लक्षणैर्युतः ॥ २२ ॥ धृतवां स्त्वामिलेत्येवं सुद्युम्नेति च
विश्रुतः ॥ नरिष्यन्तः शकाःपुत्रो नाभागस्यतु भोद्विजाः ॥ २३ ॥
अम्बरीषो भवत्पुत्रः पार्थिवर्षभसत्तमाः ॥ धृष्टोस्तुधार्ष्टकं क्षत्रं
रणेऽधृष्यं बभूवह ॥ २४ ॥ करूषस्य करूषाः क्षत्रियायुद्धदुर्मदाः ॥
नाभाग धृष्टपुत्राश्च क्षत्रिया वैश्यतांगताः ॥ २५ ॥ प्रांशोरेको भव
त्पुत्रः प्रजापति रितिस्मृतः ॥ नरिष्यन्तस्य दायादो राजा दण्डधरो
यमः शर्यातेर्मिथुनं त्वासी दानर्तोनाम विश्रुतः ॥ २६ ॥ पुत्रःकन्या
सुकन्या च यापत्नी च्यवनस्यह ॥ आनर्त्तस्यतु दायादो रैवोनाम म
हाद्युतिः ॥ २७ ॥ आनर्त्तविषयश्चैव पुरीचास्य कुशस्थली ॥ रैवस्य
रैवतःपुत्रः ककुद्मीनाम धार्मिकः ॥ २८ ॥ ज्येष्ठःपुत्र शतस्यासीद्रा
ज्यंप्राप्य कुशस्थलीं ॥ सुकन्यासहितः श्रुत्वा गान्धर्वं ब्रह्मणो न्ति
के ॥ २९ ॥ मुहूर्त्तंभूतं देवस्य तस्थौबहुयुगं द्विजाः ॥ आजगाम

त्त्वैवाथ स्वांपुरीं यादवै र्वृतां ॥ ३० ॥ कृतां द्वारवतीनाम्ना वज्र द्वाराम्मनोरमाम् ॥ भोजवृष्ण्यन्धकैर्गुप्तां वासुदेव पुरोगमैः ॥ ३१ ॥ ततस्तद्रैवतो ज्ञात्वा यथातत्वं द्विजोत्तमाः ॥ कन्यांतां बलदेवाय सुव्रतांनाम रेवतीं ॥ ३२ ॥ दत्वा जगाम शिखरं मेरोस्तपसि सं स्थितः ॥ रेमे रामोपि धर्म्मात्मा रेवत्याः सहितः सुखी ॥ ३३ ॥ मुनय ऊचुः ॥ कथं वहुगतेकाले समतीते महामते ॥ नजरा रेवतीं प्राप्ता रैवतं वा ककुद्मिनम् ॥ ३४ ॥ मेरुं गतस्य वातस्य शर्यातेः संत तिः कथम् ॥ स्थिता पृथिव्यां मयापि श्रोतुमिच्छाम तत्वतः ॥ ३५ ॥ लोमहर्षण उवाच ॥ नजरा क्षुत्पिपासावा नमृत्यु र्मुनिसत्तमाः ॥ ऋतुचक्रं प्रभवति ब्रह्मलोके सदानघाः ॥ ३६ ॥ ककुद्मिनस्य स्वर्लो कं रैवतस्य गतस्यह ॥ हतापुण्यजनै र्विप्रा राक्षसैः साकुशस्थ ली ॥ ३७ ॥ तस्यभ्रातृशतंत्वासी द्धार्मिकस्य महात्मनः ॥ तद्वध्यमा नंरक्षोभि र्द्दिशःप्राक्रा मदच्युत ॥ ३८ ॥ विद्रुतस्य च विप्रेन्द्रा स्तस्य भ्रातृशतस्यवै ॥ अन्ववायस्तु सुमहां स्तत्रतत्र द्विजोत्तमाः ॥ ३९ ॥ तेषामेते मुनिश्रेष्ठाः शर्याता इतिविश्रुताः ॥ सर्व्वशः सर्व्वगहनं प्र विष्टास्ते महौजसः ॥ ४० ॥ नाभागारिष्ट पुत्रौद्वौ वैश्यौ ब्राह्मणतां गतौ ॥ करूषस्यतु कारूषाः क्षत्रिया युद्धदुर्मदाः ॥ ४१ ॥ पृषध्रो हिंसयित्वातु गुरोर्गां द्विजसत्तमाः ॥ शापाच्छूद्रत्व मापन्नो नवैते परिकीर्त्तिताः ॥ ४२ ॥ वैवस्वतस्य तनया मनोर्वै मुनिसत्तमाः ॥ क्षु वतस्तु मनोर्विप्रा इक्ष्वाकु रभवत्सुतः ॥ ४३ ॥ तस्यपुत्रशतं त्वासीदि

क्ष्वाको भूरिदक्षिणः ॥ तेषां विकुक्षिर्ज्येष्ठस्तु विक्रमेण समन्वि
तः ॥ ४४ ॥ प्राप्तः परमधर्मज्ञः सोयोध्या धिपतेःप्रभुः ॥ शकुनिप्रमु
खास्तस्य पुत्राः पञ्चशतं स्मृताः ॥ ४५ ॥ उत्तरा पथदेशस्य रक्षिता
रो महाबलाः ॥ चत्वारिंशद्दशाष्टौ च दक्षिणस्यां तथादिशि ॥ ४६ ॥
शशाद प्रमुखा श्चा न्ये रक्षितारो द्विजोत्तमाः ॥ इक्ष्वाकुस्तु विकु
क्षिंवै अष्टकाया मथादिशत् ॥ ४७ ॥ मांसमानय श्राद्धार्थं शशान्ह
त्वामहाबल ॥ श्राद्धकर्मणि चोद्दिष्ट अकृते श्राद्धकर्मणि ॥ ४८ ॥
भक्षयित्वा शशंविप्रा शशादो मृगयांगतः ॥ इक्ष्वाकुणा परित्यक्तो
वसिष्ठवचना त्प्रभुः ॥ ४९ ॥ इक्ष्वाकौ संस्थिते विप्रा शशादस्तम
थावसत् ॥ शशादस्यतु दायादः ककुत्स्थोनाम वीर्यवान् ॥ ५० ॥
अनेनस्तु ककुत्स्थस्य पृथुश्चानेन सःस्मृतः ॥ विराश्वस्तु पृथोः पुत्रस्त
स्मादार्द्रस्त्व जायत ॥ ५१ ॥ आर्द्रस्य युवनाश्वस्तु श्रावस्त स्तस्यभो
द्विजाः ॥ जज्ञेश्रावस्तको राजा श्रावस्तीयेन निर्मिता ॥ ५२ ॥ श्रा
वस्तस्यतु दायादो बृहदश्वो महीपतेः ॥ कुवलाश्वः सुतस्तस्यराजा
परमधार्मिकः ॥ ५३ ॥ यस्तुधुंधुवधा द्राजा धुंधुमारत्व मागतः ॥
मुनय ऊचुः ॥ धुन्धोर्वध महंब्रह्मन् श्रोतुमिच्छाम तत्वतः ॥ ५४ ॥
यथा सकुवलाश्वोपि धुन्धुमारत्व मागतः ॥ लोमहर्षण उवाच ॥
कुवलाश्वस्य पुत्राणां शतमुत्तम धन्विनाम् ॥ ५५ ॥ सर्वे विद्यासु नि
ष्णाता बलवन्तो दुरासदाः ॥ बभूवु र्धार्मिकाःसर्वे यज्वानो भूरिद
क्षिणाः ॥ ५६ ॥ कुवलाश्वं सुतंराज्ये बृहदश्वो ऽभ्यषेचयत् ॥ पुत्र

संक्रामितश्रीस्तु वनं राजा विवेशसः ॥ ५७ ॥ तमुत्तं कोथविप्रर्षिः प्रयातं प्रत्यवारयत् ॥ उत्तंक उवाच ॥ भवता रक्षणं कार्यं तच्चकर्तुमि हार्हसि ॥ ५८ ॥ निरुद्विग्न स्तपश्चर्त्तुं नहिशक्नोमि पार्थिव ॥ ममा श्रमसमीपेवै समेषुमरुधन्वसु ॥ ५९ ॥ समुद्रो वालुकापूर्ण उज्जानक इतिस्मृतः ॥ देवतानाम वध्यश्च महाकायो महाबलः ॥ ६० ॥ अन्तर्भूमि गतस्तत्र वालुकांत र्हितोमहान् ॥ राक्षसस्यमधोः पुत्रोधुन्धुर्नाम महासुरः ॥ ६१ ॥ शेतेलोक विनाशाय तपआस्थाय दारुणम् ॥ संवत्सरस्य पर्यंते सनिश्वासं विमुञ्चति ॥ ६२ ॥ यदातदा महीतात चलतिस्म नराधिप ॥ तस्यनिश्वास वातेन रजउद्धूयते महत् ॥ ६३ ॥ आदित्य पथमाहत्य सप्ताहंभूमिकम्पनम् ॥ सविस्फुलिङ्गं साङ्गारं सधूममतिदारुणम् ॥ ६४ ॥ तेनतात नशक्नोमि तस्मिं स्थातुं स्वआश्रमे ॥ तन्मारय महकायं लोकानां हितकाम्यया ॥ ६५ ॥ लोकाःस्वस्था भवंत्वद्य तस्मिन्विनिहते त्वया ॥ त्वंहितस्य वधायैकः समर्थः पृथिवीपते ॥ ६६ ॥ विष्णुना च वरोदत्तो मह्यं पूर्व्वयुगेऽनघ ॥ यस्तंमहासुरं रौद्रं हनिष्यति महाबलम् ॥ ६७ ॥ तस्यत्वं वरदानेन तेजश्चा प्याययिष्यसि ॥ नहिधुन्धु र्महातेजा स्तेजसा ल्पेन शक्यते ॥ ६८ ॥ निर्द्दग्धुं पृथिवीपाल चिरं युगशतैरपि ॥ वीर्यं च सुमहत्तस्य देवैरपि दुरासदं ॥ ६९ ॥ सएव मुक्तोराजर्षि रुत्तंकेन महात्मना ॥ कुवलाश्वं सुतंप्रादा त्तस्मैधुन्धु निवर्हणे ॥ ७० ॥ वृहदश्वउवाच ॥ भगवन्न्यस्तशस्त्रोहमयं च तनयोमम ॥ भविष्यति

द्विजश्रेष्ठ धुन्धुमारो नसंशयः ॥ ७१ ॥ लोमहर्षण उवाच ॥ कुवला
श्वः सपुत्राणां शतेनसहितो द्विजाः ॥ ७२ ॥ प्रायादुत्तंक सहितो
धुन्धोस्तस्य निवर्हणे ॥ तमाविश्य तदाविष्णु स्तेजसा भगवान्प्र
भुः ॥ ७३ ॥ उत्तंकस्य नियोगाद्वै लोकानां हितकाम्यया ॥ तस्मिन्प्र
याते दुर्द्धर्षे दिविशब्दो महानभूत् ॥ ७४ ॥ एष श्रीमानवध्योद्य धु
न्धुमारो भविष्यति ॥ दिव्यैर्गंधैश्च माल्यैश्च समन्तात्समवाकि
रन् ॥ ७५ ॥ देवदुन्दुभयश्चैव प्रणेदुर्हितदा भृशं ॥ सगत्वा जयतां
श्रेष्ठ स्तनयैःसह वीर्यवान् ॥ ७६ ॥ समुद्रं खानयामास वालुकापू
र्णमव्ययं ॥ तस्यपुत्रैः खनद्भिश्च वालुकान्तर्हित स्तदा ॥ ७७ ॥
धुन्धुरासादितो विप्रा दिशमाश्रित्य पश्चिमां ॥ मुखजेना ग्निना क्रो
धाल्लोका नुद्वर्त्तयन्निव ॥ ७८ ॥ वारिशुस्राव वेगेन महोदधि रिवो
दये ॥ सोमस्य मुनिशार्दूला धारोर्मि कलिलोमहान् ॥ ७९ ॥ तस्य
पुत्रशतं दग्धं त्रिभिरूनंतु रक्षसा ॥ ततः सराजा द्युतिमान् राक्ष
संतंमहावलं ॥ ८० ॥ आससाद महातेजा धुन्धुंधुन्धु विनाशनः ॥
तस्यवारिमयं वेगमापीय सनराधिपः ॥ ८१ ॥ योगीयोगेन वन्हिञ्च
शमयामासवारिणा ॥ निहत्य तंमहाकायं बलेनोदक राक्षसं ॥ ८२ ॥
उत्तंकं दर्शयामास कृतकर्म्मा नराधिपः ॥ उत्तंकस्तु वरंप्रादात्तस्मै
राज्ञे महात्मने ॥ ८३ ॥ ददतः सोक्षयंवित्तं शत्रुभि श्चा पराजयं ॥
धर्मेरतिश्च सततं स्वर्गेवासं ततोक्षयं ॥ ८४ ॥ पुत्राणां चाक्षयांल्लो
कान्स्वर्गे येरक्षसा हताः ॥ तस्यपुत्रा स्त्रयःशिष्टा दृढाश्वो ज्येष्ठ उ

च्यते ॥ ८५ ॥ चन्द्राश्व कपिलाश्वौतु कुमारौ कन्यसौ स्मृतौ ॥ धौं धुमारेर्द्दृढाश्वस्य हर्यश्वश्चात्मजः स्मृतः ॥ ८६ ॥ हर्यश्वस्य निकुम्भो भूत् चत्रधर्मरतःस्मृतः ॥ संहताश्वो निकुम्भस्य सुतोरण विशार दः ॥ ८७ ॥ आकृषाश्व कृषाश्वौतु संहताश्व सुतौद्विजाः ॥ तस्य है मवतीकन्या सातुख्याता दृषद्वती ॥ ८८ ॥ विख्याता त्रिषुलोकेषु पु त्रस्यास्याः प्रसेनजित् ॥ लेभे प्रसेनजिद्भार्य्यां गौरींनाम पतिव्र ताम् ॥ ८९ ॥ अभिशप्तातु साभर्त्रा नदीवै वहुदाभवत् ॥ तस्यपुत्रो महानासीत् युवनाश्वो नृपाधिपः ॥ ९० ॥ मान्धाता युवनाश्वस्य त्रिलोक विजयीसुतः ॥ तस्य चैत्ररथीभार्य्या शशविन्दोः सुताभ वत् ॥ ९१ ॥ साध्वी विन्दुमतीनाम रूपेणा सदृशीभुवि ॥ पतिव्र ता च ज्येष्टा च भ्रातृणा मयुतस्यवै ॥ ९२ ॥ तस्या मुत्पादयामास मान्धाता द्वौसुतौ द्विजाः ॥ पुरुकुत्स ञ्च धर्मज्ञं मुचुकुन्दं च पा र्थिवम् ॥ ९३ ॥ पुरुकुत्ससुत स्त्वासी त्त्रसदस्यु र्महीपतिः ॥ नर्म्म दाया मथोत्पन्नः संभूतस्तस्य चात्मजः ॥ ९४ ॥ संभूतस्यतु दायादः सुधन्वा रिपुमर्द्दनः ॥ सुधन्वनःसुतश्चापि त्रिधन्वारिपुमर्द्दनः ॥ ९५ ॥ राज्ञस्त्रिधन्वन स्त्वासी द्विद्वांस्त्रय्यारुणः प्रभुः ॥ तस्यसत्यव्रतो नाम कुमारोभू न्महावलः ॥ ९६ ॥ पाणिग्रहण मंत्राणां विघ्नञ्चक्रे सुदु र्म्मतिः ॥ येनभार्य्या हृतापूर्वं कृतोद्वाहा परस्यवै ॥ ९७ ॥ वाल्या त्कामाच्च मोहाच्च संहर्षाच्चापलेन च ॥ जहार कन्यांकामा च क स्यचि त्पुरवासिनः ॥ ९८ ॥ अधर्म्मं शंकुना तेन राजा त्रैय्यारुणो

ऽत्यजत् ॥ अपध्वंसेति वक्तृशो वदन्क्रोध समन्वितः ॥ ९९ ॥ सोब्रवी
त्पितरंत्यक्तः क्वगच्छामीति वैसुक्तः ॥ पिता च तमथोवाच श्वपाकैः
सहवर्त्तय ॥ १०० ॥ नाहं पुत्रेणपुत्रार्थी त्वयाद्य कुलपांशन ॥ इत्यु
क्तः सनिराक्राम न्नगरा द्वचनात्पितुः ॥ १ ॥ न चतं वारयामास व
सिष्ठो भगवानृषिः ॥ सतुसत्यव्रतो विप्राः श्वपाकावस थान्ति
के ॥ २ ॥ पित्रात्यक्तो वसद्वीरः पिताप्यस्य वनंययौ ॥ ततस्तस्मिं
स्तु विषये नावर्ष त्पाकशासनः ॥ ३ ॥ समाद्वादश भोविप्रा स्तेना
धर्मेण वैतदा ॥ दारांस्तु तस्यविषये विश्वामित्रो महातपाः ॥ ४ ॥
संपस्य सागरांतेतु चकार विपुलंतपः ॥ तस्यपत्नी गलेवद्ध्वा मध्यमं
पुत्रमौरसं ॥ ५ ॥ शेषस्य भरणार्थाय व्यक्रीणा द्गोशतेनवै ॥ तञ्च
वद्धं गलेदृष्ट्वा विक्रयार्थं नृपात्मजः ॥ ६ ॥ महर्षिपुत्रं धर्म्मात्मा
मोचयामास भोद्विजाः ॥ सत्यव्रतो महावाहु र्भरणंतस्य चाकरो
त् ॥ ७ ॥ विश्वामित्रस्य तुष्टयर्थ मनुकंपार्थमेव च ॥ सोभव द्गाल
वोनाम्ना गलेवन्धान्महातपाः ॥ ८ ॥ महर्षिः कौशिको धीमांस्तेन
वीरेण मोचितः ॥

इत्यादि ब्रह्मपुराणे सूर्य्य वंशे

पञ्चमोऽध्यायः ५ ॥

---

लोमहर्षण उवाच ॥ सत्यव्रतस्तु भगवा न्कृपयाथ प्रतिज्ञया ॥ वि
श्वामित्र कलत्रंतु वभार विनयेस्थितः ॥ १ ॥ हत्वामृगान् वराहां

स्य महिषांश्च वनेचरान् ॥ विश्वामित्रा श्रमाभ्याशे मांसंवृक्षे ववन्ध च ॥ २ ॥ उपांसुव्रत मास्थायदीक्षां द्वादशवार्षिकीं ॥ पितुर्नियोगादवस त्तस्मिन् वनगतेनृपे ॥ ३ ॥ अयोध्यांचैव राज्यञ्च तथैवान्तः पुरंमुनिः ॥ याज्योपाध्यायसंयोगा द्वशिष्टः पर्यरक्षत ॥ ४ ॥ सत्यव्रतस्तु वाल्याच्च भाविनोर्थस्य चानघाः ॥ वशिष्टेभ्यधिकं मन्युं धारयामास नित्यदा ॥ ५ ॥ पित्राहितं तदाराष्ट्रा त्त्यज्यमानं प्रियंसुतं ॥ नवारयामास मुनिर्वसिष्ठः कारणेनह ॥ ६ ॥ पाणिग्रहणमंत्राणां निष्ठास्या त्सप्तमेपदे ॥ नचसत्यव्रत स्तस्माद्धृतवा न्सप्तमेपदे ॥ ७ ॥ जानन्धर्मं वशिष्टस्तु नमांत्रातीति भोद्विजाः ॥ सत्यव्रत स्तदारोषं वसिष्टेमनसाकरोत् ॥ ८ ॥ गुणवुध्यातु भगवान् वसिष्टः कृतवांस्तथः ॥ नचसत्यव्रत स्तस्यतमुपांशु मवुध्यत ॥ ९ ॥ तस्मिंस्तु परितोरोषः पितुरासी न्महात्मनः ॥ तेन द्वादश वर्षाणि नावर्षं त्पाकशासनः ॥ १० ॥ तेनत्विदानीं वहता दीक्षांतां दुर्व्वहांभुवि ॥ कुलस्य निष्कृति र्विप्राः कृतासावै भवेदिति ॥ ११ ॥ नतंवसिष्टो भगवान् पित्रात्यक्तं न्यवारयत् ॥ अभिषेक्ष्याम्यहं पुत्रमस्येत्येवं मतिर्मुनिः ॥ १२ ॥ सतुद्वादश वर्षाणि तांदीक्षा मुद्वहन्वली ॥ अविद्यमाने मांसेतु वशिष्टस्यमहात्मनः ॥ १३ ॥ सर्व्वकामदुहां दोग्ध्रीं सददर्श न्नृपात्मजः ॥ तांवै क्रोधाच्च मोहाच्च श्रमाच्चैव क्षुधान्वितः ॥ १४ ॥ दशधर्म्मंगतो राजा जघान मुनिसत्तमाः ॥ तन्मांसंतु स्वयञ्चैव विश्वामित्रस्य चात्मजान् ॥ १५ ॥

भोजयामास तच्छ्रुत्वा वसिष्ठो याज्ञपुङ्गवे ॥ वसिष्ठ उवाच ॥ पात
येयमहंक्रूर तवशङ्कुं नसंशयः ॥ १६ ॥ यद्धिते द्वाविमौशंकू नस्यातां
वैकृतौपुनः ॥ पितुश्चा परितोषेण गुरोर्दोग्ध्री वधेन च ॥ १७ ॥
अप्रोक्षितो पयोगाच्च त्रिविधस्ते व्यतिक्रमः ॥ एवंत्रीण्यस्य शङ्कूनि
तानिदृष्ट्वा महातपाः ॥ १८ ॥ त्रिशंकुरिति होवाच त्रिशंकुस्तेन
सःस्मृतः ॥ विश्वामित्रस्तु दाराणा मागतो भरणेकृते ॥ १९ ॥ तेन
तस्मै वरंप्रादा न्मुनिः प्रीतस्त्रिशंकवे ॥ छंद्यमानो वरेणाथ वरंवव्रे
नृपात्मजः ॥ २० ॥ सशरीरो व्रजेस्स्वर्ग मित्येवं याचितोवरः ॥ अ
नावृष्टिभये तस्मिन् गतेद्वादशवार्षिके ॥ २१ ॥ अभिषिंच्यराज्ये पै
त्र्येवै याजयाम तंमुनिः ॥ मिषतां देवतानां च वसिष्ठस्य च कौशि
कः ॥ २२ ॥ दिवमारोपयामासशरीरं महातपाः ॥ तस्य सत्यरथा
नाम पत्नीकैकेय वंशजा ॥ २३ ॥ कुमारं जनयामास हरिश्चन्द्रम
कल्मषम् ॥ सवैराजा हरिश्चन्द्रः त्रैशङ्कव इतिस्मृतः ॥ २४ ॥ आ
हर्ताराजसूयस्य सम्राडितिविश्रुतः ॥ हरिश्चन्द्रस्य पुत्रोभू द्रो
हितोनाम पार्थिवः ॥ २५ ॥ हरितो रोहितस्याथ चञ्चुर्हारीत उ
च्यते ॥ विजयश्च मुनिश्रेष्ठा श्चञ्चुपुत्रोबभूवह ॥ २६ ॥ जिताहि स
र्वापृथिवी विजयस्तेन सःस्मृतः ॥ रुरुकस्तनय स्तस्य राजधर्मार्थ
कोविदः ॥ २७ ॥ रुरुकस्य वृकःपुत्रो वृकाद्बाहुस्तु जज्ञिवान् ॥
हैहया स्तालजंघाश्च निरस्यंतिस्म तंनृपाः ॥ २८ ॥ तत्पत्नी गर्भ
मादाय औौर्व्वस्याश्रम माविशत् ॥ नात्यर्थं धार्मिकश्चैव सहिधर्म्मंयु

जेभवत् ॥ २६ ॥ सगरस्तु सुतोबाहो र्यज्ञेसहगरेणवै ॥ और्व्वस्या श्रममासाद्य भार्गवेणाभि रक्षितः ॥ ३० ॥ आग्नेयमस्त्रं लब्ध्वा च भार्गवात् सगरोन्टपः ॥ जिगायपृथिवीं हत्वा तालजंघा न्सहैहया न् ॥ ३१ ॥ शकानां पल्हवाना ञ्च धर्म्मान्निरस्य दच्युतः ॥ चत्रि याणां मुनिश्रेष्ठाः पारदाना ञ्च धर्म्मवित् ॥ ३२ ॥ मुनय ऊचुः ॥ कथंसहगरेणैव सवनेषमजायत् ॥ किमर्थं च शकादीनां चत्रिया णान्महौजसाम् ॥ ३३ ॥ धर्मंकुलोचितं क्रुद्धोराजा निरस्यदच्युतः ॥ एतन्नः सर्व्वमाचक्ष्व विस्तरेण महामते ॥ ३४ ॥ लोमहर्षण उवाच ॥ बाहोर्व्यसनिनः सर्वंहृतं राष्ट्रमभूत्किल ॥ हैहयैस्तालजंघै श्च शकैः सार्द्धं द्विजोत्तमाः ॥ ३५ ॥ यवनाः पारदाश्चैव कांबोजाः पल्हवास्त था ॥ एतेह्यपिगणाः पञ्च हैहयार्थे पराक्रमन् ॥ ३६ ॥ हृतराज्य स्तदाराजा सवैबाहुर्व्वनंययौ ॥ पत्न्याचानुगतो दुःखीतत्रप्राणान वासृजत् ॥ ३७ ॥ पत्नीतु यादवीतस्य सगर्भाप्टष्ठतो न्वगात् ॥ सप त्न्यातु गरस्तस्यै दत्तःपूर्वं किलानघ ॥ ३८ ॥ सातु भर्त्तुश्चितां कृत्वा वनेता मध्यरोहत् ॥ और्व्वस्तु भार्गवोविप्राः कारुण्या त्समवासर त् ॥ ३९ ॥ तस्याश्रमे च गर्भःस गरेणैव सहाच्युतः ॥ व्यजायत म हाबाहुः सगरोनाम पार्थिवः ॥ ४० ॥ और्व्वस्तु जातकर्म्मादीन् त स्यकृत्वा महात्मनः ॥ अध्याप्य वेदंशास्त्राणि ततोस्त्रं प्रत्यपादय त् ॥ ४१ ॥ आग्नेयंतु महाभागा अमरैरपि दुःसहं ॥ सतेनास्त्रवले नाजौ बलेन च समन्वितः ॥ ४२ ॥ हैहयं निजघानाशु क्रुद्धोरुद्रः

पञ्च निव ॥ आजहार च लोकेषु यशः कीर्तिमतांवरः ॥ ४३ ॥ त
तःशका न्सयवना न्कांबोजान्पारदा न्स्तदा ॥ पल्हवांश्चापि निःशे
षान्कर्त्तुं व्यवसितोन्टपः ॥ ४४ ॥ तेवध्यमाना वीरेण सगरेण महा
त्मना ॥ वशिष्टं शरणंगत्वा प्रणिपेतु र्मनीषिणं ॥ ४५ ॥ वशिष्टस्त्व
थतान्दृष्ट्वा समयेन महाद्युतिः ॥ सगरं वारयामास तेषांदत्वाभयं
तदा ॥ ४६ ॥ सगरः स्वांप्रतिज्ञान्तु गुरोर्वाक्यं निशम्य च ॥ धर्म्मं ज
घान तेषान्वै वेषानन्यां चकारह ॥ ४७ ॥ अर्द्धंशकानां शिरसो मु
ण्डयित्वा व्यसर्ज्जयत् ॥ यवनानां शिरःसर्वं कांबोजानां तथैव
च ॥ ४८ ॥ पारदा मुक्तकेशाश्च पल्हवाःश्मश्रु धारिणः ॥ निःस्वा
ध्यायवषट्काराःकृतास्तेन महात्मना ॥ ४९ ॥ शका यवनकांबोजाः
पारदाश्च द्विजोत्तमाः ॥ कालसर्प्पा माहिषदा दर्व्वाश्चोलाः सकेर
लाः ॥ ५० ॥ सर्वेते क्षत्रियाविप्रा धर्म्मस्तेषां निराकृतः ॥ वशिष्टव
चनाद्राज्ञा कृतास्तेन महात्मना ॥ ५१ ॥ सधर्म्मा विजयी राजा
विजित्ये मांवसुन्धराम् ॥ अश्वं प्रचारयामास वाजिमेधाय दीक्षि
तः ॥ ५२ ॥ तस्यचारयतः सोश्वः समुद्रे पूर्व्वदक्षिणे ॥ वेलासमी
पेऽपहृतो भूमिंचैव प्रवेशितः ॥ ५३ ॥ सतंदेशं तदापुत्रैः खानयामा
सपार्थिवः ॥ आसेदुस्ते तदातत्र खन्यमाने महार्णवे ॥ ५४ ॥ तमा
दिपुरुषंदेवं हरिंकृष्णं प्रजापतिं ॥ विष्णुं कपिलरूपेण स्वयंभुं प्रव
पंतथा ॥ ५५ ॥ तस्यचक्षुः समुत्थेन तेजसाप्रतिबुध्यत ॥ दग्धाः स
र्वेसुनिश्रेष्टा श्चत्वार स्त्ववशेषिताः ॥ ५६ ॥ वर्हिकेतुः सुकेतुश्च तथा

धर्मरथोऽनृप: ॥ शूर:पञ्चजनश्चैव तस्यवंशकरोऽभवत् ॥ ५७ ॥
प्रादाच्च तस्मैभगवान् हरिर्नारायणो वरम् ॥ अक्षयं वंशमिक्ष्वाको:
कीर्त्तिंचाप्य निवर्त्तिनीं ॥ ५८ ॥ पुत्रंसमुद्रंच विभु: स्वर्गवासं तथा
क्षयं ॥ समुद्रस्त्वार्घमादाय ववन्देतं महीपतिं ॥ ५९ ॥ सागरत्वं च
लेभेश कर्म्मणातेन तस्यह ॥ तञ्चाश्वमेधिकं सोश्वं समुद्रादुप ल
ब्धवान् ॥ ६० ॥ आजहाराश्वमेधानां शतंसतु महायशा: ॥ पुत्रा
णां च सहस्राणि षष्टिस्तस्येति न:श्रुतम् ॥ ६१ ॥ मुनय ऊचु: ॥ सग
रस्यात्मजावीरा कथंजाता महाबला: ॥ विक्रान्ता: षष्टिसाहस्रा: वि
धिनाकेन सूतज ॥ ६२ ॥ लोमहर्षण उवाच ॥ द्वेभार्ये सगरस्यास्तां
तपसा दग्धकिल्विषे ॥ ज्येष्ठाविदर्भ दुहिता केशिनीनाम नाम
त: ॥ ६३ ॥ कनीयसीतु महतीपत्नी परमधर्मिणी ॥ अरिष्टनेमिदु
हिता रूपेणाप्रतिमा भुवि ॥ ६४ ॥ और्व्वस्ताभ्यां वरंप्रादात्तद्बुध्यध्वं
द्विजोत्तमा: ॥ षष्टिंपुत्र सहस्राणि गृह्णात्वेका तपस्विनी ॥ ६५ ॥
एकंवंशकरंत्वेका यथेष्टंवरयत्विति ॥ तत्रैकाजगृहे पुत्रान् षष्टिसा
हस्रसम्मितान् ॥ ६६ ॥ एकंवंशकरंत्वेका तथेत्याह च तेमुनि: ॥ के
शिन्यसूतसगरा दसमंजस मात्मजम् ॥ ६७ ॥ राजापञ्चजनो ना
मवभूव समहाद्युति: ॥ इतरासुषुवेतुंवीं बीजपूर्णा मितिश्रुति: ॥ ६८ ॥
तत्रषष्टिसहस्राणि गर्भास्ते तिलसम्मिता: ॥ संवभूवु र्यथाकालं व
वृधुश्च यथासुखं ॥ ६९ ॥ घृतपूर्णेषु कुंभेषु तान्गर्भान्विदधुस्तत: ॥
धात्रीश्चैवैकश: प्रादात्तावत्य: पोषयेतत: ॥ ७० ॥ ततोदशसु मा

स्तेनु समुत्तस्थुर्यथाक्रमं ॥ कुमारास्ते यथाकालं सगरप्रीति वर्द्ध
नाः ॥ ७१ ॥ षष्टिंपुत्र सहस्राणि तस्यैवमभवन् द्विजाः ॥ गर्भादला
बुमध्याद्वै जातानि पृथिवीपतेः ॥ ७२ ॥ तेषां नारायणंतेजः प्रवि
ष्टानांमहात्मनां ॥ एकःपञ्चजनोनाम पुत्रोराजा बभूवह ॥ ॥ ७३ ॥
सुतः पञ्चजनस्यासी दंशुमान्नाम वीर्य्यवान् ॥ दिलीप स्तस्य तनयः
खट्वाङ्ग इतिविश्रुतः ॥ ७४ ॥ येनस्वर्गा दिहागत्य मुहूर्त्तंप्राप्य जी
वितं ॥ त्रयोभि संधितालोका बुध्यासत्येन चानघ ॥ ७५ ॥ दिली
पस्य च दायादो महाराजो भगीरथः ॥ यःसगंगां सरिच्छ्रेष्टा मव
तारयतप्रभुः ॥ ७६ ॥ समुद्र मानयच्चैनां दुहितृत्व मकल्पयत् ॥ त
स्माद् भागीरथीगंगा कथ्यतेवंश चिंतकैः ॥ ७७ ॥ भगीरथसुतो
राजा श्रुतइत्यभि विश्रुतः ॥ नाभागस्य सुतस्याभू त्पुत्रःपरम धा
र्मिकः ॥ ७८ ॥ अम्बरीषस्तु नाभागिः सिन्धुद्वीप पिताभवत् ॥ अयु
ताजित्तुदायादः सिन्धुद्वीपस्य वीर्यवान् ॥ ७९ ॥ अयुताजित्तु तस्त्वा
सीदृतुपर्णो महायशाः ॥ दिव्याक्ष हृदयज्ञोवै राजानल सखोब
ली ॥ ८० ॥ ऋतुपर्णस्य तस्यासी दार्त्तपर्णि र्महायशाः ॥ सुदासस्त
स्यतनयो राजाइन्द्र सखोभवत् ॥ ८१ ॥ सुदासस्य सुतःप्रोक्तः सौ
दासोनाम पार्थिवः ॥ ख्यातः कल्माषपादोवै राजा मित्रसहो भव
त् ॥ ८२ ॥ कल्माषपादस्यसुतः सर्व्वकर्मेति विश्रुतः ॥ अनरण्यस्तु
पुत्रोभू द्विश्रुतः सर्व्वकर्म्मणः ॥ ८३ ॥ अनरण्यसुतो निघ्नो निघ्न
तो द्वौवभूवतुः ॥ अनमित्रो रघुश्चैव पार्थिवर्षभ सत्तमौ ॥ ८४ ॥ अ

नमित्रसुतो राजा विद्वान् दुलिदुहोऽभवत् ॥ दिलीपस्तस्य पुत्रोभू
द्रामस्य प्रपितामहः ॥ ८५ ॥ दीर्घबाहुर्दिलीपस्य रघुर्नाम्ना सुतो
ऽभवत् ॥ अयोध्यायां महाराजो रघुरासी न्महाबलः ॥ ८६ ॥ अज
स्तु राघवोजज्ञे तस्माद्दशरथो ऽभवत् ॥ रामो दशरथाज्जज्ञे धर्म्मा
त्मा सुमहायशाः ॥ ८७ ॥ रामस्य तनयोजज्ञे कुशइत्यभि विश्रु
तिः ॥ अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः ॥ ८८ ॥ निष
धस्य नलःपुत्रो नभःपुत्रो नलस्यतु ॥ नभसः पुण्डरीकस्तु क्षेमधन्वा
ततःस्मृतः ॥ ८९ ॥ क्षेमधन्व सुतस्त्वासी द्देवानीकः प्रतापवान् ॥
आसी दहीनगुर्न्नाम देवानीकात्मजः प्रभुः ॥ ९० ॥ अहीनगोस्तु
दायादः सुधन्वानाम पार्थिवः ॥ सुधन्वनः सुतश्चापि ततोजज्ञे श
लोन्दपः ॥ ९१ ॥ उक्थोनाम सधर्म्मात्मा शलपुत्रो बभूवह ॥ वज्र
नाभः सुतस्तस्य नलस्तस्य महात्मनः ॥ ९२ ॥ नलौद्वावेव विख्यातौ
पुराणे भरतर्षभ ॥ वीरसेनात्मजश्चैव यश्चेक्ष्वाकु कुलोद्वहः ॥ ९३ ॥
इक्ष्वाकुवंशप्रभवाः प्राधान्येन प्रकीर्तिताः ॥ एतेविवस्वतोवंशे राजा
नो भूरितेजसः ॥ ९४ ॥ पठन्सम्यगिमां सृष्टिमादित्यस्य विवस्वतः ॥
श्राद्धदेवस्य देवस्य प्रजानां पुष्टिदस्य च ॥ ९५ ॥ प्रजावानेति सा
लोक्य माप्नुयाच्च विवस्वतः ॥

इत्यादि ब्रह्मपुराणे आदित्यवंशानुकीर्त्तनं नाम
षष्टो ऽध्यायः ६ ॥

---

लोमहर्षण उवाच ॥ पितासोमस्य भोविप्रा जज्ञेऽत्रि र्भगवान्दषिः ॥

ब्रह्मणोमानसा त्पूर्वं प्रजासर्गं विधित्सतः ॥ १ ॥ अनुत्तरं नामतपो
येनतप्तं महत्पुरा ॥ ऊर्द्धमाचक्रमेतस्य रेतःसोमत्वमीयिवान् ॥ २ ॥
नेत्राभ्यां वारिसुस्राव दशधाद्योतयन् दिशः ॥ तंगर्भं विधिनादिष्टा
दशदेव्यो दधुस्ततः ॥ ३ ॥ समेत्य धारयामासु र्नचताः समशक्नुव
न् ॥ यदानधारणेशक्ता स्तागर्भस्य दिशोदश ॥ ४ ॥ ततस्ताभिस्स
हैवाशु निपपात वसुन्धरां ॥ पतितं सोममालोक्य ब्रह्मालोक पि
तामहः ॥ ५ ॥ रथ मारोपयामास लोकानां हितकाम्यया ॥ तस्मि
न्निपतितेदेवाः पुत्रेऽत्रेः सुमहात्मनः ॥ ६ ॥ तुष्टुवु र्ब्रह्मणः पुत्रास्त
थान्ये मुनिसत्तमाः ॥ तस्यसंस्तू यमानस्य तेजः सोमस्यभास्वतः ॥ ७ ॥
आप्यायनाय लोकानां भावयामास सर्व्वतः ॥ सतेन रथमुख्येन सा
गरां तांवसुन्धराम् ॥ ८ ॥ त्रिःसप्तकृत्वो ऽतियशा श्चकाराभि प्रद
क्षिणम् ॥ तस्य यच्छ्रावितंतेजः पृथिवींसमपद्यत ॥ ९ ॥ ओषध्यस्ताः
समुद्भूता याभिस्सन्धार्य्यते जगत् ॥ सलब्धतेजा भगवान् संस्तवै
स्तैश्च कर्म्म भिः ॥ १० ॥ तपस्तेपे महाभागाः पद्मानांदशतीर्दश ॥
ततस्तस्मै ददौराज्यं ब्रह्मा ब्रह्मविदांवरः ॥ ११ ॥ वीजौषधीनां वि
प्राणामपाञ्च मुनिसत्तमाः ॥ सतत्प्राप्य महाराज्यं सोमः सौम्यव
तांवरः १२ ॥ समाजह्रे राजसूयं सहस्रशत दक्षिणम् ॥ दक्षिणा
मदद त्सोमस्त्रीन्लोका नितिनःश्रुतं ॥ १३ ॥ तेभ्यो ब्रह्मर्षिमुख्ये
भ्यः सदस्येभ्यश्च भोद्विजाः ॥ हिरण्यगर्भो ब्रह्मात्रि भृगुश्च ऋत्वि
जोऽभवन् ॥ १४ ॥ सदस्योऽभू द्धरिःसोमो मुनिभि र्वहुभिर्वृतः ॥

सिनीवाली कुहूश्चैव द्युतिःपुष्टिः प्रभावसुः ॥ १५ ॥ कीर्त्तिर्धृतिश्च लक्ष्मीश्च नवदेव्यः सिषेविरे ॥ प्राप्यावभृथमव्यग्रः सर्व्वदेवर्षिपूजितः ॥ १६ ॥ विराजाधिराजेन्द्रो दशधा भावयन्दिशः ॥ तस्तत त्प्राप्य दुःप्राप्यमैश्वर्य्यं ऋषिसत्कृतं ॥ १७ ॥ विबभ्राम मतिस्तात विनयाद्रुत माहता ॥ बृहस्पतेः सवैभार्य्या मैश्वर्य्यं मदमोहितः ॥ १८ ॥ जहारतरसा सोमो ऽवमन्यां गिरसस्सुतं ॥ सयाच्यमानोदेवैश्च तथा देवर्षिभिःसह ॥ १९ ॥ नवै व्यसर्ज्जयत्तारां तस्मै चाङ्गिरसे तदा ॥ उशनातस्यजग्राह पार्ष्णिमांगिरसश्चह ॥ २० ॥ रुद्रश्च पार्ष्णिंजग्राह गृहीत्वा जगवंधनुः ॥ तेन ब्रह्मशिरो नाम परमास्त्रं महात्मना ॥ २१ ॥ उद्दृत्य देवानुद्दिश्य येनैषांनाशितंयशः ॥ ततस्तद्युद्ध मभवत्प्रख्यातं तारकामयं ॥ २२ ॥ तदानिवार्य्योशनसंतंवैरुद्रं च शंकरं ॥ ददावांगिरसे तारां स्वयमेव पितामहः ॥ २३ ॥ तामन्तःप्रसवां दृष्ट्वा क्रुद्धःप्राह बृहस्पतिः ॥ मदीयायांनतेयोनौ गर्भोधार्यःकथञ्चन ॥ २४ ॥ इषीकास्तंव मासाद्यगर्भं साचोत्ससर्ज्जह ॥ जातमात्रः सभगवान्देवानामाक्षिपद्वपुः ॥ २५ ॥ ततः संशयमापन्ना स्तारामूचुः सुरोत्तमाः ॥ सत्यंब्रूहि सुतःकस्य सोमस्याथ बृहस्पतेः ॥ २६ ॥ पृच्छ्यमाना यदादेवै र्नाहसा त्रिबुधान्किल ॥ तदातां शप्तुमारब्धः कुमारोदस्युहन्तमः ॥ २७ ॥ तन्निवार्य्य तदाब्रह्मा तारां पप्रच्छसंशयं ॥ यदत्रतथ्यं तद्ब्रूहि तारेकस्य सुतस्त्वयं ॥ २८ ॥ प्रोवाच प्राञ्जलिःसातं सोमस्येति पितामहं ॥

तदातं मूर्ध्न्युपाघ्राय सोमोराजा प्रजापतिः ॥ २९ ॥ वुधइत्यक
रोन्नाम तस्यवालस्य धीमतः ॥ प्रतिकूलञ्च गगने समभ्युत्तिष्ठते
वुधः ॥ ३० ॥ उत्पादयामास ततः पुत्रंवै राजपुत्रिका ॥ तस्यापत्यं
महातेजा वभूवैलःपुरूरवाः ॥ ३१ ॥ उर्व्वश्यां जज्ञिरेयस्य पुत्राः
सप्त महात्मनः ॥ एतत्सोमस्य वोजन्म कीर्त्तितं कीर्त्तिवर्द्धनम् ॥ ३२ ॥
वंशमस्य मुनिश्रेष्टाः कीर्त्यमानं निवोधत ॥ धन्यमायुष्य मारोग्यं पु
ण्यंसंकल्पसाधकं ॥ ३३ ॥ सोमस्य जन्मश्रुत्वैव पापेभ्यो विप्रमुच्यते ॥

इत्यादि ब्रह्मपुराणे सोमोत्पत्ति र्नाम

सप्तमो ऽध्यायः ७ ॥

---

लोमहर्षण उवाच ॥ वुधस्यतु मुनिश्रेष्टा विद्वानपुत्रः पुरूरवाः ॥ ते
जस्वी दानशीलश्च यज्वाविपुल दक्षिणः ॥ १ ॥ ब्रह्मवादी पराक्रा
न्तः शत्रुभि र्युधिदुर्द्दमः ॥ आहर्त्ता चाग्निहोत्रस्य यज्ञानां च मही
पतिः ॥ २ ॥ सत्यवादी पुण्यमतिः सम्यक्संवृतमैथुनः ॥ अतीवत्रि
षुलोकेषु यशसा प्रतिमःसदा ॥ ३ ॥ विप्रवंहि ब्रह्मतपसा तदातस्मि
न्समर्प्पितं ॥ उर्व्वशी वरयामास हित्वामानं यशस्विनी ॥ ४ ॥ त
यासहाव सद्राजा दशवर्षाणि पञ्च च ॥ पञ्चषट् सप्तचाष्टौ च उ
र्व्वश्यासह भोद्विजाः ॥ ५ ॥ वनेचैत्ररथेरम्ये तदामन्दाकिनीतटे ॥
अलकायां विशालायां नन्दने च वनोत्तमे ॥ ६ ॥ उत्तरा न्सकुरू
न्प्राप्य मनोरथ फलद्रुमान् ॥ गन्धमादन पादेषु मेरुपृष्ठे तयोत्त

दे ॥ ७ ॥ एतेषु वनमुख्येषु सुरैराचरितेषु च ॥ उर्व्वश्या सहितो राजा रेमे परमया मुदा ॥ ८ ॥ देशेपुण्यतमे चैव महर्षिभि रभिष्टुते ॥ राज्यं सकारयामास प्रयागे पृथिवीपतिः ॥ ६ ॥ एवंप्रभावो राजासो दैलस्तु नरसत्तमः ॥ ऐलपुत्रा बभूवुस्ते सप्तदेवसुतोपमाः ॥ १० ॥ दिविजाता महात्मान आयुर्धीमान मावसुः ॥ विश्वायुश्चैव धर्म्मात्मा श्रुतायुश्च तथापरः ॥ ११ ॥ दृढायुश्च वनायुश्च सुतायु श्चोर्व्वशीसुताः ॥ अमावसोश्च दायादो भीमोराजाथ राजराट् ॥ १२ ॥ श्रीमान् भीमस्यदायादो राजासी त्काञ्चनप्रभः ॥ विद्वांस्तु काञ्चनस्यापि सुहोत्रो ऽभून्महाबलः ॥ १३ ॥ सौहोत्रि रभवज्जन्हुः केशिन्या गर्भसंभवः ॥ आजह्रे योमहत्सत्रं सर्व्वमेधं महामखं ॥ १४ ॥ पतिलोभेन यंगंगा पतित्वेन ससारह ॥ नेच्छतः प्लावयामास बसगंगा च तत्सदः ॥ १५ ॥ सतयाप्लावितं दृष्ट्वा यज्ञवाटंसमंततः ॥ सौहोत्रिरब्रवी द्गंगां क्रुद्धोराजा द्विजोत्तमाः ॥ १६ ॥ एषतेविफलं यत्नं पिबन्नम्भः करोम्यहं ॥ अस्यगंगे ऽवलेपस्य सद्यःफलमवाप्नुहि ॥ १७ ॥ राजर्षिणा ततःपीतां गंगांदृष्ट्वा महर्षयः ॥ उपनिन्युर्महाभागां दुहितृत्वेन जान्हवीं ॥ १८ ॥ युवनाश्वस्य पुत्रीं तु कावेरीं जन्हुरावहत् ॥ युवनाश्वस्य शापेन गंगार्द्धेन विनिर्मितां ॥ १९ ॥ कावेरीं सरितांश्रेष्ठां जन्होर्भार्य्या मनिन्दितां ॥ जन्हुस्तु दयितंपुत्रं सुनन्दंनाम धार्मिकं ॥ २० ॥ कावेर्य्यां जनयामास अजकस्तस्य चात्मजः ॥ अजकस्यतु दायादो वलाकाश्वो महीप

तिः ॥ २१ ॥ बभूव जगयाधीलः कुशस्तस्यात्मजो ऽभवत् ॥ कुशपु
त्रा बभूवुर्हि चत्वारो देववर्चसः ॥ २२ ॥ कुशिकः कुशनाभ श्च कु
शाम्बो मूर्तिमांस्तथा ॥ पल्हवैः सनिराज्ञाम द्राजावनचर स्त
दा ॥ २३ ॥ कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमं प्रभुम् ॥ लभेयमिति
तंशक्र स्त्रासादभ्येत्य जज्ञिवान् ॥ २४ ॥ पूर्णेवर्षसहस्रेवै ततःशक्रो
ह्यपश्यत ॥ अत्युग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः ॥ २५ ॥ सम
र्थं पुत्रजनने स्वयमेवा नुपबत ॥ पुत्रत्वं कल्पयामास देवेंद्रः सुरो
त्तमः ॥ २६ ॥ समाधिरभव द्राजा मघवान्कौशिकः स्वयं ॥ पौरकु
त्सा च तद्भार्य्या गाधिस्तस्या मजायत ॥ २७ ॥ गाधेःकन्या महा
भागा नाम्ना सत्यवतीशुभा ॥ सगाधिः काव्यपुत्राय ऋचीकाय ददौ
प्रभुः ॥ २८ ॥ तस्याःप्रीतः सवैभर्त्ता भार्गवो भृगुनन्दनः ॥ पुत्रार्थंसा
धयामास चरुंगाधेस्तथैव च ॥ २९ ॥ उवाच ह्यथतांभर्त्ता ऋचीको
भार्गवस्तदा ॥ उपयोज्य चरुरयं त्वयामात्रा त्वयंतव ॥ ३० ॥ तस्यां
जनिष्यतेपुत्रो दीप्तिमान् क्षत्रियर्षभः ॥ अजेयः क्षत्रियैर्लोके क्षत्रि
यर्षभ सूदनः ॥ ३१ ॥ तवापिपुत्रं कल्याणि धृतिमन्तं तपोधनं ॥
शमात्मकं द्विजश्रेष्टं चरुरेष विधास्यति ॥ ३२ ॥ एवमुक्त्वातु तांभा
र्य्यांमृचीको भृगुनन्दनः ॥ तपस्यभि रतोनित्य मरण्यं प्रविवेश
ह ॥ ३३ ॥ गाधिःसदारस्तु तदा ऋचीकाश्रम मभ्यगात् ॥ तीर्थया
त्राप्रसंगेन सुतांद्रष्टुं नरेश्वरः ॥ ३४ ॥ चरुद्वयं गृहीत्वातु ऋषेः स
त्यवतीतदा ॥ चरुमादाय यत्नेन सातुमात्रे न्यवेदयत् ॥ ३५ ॥ माता

तु तद्भेदेन द्विजे स्वचरुं ददौ ॥ तस्मात्स्वरु मथाच्छाना दात्महंस्यं चकारह ॥ ३६ ॥ अथसत्यवतीगर्भं क्षत्रियान्तकरं तदा ॥ धारया मास दीप्तेनवपुषा घोरदर्शना ॥ ३७ ॥ तामृचीक स्ततोदृष्ट्वा योगेना भ्यनुसृत्य च ॥ ततोऽब्रवीद् द्विजश्रेष्ठः स्वांभार्यां वरवर्णिनीं ॥ ३८ ॥ मात्रासि वंचिता भद्रे चरुव्यत्या सहेतुना ॥ भविष्यतिहि पुत्रस्ते क्रूरकर्म्मा तिदारुणः ॥ ३९ ॥ भ्राताजनिष्यते चापि ब्रह्मभूत स्तपोधनः ॥ विश्वंहि तपसाब्रह्म मयातस्मि न्समर्प्पितम् ॥ ४० ॥ एवमुक्ता महाभागा भर्त्रासत्यवती तदा ॥ प्रसादयामास पतिं पुत्रोमेने दृशो भवेत् ॥ ४१ ॥ ब्राह्मणा त्प्रसवस्त्वत्त इत्युक्तो मुनिरब्रवीत् ॥ नैषसंकल्पितःकामो मयाभद्रे तथास्त्विति ॥ ४२ ॥ उग्रकर्म्मा भवेत्पुत्रः पितुर्मातुश्च कारणात् ॥ पुनः सत्यवतीवाक्य मेवमुक्ता ब्रवीदिदम् ॥ ४३ ॥ इच्छंल्लोका नपिमुने सृजेथाः किंपुनःसुतं ॥ शमात्मकमृजुं त्वंमे पुत्रंदातु मिहार्हसि ॥ ४४ ॥ काममेवंविधः पौत्रो मम स्यात्तवचप्रभो ॥ यद्यन्यथा नशक्यंवै कर्त्तुमेतद् द्विजोत्तम ॥ ४५ ॥ ततःप्रसाद मकरो त्सतस्यास्तु तपोवलात् ॥ भद्रेनास्ति विशेषोमे पौत्रेवा वरवर्णिनि ॥ ४६ ॥ त्वयायथोक्तंवचनं तथाभद्रे भविष्यति ॥ ततःसत्यवती पुत्रं जनयामास भार्गवम् ॥ ४७ ॥ तपस्यभिरतं दांतं जमदग्निं शमात्मकं ॥ भृगो श्चरुविपर्य्यासे रौद्रवैष्णवयोः परा ॥ ४८ ॥ यजना द्वैष्णवाद्धांशे जमदग्नि रजायत ॥ साहि सत्यवतीपुण्या सत्यधर्मं परायणा ॥ ४९ ॥ कौशिकीति समाख्याता प्र

हत्येयंमहानदी ॥ इक्ष्वाकुवंशप्रभवो रेणुर्नाम नराधिपः ॥ ५० ॥ त
स्यकन्या महाभागा कामलीनाम रेणुका ॥ रेणुकायांतु कामल्यां
तपोविद्या समन्वितः ॥ ५१ ॥ आर्चीको जनयामास जामदग्न्यं सु
दारुणं ॥ सर्व्वविद्यांतगं श्रेष्ठं धनुर्वेदस्य पारगं ॥ ५२ ॥ रामंक्षत्रिय
हंतारं प्रदीप्तमिव पावकं ॥ और्व्वस्यैव ऋचीकस्य सत्यवत्यां महाय
शाः ॥ ५३ ॥ यमदग्नि स्तपोवीर्य्याज्जज्ञे ब्रह्मविदांवरः ॥ विश्वामि
त्रं तु दायादं गाधिः कुशिकनंदनः ॥ ५४ ॥ जनयामास पुत्रन्तु त
पोविद्या शमात्मकं ॥ प्राप्यब्रह्मर्षिसमतां योयंब्रह्मर्षितांगतः ॥ ५५ ॥
विश्वामित्रस्तु धर्म्मात्मा नाम्नाविश्वरथः स्मृतः ॥ जज्ञे भृगुप्रसादे
न कौशिका द्वंशवर्द्धनः ॥ ५६ ॥ विश्वामित्रस्य च सुता देवरातादयः
स्मृताः ॥ प्रख्याता स्त्रिषुलोकेषु तेषां नामान्यतःपरं ॥ ५७ ॥ देवश्रवा
कतिश्चैव यस्मात्कात्यायनाः स्मृताः ॥ शालवत्यां हिरण्याक्षो रेणुर्य
ज्ञेथ रेणुकः ॥ ५८ ॥ सांकृति र्गालवश्चैव देवलश्च तथाष्टकः ॥ क
च्छपो हारितश्चैव विश्वामित्रस्य तेसुताः ॥ ५९ ॥ तेषां ख्यातानि
गोत्राणि कौशिकानां महात्मनां ॥ प्राणिनो बभ्रवश्चैव ध्यानजप्या
स्तथैव च ॥ ६० ॥ पार्थिवा देवरातास्च शालंकायन वास्कलाः ॥
लोहिता मेवदूतास्च तथाकारूपकाः स्मृताः ॥ ६१ ॥ पौरवस्य मुनि
श्रेष्टा ब्रह्मर्षेः कौशिकस्य च ॥ संबंधोप्यस्य वंशेस्मिन् ब्रह्मक्षत्रस्य वि
श्रुतः ॥ ६२ ॥ विश्वामित्रा त्मजानांतु शुनःशेफोग्रजः स्मृतः ॥ भा
र्गवः कौशिकत्वंहि प्राप्तः सत्मुनिसत्तमाः ॥ ६३ ॥ विश्वामित्रस्य पुत्र

स्तु शुनःशेफो भवत्किल ॥ हरिश्चन्द्रस्य यज्ञेतु पशुत्वे विनियोजि
तः ॥ ६४ ॥ देवैर्दत्तः शुनःशेफो विश्वामित्राय वैपुनः ॥ देवैर्दत्तः
सवैयस्मा द्देवरातस्ततो ऽभवत् ॥ ६५ ॥ देवरातादयः सप्त विश्वामि
त्रस्यवैसुताः ॥ दृषद्वती सुतश्चापि वैश्वामित्र स्तथाष्टकः ॥ ६६ ॥
अष्टकस्य सुतोलौहिः प्रोक्तोजन्हुगणो मया ॥ अतऊर्द्ध्वं प्रवक्ष्या
मि वंशमायो र्महात्मने ॥ ६७ ॥

इतिब्रह्मपुराणे अमावसोर्वंशानुकीर्त्तनं नाम

ष्टमो ऽध्यायः ८ ॥

लोमहर्षण उवाच ॥ आयोःपुत्राश्च तेपञ्च सर्व्वेवीरा महारथाः ॥
स्वर्भानुतनयायां च प्रभायां यज्ञिरे नृपाः ॥ १ ॥ नहुषः प्रथमंयज्ञे
वृद्धशर्म्मा ततःपरं ॥ रंभोरजिरनेनाश्च त्रिषुलोकेषु विश्रुताः ॥ २ ॥
रजिःपुत्र शतानीह जनयामास पञ्चवै ॥ राजेयमिति विख्यातंच
त्रमिन्द्र भयावहं ॥ ३ यत्रदेवासुरेयुद्धे समुत्पन्नेतु दारुणे ॥ देवाश्चै
वासुराश्चैव पितामह मथाब्रुवन् ॥ ४ ॥ आवयोर्भगवन् युद्धे कोविजे
ता भविष्यति ॥ ब्रूहिनः सर्व्वभूतेश श्रोतुमिच्छाम तत्वतः ॥ ५ ॥
ब्रह्मोवाच ॥ येषामर्थायसंग्रामे रजिरात्तायुधः प्रभुः ॥ योत्स्यतेते
विजेष्यन्ति त्रीनूलोका न्नात्रसंशयः ॥ ६ ॥ यतोरजिर्धृ ति स्तत्र श्री
श्चतत्र यतोधृतिः ॥ यतःश्रीश्च धृतिश्चैव धर्मस्तत्र जयस्तथा ॥ ७ ॥
तेदेवादानवाः प्रीता देवेनोक्ता रजिंतदा ॥ अभ्ययु जय मिच्छन्तो

हवानासां नरर्षभं ॥ ८ ॥ सदिव्यभानुदौहित्रः प्रभायां समपद्य
त ॥ राजा परमतेजस्वी सोमवंशविवर्द्धनः ॥ ९ ॥ तेहृष्टमनसः स
र्वे रजिंदैत्येय देवताः ॥ ऊचुरस्मज्जयायत्वंगृहाणावरकार्मुकं ॥ १० ॥
अथोवाचरजि स्तत्र तयोर्वै देवदैत्ययोः ॥ सर्वज्ञः स्वार्थ मुद्दिश्य
यशःस्व च्छ प्रकाशयन् ॥ ११ ॥ रजिरुवाच ॥ यदि दैत्यगणा
न्सर्वान्जित्वा वीर्येण वासव ॥ १२ ॥ इन्द्रोभवामि धर्मेण ततोयो
त्स्यामिसंयुगे ॥ देवाःप्रथमतो विप्राः प्रतीयु हृष्टमानसाः ॥ १३ ॥
एवंयथेष्टंन्रुपते कामःसंपद्यतां तव ॥ श्रुत्वा सुरगणानांतु वाक्यं रा
जारजि स्तदा ॥ १४ ॥ पप्रच्छा सुरमुख्यांस्तु यथादेवा नपृच्छत् ॥
दानवादर्प्पपूर्णा स्व स्वार्थमेवा वगम्यह ॥ १५ ॥ प्रत्यूचु स्तंन्रुपवरं
साभिमान मिदंवचः ॥ अस्माकमिन्द्रः प्रह्लादो यस्यार्थे विजयाम
हे ॥ १६ ॥ अस्मिंस्तुसमये राजंस्तिष्टेथाराजसत्तम ॥ स्तथेतिब्रुव
न्नेव देवैरुक्तस्तु पार्थिवः ॥ १७ ॥ जघान दानवान्सर्व्वा न्येवध्या
वज्रपाणिनः ॥ सविप्रनष्टां देवानां परमाञ्च श्रियंवशी ॥ १८ ॥
निहत्य दानवान्सर्व्वा नाजहार रजिःप्रभुः ॥ ततोरजिं महावी
र्य्यं देवैःसह शतक्रतुः ॥ १९ ॥ रजिपुत्रोह मित्युक्त्वा पुनरेवाब्रवी
द्वचः ॥ इन्द्रोसिताताता देवानां सर्वेषां नात्रसंशयः ॥ २० ॥ यस्याह
मिन्द्रः पुत्रस्ते ख्यातिं यास्यामि कर्मभिः ॥ सतुशक्रवचः श्रुत्वा वं
चितस्तेन मायया ॥ २१ ॥ तथेवेत्यब्रवी द्राजा प्रीयमाणः शतक्र
तुं ॥ ततस्तस्मिंस्तु राजर्षौ दिवंप्राप्ते महीपतौ ॥ २२ ॥ दायाद

मिन्द्रादाशक्र, राजेयास्तनयारजे: ॥ पञ्चपुत्र शतान्यस्य तद्वैस्थानं शतक्रतो: ॥ २३ ॥ समाक्रामंत वसुधां स्वर्गलोकं त्रिविष्टपं ॥ ते यदाऽ सुसंमूढा रागोन्मत्ता विधर्मिण: ॥ २४ ॥ ब्रह्मद्विषश्च संवृत्ता हतवीर्य पराक्रमा: ॥ ततोलेभे सुरैश्वर्य मिन्द्र:स्थानं तथोत्तमम् ॥ २५ ॥ हत्वा रजिसुतान्सर्व्वा न्कामक्रोध परायणान् ॥ यइदं च्यावनं स्थानात्प्रतिष्ठां च शतक्रतो: ॥ २६ ॥ शृणुया द्धारयेद्वापि नसदौर्गत्य माप्नुयात् ॥ लोमहर्षण उवाच ॥ रम्भोऽनपत्यस्तत्रासीद्वंसं वच्याम्यनेनस: ॥ २७ ॥ अनेनस: सुतोराजा प्रतिक्षत्रो महायशा: ॥ प्रतिक्षत्रसुत स्थापि संजयोनाम विश्रुत: ॥ २८ ॥ संजयस्य जय:पुत्रो विजयस्तस्य चात्मज: ॥ विजयस्य कृति:पुत्र स्तस्यहर्यश्वत:सुत: ॥ २९ ॥ हर्यश्वत सुतोराजा सहदेव: प्रतापवान् ॥ सहदेवस्यधर्म्मात्मा नदीनइतिविश्रुत: ॥ ३० ॥ नदीनस्य जयत्सेनो जयत्सेनस्य संस्कृति: ॥ संस्कृतेरपि धर्म्मात्मा क्षत्रवृद्धो महायशा: ॥ ३१ ॥ अनेनस: समाख्याता क्षत्रवृद्धस्य वापर: ॥ क्षत्रवृद्धात्मजस्तत्र सुनुहोत्रो महायशा: ॥ ३२ ॥ सुनुहोत्रस्य दायादास्त्रय: परमधार्मिका: ॥ काश्य: शलश्च द्वावेतौ तथा गृत्समद: प्रभु: ॥ ३३ ॥ पुत्रो गृत्समदस्यापि शुनको यस्यशौनक: ॥ ब्राह्मणा: क्षत्रियाश्चैव वैश्या:शूद्रास्तथैव च ॥ ३४ ॥ शलात्मज आर्ष्टिषेणस्तनयस्तस्य काश्यप: ॥ काश्यस्यकाशिपो राजा पुत्रोदीर्घतपा स्तथा ॥ ३५ ॥ धन्वीतु दीर्घतपसो विद्वा न्धन्वन्तरि: स्मृत: ॥

तपसींतेसुमहतो जातो ह्यस्यधीमतः ॥ ३६ ॥ पुनर्धन्वन्तरिर्देवोमा नुषेष्विहजन्मनि ॥ तस्यगेहे समुत्पन्नो देवोधन्वंतरिस्तदा ॥ ३७ ॥ काशिराजो महाराजः सर्वरोगप्रणाशनः ॥ आयुर्वेदं भरद्वाजा त्प्राप्येह सभिषक्क्रियां ॥ ३८ ॥ तमष्टधापुनर्व्यस्य शिष्येभ्यःप्रत्यपा दयत् ॥ धन्वन्तरेस्तुतनयः केतुमानितिविश्रुतः ॥ ३९ ॥ अथकेतु मतःपुत्रो वीरोभीमरथः स्मृतः ॥ पुत्रोभीमरथस्यासी द्दिवोदासः प्र जेश्वरः ॥ ४० ॥ दिवोदासस्तु धर्मात्मा वाराणस्यधिपो ऽभवत् ॥ एतस्मिन्नेवकालेतु पुरींवाराणसीं द्विजाः ॥ ४१ ॥ शून्यां निवेशया मास क्षेमकोनाम राक्षसः ॥ शप्ताहिसा मतिमता निकुम्भेन महा त्मना ॥ ४२ ॥ शून्यावर्षसहस्रंवै भवित्रीतु नसंशयः ॥ तस्यांतु शप्त मात्रायां दिवोदासः प्रजेश्वरः ॥ ४३ ॥ विषयांतेपुरींरम्यां गोमत्यां संन्यवेशयत् ॥ भद्रश्रेण्यस्य पुत्राणां शतमुत्तम धन्विनां ॥ ४४ ॥ हत्वा निवेशयामास दिवोदासो नराधिपः ॥ भद्रश्रेण्यस्य तद्राज्यं हृतंतेन वलीयसा ॥ ४५ ॥ भद्रश्रेण्यस्य पुत्रस्तु दुर्दमोनाम विश्रुतः ॥ दिवोदासेन वालेति घृणयासौ विवर्जितः ॥ ४६ ॥ हैहयस्तु दाया दं हृतवान्वै महीपतिः ॥ आजह्रे पितृदायाद्यं दिवोदास हृतंवला त् ॥ ४७ ॥ भद्रश्रेण्यस्य पुत्रेण दुर्दमेन महात्मना ॥ वैरस्यांतं मुनि श्रेष्ठाः कृतमात्मीय तेजसा ॥ ४८ ॥ दिवोदासा द्दृषद्वत्यां वीरोयज्ञे प्रतर्द्दनः ॥ तेनवालेन पुत्रेण प्रहृतंतु पुनर्वलात् ॥ ४९ ॥ प्रतर्द्दनस्य पुत्रौद्वौ वत्सभर्गौ सुविश्रुतौ ॥ अलर्कः वत्सपुत्रोथ तस्यपुत्रो ऋतध्व

जः ॥ ५० ॥ अलर्कस्तस्य तनयो ब्रह्मण्यः सत्यसंगरः ॥ अलर्कंप्रति राजर्षिं श्लोकोगीतः पुरातनैः ॥ ५१ ॥ षष्टिवर्षसहस्राणि षष्टिवर्ष शतानि च ॥ युवारूपेण सम्पन्न आसीत्काशिकुलोद्वहः ॥ ५२ ॥ लोपामुद्रा प्रसादेन परमायु रवापसः ॥ तस्यासीत्सुमहद्राज्यं रूपयौवनशालिनः ॥ ५३ ॥ शापस्यांते महाबाहु र्हत्वा क्षेमकराक्षसं ॥ रम्यां निवेशयामास पुरीं वाराणसीं पुनः ॥ ५४ ॥ सन्नतेरपि दायादः सुनीथोनाम धार्मिकः ॥ सुनीथस्यतु दायादः क्षेमोनाम महायशाः ॥ ५५ ॥ क्षेमस्य केतुमान्पुत्रः सुकेतुस्तस्य चात्मजः ॥ सुकेतुतनय श्चापि धर्म्मकेतु रितिश्रुतिः ॥ ५६ ॥ धर्म्मकेतोस्तु दायादः सत्यकेतु र्महारथः ॥ सत्यकेतुसुत श्चापि विभुर्नाम प्रजेश्वरः ॥ ५७ ॥ आनर्त्तश्च विभोःपुत्रः सुकुमारश्च तत्सुतः ॥ सुकुमारस्यपुत्रस्तु धृष्टकेतुः सुधार्मिकः ॥ ५८ ॥ धृष्टकेतोस्तु दायादो वेणुहोत्रः प्रजेश्वरः ॥ वेणुहोत्रसुत श्चापि भर्गोनाम प्रजेश्वरः ॥ ५९ ॥ वत्सस्य वत्सभूमिस्तु भर्गभूमिस्तु भार्गवाः ॥ एतेत्वंगिरसः पुत्राजातावंशेथ भार्गवे ॥ ६० ॥ ब्राह्मणाः क्षत्रिया वैश्या स्त्रेजायुक्ताः सहस्रशः ॥ इत्येते काश्यपाः प्रोक्ता नहुषस्य निबोधत ॥ ६१ ॥

इत्यादि ब्रह्मपुराणे सोमवंशे वृद्धक्षत्रप्रसूति र्नाम

नवमो ऽध्यायः ९ ॥



लोमहर्षण उवाच ॥ उत्पन्नाः पितृकन्यायां विरजायां महौजसः ॥

नकुषस्तु दायादाः षडिंद्रोपेंद्रतेजसः ॥ १ ॥ यतिर्ययातिः संयाति
रायाति र्यातिरेव च ॥ सुयातिषष्ठस्तेषांवै ययातिः पार्थिवोऽभव
त् ॥ २ ॥ यतिर्ज्येष्ठस्तु तेषांवै ययातिस्तु ततःपरं ॥ ककुत्स्थकन्यां
गांनाम लेभे परमधार्मिकः ॥ ३ ॥ यतिस्तु मोक्षमास्थाय ब्रह्मभूतो
ऽभवन्मुनिः ॥ तेषांययातिः पञ्चानां विजित्य वसुधामिमां ॥ ४ ॥
देवयानी मुशनसः सुतांभार्य्या मवापसः ॥ शर्मिष्ठा मासुरीं चैव
तनयां वृषपर्व्वणः ॥ ५ ॥ यदुंचतुर्वसुं च्चैव देवयानी व्यजायत ॥
द्रुह्युंचानुं च्च पूरुं च शर्मिष्ठा वार्षपर्व्वणी ॥ ६ ॥ तस्मै शक्रो ददौ
प्रीतो रथं परमभास्वरम् ॥ असङ्गं काञ्चनंदिव्यं दिव्यैःपरमवाजि
भिः ॥ ७ ॥ युक्तंमनोजवैःशुभ्रै येंनकार्यं समुद्वहत् ॥ सतेन रथस्तु
स्येन षडागस्तेवा जयन्महीं ॥ ८ ॥ ययाति वंर्षसाहस्रं तथादेवा
न्सदानवान् ॥ सरथःपौरवाणान्तु सर्वेषा मभवत्तदा ॥ ९ ॥ यावन्तो
वसुनाम्नावै कौरवा ज्जनमेजयात् ॥ कुरोःपुत्रस्य राजेन्द्र राज्ञः पा
रीक्षितस्यह ॥ १० ॥ जगाम सरथोनाशं शापा द्गर्गस्यधीमतः ॥ ग
र्गस्यहि सुतंबालं सराजा जनमेजयः ॥ ११ ॥ वाक्क्रूरं हिंसयामास
ब्रह्महत्या मवापसः ॥ सलोहगन्धो राजर्षिः परिधावन्नित स्त
तः ॥ १२ ॥ पौरजानपदैस्त्यक्तो नलेभे शर्म्म कर्हिचित् ॥ ततः स
दुःखसंतप्तो नालभ त्संविदंक्वचित् ॥ १३ ॥ जातारं शौनकं राजा
शरणं प्रत्यपद्यत ॥ याजयामास यत्नेन शौनको जनमेजयं ॥ १४ ॥
अश्वमेधेन राजानं पावनार्थं द्विजोत्तमाः ॥ सलोहगन्धो व्यनश्य त्त

ह्यावभृथमेत्यच ॥ १५ ॥ सप्तदिव्यरथो राज्ञोवश्योस्येदिपते स्तदा ॥
दत्तःशक्रेण तुष्टेनलेभेतस्मा दृहद्रथः ॥ १६ ॥ इहद्रथा त्क्रमेणैवगतो
वार्हद्रथं नृपं ॥ ततोहत्वा जरासन्धं भीमस्तंरथमुत्तमम् ॥ १७ ॥
प्रददौ वासुदेवाय प्रीत्या कौरवनन्दनः ॥ सप्तद्वीपां ययातिस्तु जि
त्वापृथ्वीं ससागरां ॥ १८ ॥ विभजत्स्वं तदाराज्यं पुत्राणां नाहुष
स्तदा ॥ दिश्यिदक्षिण पूर्व्वस्यां तुर्व्वसुं मतिमान्नृपः ॥ १९ ॥ प्रती
च्या मुत्तरस्यां च द्रुह्युंचानु ञ्च नाहुषः ॥ तैरियं पृथिवीसर्व्वा सप्त
द्वीपा सपत्तना ॥ २० ॥ यथाप्रदेश मद्यापि धर्म्मेण प्रतिपाल्यते ॥
प्रजास्तेषां पुरस्तात्तु वक्ष्यामि मुनिसत्तमाः ॥ २१ ॥ धनुर्न्यस्य पृष
त्कांश्च पञ्चभिः पुरुषर्षभैः ॥ जरावानभव द्राजा भारमावेश्य बन्धु
षु ॥ २२ ॥ निक्षिप्य शस्त्रसंकाशा स्त्यंत्यज्य पृथिवीपतिः ॥ प्रीतिमा
नभव द्राजा ययाति रपराजितः ॥ २३ ॥ एवंविभज्य पृथिवीं यया
ति र्यदुमब्रवीत् ॥ जरांमे प्रतिगृह्णीष्व पुत्रकृत्यान्तरेषवै ॥ २४ ॥
तरुण स्तवरूपेण चरेयंपृथिवीमिमां ॥ जरांत्वयि समाधाय तंयदुः
प्रत्युवाचह ॥ २५ ॥ अनिर्दिष्टा मयाभिक्षा ब्राह्मणस्य प्रतिश्रुता ॥
अनयाकृत्यतां राजन् नग्रहीष्यामि तेजरां ॥ २६ ॥ जरायां बहवो
दोषाः पानभोजन कारिताः ॥ तस्माज्जरां नतेराजन् गृहीतु मह
मुत्सहे ॥ २७ ॥ सन्तितेबहवःपुत्रा मत्तःप्रियतरा नृप ॥ प्रतिगृही
तुं धर्म्मज्ञ पुत्रमन्यं वृणीष्ववै ॥ २८ ॥ सएवमुक्तो यदुना राजाको
पसमन्वितः ॥ उवाच वदतांश्रेष्ठो ययाति र्गर्हयन्सुतम् ॥ २९ ॥ क

आश्रम स्तवान्योक्ति कोवाधर्म्मो विधीयते ॥ सामनाहृत्य दुर्बुद्धे य
दहं तवदेशिकः ॥ ३० ॥ एवमुक्त्वासुतं विप्राः शशापैनं समन्युना ॥
अराज्यास्ते प्रजामूढ भविन्नीतिनराधिप ॥ ३१ ॥ द्रुह्युं चतुर्वसु
चैवा प्यनुञ्च द्विजसत्तमाः ॥ एवमेवाब्रवी द्राजा प्रत्याख्यातश्च तैर
पि ॥ ३२ ॥ शशाप तानतिक्रुद्धो ययाति रपराजितः ॥ यथा च क
थितंसर्व्वं मयात्र द्विजसत्तमाः ॥ ३३ ॥ एवंशप्त्वा सुतान्सर्व्वान् चतु
रः पुरुपूर्व्वजान् ॥ तदेववचनं राजा पुरुमप्याह भोद्विजाः ॥ ३४ ॥
तरुण स्तवरूपेण चरेयं पृथिवीमिमां ॥ जरांत्वयि समाधाय त्वं पू
रोयद्दिमन्यसे ॥ ३५ ॥ सजरां प्रतिजग्राह पितुःपूरुः प्रतापवान् ॥
ययातिरपि रूपेण पूरोः पर्य्यचरन्महीं ॥ ३६ ॥ समार्गमाणः कामाना
मंतं नृपतिसत्तमः ॥ विश्वाच्यासहितो रेमेवनेचैत्ररथेप्रभुः ॥ ३७ ॥
यदात्वतृप्तः कामेषु भोगेषु च नराधिपः ॥ तदापूरोः सकाशाद्वै स्वां
जरांप्रत्यपद्यत ॥ ३८ ॥ तत्रगाथामुनिश्रेष्ठा गीताःकिलययातिना ॥
योभिप्रत्याहरेत्कामा न्सर्व्वशोंगानिकूर्म्मवत् ॥ ३९ ॥ नजातुकामः
कामाना मुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूयएवा भिवर्द्ध
ते ॥ ४० ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवःस्त्रियः ॥ नालमेक
स्य तत्सर्व्व मितिकृत्वा नमुह्यति ॥ ४१ ॥ यदाभावं नकुरुते सर्व्व
भूतेषु पापजं ॥ कर्म्मणा मनसावाचा ब्रह्मसंपद्यते तदा ॥ ४२ ॥
यदान्येभ्यो नबिभेति यदाचास्मा न्नबिभ्यति ॥ यदानेच्छति नद्वेष्टि
ब्रह्मसंपद्यते तदा ॥ ४३ ॥ यादुस्त्यजा दुर्म्मतिभि र्यानजीर्य्यति जी

र्यतः ॥ योसौ प्राणान्तिकोरोग स्तांतृष्णां त्यज्यतःसुखम् ॥ ४४ ॥
जीर्यन्ति जीर्यतः केशा दन्ताजीर्यन्ति जीर्यतः ॥ धनाशा जीविता
शा च जीर्यतोपि नजीर्यति ॥ ४५ ॥ यच्चकामसुखं लोके यच्चदि
व्यंमहत्सुखं ॥ तृष्णाक्षय सुखस्यैते कलांनार्हंति षोडशीं ४६ ॥
एवमुक्त्वा सराजर्षिः सदारः प्राविशद्वनं ॥ कालेनमहता चापि चचा
र विपुलंतपः ॥ ४७ ॥ भृगुतुङ्गे तपस्तप्त्वा तपसोंते महायशाः ॥
अनश्नन्देह मुत्सृज्य सदारः स्वर्गमाप्तवान् ॥ ४८ ॥ तस्यवंशे मुनि
श्रेष्टाः पञ्चराजर्षि सत्तमाः ॥ यैर्व्याप्ता पृथिवीसर्व्वा सूर्य्यस्येव गभ
स्तिभिः ४९ ॥ यदोस्तु वंशं वक्ष्यामि शृणुध्वं राजसत्कृतं ॥ यत्र
नारायणो यज्ञे हरि र्वृष्णिकुलोद्वहः ॥ ५० ॥ शृणुन् प्रजावा ना
युष्मान् कीर्तिमांश्च भवेन्नरः ॥ ययातिचरितं नित्य मिदं शृण्वन्
द्विजोत्तमाः ॥ ५१ ॥

इत्यादिब्रह्मपुराणे ययातिचरितं नाम
दशमो ऽध्यायः १० ॥



लोमहर्षण उवाच ॥ शृणुध्वं मुनिशार्दूलाः पुरोर्वंशं महात्मनः ॥
विस्तरेणा नुपूर्व्याच्च यथाव द्वदतोमम ॥ १ ॥ पूरोःपुत्रः सुवीरोभू
न्मनस्युस्तस्य चात्मजः ॥ राजा चा भयदोनाम मनस्यो रभवत्सु
तः ॥ २ ॥ तथैवाभयदस्यासी त्सुधन्वा च महीपतिः ॥ सुधन्वनः सु
वाहुस्तु रौद्राश्व स्तस्य चात्मजः ॥ ३ ॥ रौद्राश्वस्य दशार्णेयुः कृक

षेयुस्तथैव च॥ कशेयुः स्थंडिलेयुश्च संनतेयु स्तथैव च॥ ४॥ ऋचे
युश्च स्थलेयुश्च जलेयुश्च महायशाः॥ धनेयुश्च वनेयुश्च पुत्रिका
श्च दशस्त्रियः॥ ५॥ भद्रा शूद्राच मद्रा च शलदा मलदा तथा॥
शलावला ततोविप्रा वरदा सुरसापिवा॥ ६॥ अयोगोचपलाचस्त्री
रत्नकूटा च तादश॥ ऋषिर्जातोऽत्रिवंशे च तासांभर्ता प्रभाक
रः॥ ७॥ भद्रायां जनयामास सुतंसोमं यशस्विनं॥ स्वर्भानुना
हतेसूर्य्ये पतमाने दिवोमहीं॥ ८॥ तमोभिभूते लोकेच प्रभायेन
प्रवर्त्तिता॥ स्वस्तितेऽस्त्विति चोक्तोवै पतमानो दिवाकरः॥ ९॥
वचनात्तस्य विप्रर्षेर्नपपात दिवोमहीं॥ अत्रिश्रेष्टानि गोत्राणि यश्च
कार महातपाः॥ १०॥ यज्ञेसुदुर्गमश्चैव देवैर्यश्चप्रतिष्ठितं॥ सता
सु जनयामास पुत्रिका स्वात्मकामजान्॥ ११॥ दशपुत्रा न्महास
त्वां स्तपस्युग्रे रतांस्तथा॥ सभानर श्चाक्षुषश्च परमन्यु स्तथैव
च॥ १२॥ सभानरस्य पुत्रस्तु विद्वान् कालानलोनृपः॥ कालान
लस्यधर्म्मज्ञः सृञ्जयोनाम वैसुतः॥ १३॥ सृञ्जयस्या भवत्पुत्रो वी
रोराजा पुरञ्जयः॥ जन्मेजयो मुनिश्रेष्टाः पुरञ्जय सुतोऽभव
त्॥ १४॥ जन्मेजयस्य राजर्षे र्महाशालोऽभवत्सुतः॥ देवेषुयः
परिज्ञातः प्रतिष्ठितयशा भुवि॥ १५॥ महामनानाम सुतो महा
शालस्य धार्मिकः॥ जज्ञेवीरः सुरगणैः पूजितः समहामनाः १६॥
महामनासुतौ राजा जनयामास भोद्विजाः॥ उशीनरंच धर्मज्ञं
तितिक्षुंच महाबलं॥ १७॥ उशीनरस्यपत्न्यस्तु पंचराजर्षि वंश

जाः ॥ नृगात्कृमि नवाद्वर्वा पञ्चमी च दृषद्वती ॥ १८ ॥ उशी
नरस्य पुत्रास्तु पञ्चतास्तु कुलोद्वहाः ॥ तपसाचैव महता जाता
वृद्धस्य चात्मजाः ॥ १९ ॥ नृगायास्तु नृगःपुत्रः कृव्या कृमिरजाय
त ॥ नवायास्तु नवःपुत्रो दर्वाया: सुव्रतोऽभवत् ॥ २० ॥ दृश द्वत्या
स्तुसंजज्ञे शिविरौशी नरोत्तमः ॥ शिवेस्तु शिवयोविप्रा यौधेया
स्तुनृगस्यह ॥ २१ ॥ नवस्यनवराष्ट्रन्तु कृमेस्तु कृमिलापुरी ॥ सुव्र
तस्य तथा त्वष्टा शिविपुत्रान्निबोधमे ॥ २२ ॥ शिवेस्तुशिवयःपुत्राश्च
त्वारोलोकविश्रुताः ॥ वृषदर्भसुवीरश्च कैकेयोमद्रकस्तथा ॥ २३ ॥
तेषांजनपदाः स्फीताः कैकेया मद्रकास्तथा ॥ वृषदर्भाः सुवीराश्च
तितिक्षोस्तु प्रजास्त्विमाः ॥ २४ ॥ तैतिक्षुरभवद्राजा पूर्वस्यांदि
शि भोद्विजाः ॥ उषद्रथो महावीर्यः फेनस्तस्य सुतोऽभवत् ॥ २५ ॥
फेनात्तु सुतपाजज्ञे ततः सुतपसोबलिः ॥ जातोमानुषयोनौतु सरा
जा काञ्चनेषुधिः ॥ २६ ॥ महायोगी सतुबलिर्वभूवन्नृपतिः पुरा ॥
पुत्रा नुत्पादयामास पञ्चवंशकरा न्भुवि ॥ २७ ॥ अङ्गः प्रथमतो
जज्ञे वंगःसुह्म स्तथैवच ॥ पुंड्रःकलिंगश्च तथा वालेयं क्षत्रमुच्य
ते ॥ २८ ॥ वालेयाब्राह्मणा श्चैव तस्यवंशकरा भुवि ॥ वलेश्चब्रह्म
णादत्तो वरःप्रीतेन भोद्विजाः ॥ २९ ॥ महायोगित्वमायुश्च कल्पस्य
परिमाणतः ॥ वलेश्चाप्रतिमत्वंवै धर्मेतत्वार्थ दर्शनम् ॥ ३० ॥ संग्रा
मेचाप्यजेयत्वं धर्मेचैव प्रधानता ॥ त्रैलोक्यदर्शनं चापि प्राधान्यं प्र
सवेतथा ॥ ३१ ॥ चतुरोनियता न्वर्णा स्त्वंच स्थापयितेतिच ॥

इत्युक्तो विभुना राजा बलिः शान्ति मुपाययौ ॥ ३२ ॥ कालेनमह
ता विप्राः स्वर्गस्थान मुपागमत् ॥ तेषां जनपदाः पञ्च अङ्गा वङ्गा
श्च सुह्मकाः ॥ ३३ ॥ कलिङ्गाः पुंड्रका श्चैव प्रजास्त्वङ्गस्य सांप्रतं ॥
अङ्गपुत्रो महानासी द्राजेन्द्रो दधिवाहनः ॥ ३४ ॥ दधिवाहन पु
त्रस्तु राजा दिविरथो ऽभवत् ॥ पुत्रो दिविरथस्यासी च्छक्रतुल्य प
राक्रमः ॥ ३५ ॥ विद्वा न्स्वर्गरथो नाम तस्य चित्ररथः सुतः ॥ ते
नधर्म्मरथे नाथ तथाकालं जरेगिरौ ॥ ३६ ॥ यजता सह शक्रेण
सोमःपीतो महात्मना ॥ अथ चित्ररथस्यापि पुत्रो दशरथो ऽभव
त् ॥ ३७ ॥ लोमपाद इतिख्यातो यस्य शांतासुता ऽभवत् ॥ तस्यदा
शरथि र्वीरश्चतुरङ्गो महायशाः ॥ ३८ ॥ ऋष्यश्रृङ्ग प्रसादेन जज्ञे
कुलविवर्द्धनः ॥ चतुरङ्गस्य पुत्रस्तु पृथुलाच इतिस्मृतः ॥ ३९ ॥ पृथु
लाच सुतोराजा चम्पोनाम महायशाः ॥ चम्पस्यतु पुरीचम्पा या
पुरा मालिनी ऽभवत् ॥ ४० ॥ पूर्णभद्र प्रसादेन हर्यंग स्तत्सुतो
ऽभवत् ॥ ततोवै भांडकि श्चैव वारणं शक्रवारणम् ॥ ४१ ॥ अव
तारयामास महीं मंत्रैर्वाहन मुत्तमं ॥ हर्यंगस्य सुतस्तत्र राजाभ
द्ररथः स्मृतः ॥ ४२ ॥ पुत्रो भद्ररथस्यासी द्बृहत्कर्म्मा प्रजेश्वरः ॥
बृहद्दर्भः सुतस्तस्य यस्माज्जज्ञे बृहन्मना ॥ ४३ ॥ बृहन्मनातु राजे
न्द्रो जनयामास वैसुतं ॥ नाम्ना जयद्रथं नाम यस्मा द्दृढरथो नृ
पः ॥ ४४ ॥ आसी द्दृढरथस्यापि विश्वजि ज्जनमेजयः ॥ दायाद
स्तस्य वैकर्णो विकर्ण स्तस्यचात्मजः ॥ ४५ ॥ तस्यपुत्र शतंत्वासी दंगा

नां कुलवर्द्धनं ॥ एतेंगवंशजाः सर्वे तेन्दृपाः कीर्त्तिता मया ॥ ४६ ॥ सत्यव्रता महात्मानः प्रजावन्तो महारथाः ॥ ऋचेयोस्तु मुनिश्रेष्टा रौद्राश्व तनयस्त्वयै ॥ ४७ ॥ श्रणुध्वं संप्रवक्ष्यामि वंशं राज्ञस्तु भो द्विजाः ॥ ऋचेयो स्तनयो राजा मतिनारो महीपतिः ॥ ४८ ॥ मतिनारसुता स्त्वासं स्त्रयः परमधार्म्मिकाः ॥ तंसुरोधाः प्रतिरथः वसुश्चैवतु धार्म्मिकः ॥ ४९ ॥ सर्वेधर्म्मविद स्तत्र ब्रह्मण्याः सत्यवादिनः ॥ इलानामतु यस्यासी त्कन्यावै मुनिसत्तमाः ॥ ५० ॥ ब्रह्मवादिन्यथ स्त्रीषा तंसुस्ता मभ्यगच्छत् ॥ तंसोः सुतोथ राजर्षि धर्म्मनेत्रः प्रतापवान् ॥ ५१ ॥ ब्रह्मवादी पराक्रांत स्तस्यभार्य्या पहानवी ॥ उपदानवी ततःपुत्रान् चतुरो जनयच्छुभान् ॥ ५२ ॥ दुस्कंतमथ शुष्कन्तं प्रवीरमनघं तथा ॥ दुष्कन्तस्यतु दायादो भरतो नाम वीर्य्यवान् ॥ ५३ ॥ ससर्व्वदमनो नाम नागायुत वलीमहान् ॥ चक्रवर्त्ती सुतोजज्ञे दुष्कन्तस्य महात्मनः ॥ ५४ ॥ शकुन्तलायां भरतो यस्यनाम्नाथ भारतः ॥ भरतस्य विनष्टेषु तनयेषुमहीपतिः ॥ ५५ ॥ मातृणांतु प्रकोपेन मया तत्कथितं पुरा ॥ वृहस्पते रांगिरसः पुत्रो विप्रा महामुनिः ॥ ५६ ॥ अयाजयद् भरद्वाजो महद्भिः क्रतुभिर्विभुः ॥ पूर्वेतुवितथे तस्य कृतेवै पुत्रजन्मनि ॥ ५७ ॥ ततोथ वितथोनाम भरद्वाजसुतो ऽभवत् ॥ ततोथ वितथेजाते भरतस्तु दिवं ययौ ॥ ५८ ॥ वितथं चाभिषिच्याथ भरद्वाजो वनंययौ ॥ स चापि वितथः पुत्रान् जनयामास पञ्चवै ॥ ५९ ॥ सुहोत्रं चा नुहोतारं

गर्यंगर्गं तथैव च ॥ कपिलञ्च महात्मानं सुहोत्रस्य सुतद्वयम् ॥ ६० ॥
काश्यिकञ्च महासत्वं तथा गृत्समतिं नृपं ॥ तथा गृत्समतेः पुत्राः
ब्राह्मणाः क्षत्रिया विशः ॥ ६१ ॥ काश्यिकस्यतु काश्येयः पुत्रो दीर्घत
पा स्तथा ॥ वभूव दीर्घतपसो विद्वा न्धन्वन्तरिः सुतः ॥ ६२ ॥ ध
न्वन्तरेस्तु तनयः केतुमानिति विश्रुतः ॥ अथकेतुमतः पुत्रो विद्वान्
भीमरथः सुतः ॥ ६३ ॥ पुत्रो भीमरथस्यापि वाराणस्य धिपो ऽभव
त् ॥ दिवोदास इतिख्यातः सर्व्वक्षत्र प्रणाशनः ॥ ६४ ॥ दिवोदास
स्य पुत्रोऽभू द्वीरोराजा प्रतर्द्दनः ॥ प्रतर्द्दनस्य पुत्रौद्वौ वत्सो भार्गव ए
व च ॥ ६५ ॥ अलर्क्को राजपुत्रस्तु राजा सन्नतिमा नपि ॥ हैहयस्य
तु दायादं हृतवान्वै महीपतिः ॥ ६६ ॥ आजह्रे पितृदायादं दिवो
दास हृतंवलात् ॥ भद्रश्रेण्यस्यपुत्रेण दुर्द्दमेनमहात्मना ॥ ६७ ॥
दिवोदासेनवालेति घृणयासौविसर्जितः ॥ अष्टारथोनामनृपः सु
तोभीमरथस्यवै ॥ ६८ ॥ तेनपुत्रेणवालस्य प्रहृतंतस्यभोद्विजाः ॥ वै
रस्यांतेसुनिश्रेष्टाः क्षत्रियेणविधित्सता ॥ ६९ ॥ अलर्क्कःकाशिरा
जस्तु ब्रह्मण्यःसत्यसंगरः ॥ अलर्क्कस्यसुतोसौहिः प्रोक्तोजह्नुगणोम
या ॥ ७० ॥ आजमीढोऽपरोवंशःश्रूयतांमुनिसत्तमाः ॥ अजमीढा
त्तुनीलिन्यां सुशांतिरुदपद्यत ॥ ७१ ॥ पुरुजातिःसुशांतेस्तु वाह्यश्वः
पुत्रःपुरुजातिजः ॥ वाह्यश्वपुत्रतनयाः पंचवभूवुरमरोपमाः ॥ ७२ ॥
मुद्गलःसृंजयश्चैव राजावृहदिषुस्तथा ॥ यवीनरश्चविक्रांतः कृमि
लाश्वश्चपंचमः ॥ ७३ ॥ पंचैतेरक्षणायालं देशानामितिविश्रुताः ॥

पंचालानांतुपंचाला: स्फीताजनपदावृता: ॥ ७४ ॥ अलंसंरक्षणेते
षां पंचालाइतिविश्रुता: ॥ मुद्गलस्यतुदायादोमौद्गल्य: सुमहाय
शा: ॥ ७५ ॥ इंद्रसेनायतोगर्भं वध्र्यश्वंप्रत्यपद्यत ॥ आसीत्पञ्चज
न: पुत्र: सृंजयस्यमहात्मन: ॥ ७६ ॥ सुत:पंचजनस्यापि सोमद
त्तोमहीपति: ॥ सोमदत्तस्यदायाद: सहदेवोमहायशा: ॥ ७७ ॥
सहदेवसुतस्यापि सोमकोनामविश्रुत: ॥ तयागृत्समते:पुत्रो अज
मीढोमहाबल: ॥ ७८ ॥ अजमीढसुतोजात: क्षीणेवंशेतुसोम
क: ॥ सोमकस्यसुतोजंतु र्यस्यपुत्रशतंबभौ ॥ ७९ ॥ तेषांयवीयान्पृ
षतो द्रुपदस्यपिताप्रभु: ॥ आजमीढा:स्मृताह्येते महात्मान:सुसो
मका: ॥ ८० ॥ महिषीत्वजमीढस्य धूमिनीपुत्रगृद्धिनी ॥ पतिव्र
तामहाभागा कुलजामुनिसत्तमा: ॥ ८१ ॥ साचपुत्रार्थिनीदेवी
व्रतचर्य्यासमन्विता ॥ ततोवर्षायुतंतस्या स्तप:परमदुश्चरं ॥ ८२ ॥
कृत्वाग्निं विधिव त्सातु परिभ्रमित भोजना ॥ अग्निहोत्रे कुलेचैव
सुष्वापमुनिसत्तमा: ॥ ८३ ॥ धूमिन्यासतयादेव्या त्वजमीढ:समी
यिवान् ॥ ऋक्षंसंजनयामास धूम्रवर्णंसुदर्शनं ॥ ८४ ॥ ऋक्षात्संव
रणोजज्ञे कुरु:संवरणात्तत: ॥ य:प्रयागादतिक्रम्य कुरुक्षेत्रंचकार
ह ॥ ८५ ॥ पुण्यंचरमणीयंच पुण्यकृद्भिर्निषेवितं ॥ तस्यान्ववा
य:सुमहान् यस्यनाम्नातुकौरवा: ॥ ८६ ॥ कुरोश्चपुत्राश्चत्वार:सुध
न्वासुधनुस्तथा ॥ परीक्षिच्चमहाबाहु:प्रवरश्चारिमेजय: ॥ ८७ ॥
सुधन्वनस्तु दायाद: सुहोत्रो मतिमान् स्मृत: ॥ च्यवन स्तस्य पुत्र

स्तु राजा धर्म्मार्थ कोविदः ॥ ८८ ॥ च्यवना त्कृतयज्ञस्तु इष्ट्वा य
ज्ञैस्तु धर्म्म वित् ॥ विश्रुतं जनयामास पुत्रमिन्द्रसखं नृपं ॥ ८९ ॥
चैद्योपरिचरंवीरं वसुंनाम्ना न्तरिक्षगं ॥ चैद्यो परिचरा ज्जज्ञे गि
रिका सप्तमानवान् ॥ ९० ॥ महारथो मगधराट् विश्रुतो योबृह
द्रथः ॥ प्रत्यग्रथः क्रथश्चैव यमाहु र्मणिवाहनं ॥ ९१ ॥ शाकल
स्य जजुश्चैव मत्स्यः कालीच सप्तमः ॥ बृहद्रथस्य दायादः कुशाग्रो
नाम विश्रुतः ॥ ९२ ॥ कुशाग्रस्या त्मजोविद्वान् ऋषभोनाम वीर्य
वान् ॥ जह्नोस्तु कथयिष्यामि वंशं सर्व्वगुणान्वितम् ॥ ९३ ॥ ज
ह्नुस्त्वजनय त्पुत्रं सुरथंनाम भूमिपं ॥ श्रुतसेनो ग्रसेनस्य भीमसे
नस्य नामतः ॥ ९४ ॥ एतेसर्वे महाभागा विक्रान्ता बलशालिनः ॥
जनमेजयस्य पुत्रोतु सुरथो मतिमांस्तथा ॥ ९५ ॥ सुरथस्यतु वि
क्रान्तः पुत्रोजज्ञे विदूरथः ॥ विदूरथस्य दायादो ऋचएव महाब
लः ॥ ९६ ॥ द्वितीय स्त्वभवद्राजा नाम्ना तेनैव विश्रुतः ॥ द्वाह्य
चौ सोमवंशेऽस्मिन् द्वावेवच परीक्षितौ ॥ ९७ ॥ भीमसेना स्त्रयो
विप्रा द्वौचापि जनमेजयौ ॥ ऋचस्यतु द्वितीयस्य भीमसेनो ऽभव
त्सुतः ॥ ९८ ॥ प्रतीपो भीमसेनात्तु प्रतीपस्यतुशंतनुः ॥ देवापि
र्वाह्लिक श्चापि त्रयएव महारथाः ॥ ९९ ॥ शंतनुः प्रवरस्त्वेष त
स्मि न्वंशे द्विजोत्तमाः ॥ वाह्लिकस्यतु वैराज्यं सप्तवाह्लि द्विजोत्त
माः ॥ १०० ॥ वाह्लिकस्य सुतश्चैव सोमदत्तो महायशाः ॥ जज्ञिरे
सोमदत्तात्तु भूरि र्भूरिश्रवाः शलः ॥ १०१ ॥ उपाध्यायस्तु देवानां

देवापि रभवन्मुनिः ॥ च्यवनस्यपुत्रः कृतकइष्टस्वासौ न्महात्म
नः ॥ १०२ ॥ शंतनुस्त्वभवद्राजा कौरवाणां धुरन्धरः ॥ शंतनोः
संप्रवक्ष्यामि वंशं त्रैलोक्य विश्रुतम् ॥ १०३ ॥ गांगं देवव्रतं नाम
पुत्रं सोजनयत् प्रभुः ॥ सतुभीष्म इतिख्यातः पाण्डवानां पिताम
हः ॥ १०४ ॥ कालो विचित्रवीर्यंतु जनयामास भारत ॥ शंतनोर्द
यितं पुत्रं धर्म्मात्मानमकल्मषं ॥ १०५ ॥ कृष्णद्वैपायनश्चैव चेत्रे वै
चित्रवीर्यके ॥ धृतराष्ट्रं चपांडुंच विदुरंचाप्यजीजनत् ॥ १०६ ॥ धृ
तराष्ट्रस्तुगांधार्य्यां पुत्रानुत्पादयच्छतं ॥ तेषांदुर्य्योधनःश्रेष्ठः सर्वेषा
मेवसप्रभुः ॥ १०७ ॥ पांडोर्धनंजयःपुत्रः सौभद्रस्तस्यचात्मजः ॥
अभिमन्योःपरिचित्तु ततःपारिचितःसुतः ॥ १०८ ॥ पारीचितस्य
काश्यांवैद्वौपुत्रौसंवभूवतुः ॥ चंद्रापीडस्तन्दपतिः सूर्य्यापीडस्समोच
वित् ॥ १०९ ॥ चंद्रापीडस्यपुत्राणां शतमुत्तमधन्विनां ॥ जान्मेजय
मित्येवंख्यातं भुविपरिश्रुतं ॥ ११० ॥ तेषांज्येष्ठसुतस्त्वासीत्पुरेवारा
णसाह्वये ॥ सत्यकर्णोमहावाहुर्यज्वाविपुलदक्षिणः ॥ १११ ॥ सत्यक
र्णस्यदायदः श्वेतकर्णःप्रतापवान् ॥ अपुत्रःसतुधर्म्मात्मा प्रविवेशतपो
वनं ॥ ११२ ॥ तस्मादनगताद्गर्भं यादवी प्रत्यपद्यत ॥ सुवाहो र्दुहि
तासुभ्रू र्मालिनी प्रसृतोन्वयात् ॥ ११३ ॥ सुवाहो र्दुहिता साध्वी
वने राजीवलोचना ॥ पथिसा सुषुवेचैव सुकुमारंकुमारकं ॥ ११४ ॥
तमपास्य चतत्रैव राजानं सान्वगच्छत् ॥ पतिव्रता महाभागा द्रौ
पदीव पुरासती ॥ ११५ ॥ कुमारः सुकुमारोसौ गिरिकुञ्जे करो

दह॥ दयार्थं तस्यैवास्तु प्रादुरास न्महात्मनः॥ ११६॥ अविष्टा यास्तु पुत्रौद्वौ पैप्पलादि श्च कौशिकः॥ दृष्ट्वा कृपान्वितो गृह्य तं प्रक्षालयतां जले॥ ११७॥ निःपृष्टो तस्यपार्श्वेतु शिलायां रुधिर प्लुतौ॥ अजाश्यामः सपार्श्वाभ्यां घृष्टाभ्यां सुसमाहितः॥ ११८॥ अजश्यामौतु तौपार्श्वौ दैवेन संबभूवतुः॥ तथाजपार्श्वं इतिवै चक्रा ते तस्यनामतत्॥ ११९॥ सतुरोमक शालायां द्विजाभ्यां परिवर्द्धि तः॥ रोमकस्यतु भार्य्यांत मुद्दहत् पुत्रकारणात्॥ १२०॥ रोमक्याः सतुपुत्रो ऽभू द्ब्राह्मणौ सविवौचतौ॥ तेषां पुत्रा श्च पौत्रा श्च युगप त्तुल्यजीविनः॥ १२१॥ सएष पौरवो वंशः पाण्डवानां प्रतिष्ठितः॥ श्लोकोपि चात्रगीतोयं नाहुषेण ययातिना॥ १२२॥ जरा संक्रम णेपूर्वं भृशं प्रीतेन धीमता॥ आचन्द्रार्क ग्रहाभूमि र्भवेदपि नसं शयः॥ १२३॥ अपौरवा नतुमही भविष्यति कदाचन॥ एषवःपौर वोवंशो विख्यातः कथितो मया॥ १२४॥ तुर्व्वसो श्च प्रवक्ष्यामि द्रु ह्योश्चानो र्यदोस्तथा॥ तुर्व्वसो श्च सुतोवह्नि र्गोभानु स्तस्य चात्म जः॥ १२५॥॥ गोभानोस्तु सुतोराजा त्रैसानु रपराजितः॥ क रंधमस्तु त्रैसानो र्मरुतस्तस्य चात्मजः॥ १२६॥ अन्यस् त्वविजि तोराजा मरुतः कथितस्तव॥ अनपत्यो ऽभवद्राजा यज्वा विपुल दक्षिणः॥ १२७॥ दुहिता संयतानाम तस्यासीत् पृथिवीपतेः। दक्षिणार्थंहि सादत्ता संवर्त्ताय महात्मने॥ १२८॥ दुष्यंतं पौर वं चापि लेभे पुत्रमकल्मषं॥ एवंययातेः शापेन जरा संक्रमणे त

दा ॥ १२९ ॥ पौरवं तुर्वसोर्वंशं प्रविवेश नृपोत्तमः ॥ दुष्यंतस्य तु दायादः ककुद्मानः प्रजेश्वरः ॥ १३० ॥ ककुद्मानस्य दायादा श्च त्वारस्तस्य चात्मजाः ॥ पांड्यश्च केरल श्चैव कोल श्चोल श्चपार्थिवः ॥ १३१ ॥ तेषां जनपदाः स्फीताः पांड्या श्चोलाश्च केरलाः ॥ द्रुह्योश्च तनयो विप्रा बभ्रुःसेतुश्च पार्थिवः ॥ १३२ ॥ अङ्गारसेतु स्तत्सुतो मरुतांपति रुच्यते ॥ यौवनाश्वेन समरे कृच्छ्रे ण निहतो वली ॥ १३३ ॥ युद्धं सुमहदप्यासी त्मासान् परिचतुर्दश ॥ अंगा रसेतो दायादो गान्धारोनाम पार्थिवः ॥ १३४ ॥ ख्यायते यस्य ना म्नाते गान्धार विषयो महान् ॥ गान्धारदेशजा श्चैव तुरगा वाजि नांवराः ॥ १३५ ॥ अनोस्तुपुत्रो धर्म्मोभूत् धृतसुतस्यात्मजो ऽभव त् ॥ धृताच्छतद्रुह्योजज्ञे प्रचेतास्तस्यचात्मजः ॥ १३६ ॥ प्रचेतसः प्रचेतास्तु कीर्तितास्तनयामया ॥ बभूवुस्तु यदोःपुत्राः पंचदेवसु तोपमाः ॥ १३७ ॥ सहस्रदःपयोदश्च क्रोष्टानिलोंजिकस्तथा ॥ स हस्रदस्य दायादा स्त्रयः परमधार्मिकाः ॥ १३८ ॥ हैहयश्चहयश्चैव राजावेणुहयस्तथा ॥ हैहयस्याभवत्पुत्रो धर्मनेत्रइतिश्रुतः ॥ १३९ ॥ धर्मनेत्रस्यकार्तस्तुसाहंजस्तस्यचात्मजः ॥ साहंजनीनामपुरीतेनरा ज्ञानिवेशिता ॥ १४० ॥ आसीन्महिष्मतःपुत्रो भद्रश्रेण्यःप्रतापवा न् ॥ १४१ ॥ भद्रश्रेण्यस्यदायादो दुर्दमोनामविश्रुतः ॥ दुर्दमस्य सुतो धीमानूकनकोनामनामतः ॥ १४२ ॥ कनकस्यतुदायादा श्चत्वा रोलोकविश्रुताः ॥ कृतवीर्यःकृतौजाश्च कृतकर्मातथैवच ॥ १४३ ॥

कृताग्निस्तु चतुर्थोभूत्कृतवीर्यात्तथार्जुनः॥ योसौबाहुसहस्रेण सप्त
द्वीपाधिपो ऽभवत्॥ १४४॥ जिगायपृथिवी मेको रथेनादित्यव
र्चसा॥ सहिवर्षायुतंतप्त्वा तपःपरमदुस्करं॥ १४५॥ दत्तमाराधया
मास कार्त्तवीर्योऽत्रिसंभवम्॥ तस्मै दत्तोवरान्प्रादा च्चतुरोभूरिते
जसः॥ १४६॥ पूर्वंबाहुसहस्रंवै प्रार्थितंसुमहद्वरं॥ अधर्मेधीयमा
नस्य सद्भिस्तत्रनिवारणं॥ १४७॥ उग्रेणपृथिवींजित्वा स्वधर्मे
णानुरंजनं॥ संग्रामान्सुबहूञ्जित्वा हत्वाचारीन्सहस्रशः॥ १४८॥
संग्रामेवर्त्तमानस्य वधंचाभ्यधिकाद्रणे॥ तस्यबाहुसहस्रंतु युध्यतः
किलभारत॥ १४९॥ योगाद्योगेश्वरस्येव प्रादुर्भवतिमायया॥ तेने
यंपृथिवीसर्वा सप्तद्वीपा सपत्तना॥ १५०॥ ससमुद्राकरनगरा उग्रे
णविधिनाजिता॥ तेनसप्तसुद्वीपेषु सप्तयज्ञशतानिवै॥ १५१॥ प्रा
प्तानिविधिनाराज्ञा श्रूयतेमुनिसत्तमाः॥ सर्वेयज्ञामुनिश्रेष्ठाः सहस्र
शतदक्षिणाः॥ १५२॥सर्वे कांचनयूपाश्च सर्वेकांचनवेदयः॥ सर्वैर्दे
वैर्मुनिश्रेष्ठा विमानस्थैरलंकृताः॥ १५३॥ गंधर्वैरप्सरोभिश्च नि
त्यमेवोपशोभिताः॥ यस्ययज्ञेजगौगाथां गंधर्वोनारदस्तथा॥ १५४॥
वरीदासात्मजोविद्वान् महिम्नातस्यविस्मितः॥ नारद उवाच॥ न
नूनंकार्त्तवीर्य्यस्य गतिंयास्यंतिपार्थिवाः॥ १५५॥ यज्ञैर्दानैस्तपो
भिर्वा विक्रमेण श्रुतेनच॥ सहिसप्तसु द्वीपेषु चर्मीखड्गीशरास
नी॥ १५६॥ रथीद्वीपा ननुचरन् योगीसंदृश्यतेनृभिः॥ अनष्टद्र
व्यताचैव नशोकोनचविभ्रमः॥ १५७॥ प्रभावेनमहाराज्ञः प्रजा

धर्म्मेणारक्षत: ॥ ससर्वरत्नभोगाढ्य: चक्रवर्तीबभूवह ॥ १५८ ॥ स एवपशुपालोभूत् क्षेत्रपाल:सएवच ॥ सएववृष्ट्यापर्यन्यो योगित्वा दर्जुनोऽभवत् ॥ १५९ ॥ सवैवाहुसहस्रेण ज्याघातकठिन त्वचा ॥ भातिरश्मिसहस्रेण शरदीवचभास्कर: ॥ १६० ॥ सहिनागान्मनुष्ये षुमाहिष्मत्यांमहाद्युति: ॥ कर्कोटकसुतान् जित्वापुर्यांतस्यांनिवेशय त् ॥ १६१ ॥ सवैवेगंसमुद्रस्य प्रावृट्कालेंबुजेक्षण: ॥ क्रीडन्नेवभुजो द्भिन्नं प्रतिस्रोतश्चकारह ॥ १६२ ॥ लुंठिताक्रीडितातेन नदीस्र ग्दाममालिनी ॥ चलदूर्म्मिसहस्रेण शंकिताभ्येतिनर्म्मदा ॥ १६३ ॥ तस्यबाहुसहस्रेण क्षिप्यमाणेमहोदधौ ॥ भयान्निलीनानिश्चेष्टा: पातालस्थामहासुरा: ॥ १६४ ॥ चूर्णीकृतमहावीचिं चलन्मीनमहा तिमिं ॥ मारुताविद्धफेनौघ मावर्त्तक्षोभसंकुलं ॥ १६५ ॥ प्रावर्त्तय त्तदाराजा सहस्रेणचबाहुना ॥ देवासुरसमाक्षिप्त: क्षीरोदमिव मंदर: ॥ १६६ ॥ तस्यक्षोभेणचकिता ह्यमृतोत्पादशंकिता: ॥ सह सोत्पतिताभीता भीमंदृष्ट्वानृपोत्तमं ॥ १६७ ॥ नतानिश्चलमूर्द्धानो बभूवुस्ते महोरगा: ॥ सायाह्ने कदलीखंडा: कम्पिताइव वायु ना ॥१६८॥ सवैबद्धधनुर्ज्याभिरुत्सिक्तंपंचभि:शरै: ॥ लंकेशंमोहयि त्वातु सवलंरावणं वलात् ॥ १६९ ॥ निर्जित्य वशमानीय माहिष्म त्यां ववन्धतं ॥ श्रुत्वातु वद्धं पौलस्त्यं रावणं त्वर्जुनेनतु ॥ १७० ॥ ततोगत्वा पुलस्त्यस्त मर्जुनं ददृशे स्वयं ॥ मुमोचरक्ष: पौलस्त्यं पु लस्त्येनानुयाचित: ॥ १७१ ॥ यस्यवाहुसहस्रस्य वभूव ज्यातलं स्व

नः ॥ युगांते तोयदस्येव स्फुरतो ह्यग्नेरिव ॥ १७२ ॥ अहोवत च्छ
येवोर्व्वं भार्गवस्य यदाच्छिनत् ॥ राज्ञोवाङ्कसहस्रंतु हैमंतालवनं य
था ॥ १७३ ॥ तृषितेन कदाचित्स भिक्षितश्चित्रभानुना ॥ सभिक्षा
मदद्दीरः सप्तद्वीपान् विभावसोः ॥ १७४ ॥ पुराणि ग्रामघोषां
श्च विषयं चैव सर्व्वशः ॥ जज्वलु स्तस्य सर्व्वाणि चित्रभानु दिधक्ष
या ॥ १७५ ॥ स तस्य पुरुषेन्द्रस्य प्रभावेण दुरात्मनः ॥ ददाह का
र्त्तवीर्य्यस्य शैलांश्चैव वनानि च ॥ १७६ ॥ सशून्य माश्रमंरम्यं वरु
णस्यात्मजस्यवै ॥ ददाह वलवद्भीत श्चित्रभानुः सहैहयः ॥ १७७ ॥
यंलेभे वरुणःपुत्रं पुराभास्वन्त मुत्तमं ॥ वसिष्ठंनाम समुनिः ख्यात
आपव इत्युत ॥ १७८ ॥ यत्रापवस्तुतं क्रोधा च्छप्तवा नर्जुनं वि
भुः ॥ यस्मा न्नवर्जितमिदं वनंतेममहैहय ॥ १७९ ॥ तस्मात्ते दुष्क
रंकर्म्म कृतमन्यो हनिष्यति ॥ रामोनाम महावाहु र्जामदग्न्यः प्र
तापवान् ॥ १८० ॥ छित्वा वाहुसहस्रंते प्रमथ्य तरसावली ॥ तेज
स्वी ब्राह्मणस्य त्वां वधिष्यति सभार्गवः ॥ १८१ ॥ अनष्ट द्रव्यताप
स्य वभूवा मित्रकर्षिणः ॥ प्रतापेन नरेन्द्रस्य प्रजा धर्मेण रक्ष
तः ॥ १८२ ॥ प्राप्त स्ततोऽस्यमृत्युर्वै तस्यशापा न्महामुनेः ॥ वरस्त
स्यैव भोविप्राः स्वयमेव हृतःपुरा ॥ १८३ ॥ तस्यपुत्र शता न्यासन् प
ञ्चशेषा महात्मनः ॥ कृतास्त्रा वलिनः शूरा धर्म्मात्मानो यशस्वि
नः ॥ १८४ ॥ शूरसेन स्च शूर स्च वृषणो मधुपध्वजः ॥ जयध्वज
स्च नाम्नासीदावंत्यो नृपतिर्महान् ॥ १८५ ॥ कार्त्तवीर्य्यस्य तनया

वीर्यवन्तो महाबलाः ॥ जयध्वजस्य पुत्रस्तु तालजंघो महाब
लः ॥ १८६ ॥ तस्यपुत्राः शतंख्याता स्तालजंघा इतिश्रुताः ॥ तेषां
कुले महावीर्य्या हैहयानां महात्मनाम् ॥ १८७ ॥ वीतिहोत्राः सु
हता च भोजा श्चावंतयः स्मृताः ॥ तौडिकेरा श्च विख्याता स्तालजं
घास्तथैव च ॥ १८८ ॥ भरताश्च सुजाताश्च वहुलान्नानुकीर्त्तिताः ॥
वृषप्रभृतयो विप्राः यादवः पुण्यकर्म्मिं णः ॥ १८९ ॥ वृषो वंशधरः
पुत्र स्तस्यपुत्रो ऽभवन्मधुः ॥ मधोः पुत्रशतं त्वासी द्वृषण स्तस्य वंश
कृत् ॥ १९० ॥ वृषणा वृष्णयःसर्वे मधोस्तु माधवाःस्मृताः ॥ यादवा
यदुनाम्नाते निरुच्यन्ते च हैहयाः ॥ १९१ ॥ नतस्य वित्तनाशः स्या
न्नष्टं प्रतिलभे च्चसः ॥ कार्त्तवीर्यस्य योजन्म कथये दिह नित्य
शः ॥ १९२ ॥ एते ययातिपुत्राणां पञ्चवंशा द्विजोत्तमाः ॥ की
र्त्तिता लोकवीराणां येलोका न्धारयन्तिवै ॥ १९३ ॥ भूतानीव मु
निश्रेष्ठाः पञ्चस्थावर जङ्गमाम् ॥ श्रुत्वापञ्च विसर्गांस्तु राजाधर्मा
र्थकोविदः ॥ १९४ ॥ वशीभवति पंचाना मात्मजानां तथेश्वरः ॥
लभेतपञ्चवरां श्चैव दुर्लभानिह लौकिकान् ॥ १९५ ॥ आयुः की
र्तिं तथापुत्रा नैश्वर्यंभूति मेववा ॥ धारणा च्छ्रवणाच्चैव पञ्चवर्गस्य
भोद्विजाः ॥ १९६ ॥ क्रोष्टोर्वंशंमुनिश्रेष्ठाः शृणुध्वं गदतोमम ॥ यदो
र्वंशधरस्याथ यज्विनःपुण्यकर्म्मिणः ॥ १९७ ॥ क्रोष्टुर्वंशंतुश्रुत्वेनं
सर्व्वपापैःप्रमुच्यते ॥ यस्यान्ववायजो विष्णुर्हरिर्वृष्णिकुलो
द्वहः ॥ १९८ ॥

इत्यादि ब्राह्मपुराणे यदोर्वंशकीर्त्तनंनाम

काद्शोऽध्यायः ११ ॥



लोमहर्षण उवाच ॥ गांधारीचैवमाद्रीच क्रोष्टोर्भार्येबभूवतुः ॥ गांधारीजनयामास अनमित्रंमहाबलं ॥ १ ॥ माद्रीयुधाजितंपुत्रं ततोन्यंदेवमीढुषं ॥ तेषांवंशास्त्रिधाभूताष्टष्णीनांकुलवर्द्धनाः ॥ २ ॥ माद्र्याःपुत्रौतुजज्ञाते शुभौष्टष्यान्धकावुभौ ॥ जज्ञातेतनयौष्टष्णेः श्वफल्कश्चित्रकस्तथा ॥ ३ ॥ श्वफल्कस्तुमुनि श्रेष्ठाः धर्म्मात्मायत्र वर्त्तते ॥ नास्तिव्याधिभयंतत्र नावर्षभयमेवच ॥ ४ ॥ कदाचित्काशि राजस्य विषये मुनिसत्तमाः ॥ त्रीणिवर्षाणि विषये नावर्षत्पाकशा सनः ॥ ५ ॥ सतत्र वासयामास श्वफल्कं परमर्चितं ॥ श्वफल्कपरि वर्त्तेन ववर्ष हरिवाहनः ॥ ६ ॥ श्वफल्कः काशिराजस्य सुतांभार्य्यां मविन्दत ॥ गान्दिनीनाम सागांतु ददौविप्राय नित्यशः ॥ ७ ॥ दातायज्वा च वीरश्च श्रुतवा नतिथिप्रियः ॥ अक्रूरः सुषुवेतस्मा त्श्व फल्काद्भूरिदक्षिणः ॥ ८ ॥ उपमद्गुस्तथामद्गुर्मुदरश्चारिमेजयः ॥ अरिक्षिप स्तथोपेक्षः शत्रुघ्नो ऽथारिमर्द्दनः ॥ ९ ॥ धर्म्मधृ ग्यति धर्म्मा च धर्म्मोक्षान्धकस्तथा ॥ अवाह प्रतिवाहौ च सुन्दरी च वराङ्गना ॥ १० ॥ अक्रूरेणो ग्रसेनायां सुगात्र्यां कुरुनन्दनः ॥ प्र सेनश्चोपदेव श्च जज्ञाते मुनिवर्चसौ ॥ ११ ॥ चित्रकस्या भवन्पुत्राः एथुर्विएथुरेव च ॥ अश्वग्रीवो ऽश्ववाहुश्च स्वपार्श्वक गवेषणौ ॥ १२ ॥

अरिष्टनेमि रथ्वस्तु धर्म्मोधर्मधृत स्तदा ॥ सुवाहु र्बहुवाहु श्च श्र
विष्टाश्रवणे स्त्रियौ ॥ १३ ॥ अश्विक्न्यां जनयामास शूरं वैदेवमी
ढुषं ॥ महिष्यां जज्ञिरे शूराद् भोज्यायां पुरुषादश ॥ १४ ॥ वसु
देवो महावाहुः पूर्व्वं मानकदुंदुभिः ॥ जज्ञे यस्य प्रसूतस्य दुंदुभ्य
प्राणादन्दिवि ॥ १५ ॥ आनकानां च संह्रादः सुमहा नभवद्दिवि ॥
पपात पुष्पवर्षं च शूरस्य भवने महत् ॥ १६ ॥ मनुष्यलोके कृत्स्नेपि
रूपेनास्ति समोभुवि ॥ यस्यासौ त्पुरुषाग्रस्य कान्ति श्चन्द्रमसो य
था ॥ १७ ॥ देवभागस्ततोजज्ञे तथादेवश्रवाः पुनः ॥ अनाधृष्टिः क
नवको वत्सवा नथगृञ्जिमः ॥ १८ ॥ श्यामःशमीको गंडूषः पञ्चवा
स्य वराङ्गनाः ॥ पृथुकीर्तिः पृथाचैव श्रुतदेवा श्रुतश्रवाः ॥ १९ ॥ रा
जाधिदेवी चतथा पञ्चैता वीरमातरः ॥ आवंत्यः श्रुतदेवायां जगृ
ज्ञः सुषुवेसुतः ॥ २० ॥ श्रुतश्रवायां चैद्यस्तु शिशुपालो ऽभवन्नृपः ॥
हिरण्यकशिपु र्योसौदैत्यराजो ऽभवत्पुरा ॥ २१ ॥ पृथुकीर्त्यान्तु
संजज्ञे तनयो वृद्धशर्म्मणः ॥ करूषाधिपति र्वीरो दन्तवक्त्रो महाव
लः ॥ २२ ॥ पृथांदुहितरं चक्रे कुन्तिस्तां पांडुरावहत् ॥ यस्यांसध
र्म्मविद्राजा धर्म्माज्जज्ञे युधिष्ठिरः ॥ २३ ॥ भीमसेन स्तथा वाता
दिन्द्रा च्चैव धनञ्जयः ॥ लोके प्रतिरथो वीरः शक्रतुल्य पराक्र
मः ॥ २४ ॥ अनमित्रा च्छिनिर्जज्ञे कनिष्ठा वृष्णिनन्दनात् ॥ शैने
यः सत्यकस्तस्मा युयुधानश्च सात्यकिः ॥ २५ ॥ उद्धवोदेवभागस्य म
हाभागः सुतोऽभवत् ॥ पण्डितानां परंप्राहु र्देवश्रवससुद्भवं ॥ २६ ॥

अश्मक्यां प्राप्तवान्पुत्र मनाधृष्टि यशस्विनं ॥ निवर्त्तशत्रुं शत्रुघ्नं
श्रुतदेवाव्यजायत ॥ २७॥ श्रुतदेवाप्रजातस्तु नैषादिर्यःपरिश्रुतः॥
एकलव्योमुनिश्रेष्टा निषादैःपरिवर्द्धितः ॥ २८ ॥ वत्सावतेत्वपुत्रा
य वसुदेवःप्रतापवान् ॥ अद्भिर्ददौसुतं वीरंशौरिः कौशिकमौर
सं ॥ २९ ॥ गंडूषायत्वपुत्राय विष्वक्सेनोददौसुतान् ॥ चारु
देष्णांसुबाहुंच पंचालंकृतलक्षणं ॥ ३० ॥ असंग्रामेणयोवीरो
नावर्त्तंतकदाचन ॥ रौक्मिणेयोमहाबाहुः कनीयान्द्विजसत्त
माः ॥ ३१ ॥ वायसानांसहस्राणियंयांतंपृष्टतोन्वयुः ॥ चारुनद्योपभो
ज्याम चारुदेष्णाहतानिति ॥ ३२ ॥ तंद्रिजस्तंत्रिपालश्चसुतौकन
वकस्यतु ॥ वीरश्चाश्ववनुश्चैव वीरौतावथगृंजिमौ ॥ ३३ ॥ श्यामपु
त्रःशमीकस्तु शमीकोराज्यमावहत् ॥ जुगुप्समानोभोजत्वा
द्राजसूयमवापसः ॥ ३४ ॥ अजातशत्रुःशत्रूणां जज्ञेतस्यविनाश
नः ॥ वसुदेवसुतान्वीरा न्वर्णयिष्याम्यतःपरं ॥ ३५ ॥ वृष्णोस्त्रिवि
धमेवास्तु बहुशाखंमहौजसः ॥ धारयन्विपुलंवंशं नानर्थैरिहसज्ज
ते ॥ ३६ ॥ पौरवीरोहिणीनाम वाह्लिकस्यात्मजाभवत् ॥ ज्येष्टा
पत्नीमुनिश्रेष्टा दयितानकदुंदुभेः ॥ ३७॥ लेभेज्येष्ठंसुतंरामं सार
णंशठमेवच ॥ दुर्द्दमंदमनं शुभ्रं पिंडारकमुशीनरं ॥ ३८ ॥ चित्रां
नामकुमारींच रोहिणीतनयानव ॥ चित्रासुभद्रेति पुनर्विख्याता
मुनिसत्तमाः ॥ ३९ ॥ वसुदेवाच्चदेवक्यां जज्ञेशौरिर्म्महायश
साः ॥ रामाच्चनिषठोजज्ञे रोहिण्यादयितःसुतः ॥ ४० ॥ सुभद्रा

यांरथीपार्थो दभिमन्युरजायत ॥ अक्रूरात्काशिकन्यायां सत्यकेतु रजायत ॥ ४१ ॥ वसुदेवस्यभार्यासु महाभागासुसप्तसु ॥ येपुत्रा जज्ञिरे शूरा नामत स्तान्निबोधत ॥ ४२ ॥ भोजश्च विजयश्चैव शान्तिनाम्नी सुतावुभौ ॥ वृकदेवः सुनामायां गदश्चास्मात्सुता वुभौ ॥ ४३ ॥ अगावहं महात्मानं वृकदेवी व्यजायत ॥ कन्यात्रि गर्त्तराजस्य भार्य्यावै शिशिरायणेः ॥ ४४ ॥ जिज्ञासां पौरुषेचक्रेन चस्कंदे च पौरुषं ॥ कृष्णायससमप्रख्यो वर्षेद्वादशमे तथा ॥ ४५ ॥ मिथ्याभिशप्तो गार्ग्यस्तु मन्युनाभि समीरितः ॥ घोषकन्या सुपा दाय मैथुनायो पचक्रमे ॥ ४६ ॥ गोपाली त्वप्सरास्तस्य गोपस्त्री वेषधारिणी ॥ धारयामास गार्ग्यस्य गर्भंदुर्द्धर मच्युतं ॥ ४७ ॥ मानुष्यांगर्भ भार्य्यायां नियोगा च्छूलपाणिनः ॥ सकालयवनो नाम जज्ञेशूरो महाबलः ॥ ४८ ॥ वृषपूर्व्वार्द्ध कायास्त मवहन्वाजिनो रथे ॥ अपुत्रस्य सराज्ञस्तु ववृधेंतःपुरे शिशुः ॥ ४९ ॥ यवनस्य सु निर्दिष्टः सकालयवनो ऽभवत् ॥ आयुध्यमानो नृपतिः पर्यपृच्छ द्द्विजोत्तमान् ॥ ५० ॥ वृष्ण्यन्धक कुलंतस्य नारदो ऽकथयद् द्वि जः ॥ अक्षौहिण्यातुसैन्यस्य मथुरामभ्ययात्तदा ॥ ५१ ॥ दूतंसंप्रेष यामास वृष्ण्यन्धक निवेशनं ॥ ततोवृष्ण्यन्धकाः कृष्णं पुरस्कृत्य म हामतिम् ॥ ५२ ॥ समेता मंत्रयामासु र्यवनस्य तदाभयात् ॥ कृ त्वा च निश्चयंसर्वे पलायन मरोचयन् ॥ ५३ ॥ विहायमथुरां रम्यां मायंनतः पिनाकिनं ॥ कुशस्थलींद्वारवतीं निवेशयितुमीप्सवः ॥५४॥

इतिकृष्णस्य जन्मेदं यःशुचि र्नियतेन्द्रियः ॥ पर्वसुश्रावयेद्विद्वा
नन्दणः ससुखीभवेत् ॥ ५४ ॥

इत्यादि ब्राह्मे पुराणे कृष्णजन्मानुकीर्त्तनं नाम
द्वादशो ऽध्यायः १२ ॥



लोमहर्षण उवाच ॥ क्रोष्टोरेवाभ त्पुत्रो वृजिनीवा न्महायशाः ॥
वाजिनीवंत मिच्छन्ति स्वाहिस्वाहाकृतांवरं ॥ १ ॥ स्वाहिपुत्रोऽभ
वद्राजा उषंगुर्वदतांवरः ॥ महाक्रतुभि रीजेसो विविधै र्दक्षिणैः
पृथक् ॥ २ ॥ ततःप्रसूति मिच्छन्वै उषंगुः सोऽग्रमात्मजं ॥ जज्ञे
चित्ररथ स्तस्य पुत्रःकर्म्मभि रन्वितः ॥ ३ ॥ आसी च्चैत्ररथि र्वीरो
यज्वा विपुलदक्षिणः ॥ शशविन्दुः परंवृत्तं राजर्षीणा मनुष्ठितः ॥ ४ ॥
पृथुश्रवाः पृथुयशा राजासी च्छशविन्दुजः ॥ शंसन्ति च पुराणज्ञाः
पार्थश्रव समन्तरं ॥ ५ ॥ अन्तरस्य सुयज्ञस्तु सुयज्ञतनयोऽभवत् ॥
उषतो यज्ञमखिलं सधर्म्म सुखतांवरः ॥ ६ ॥ शिनेयु रभवत्पुत्र उ
षतः शत्रुतापनः ॥ मरुतस्तस्य तनयो राजर्षि रभवन्नृपः ॥ ७ ॥
मरुतो लभतज्येष्ठं सुतंकंवल वर्हिषं ॥ चचार विपुलंधर्म्मं ममर्षा
प्रत्यभागपि ॥ ८ ॥ शतप्रसूति मिच्छन्ति पुत्रंकंवलवर्हिषः ॥ वभूव
रुक्मकवचः शतप्रसवता सुतः ॥ ९ ॥ निहत्य रुक्मकवचः शतंकव
चिनांरणे ॥ धन्विनां निशितैर्वाणै रवापश्रिय मुत्तमाम् ॥ १० ॥
जज्ञे च रुक्मकवचा त्परजि त्परवीरहा ॥ जज्ञिरे पञ्चपुत्रा स्त

महावीर्यं पराक्रमाः ॥ ११ ॥ रुक्मेषुः पृथुरुक्मश्च ज्यामघः पालि
तोहरिः ॥ पालितंच हरिंचैव विदेहेभ्यः पितादहौ ॥ १२ ॥ रुक्मे
षु रभवद्राजा पृथुरुक्मस्य संश्रयात् ॥ ताभ्यां प्रव्राजितो राजा
ज्यामघो वसदाश्रमे ॥ १३ ॥ प्रशांते स्ववरस्याश्च ब्राह्मणैरेव बोधि
तः ॥ जगाम धनुरादाय देशमन्यं रथीध्वजी ॥ १४ ॥ नर्मदाकूल
मेकाकी मेकलां मृत्तिकावतीं ॥ ऋक्षवन्तं गिरिं जित्वा शुक्तिमत्या
मुवासह ॥ १५ ॥ ज्यामघस्या भवद् भार्य्या शैब्या बलवती सती ॥
अपुत्रोपिच राजाश्च नान्यांभार्य्या मविन्दत ॥ १६ ॥ तस्यासीद्विज
यो युद्धे तत्रकन्या मवापसः ॥ भार्य्यामुवाच संत्रस्तः स्नुषेयंते जने
श्वरः ॥ १७ ॥ एतच्छ्रुत्वा ब्रवीदेनं कस्यदेवस्नुषेतिवै ॥ यस्तेज नि
ष्यतेपुत्र स्तस्यभार्य्या पस्यादिता ॥ १८ ॥ उग्रेणतपसा तस्याः कन्या
याः साव्यजायत ॥ पुत्रंविदर्भं सुभगा शैब्यापरिणतासती ॥ १९ ॥
राजपुत्र्यांतु विद्वांसौ स्नुषायांक्रथ कौशिकौ ॥ पश्चाद्विदर्भो जनय
त् शूरौरणविशारदौ ॥ २० ॥ भीमो विदर्भस्य सुतः कुन्ति स्तस्या
त्मजो ऽभवत् ॥ कुन्तेर्धृष्टःसुतो जज्ञे रणधृष्टः प्रतापवान् ॥ २१ ॥
धृष्टस्य जज्ञिरेशूरा स्त्रयः परमधार्मिकाः ॥ आवन्तश्च दशार्हश्च
बलीवृषहर स्त्रयः ॥ २२ ॥ दशार्हस्य सुतोव्योमा व्योम्नोजीमूत
उच्यते ॥ जीमूतपुत्रो हृहति स्तस्यभीमरथः सुतः ॥ २३ ॥ अथ
भीमरथस्या सीत् पुत्रोनवरथ स्तथा ॥ तस्यचासी दृशरथः शकुनि
स्तस्य चात्मजः ॥ २४ ॥ तस्मात्करंभः कारंभिर्देवरातोऽभवन्नृपः ॥

देवक्षत्रो ऽभवत्तस्य देवक्षत्रि संहायशाः ॥ २५ ॥ देवगर्भसमो यस्तो
देवक्षत्रस्य नन्दनः ॥ मधूनांवंशकृद्राजा मधुर्मधु रवागपि ॥ २६ ॥
मधोर्जज्ञेऽथ वैदर्भ्यां पुरुद्वा न्पुरुषोत्तमः ॥ ऐक्ष्वाकी चाभवद्भार्य्या
सत्वस्तस्यां व्यजायत ॥ २७ ॥ सत्वा त्सत्वगुणोपेतः सात्वतां कीर्ति
वर्द्धनः ॥ इमांविसृष्टिं विज्ञाय ज्यामघस्य महात्मनः ॥ २८ ॥ युज्य
ते परमप्रीत्या प्रजावांश्च भवेत्सदा ॥ लोमहर्षण उवाच ॥ सात्वता
त्सत्वसंपन्ना त्कौशल्या सुषुवे सुतान् ॥ भजिनं भजमानं च
दिव्यंदेवावृधं नृपं ॥ २९॥ अन्धकांच महावाहुं वृष्णिंचयदुनन्दनं ॥
तेषांविसर्गा श्चत्वारो विस्तरेणेह कीर्त्तिताः ॥ ३० ॥ भजमानस्य
सृंजय्यां वाह्यकाचो पवाह्यका ॥ आस्तां भार्येतयो स्तस्मान्जज्ञिरे
वहवःसुताः ॥ ३१ ॥ कृमिश्च क्रमणश्चैव धृष्टःशूरःपुरोगवः ॥ एतेवा
ह्यकसृंजय्यां भजमानाद्विजज्ञिरे ॥ ३२ ॥ अयुताजित्सहस्रा
जिच्छताजिदथ दासकः ॥ उपवाह्यकसृंजय्यां भजमानाद्विजज्ञि
रे ॥ ३३ ॥ यज्वादेवावृधोराजा चचारविपुलंतपः ॥ पुत्रःसर्व्वगुणो
पेतो ममस्यादितिनिश्चितः ॥ ३४ ॥ संयुज्यमानस्तपसा पर्णाशाय
जलंस्पृशन् ॥ सदोपस्पृशतस्तस्य चकारप्रियमापगाः ॥ ३५ ॥ चिन्त
याभिपरीतासा जगामैकंविनिश्चयं ॥ कल्याणत्वान्नरपते स्तस्यसा
निम्नगोत्तमा ॥ ३६ ॥ नाध्यगच्छततांनारीं यस्यामेवंविधःसुतः ॥ भवे
त्तस्मात्स्वयंगत्वा भवाम्यस्यसहव्रता ॥ ३७ ॥ अथभूत्वाकुमारीसा
विभ्राणापरमंवपुः ॥ वरयामासनृपतिंतामथोवाहसप्रभुः ॥ ३८ ॥ त

श्यामाधत्तगर्भं च तेजस्विनमुदारधीः ॥ अथप्रादश्यमेमाश्वि सुषुवेस
रितांवरा ॥ ३९ ॥ पुत्रंसर्व्वगुणोपेतं वभ्रुंदेवावृधंद्विजाः ॥ अत्रवंशेपु
राणज्ञा गायंतीतिपरिश्रुतं ॥ ४० ॥ गुणान्देवावृधस्याथ कीर्त्तयन्तोम
हात्मनः ॥ यथैवाग्रेतथादूरात्पश्यामस्तावदंतिकात् ॥ ४१ ॥ वभ्रुःश्रे
ष्ठोमनुष्याणां देवैर्देवावृधःसमः ॥ षष्टिश्चषष्टपुरुषाः सहस्राणिचसप्त
वा ॥ ४२ ॥ एतेऽमृतत्वंप्राप्ता वै वभ्रोर्देवावृधादपि ॥ यज्वादानपति
र्विद्वान् ब्रह्मण्यः सदृढायुधः ॥ ४३ ॥ तस्यान्ववायःसुमहान् भोजा
येमार्तिकावताः ॥ अन्धका त्काश्यदुहिता चतुरोलभता त्मजा
न् ॥ ४४ ॥ कुकुरंभजमानंच समंकन्दलवर्हिषं ॥ कुकुरस्यसुतोवृष्टि
र्वृष्टेस्तुतनयस्तथा ॥ ४५ ॥ कपोतरोमा तस्याथ तित्तिरिस्तनयोभव
त् ॥ जज्ञेपुनर्व्वसुस्तस्मा दभिजिच्चपुनर्व्वसोः ॥ ४६ ॥ तथावैपुत्र
मिथुनं वभूवाभिजितः किल ॥ आहुकश्चाहुकीचैव ख्यातौख्यातिम
तांवरौ ॥४७॥ इमांचोदाहरंत्यत्र गाथांप्रतितमाहुकं ॥ श्वेतेनपरि
वारेण किशोरप्रतिमोमहान् ॥ ४८ ॥ अशीतिचर्म्मणायुक्तं आहु
कःप्रथमंव्रजेत् ॥ नापुत्रवान्नाशतदो ना सहस्रशतायुषः ॥ ४९ नू
नाशुद्धकर्म्मा नायज्वा योभोजमभितो व्रजेत् ॥ पूर्व्वस्यांदिशिनागा
नां भोजस्य प्रययुःकिल ॥ ५० ॥ सोपासंगा नुकर्षाणां ध्वजिनां
सवरूथिनां ॥ रथानां मेघघोषाणां सहस्राणि दशैवतु ॥ ५१ ॥
रौप्यकाञ्चनकक्षाणां सहस्राण्येकविंशतिः ॥ तावंत्येव सहस्राणि
उत्तरस्यां तथादिशि ॥ ५२ ॥ आभूमिपाला भोजास्तु मातिष्ठ

किंकरा: किल ॥ आहुकों चाप्यवन्तिभ्य: स्वसारं ददुरंधका: ॥ ५३ ॥ आहुकस्य तु काश्यायां द्वौ पुत्रौ संबभूवतु: ॥ देवक श्चोग्रसेनश्च देव गर्भसमावुभौ ॥ ५४ ॥ देवकस्य भवन्पुत्रा श्चत्वार स्त्रिदशोपमा: ॥ देववा नुपदेवश्च संदेवो देवरक्षित: ॥ ५५ ॥ कुमार्य: सप्तधा स्याय वसुदेवायनाददौ ॥ देवकीशान्तिदेवाच संदेवा देवरक्षिता ॥ ५६ ॥ वृकदेव्यु पदेवी च सुनाम्नीचैव सप्तमी ॥ नवोग्रसेनस्य सुता स्तेषां कंसस्तु पूर्व्वज: ॥ ५७ ॥ न्यग्रोधश्च सुनामा च तथा कंक: सुभूषण: ॥ राष्ट्रपालोथ सुतनु रनावृष्टि: सुपुष्टिमान् ॥ ५८ ॥ तेषांस्वसार: प ञ्चासन् कंसा कंसवती तथा ॥ सुतनू राष्ट्रपाली च कंकाचैव वरां गना ॥ ५९ ॥ उग्रसेन: सहापत्यो व्याख्यात:कुकुरोद्भव: ॥ कुकुरा णामिमंवंशं धारयन्नमितौजसं ॥ ६० ॥ आत्मनो विपुलंवंशं प्रजा वानाप्नुयान्नर: ॥

इत्यादि ब्राह्मे पुराणे वृष्णिवंशे

त्रयोदशो ऽध्याय: १३ ॥



लोमहर्षण उवाच ॥ भजमानस्य पुत्रोवै रथमुख्यो विदूरथ: ॥ रा जाधिदेव: शूरस्तु विदूरथसुतो ऽभवत् ॥ १ ॥ राजाधिदेवस्य सुता जज्ञिरे वीर्यवत्तरा: ॥ दत्तातिदत्तौ बलिनौ स्रोणाप्लव: श्वेत वाह न: ॥ २ ॥ शमीच दण्डशर्म्मा च दन्तशत्रुश्च शत्रुजित् ॥ श्रवणा च श्रविष्टाच स्वसारौ संबभूवतु: ॥ ३ ॥ शमीपुत्र: प्रतिच्छत्र: प्रति

च्छ्रन्दस्य चात्मजः ॥ स्वयंभोजः स्वयंभोजाद्ध्रदीकः संबभूवह ॥ ४॥
तस्यपुत्रा वभूवुर्हि सर्वे भीमपराक्रमाः ॥ कृतवर्म्माग्रजः स्तेषां शत
धन्वातुमध्यमः ॥ ५ ॥ देवांतश्च नरांतश्च भिषग्वैतरणश्चयः ॥ सुदां
तश्चातिदांतश्च निकाश्यः कामदन्तकः ॥ ६ ॥ देवान्तस्या भवत्पुत्रोवि
द्वान्कंवलवर्हिषः ॥ असमौजाः सुतस्तस्य नासमौजाश्च तावुभौ ॥ ७॥
अजातपुत्राय सुतां प्रददावसमौजसे ॥ सुदंष्ट्रश्च सुचारुश्च कृष्णइ
त्यन्धकाः स्मृताः ॥ ८ ॥ गान्धारीचैवमाद्रीच क्रोष्टोर्भार्ये वभूवतुः ॥
गान्धारी जनयामास अनमित्रं महावलं ॥ ९ ॥ माद्री युधाजितं
पुत्रं ततोवै देवमीढुषं ॥ अनमित्र ममित्राणां जेतार मपराजि
तं ॥ १० ॥ अनमित्रसुतो निघ्नो निघ्नतो द्वौवभूवतुः ॥ प्रसेन श्चाथ
सत्राजित् शत्रुसेनाजिता वुभौ ॥ ११ ॥ प्रसेनो द्वारवत्यांतु निवस
न्समहामणिं ॥ दिव्यं स्यमन्तकंनाम समूर्ध्नि दुपलब्धवान् ॥ १२ ॥
तस्यसत्राजितः सूर्यः सखाप्राणसमो भवत् ॥ सकदाचि न्निशापाये
रथेन रथिनांवरः ॥ १३ ॥ तोयकूल मुपस्पृष्टु मुपस्थातुं ययौरविं ॥
तस्योपतिष्ठतः सूर्य्यो विवस्वानग्रतः स्थितः ॥ १४ ॥ विस्पष्टमूर्ति र्भ
गवान् तेजोमण्डलवा न्विभुः ॥ अथराजा विवस्वन्त मुवाच स्थित
मग्रतः ॥ १५ यथैव व्योम्निपश्यामि सदात्वां ज्योतिषांपते ॥ तेजो
मण्डलिनंदेवं तथैवपुरतः स्थितं ॥ १६ ॥ कोविशेषोस्ति मेत्वत्तः स
खायत्वंगतस्यवै ॥ एतच्छ्रुत्वातु भगवान् मणिरत्नं स्यमन्तकं ॥ १७ ॥
स्वकंठा दवमुच्यैव मेकान्ते न्यस्तवान्विभुः ॥ ततो विग्रहवंतंतं दद

र्थं नृपतिस्तदा ॥ १८ ॥ प्रीतिमा नथतंदृष्ट्वा सुहृत्तं कृतवान्कथां ॥
तमभिप्रस्थितं भूयो विवस्वंतं सत्रजित् ॥ १९ ॥ लोकानुद्भासय
त्स्वामिन् येनत्वं सततंविभो ॥ तदेत न्मणिरत्नंमे भगवन् दातुम
र्हसि ॥ २० ॥ ततः स्यमन्तकंनाम मणिरत्नं स्यमन्तकं ॥ ददौततोन
रपतिः प्रेम्णा सत्राजि दुत्तमम् ॥ २१ ॥ समणिः स्यन्दते रुक्मं ह
ष्यान्धक निवेशने ॥ कालवर्षीं च पर्ज्जन्यो नचव्याधि भयं त्व
भूत् ॥ २२ ॥ लिप्सांचक्रे प्रसेनात्तु मणिरत्नं स्यमन्तकं ॥ गोविन्दो
नच तंलेभे शक्तोपि नजहारसः ॥ २३ ॥ कदाचिन् मृगयां यातः
प्रसेन स्तेनभूषितः ॥ स्यमन्तककृते सिंहादवधंप्राप वनेचरात् ॥ २४ ॥
अथ सिंहंप्रधावन्त मृक्षराजो महाबलः ॥ निहत्य मणिरत्नंतदादा
यविल माविशत् ॥ २५ ॥ ततो वृष्ण्यन्धकाः कृष्णं प्रसेन वधकार
णात् ॥ प्रार्थनां तांमणेर्बुध्वा सर्व्वएव शशंकिरे ॥ २६ ॥ सशंक मा
नोधर्म्मात्मा नकारी तस्यकर्म्मणः ॥ आहरिष्ये मणिमिति प्रतिज्ञा
य वनंययौ ॥ २७ यत्रप्रसेनो मृगयां व्यचरत्तत्र चाप्यथ ॥ प्रसेनस्य
पदंश्रुत्य पुरुषै राप्तकारिभिः ॥ २८ ॥ ऋक्षवन्तं गिरिवरं विंध्यंवा
गिरिसत्तमं ॥ अन्वेषयन् परिश्रान्तः सददर्श महामनाः ॥ २९ ॥
साश्वंहतं प्रसेनंच नाविन्दच्चैव तंमणिं ॥ अथसिंहः प्रसेनस्य शरी
रस्याविदूरतः ॥ ३० ॥ ऋक्षेण निहतोदृष्टः पादैर्ऋक्षस्य सूचितः ॥
पादैस्तै रन्वियायाथ गुहामृक्षस्य माधवः ॥ ३१ ॥ महत्यृक्षविले वाणीं
सुश्राव प्रमदेरितां ॥ धात्र्याकुमारमादायसुतंजांववतोद्विजाः ॥ ३२ ॥

क्रीडयंत्या च मणिनामारोदो रित्यथेरितां ॥ सिंहः प्रसेनमवधीत्
सिंहो जांववताहतः ॥ २३ ॥ सुकुमारक मारोदो स्तवस्त्रेषः स्यम
न्तकः ॥ व्यक्तीकृतश्च शब्दस्य तूर्णमेव विलंययौ ॥ २४ ॥ प्रविश्य तत्र
भगवां स्तद्दृविल मञ्जसा ॥ स्थापयित्वा विलद्वारि यदून् लाङ्गलि
नासह ॥ २५ ॥ शार्ङ्गधन्वा विलस्थंतु जाम्बवन्तं ददर्शह ॥ युयुधे
वासुदेवस्तु विले जाम्बवतासह ॥ २६ ॥ वाहुभ्यामेव गोविन्दो दिव
सा नेकविंशतिः ॥ प्रविष्टे ऽथविले कृष्णे वसुदेव पुरःसराः ॥ २७ ॥
पुनींद्वारवतीमेत्य हतंकृष्णं तदाजगुः ॥ वासुदेवोपि निर्जित्य जा
म्बवन्त ममहावलम् ॥ २८ ॥ लेभे जाम्बवतीं कन्या मृक्षराजस्य
संमतां ॥ मणिं स्यमन्तकं चैव जग्राहात्म विशुद्धये ॥ २९ ॥ अनु
नीयर्क्ष राजंतं निर्जित्यच ततोविलात् ॥ उपायाद् द्वारकां कृष्णः स
विनीतैः पुरःसरैः ॥ ४० ॥ एवं समणि माहृत्य विशोध्यात्मान म
च्युतः ॥ ददौ सत्राजितेचैव सर्व्वसात्वत संसदि ॥ ४१ ॥ एवंमिथ्या
भिशस्तेन कृष्णेना मित्रघातिना ॥ आत्माविशोधितः पापा द्विनि
र्ज्जित्य स्यमन्तकम् ॥ ४२ ॥ सत्राजितो दशत्वासन् भार्य्या स्तासां
शतंसुताः ॥ ख्यातिमन्त स्त्रयस्तेषां भङ्गकारस्तु पूर्व्वजः ॥ ४३ ॥
वीरो वातमतिस्चैव वसुमेध स्तथैवच ॥ कुमार्यंश्चापि तिस्रोवै दिक्षु
ख्याता द्विजोत्तमाः ॥ ४४ ॥ सत्यभामोत्तमा तासां व्रतिनीच दृढ
व्रता ॥ तथाप्रस्वापिनी चैव भार्य्यां कृष्णाय तादहौ ॥ ४५ ॥ सभा
क्षोभङ्गकारिस्तु तारयश्च नरोत्तमौ ॥ जज्ञाते गुणसम्पन्नौ विश्रुतौ

रूपसंपन्नौ ॥ ४६ ॥ माद्र्याः पुत्रस्तु जज्ञेऽथ पृश्निः पुत्रो युधाजितः ॥ जज्ञाते तनयौ पृश्नेः श्वफल्कश्चित्रकस्तथा ॥ ४७ ॥ श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत ॥ गान्दिनीं नाम तस्याश्च गाश्चाह्य प्रददौ पिता ॥ ४८ ॥ तस्याजज्ञे महाबाहुः श्रुतवानिति विश्रुतः ॥ अक्रूरोऽथमहाभागो जज्ञे विपुलदक्षिणः ॥ ४९ ॥ उपमद्गुस्तथामद्गुर्म्मृदरश्चारिमर्द्दनः ॥ गिरिक्षिपस्तथोपेक्षः शत्रुघ्नश्चारिमेजयः ॥ ५० ॥ धर्म्मभृच्चाथधर्म्मा च गृध्रभोजान्धकस्तथा ॥ आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना ॥ ५१ ॥ विश्रुता श्वस्य महिषी कन्याचास्य वराङ्गना ॥ रूपयौवन सम्पन्ना सर्व्वसत्त्वमनोहरा ॥ ५२ ॥ अक्रूरेणोग्रसेनायां सुतौ वै कुलनन्दनौ ॥ वसुदेवश्चोपदेवश्च जज्ञाते देववर्च्चसौ ॥ ५३ ॥ चित्रकस्याभवन्पुत्राः पृथुर्विपृथुरेवच ॥ अश्वसेनोऽश्ववाहुश्च सुपार्श्वकगवेषणौ ॥ ५४ ॥ अरिष्टनेमेस्तु सुता धर्म्मोधर्म्मभृदेववा ॥ सुवाहुर्बहुवाहुश्च श्रविष्ठाश्रवणेस्त्रियौ ॥ ५५ ॥ इमांमिथ्याभिशस्तिं यःकृष्णस्यसमुदाहृतां ॥ वेदमिथ्याभिशापास्तं नस्पृशन्ति कदाचन ॥ ५६ ॥

इत्यादि ब्राह्मे पुराणे स्यमन्तकमणेरानयनं नाम

चतुर्दशोऽध्यायः १४ ॥



लोमहर्षण उवाच ॥ यत्तत्सत्राजिते कृष्णो मणिरत्नं स्यमन्तकं ॥ शत्राजितं ततोहत्वा शतधन्वा महाबलः ॥ १ ॥ रात्रौ तंमणिमा

दाय ततो ऽक्रूराय दत्तवान् ॥ अक्रूरस्तु तदाविप्रा रत्नमादाय चो
त्तमं ॥ २ ॥ समयंकारयां चक्रे नावेद्योऽहं त्वयैत्युत ॥ वयमभ्युप
वत्स्यामः कृष्णेन त्वांप्रधर्षितं ॥ ३ ॥ ममाद्य द्वारकासर्व्वा वशेतिष्ठ
त्यसंशयं ॥ हतेपितरि दुःखार्ता सत्यभामा मनस्विनी ॥ ४ ॥ प्रय
यौ रथमारुह्य नगरं वारणावतं ॥ सत्यभामातु तद्वृत्तं भोजस्यशत
धन्वनः ॥ भर्त्तुर्निवेद्य दुःखार्त्ता पार्श्वस्थाश्रूण्यवर्त्तयत् ॥ ५ ॥ पांड
वानांतु दग्धानां हरिःकृत्वो दकक्रियां ॥ कुल्यार्थे चापि पाण्डूनां
न्ययोजयत सात्यकिं ॥ ६ ॥ ततस्त्वरितमागम्य द्वारकां मधुसूदनः ॥
पूर्व्वजं हलिनंश्रीमा निदंवचन मब्रवीत् ॥ ७ ॥ हतःप्रसेनः सिंहे
नसत्राजि च्छतधन्वना ॥ स्यमन्तकस्तु मद्गामीतस्यप्रभुरहंविभो ॥ ८ ॥
तदारोह रथंशीघ्रं भोजंहत्वा महारथं ॥ स्यमन्तको महावाहो स्व
स्माकं सभविष्यति ॥ ९ ॥ ततः प्रवहतेयुद्धं तुमुलं भोजकृष्णयोः ॥
शतधन्वा ततोऽक्रूरं सर्व्वतो दिग्रमैक्षत ॥ १० ॥ संरब्धौ तावुभौ त
त्र दृष्ट्वा भोजजनार्द्दनौ ॥ शक्तोपि शापाद्धार्दिक्या मक्रूरो नान्व
पद्यत ॥ ११ ॥ अपयाने ततोवुद्धिं भोजश्चक्रे भयार्द्दितः ॥ योजना
नांशतंसाग्रं हृदया प्रत्यपद्यत ॥ १२ ॥ विख्याता हृदयानाम शतयो
जन गामिनी ॥ भोजस्य वडवाविप्रा यया कृष्णमयोधतः ॥ १३ ॥
क्षीणांजनेन हृदया मध्वनः शतयोजने ॥ दृष्ट्वारथस्य साहव्विं शत
धन्वान मार्द्दयत् ॥ १४ ॥ ततस्तस्या हयायास्तु श्रमात्खेदाच्च भो
द्विजाः ॥ खमुत्पेतु रथप्राणाः कृष्णो राम मथाब्रवीत् ॥ १५ ॥

तिष्ठेह त्वंमहावाहो दृष्टदोषा मयाहया॥ पद्भ्यांगत्वा हरिष्यामि
मणिरत्नं स्यमन्तकं॥ १६॥ पद्भ्यामेव ततोगत्वा शतधन्वान म
च्युतः॥ मिथिलामभितो विप्रा जघान परमास्त्रवित्॥ १७॥
स्यमन्तकञ्च नापश्यद्धत्वाभोजं महाबलं॥ निवृत्तं चाब्रवीत्कृष्णं म
णिं देहीति लाङ्गली॥ १८॥ नास्तीति कृष्णश्चोवाच ततोरामोरु
षान्वितः॥ धिक्शब्द पूर्व्वमसकृत्प्रत्युवाचजनार्द्दनं॥ १९॥ भ्रातृ
त्वा न्मर्षयाम्येष स्वस्तितेस्तु व्रजाम्यहं॥ कृत्यंनमे द्वारकायां नत्वया
नच वृष्णिभिः॥ २०॥ प्रविवेश ततोरामो मिथिला मरिमर्द्दनः॥
सर्व्वकामै रुपहृतै र्मैथिलाभिः सुपूजितः॥ २१॥ एतस्मिन्नेव
कालेतु बभ्रु र्मतिमतांवरः॥ नानारूपा न्क्रतूंस्तत्रा नाजहार नि
रर्गलान्॥ २२॥ दीक्षामयं सकवचं रक्षार्थं प्रविवेशह॥ स्यमन्तक
कृतेप्राज्ञो गान्दीपुत्रो महायशाः॥ २३॥ अथरत्नानि चान्यानि
धनानि विविधानि च॥ षष्टिवर्षाणि धर्म्मात्मा यज्ञेष्वेव न्ययोज
यत्॥ २४॥ अक्रूरयज्ञा इतिते ख्याता स्तस्यमहात्मनः॥ बह्वन्न द
क्षिणाः सर्वे सर्व्वकामप्रदायिनः॥ २५॥ अथ दुर्योधनोराजा गत्वा
समिथिलां प्रभुः॥ गदाशिक्षां ततोदिव्यां वलभद्रा दवाप्तवान्॥ २६॥
संप्रसाद्य ततोरामो वृष्ण्यन्धक महारथैः॥ आनीतो द्वारकामेव
कृष्णेन च महात्मना॥ २७॥ अक्रूरस्त्वन्धकैः सार्द्धं प्रयायात् पुरु
षर्षभः॥ हत्वा सत्राजितं युद्धे सहवन्धुं महावलो॥ २८॥ ज्ञाति
भेदभयात्कृष्णः समुपेक्षितवांस्तदा॥ अपयाते तदाक्रूरे नाव

षंत्याकथासन: ॥ २९ ॥ अनावृष्ट्या तदाराष्ट्र मभवद्बहुधाकृशं ॥ ततःप्रसादयामासु रक्रूरं कुकुरान्धकाः ॥ ३० ॥ पुनर्द्वारवतीं प्राप्ते पुरंदानपतौ ततः ॥ प्रववर्ष सहस्राक्षः कक्षेजलनिधे स्तदा ॥ ३१॥ कन्यां च वासुदेवाय स्वसारं शीलसम्मतां ॥ अक्रूरः प्रददौ धीमा न् प्रीत्यर्थं मुनिसत्तमाः ॥ ३२ ॥ अथविज्ञाय योगेन कृष्णोबभ्रुगतं मणिं ॥ सभामध्यगतः प्राह तमक्रूरं जनार्द्दनः ॥ ३३ ॥ यत्तद्रत्नं मणिमयं तवहस्तगतं विभो ॥ तत्प्रयच्छ स्वमानार्ह मयिनानार्यकं कृथाः ॥ ३४ ॥ षष्टिवर्षं गतेकाले योरोषोभू त्ममानघ ॥ ससंरूढो ऽसकृत्प्राप्त स्ततः कालात्ययोमहान् ॥ ३५ ॥ सततः कृष्णवचना त्स र्वसात्वतसंसदि ॥ प्रददौ तंमणिंबभ्रु रक्लेशेन महाद्युतिः ॥ ३६ ॥ ततस्त मार्ज्जवात्प्राप्तं बभ्रोर्हस्ता दरिन्दमः ॥ ददौहृष्टमनाः कृष्ण स्तंमणिं बभ्रवेपुनः ॥ ३७ ॥ सकृष्णहस्ता त्सं प्राप्य मणिरत्नं स्यम न्तकं ॥ आबध्य गान्दिनीपुत्रो विरराजांशुमानिव ॥ ३८ ॥

इत्यादि ब्राह्मे पुराणे सोमवंश कथनं नाम
पञ्चदशो ऽध्यायः १५ ॥

मुनयऊचुः ॥ अहोसुमहदाख्यानं भवतापरिकीर्त्तितं ॥ भारता नांच सर्वेषां पार्थिवानां तथैव च ॥ १ ॥ देवानां दानवानांच गन्ध र्वोरगरक्षसां ॥ दैत्याना मथसिद्धानां गुह्यकानां तथैवच ॥ २ ॥ अत्यद्भुतानि कर्म्माणि विक्रमा धर्म्मनिश्चयाः ॥ विविधाश्च कथा दिव्या जन्मचाग्र्य मनुत्तमं ॥ ३ ॥ सृष्टिः प्रजापतेः सम्यक् त्वया

प्रोक्ता महामते ॥ प्रजापतीनां सर्वेषां गुह्यकाप्सरसांस्तथा ॥ ४ ॥
स्थावरं जङ्गमंसर्व्वं तुल्यन्वं विविधंजगत् ॥ त्वयाप्रोक्तं महाभाग
श्रुतं चैतन्मनोहरं ॥ ५ ॥ कथितं पुण्यफलदं पुराणं स्मृष्वया गि
रा ॥ मनःकर्णसुखं सम्यक् प्रीणात्यस्मत संमतं ॥ ६ ॥ इदानींश्रोतु
मिच्छामः सकलंमण्डलं भुवि ॥ वक्तुमर्हसि सर्व्वञ्च परंकौतूहलंम
हत् ॥ ७ ॥ यावन्तः सागराद्वीपा स्तथावर्षाश्च पर्व्वताः ॥ वनानि
सरितः पुण्या देवादीनां महामते ॥ ८ ॥ यत्प्रमाण मिदंसर्वं यदा
धारं यदात्मकं ॥ संस्थानमस्य जगतो यथाव द्वक्तुमर्हसि ॥ ९ ॥
लोमहर्षण उवाच ॥ मुनयः श्रूयतामेत त्संक्षेपा द्वदतोमम ॥ ना
स्य वर्षशतेनापि वक्तुंशक्यो हिविस्तरः ॥ १० ॥ जंबूप्लक्षाह्वयौ द्वीपौ
शाल्मल श्चापरो द्विजाः ॥ कुशःक्रौञ्च स्तथाशाकः पुष्कर श्चेति स
प्तमः ॥ ११ ॥ एतेद्वीपाः समुद्रैश्च सप्तभिः परिवारिताः ॥ लवणेक्षु
सुरासर्प्पि र्दधिदुग्धजलैः समं ॥ १२ ॥ जंबूद्वीपः समुद्राणामेतेषां
मध्यसंस्थितः ॥ तस्यापि मेरुर्विप्रेन्द्राः मध्ये कनकपर्व्वतः ॥ १३ ॥
चतुराशीति साहस्रै र्योजनैरस्य चोच्छ्रयः ॥ प्रविष्टः षोडशा धस्ता
त् द्वाविंशन् मूर्ध्नि विस्तृतः ॥ १४ ॥ मूले षोडशसाहस्रे विं स्तार
स्तस्य पूर्व्वतः ॥ भूमिपद्मस्य शैलोसौ कर्णिकाकार संस्थितः ॥ १५ ॥
हिमवान् हेमकूट श्च निषध स्तस्यदक्षिणे ॥ नीलःश्वेत श्च शृंगी च
उत्तरे वर्षपर्वताः ॥ १६ ॥ लक्षप्रमाणावैमध्ये दशहीना स्तथापरे ॥
सहस्रद्वितयोच्छ्राया स्तावद्विस्तारिण श्चते ॥ १७ ॥ भारतं प्रथमं व

र्षं ततः किंपुरुषं स्मृतं ॥ हरिवर्षं तथैवान्यं मेरोर्द्दक्षिणतो द्विजाः ॥ १८ ॥
रम्यकं चोत्तरं वर्षं तस्यैवानुहिरण्मयं ॥ उत्तराः कुरवश्चैव यथा वै भा
रतं तथा ॥ १९ ॥ नवसाहस्र मेकैक मेतेषां द्विजसत्तमाः ॥ इलावृ
तं च तन्मध्ये सौवर्णोमेरु रुच्छ्रितः ॥ २० ॥ मेरोश्चतुर्द्दिशं तच्च नव
साहस्र विस्तृतं ॥ इलावृतं महाभागा श्चत्वार श्चात्रपर्व्वताः ॥ २१ ॥
विष्कंभा विरचिता मेरो र्योजनायुत विस्तृताः ॥ पूर्वेण मन्दरो मेरो
र्द्दक्षिणे गन्धमादनः ॥ २२ ॥ विपुलः पश्चिमे पार्श्वे सुपार्श्व श्चोत्त
रे स्थितः ॥ कदम्ब स्तेषु जंबूश्च पिप्पलो वट एव च ॥ एकादशशतायामाः
पादपा गिरिकेतवः ॥ २३ ॥ महागजप्रमाणानि जंबूास्तस्याः
फलानि वै ॥ पतन्ति भूभृतः पृष्ठे शीर्य्यमाणानि सर्व्वतः ॥ २४ ॥ रसे
नतेन विख्याता तेन जंबू नदीति वै ॥ सरित्प्रवर्त्तते सा च पीयते त
न्निवासिभिः ॥ २५ ॥ नस्वेदो नचदौर्गंध्यं नजरा नेन्द्रियक्षयः ॥
तत्पानस्वच्छ मनसां जनानां तत्र जायते ॥ २६ ॥ तीरमृत्तद्रसं प्रा
प्य सुखवायुविशोषितं ॥ जांबूनदाख्यं भवति सुवर्णं सिद्धभूषणं ॥ २७ ॥
भद्राश्वः पूर्व्वतो मेरोः केतुमालश्च पश्चिमे ॥ वर्षे द्वे तु मुनिश्रेष्ठास्त
योर्मध्ये त्विलावृतं ॥ २८ ॥ वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनं ॥
वैभ्राजं पश्चिमे तद्व दुत्तरे नन्दनं स्मृतं ॥ २९ ॥ अरुणोदं महाभद्र
मसितोदं समानसं ॥ सरांस्येतानि चत्वारि देवभोग्यानि सर्व्व
दा ॥ ३० ॥ शांतवां श्चक्रकुम्भश्च कुररीमाल्यवांस्तथा ॥ वैकंकप्र
मुखामेरोः पूर्व्वतः केशराचलाः ॥ ३१ ॥ त्रिकूटः शिशिर श्चैव पत

ङ्गो रुचकस्तथा ॥ निषधाद्यो दक्षिणतस्तस्यकेशर पर्वताः ॥ ३२ ॥ शिखिवासः सवैडूर्यः कापिलो गन्धमादनः ॥ जारुधिप्रमुखा स्तत्र पश्चिमे केशराचलाः ॥ ३३ ॥ मेरोरनन्तरांसेतु जठरादिष्व वस्थिताः ॥ शंखकूटोऽथ ऋषभो हंसोनाग स्तथापरः ॥ कालंजराद्या स्तथा उत्तरे केशराचलाः ॥ ३४ ॥ चतुर्दशसहस्राणि योजनानांम हापुरी ॥ मेरोरुपरि विपेन्द्रा ब्रह्मणः कथितादिवि ॥ ३५ ॥ तस्याः समन्तत श्चाष्टौ दिशासु विदिशासु च ॥ इन्द्रादि लोकपालानां प्रख्याताः प्रवराःपुरः ॥ ३६ ॥ विष्णुपादविनिष्क्रांता प्लावयन्तींदु मण्डलं ॥ समन्ताद्ब्रह्मणः पुर्य्यां गंगापतति वैदिवः ॥ ३७ ॥ सातत्र पतितादिक्षु चतुर्द्धां प्रत्यपद्यत ॥ सीता चालकनन्दा च चक्षुर्भद्रा च वैक्रमात् ॥ ३८ ॥ पूर्वेणशैला च्छीतालं शैलंयात्यन्तरिक्षगा ॥ ततश्चपूर्व वर्षेण भद्राश्वेणेति सार्णवं ॥ ३९ ॥ तथैवालकनन्दापि दक्षिणेनैत्य भारतं ॥ प्रयाति सागरंभूत्वा सप्तभेदा द्विजोत्तमाः ॥ ४० ॥ चक्षुश्च पश्चिमगिरी नतीत्य सकलांस्ततः ॥ पश्चिमं केतुमालाख्यं वर्षमन्वेति सार्णवम् ॥ ४१ ॥ भद्रा तथोत्तर गिरी नुत्तरांश्च तथा कुरून् ॥ अतीत्योत्तर मंभोधिं समन्येति महामुने ॥ ४२ ॥ आनीलनिषधायामौ माल्यव गन्धमादनौ ॥ तयोर्मध्येगतोमेरुः कर्णि काकारसंस्थितः ॥ ४३ ॥ भारतः केतुमालाश्च भद्राश्वाः कुरवस्तथा ॥ पत्राणि लोकपद्मस्य मर्यादा शैलबाह्यतः ॥ ४४ ॥ जठरो देवकूटश्च मर्यादा पर्वतावुभौ ॥ तौदक्षिणोत्तरायामा वानीलनिषधायतौ ॥ ४५ ॥

गन्धमादन कैलाशौ पूर्व्वपश्चा यतावुभौ ॥ अशीति योजना यामा वर्षा वान्त व्यवस्थितौ ॥ ४६ ॥ निषधः पारिपात्र श्च मर्यादा पर्व्वता वुभौ ॥ तौदक्षिणोत्तरायामा वानील निषधायतौ ॥ ४७ ॥ मेरोःप श्चिम दिग्भागे यथापूर्वो त्तरास्थितौ ॥ त्रिशृंगोजा रुधिश्चैव उत्त रौ वर्षपर्वतौ ॥ ४८ ॥ पूर्व्वपश्चायता वेता वर्षा वान्त व्यवस्थितौ ॥ इत्येते च मयाप्रोक्ता मर्यादापर्व्वता द्विजाः ॥ ४९ ॥ जठराद्याश्चि तामेरो र्येषांद्वौद्वौ चतुर्दिशं ॥ मेरोश्चतुर्द्दिशं येच प्रोक्ताःकेशरपर्व्व ताः ॥ ५० ॥ शीतान्ताद्या द्विजास्तेषा मतीवहि मनोहराः ॥ शैला नामन्तरद्रोण्यः सिद्धचारण सेविताः ॥ ५१ ॥ सुरम्याणि तथातासु काननानि पुराणि च ॥ लक्ष्मीविष्ण्वग्नि सूर्येन्द्र देवानां मुनिसत्त माः ॥ ५२ ॥ तास्वायतन वर्याणि जुष्टानि वनकिन्नरैः ॥ गन्धर्व्व यक्षरक्षांसि तथादैतेय दानवाः ॥ ५३ ॥ क्रीडन्ति तासु रम्यासु शैलद्रोणिष्वहर्निशं ॥ भौमाह्येते स्मृताःस्वर्गा धर्मिणा मालया द्वि जाः ॥ ५४ ॥ नैतेषु पापकर्त्तारो यान्तिजन्म शतैरपि ॥ भद्राश्वे भगवान्विष्णु रास्तेहयशिरा द्विजाः ॥ ५५ ॥ वाराहःकेतुमालेतु भारते कूर्मरूपधृक् ॥ मत्स्यरूपश्च गोविन्दः कुरुष्वास्ते सनात नः ॥ ५६ ॥ विश्वरूपेण सर्व्वत्र सर्व्वःसर्वेश्वरो हरिः ॥ सर्वस्याधा रभूतोसौ द्विजास्ते खिलात्मकः ॥ ५७ ॥ यानिकिं पुरुषाद्या नि वर्षाण्यष्टौ द्विजोत्तमाः ॥ नतेषुशोको नायासो नोद्वेगः क्षुद्भया दिकं ॥ ५८ ॥ स्वस्थाः प्रजानिरातंकाः सर्वदुःख विवर्जिताः ॥

दशद्वादश वर्षाणां सहस्राणि स्थिरायुषः ॥ ५९ ॥ नतेषु वर्षते देवो भौमान्यम्भांसि तेषु वै ॥ कृतत्रेतादिकानैव तेषु स्थानेषु कल्पना ॥ ६० ॥ सर्वेष्वेतेषु वर्षेषु सप्तसप्त कुलाचलाः ॥ नद्यश्च शतशस्तेभ्यः प्रसूताया द्विजोत्तमाः ॥ ६१ ॥

इत्यादि ब्राह्मे पुराणे भुवनकोशो नाम

षोडशो ऽध्यायः १६ ॥

लोमहर्षण उवाच ॥ उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे ॥ वर्षं तद्भारतं नाम भारती यत्र संततिः ॥ १ ॥ नवयोजन साहस्रो विस्तारश्च मुनीश्वराः ॥ कर्म्मभूमि रियंस्वर्गं मपवर्गं ञ्च एच्छताम् ॥ २ ॥ महेन्द्रो मलयःसह्यः शुक्तिमा नृक्षपर्व्वतः ॥ विंध्यश्च पारिपात्रश्च सप्तात्र कुलपर्व्वताः ॥ ३ ॥ अतः संप्राप्यते स्वर्गो मुक्तिमस्मा त्प्रयान्तिवै ॥ तिर्य्यक्त्वन्नरकं चापि यांत्यतः पुरुषा द्विजाः ॥ ४ इतः स्वर्गश्च मोक्षश्च मध्यं चान्तं च गच्छति ॥ नखल्व न्यत्र मर्त्यानां कर्म्म भूमौ विधीयते ॥ ५ ॥ भारतस्या स्यवर्षस्य नव भेदान्निशामय ॥ इन्द्रद्वीपः कशेरुमां स्ताम्रपर्णो गभस्तिमान् ॥ ६ ॥ नागद्वीप स्तथासौम्यो गन्धर्व स्त्वथ वारुणः ॥ अयंतु नवम स्तेषां द्वीपः सागर संवृतः ॥ ७ ॥ योजनानां सहस्रन्तु द्वीपोयं दक्षिणोत्तरात् ॥ पूर्वे किराता स्तिष्ठन्ति पश्चिमे यवनाः स्थिताः ॥ ८ ॥ ब्राह्मणाः क्षत्रिया वैश्या मध्येशूद्राश्च भागशः ॥ इज्या युध्य वणि

न्यावै वृत्तिमन्तो व्यवस्थिताः ॥ ९ ॥ शतद्रू चन्द्रभागाद्या हिमव
त्पादनिःसृताः ॥ वेदस्मृतिमुखा श्चान्या पारिपात्रोद्भवा मुने ॥ १० ॥
नर्मदा सुरसाद्या श्च नद्योविंध्य विनिःसृताः॥ तापी पयोष्णी नि
र्विंध्या कावेरी प्रमुखानदीः ॥ ११ ॥ ऋक्षपादोद्भवा ह्येताः श्रुताः
पापं हरन्ति याः ॥ गोदावरी भीमरथी कृष्णा वेण्यादिका स्त
था ॥ १२ ॥ सह्यपादोद्भवा नद्यः स्मृता पापभयापहाः ॥ कृतमाला
ताम्रपर्णी प्रमुखा मलयोद्भवाः ॥ १३ ॥ त्रिसाम्यऋषि कुल्याद्या
महेन्द्रप्रभवाः स्मृताः ॥ ऋषिकुल्या कुमाराद्याः शुक्तिम त्पादसम्भ
वाः ॥ १४ ॥ आसां नद्युपनद्य श्च संत्यन्यास्तु सहस्रशः ॥ तास्विमे
कुरुपञ्चाल मध्यदेशा दयोजनाः ॥ १५ ॥ पूर्व्वदेशादिका श्चैव
कामरूप निवासिनः ॥ पौंड्राः कलिङ्गा मगधादक्षिणात्याश्च सर्व्व
शः ॥ १६ ॥ तथापरांत्याः सौराष्ट्राः शूद्राभीरा स्तथार्बुदाः ॥ मा
रुका मालवा श्चैव पारिपात्र निवासिनः ॥ १७ ॥ सौवीराः सैंधवा
श्चैव शाल्वाः शाकल वासिनः ॥ मद्रारामा स्तथांवष्टाः पारसीका
दयस्तथा ॥ १८ ॥ आसां पिबन्ति सलिलं वसन्ति सरितां सदा ॥
समोपेता महाभागा हृष्टपुष्ट जनाकुलाः ॥ १९ ॥ चत्वारि भारते
वर्षे युगान्यत्र महामुने ॥ कृतं त्रेता द्वापरं च कलि श्चान्यत्र नक्व
चित् ॥ २० ॥ तप स्तपष्यन्ति यतयो जुह्वन्ते चात्र यज्विनः ॥ दाना
नि चात्रदीयन्ते परलोकार्थं मादरात् ॥ २१ ॥ पुरुषै र्यज्ञपुरुषो
जंबूद्वीपे सदेज्यते ॥ यज्ञैर्यज्ञमयो विष्णु रन्यद्वीपेषु चान्यथा ॥ २२ ॥

अत्रापि भारतंश्रेष्ठं जंबूद्वीपे महामुने ॥ यतोहि कर्म्मभूरेषा यतो न्याभोग भूमयः ॥ २३ ॥ अत्रजन्म सहस्राणां सहस्रै रपिसत्तम ॥ कदाचि ल्लभतेजंतु र्मानुष्यं पुण्यसंचयात् ॥ २४ ॥ गायन्ति देवाः किलगीतकानि धन्यास्तु येभारत भूमिभागे ॥ स्वर्गापवर्गास्पदहेतु भूते भवन्तिभूयः पुरुषामनुष्याः ॥ २५ ॥ कर्म्माण्यसंकल्पित तत्फ लानि सन्यस्यविष्णौ परमात्मरूपे ॥ अवाप्य तांकर्म्म महीमनंते तस्मिंल्लयंये त्वमलाः प्रयान्ति ॥ २६ ॥ जानीमनैत त्कुवयं विलीने स्वर्गप्रदे कर्म्मणि देहवन्धं ॥ प्राप्स्यन्ति धन्याः खलु तेमनुष्या ये भारते नेन्द्रिय विप्रहीणाः ॥ २७ ॥ नववर्षंतु भोविप्रा जंबूद्वीप मिदंमया ॥ लक्षयोजन विस्तारं संक्षेपा त्कथितं द्विजाः ॥ २८ ॥ जंबूद्वीपं समावृत्य लक्षयोजन विस्तरः ॥ भोद्विजा वलयाकारः स्थितः क्षारोदधिर्वहिः ॥ २९ ॥

इत्यादि ब्राह्मे पुराणे भुवनकोशो नाम

सप्तदशो ऽध्यायः १७ ॥

—o—

लोमहर्षण उवाच ॥ क्षारोदेन यथाद्वीपो जंबूसंज्ञो विवेष्टि तः ॥ संवेष्ट्या क्षारसुदधिं पुक्षद्वीप स्तथास्थितः ॥ १ ॥ जंबू द्वीपस्य विस्तारः शतसाहस्र सम्मितः ॥ सएव द्विगुणो विप्रा पुक्षद्वीपोप्युदा हृतः ॥ २ ॥ सप्तमेधातिथेः पुत्राः पुक्षद्वीपेश्वरस्यवै ॥ श्रेष्ठः शान्तम योनाम शिशिर स्तदनन्तरं ॥ ३ ॥ सुखोदय स्तथानन्दः शिवःक्षे

मक एवच॥ ध्रुवस्य सप्तमस्तेषां प्लक्षद्वीपे ध्वराह्विते॥४॥ पूर्वंशा
न्तमयंवर्षं शिशिरं सुखदंतथा॥ आनन्दं च शिवंचैव क्षेमकं ध्रुवमे
वच॥५॥ मर्यादा कारकास्तेषां तथान्ये वर्षपर्वताः॥ सप्तैव तेषां
नामानि श्टणुध्वं मुनिसत्तमाः॥६॥ गोमेदश्चैव चन्द्रश्च नारदो
दुन्दुभि स्तथा॥ सोमकः सुमनाः शैलो वैभ्राज श्चैवसप्तमः॥७॥
वर्षाचलेषु रम्येषु वर्षेष्वेतेषु चानघाः॥ वसन्ति देवगन्धर्व्वे सहिताः
सततं प्रजाः॥८॥ तेषुपुण्या जानपदा श्चिराच्च म्रियतेजनः॥
नाधयो व्याधयो वापि सर्व्वकालं सुखंहितत्॥९॥ तेषां नद्यश्च
सप्तैव वर्षाणान्तु समुद्रगाः॥ नामत स्ताःप्रवक्ष्यामि श्रुताः पापंह
रन्तियाः॥१०॥ अनुतप्ता शिखीचैव विपाशा त्रिदिवाक्रतुः॥ अ
म्टता सुकृताचैव सप्तैता स्तत्रनिम्नगाः॥११॥ एतेशैला स्तथानद्यः
प्रधानाः कथिताद्विजाः॥ क्षुद्रनद्य स्तथाशैला स्तत्रसंति सहस्र
शः॥१२॥ ताःपिवन्ति सदाहृष्टा नदी र्जनपदास्तुते॥ अवसर्प्पि
णी नदीतेषां नचैवोत्सर्प्पिणी द्विजाः॥१३॥ नतिष्ठति युगावस्था
तेषुस्थानेषु सप्तसु॥ त्रेतायुग समःकालः सर्व्वदैव द्विजोत्तमाः॥१४॥
प्लक्षद्वीपादिके विप्राः शाकद्वीपादिकेषुवै॥ पञ्चवर्ष सहस्राणि ज
ना जीवंत्यनामयाः॥१५॥ धर्म्मः सतुर्विधस्तेषु वर्णाश्रम विभाग
शः॥ वर्णाश्च तत्रचत्वार स्तान्बुधाः प्रवदामिवः॥१६॥ आर्यकाः
कुरवश्चैव विवस्वा भाविनश्चते॥ विप्रक्षत्रिय वैश्यास्ते शूद्राश्च मुनि
सत्तमाः॥१७॥ जंबूवृक्ष प्रमाणस्तु तन्मध्ये समहातरुः॥ प्लक्ष

न्नामसंज्ञोयं पूच्चद्वीपो द्विजोत्तमाः ॥ १८ ॥ ईज्यते भगवांस्तत्र तैर्वर्णै रार्यका दिभिः ॥ सोमरूपी जगत्स्रष्टा सर्व्वः सर्वेश्वरो हरिः ॥ १९ ॥ पूच्चद्वीप प्रमाणेन पूच्चद्वीपः समावृतः ॥ तथैवेचु रसोदेन परिवेषानुकारिणा ॥ २० ॥ इत्येतद्वै मुनिश्रेष्ठाः पूच्चद्वीप मुदाहृतं ॥ संक्षेपेण मयाभूयः शाल्मलं मेनिबोधत ॥ २१ ॥ शाल्मलस्येश्वरोवीरो वपुष्मांस्तु ततोद्विजाः ॥ तेषांतु नाम संज्ञानि सप्त वर्षाणि तानिवै ॥ २२ ॥ श्वेतोथ लोहितश्चैव जीमूतो हरितस्तथा ॥ वैद्युतो मानसश्चैव सुप्रभश्च द्विजोत्तमाः ॥ २३ ॥ शाल्मलेन समुद्रोसौ द्वीपे नेक्षुरसोदकः ॥ विस्तारा द्विगुणेनाथ सर्व्वतः सम्वृतः स्थितः ॥ २४ ॥ तत्रापि पर्व्वताःसप्त विज्ञेया रत्नयोनयः ॥ वर्षाभिव्यञ्जका स्तत्र तथासप्तैव निम्नगाः ॥ २५ ॥ कुमुदः श्वोन्नत श्चैव तृतीयस्तु बलाहकः ॥ द्रोणोयत्र महौषध्यः सचतुर्थोमहीधरः ॥ २६ ॥ कंकस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा ॥ ककुद्मान्पर्वतवरः सरिन्नामा न्यतोद्विजाः ॥ २७ ॥ श्रोणितोया वितृष्णा च चन्द्रा शुक्रा विमोचनी ॥ निवृत्तिः सप्तमीतासां स्मृतास्ताः पापशान्तिदाः ॥ २८ ॥ श्वेतञ्च लोहितं चैव जीमूतं हरितंतथा ॥ वैद्युतं मानसं चैव सुप्रभंनाम सप्तमं ॥ २९ ॥ सप्तैतानिच वर्षाणि चातुर्वर्ण्य युतानिच ॥ शाल्मले येतुवर्णाश्च वर्तन्तेषु द्विजोत्तमः ॥ ३० ॥ कपिलाश्चारुणाः पीताः कृष्णाश्चैव पृथक् पृथक् ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यजन्तितं ॥ ३१ ॥ भगवन्तं समस्तस्य विष्णुमात्मान मव्ययं ॥

वायुभूतं मखश्रेष्ठे यंज्विनो यज्ञसंज्ञितं ॥ ३२ ॥ देवानां मत्रसा न्निध्य मतीव सुमनोहरे ॥ शाल्मलिश्च महावृक्षो नाम निर्वृत्ति कारकः ॥ ३३ ॥ एषद्वीपः समुद्रेण सुरोदेन समावृतः ॥ विस्तारा च्छाल्मल स्यैव समेनतु समंततः ॥ ३४ ॥ सुरोदकः परिवृतः कुश द्वीपेन सर्वतः ॥ शाल्मलस्यतु विस्ताराद् द्विगुणेन समंततः ॥ ३५ ॥ ज्योतिष्मतः कुशद्वीपे सप्तपुत्रा न्निबोधत ॥ उद्भिदो वेणुमां श्चैव सुरथो रम्बनोधृतिः ॥ ३६ ॥ प्रभाकरोथ कपिल स्तन्नाम्ना वर्षप वंतः ॥ तस्यांवसन्ति मनुजाः सहदैतेय दानवैः ॥ ३७ ॥ तथैव देव गंधर्व यक्ष किंपुरुषादयः ॥ वर्णास्तत्रापि चत्वारो निजा नुष्ठान त त्पराः ॥ ३८ ॥ दमिनः शुष्मिणः स्नेहा मन्देहाश्चमहामुने ॥ ब्राह्म णाः क्षत्रिया वैश्याः शूद्राश्चाम क्रमोदिताः ॥ ३९ ॥ यथोक्त कर्म कर्तृत्वात् स्वाधिकार क्षयायते ॥ तत्रतेथ कुशद्वीपे ब्रह्मरूपं जना र्द्दनं ॥ ४० ॥ यजन्तः क्षपयंत्युग्र मधिकार फलप्रदं ॥ विद्रुमो हेम शैलश्च द्युतिमान् पुष्टिमां स्तथा ॥ ४१ ॥ कुशेशयो हरिश्चैव सप्तमो मन्दराचलः ॥ वर्षाचलास्तु सप्तैते द्वीपे तत्र महामुने ॥ ४२ ॥ नद्यश्च सप्ततासां चशृणु नामान्यनुक्रमात् ॥ धूतपापा शिवाचैव पवि त्रासंमतिस् तथा ॥ ४३ ॥ विद्युदंभा महीचान्या सर्व्व पाप हरा स्त्विमाः ॥ अन्याः सहस्रशस् तत्र क्षुद्रनद्यस् तथाचलाः ॥ ४४ ॥ कुशद्वीपे कुशस् तम्बः संज्ञयातस्य तत्स्मृतं ॥ तत्प्रमाणेन सद्वीपो घृतोदेन समावृतः ॥ ४५ ॥ घृतोदश्च समुद्रोसौ क्रौंचद्वीपेन संवृतः ॥

क्रौंचद्वीपो महाभागाः श्रूयतां चापरो महान् ॥ ४६ ॥ कुशद्वीपस्य विस्ताराद् द्विगुणो यस्य विस्तरः ॥ क्रौंचद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः ॥ ४७ ॥ तन्नामानि च वर्षाणि तेषांचक्रे महीपतिः ॥ कुशलो मन्दगश्चोष्णः पीवरोथान्ध कारकः ॥ ४८ ॥ मुनिश्च दुन्दुभिश्चैव सप्तैतेतत्सुता मुने ॥ तत्रापि देव गन्धर्व्व सेविताः सुमनो रमाः ॥ ४९ ॥ वर्षाचलास्तु कथिता स्तेषांना मान्यतः परम् ॥ क्रौंचश्च वामनश्चैव तृतीयश्चांध कारकः ॥ ५० ॥ देवव्रता ध मश्चैव तथान्यः पुण्डरीकवान् ॥ दुन्दुभिश्च महाशैलो द्विगुणास्ते परस्परम् ॥ ५१ ॥ द्वीपा द्वीपेषु वै शैला यथा द्वीपानिते तथा ॥ वर्षे ष्वेतेषु रम्येषु वर्षशैल वनेषु च ॥ ५२ ॥ निवसन्ति निरातङ्काः सह देव गणैः प्रजाः ॥ पुष्करा पुष्कला धन्यास् तिष्याख्याश्च द्विजोत्तमाः ॥ ५३ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमो दिताः ॥ तत्र नद्यो मुनिश्रेष्ठा याः पिबन्ति शुभाषृताः ॥ ५४ ॥ सप्तप्रधानाः शतशस् तत्रान्याः क्षेत्रनिमग्नगाः ॥ गौरी कुमुद्वती चैव संध्यागत्रि मनोजवा ॥ ५५ ॥ ख्याति श्च पुण्डरीका च सप्तैतावर्ष निम्नगाः ॥ तत्रापि वर्णै र्भगवान् पुष्कराद्यै र्जनार्द्दनः ॥ ५६ ॥ योगिरुद्र स्वरूपस्तु इज्यते यज्ञ सन्निधौ ॥ ५७ ॥ क्रौंचद्वीपः समुद्रेण दधि मण्डोदकेन तु ॥ आवृतः सर्व्वतः क्रौञ्च द्वीपतुल्येन मानतः ॥ ५८ ॥ दधि मण्डोदकश्चापि शाकद्वीपेन संवृतः ॥ क्रौंच द्वीपस्य विस्ताराद् द्विगुणेन द्विजोत्तमाः ॥ ५९ ॥ शाकद्वीपेश्वर

स्याय भवस्यस्तु महात्मनः ॥ सप्तैव तनयास्तेषां ददौ वर्षाणि सप्त
सः ॥ ६० ॥ जलदश्च कुमारश्च सुकुमारोमणीचकः ॥ कुसुमोदः
समौदाकिः सप्तमश्च महाद्रुमः ॥ ६१ ॥ तत्संज्ञा पर तन्त्राणि स
प्तवर्षाण्य नुक्रमात् ॥ तत्रापि पर्व्वताः सप्त वर्षविच्छेद कारकाः
६२ ॥ पूर्वं तत्रोदय गिरि र्जलधारस्तथापरः ॥ तथा रैवतकः
श्यामस्तथैवां भोगिरिर्द्विजाः ॥ ६३ ॥ आसुतिकेयस्तथा रम्यः
केशरीपर्व्वतोत्तमः ॥ शाकस्तत्रमहावृक्षः सिद्धगन्धर्व्वसेवितः ॥ ६४ ॥
तत्तत्र वातसंस्पर्शा दाह्लादो जायतेपरः ॥ तत्रपुण्याजनपदा श्चा
तुर्वर्ण्यसमन्विताः ॥ ६५ ॥ निवसन्ति महात्मानो निरातंका निरा
मयाः ॥ नद्यश्चात्र महापुण्याः सर्व्वपाप भयापहाः ॥ ६६ ॥ सुकु
मारी कुमारी च नलिनी धेनुका च या ॥ इक्षुश्च मधुका चैव गभ
स्ती सप्तमी तथा ॥ ६७ ॥ अन्यास्त्वयुतशस्तत्र क्षुद्रनद्यो द्विजो
त्तमाः ॥ महीधरास्तथासंति शतशोथसहस्रशः ॥ ६८ ॥ ताःपि
बन्ति मुदायुक्ता जलदादिषु येस्थिताः ॥ वर्षेषुयेजनपदाः स्वर्गाद
भ्येत्य मेदिनीं ॥ ६९ ॥ धर्महानि र्नतेषुस्ति नसंहर्ष पराक्रमः ॥
मर्यादा पर्व्वताःसप्त तेषुदेशेषु सप्तसु ॥ ७० ॥ मगाश्च मागधाश्चैव
मानसा मन्दगास्तथा ॥ मगाब्राह्मण भूयिष्टा मागधाः क्षत्रिया
स्त्विमे ॥ ७१ ॥ वैश्यास्तु मानसास्तेषां शूद्राज्ञेयास्तु मन्दगाः ॥
शाकद्वीपेतु तैर्विष्णुः सूर्यरूपधरो हरिः ॥ ७२ ॥ यथोक्तैरिज्यते
सम्यक् कर्मभि र्नियतात्मभिः ॥ शाकद्वीपस्ततो विप्राः क्षीरोदेन

समंततः ॥ ७३ ॥ शाकद्वीपप्रमाणेन वलयेनैवसंवृतः ॥ क्षीरोदः सर्व्वतोविप्राः पुष्कराख्येन वेष्टितः ॥ ७४ ॥ द्वीपेन शाक द्वीपात्तु द्विगुणेनसमन्ततः ॥ पुष्करेसवनस्यापि महावीतोभवत्पुतः ॥ ७५ ॥ धातकिश्च तयोस्तद्वद् द्वे वर्षे नामसंज्ञिते ॥ महावीतं तथैवान्यं धातकी खण्डसंज्ञितं ॥ ७६ ॥ एकश्चात्र महाभागाः प्रख्यातो वर्षप र्व्वतः ॥ मानसोत्तर संज्ञोवै मध्यतो वलयाकृतिः ॥ ७७ ॥ योज नानां सहस्राणि ऊर्द्धं पञ्चाशदुच्छ्रयः ॥ ताव देवतु विस्तीर्णः स र्व्वतः परिमण्डलः ॥ ७८ ॥ पुष्करं द्वीपवलय मध्येन विभजन्नि व ॥ स्थितोसौ तेनविच्छिन्नं जात न्तद्द्वीपकद्वयम् ॥७९॥ वलया कारमेकैक न्तयोर्मध्ये महागिरिः ॥ दशवर्ष सहस्राणि तत्र जीव न्ति मानवाः ॥ ८० ॥ निरामया विशोकाश्च रागद्वेष विवर्ज्जिताः ॥ अधमोत्तमौ नतेष्वास्तां नवध्यवधकौ द्विजाः ॥ ८१ ॥ ईर्ष्या सूया भयंरोषो दोषो लोभादिको नच ॥ महावीतं बहिर्वर्षं धातकी ख ण्ड मण्डितम् ॥ ८२ ॥ मानसोत्तर शैलस्य देवदैत्यादि सेवितम् ॥ सत्यान्तेन तत्रास्तां द्वीपे पुष्कर संज्ञिते ॥ ८३ ॥ नतत्रनद्यः शैला वा द्वीपे पुष्कर संज्ञिते ॥ तुल्यवेषा स्तु मनुजा देवै स्तैक रूपि णः ॥ ८४ ॥ वर्णाश्रमा चारहीनं धर्म्माहरण वर्ज्जितम् ॥ त्रयीवा र्त्ता दण्डनीति शुश्रूषा रहित ञ्च तत् ॥ ८५ ॥ वर्षद्वय न्ततोविप्रा भौमः स्वर्गोय मुच्यते ॥ सर्व्वस्य सुखदःकालो जरा रोग विवर्ज्जि तः ॥ ८६ ॥ पुष्करे धातकी खण्डे महावीते ऽथवै द्विजाः ॥ न्यग्रो

धः पुष्करद्वीपे ब्रह्मणः स्थान सुत्तमम् ॥ ८७ ॥ तस्मि न्निवसति ब्रह्मा पूज्यमानः सुरासुरैः ॥ स्वादूदकेनोदधिना पुष्करः परिवेष्टितः ॥ ८८ ॥ समेन पुष्करस्यैव विस्तारा न्मण्डलात्तथा ॥ एवं द्वीपाः समुद्रास्तु सप्तसप्तभि रावृताः ॥ ८९ ॥ द्वीपश्चैव समुद्र श्च समानौ द्विगुणौ परौ ॥ पयांसि सर्व्वदा सर्व्वं समुद्रेषु समानिवै ॥ ९० ॥ न्यूनातिरिक्तता तेषां कदाचि न्नैवजायते ॥ स्थालीस्थ मग्निसंयोगा दुद्रिक्तं सलिलं यथा ॥ ९१ ॥ तथेन्दुवृद्धौ सलिलं समुद्रेषु समं हिवै ॥ अन्यूना नातिरिक्ताश्च वर्द्धन्त्यापो ह्रसन्ति च ॥ ९२ ॥ उदयास्तमने ष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ दशोत्तराणि पञ्चैव ह्यङ्गुलानां शतानि च ॥ ९३ ॥ अपां वृद्धिक्षयोदृष्टः समुद्राणां द्विजोत्तमाः ॥ भोजनं पुष्करद्वीपे तत्र स्वयमुपस्थितम् ॥ ९४ ॥ भुञ्जन्ति षड्रसं विप्राः प्रजाः सर्व्वाः सदैवहि ॥ स्वादूदकस्य पुरतो दृश्यतेलोकसंस्थितिः ॥ ९५ ॥ द्विगुणा काञ्चनी भूमिः सर्व्वजन्तु विवर्जिता ॥ लोकालोक-स्ततःशैलो योजनायुत विस्तृतः ॥ ९६ ॥ उच्छ्रयेणापितावन्ति सहस्रा ण्यचलोहिसः ॥ ततस्तमः समावृत्य सशैलं सर्व्वतः स्थितम् ॥ ९७ ॥ तच्चाण्डकटाहेन समन्ता त्परिवेष्टितं ॥ पञ्चाशत्कोटि विस्तीर्णा सेयमुर्व्वी द्विजोत्तमाः ॥ ९८ ॥ सहैवांडकटाहेनसद्वीपाब्धिमहीधरा ॥ सेयन्धात्रीविधात्रीच सर्व्वभूतगुणाधिका ॥ आधारभूतासर्वेषां जगतांसाद्विजोत्तमाः ॥ ९९ ॥ इत्यादि ब्राह्मे पुराणे समुद्रद्वीप परिमाणमनामाष्टा दशोऽध्यायः १८ ॥

लोमहर्षण उवाच ॥ विस्तार एष कथितः पृथिव्या मुनिसत्तमाः ॥
सप्ततिस्तु सहस्राणि तदुच्छ्रायोपि कथ्यते ॥ १ ॥ दशसाहस्र मेकैकं
पातालं मुनिसत्तमाः ॥ २ ॥ अतल म्वितल ञ्चैव नितल ञ्च गभ
स्तिमत् ॥ महातलाख्यं सुतलं पाताल ञ्चापि सप्तमम् ॥ ३ ॥ कृ
ष्णा शुक्लारुणा पीता शर्करा चैव काञ्चनी ॥ भूमयो यत्र विपेन्द्रा
वरप्रासाद शोभिताः ॥ ४ ॥ तेषु दानव दैत्यानां जातयस्तु सहस्र
शः ॥ निवसन्ति महाभागा यतयश्चद्विजोत्तमाः ॥ ५ ॥ स्वर्लोकाद
पि रम्याणि पातालानीति नारदः ॥ प्राह स्वर्गसदो मध्ये पातालो
भ्यो गतोदिवम् ॥ ६ ॥ आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः ॥
नानाभरण भूषास्तु पातालं केनतत्समम् ॥ ७ ॥ दैत्यदानव कन्या
भि रितश्चेत श्च शोभिते ॥ पाताले कस्य नप्रीति र्विमुक्तस्यापि जा
यते ॥ ८ ॥ दिवाकररश्मय स्तत्र प्रभांतन्वन्ति नातपम् ॥ शशिन श्च
नशीताय निशिद्योताय केवलम् ॥ ९ ॥ भक्ष्यभोज्य महापान मुदि
तै श्चापि भोगिभिः ॥ यत्र नज्ञायते कालो गतोपि दनुजादि
भिः १० ॥ वनानि नद्यो रम्याणि सरांसि कमलाकराः ॥ पुंस्कोकि
लादि लापा श्च मनोज्ञा न्यम्बराणि च ॥ ११ ॥ भूषणा न्यतिरम्या
णि गन्धाढ्य मनुलेपनम् ॥ वीणा वेणु मृदङ्गाना न्निस्वनानि सदा
द्विजाः ॥ १२ ॥ एतान्यन्यानि रम्याणि भाग्यभोग्यानि दानवैः ॥
दैत्योरगै श्च भुज्यन्ते पातालान्तर गोचरैः ॥ १३ ॥ पातालाना म
धश्चास्ते विष्णो र्यातामसी तनुः ॥ शेषाख्या यद्गुणा न्वक्तुं नशक्ता

दैत्यदानवाः ॥ १४ ॥ योऽनन्तः पठ्यते सिद्धै र्देवदेवर्षि पूजितः ॥ सहस्रशिरसो व्यक्तः स्वस्तिकामल भूषणः ॥ १५ ॥ फणामणि स हस्रेण यः सविद्योतय न्दिशः ॥ सर्व्वा न्करोति निर्वीर्यान् हिताय जगतोऽसुरान् ॥ १६ ॥ मदाघूर्णित नेत्रोसौ यःसदैवैककुण्डलः ॥ किरीटी स्रग्धरो भाति साग्निः श्वेतइवाचलः ॥ १७ ॥ नीलवासा मदोत्सिक्तः श्वेतहारोप शोभितः ॥ साभ्रगङ्गा प्रपातोसौ कैलाशा द्रि रिवोन्नतः ॥ १८ ॥ लाङ्गलासक्त हस्ताग्रो बिभ्र न्मुशल मुत्त मम् ॥ उपास्यते स्वयंकांत्या योवारुण्या च मूर्त्तया ॥ १९ ॥ कल्पांते यस्य वक्त्रेभ्यो विषानल शिखोज्वलः ॥ साङ्कर्षणात्मको रुद्रो निर्गं त्यात्ति जगत्त्रयम् ॥ २० ॥ सबिभ्र च्छिखरीभूत मशेषं क्षितिमण्ड लम् ॥ आस्ते पातालमूलस्थः शेषोऽशेष सुरार्चितः ॥ २१ ॥ तस्य वीर्य्यं प्रभाव श्च स्वरूपं रूपमेवच ॥ नतद्वर्णयितु शक्यं ज्ञातुम्वा त्रि दशैरपि ॥ २२ ॥ यस्यैषा सकला पृथ्वी फणामणि शिखारुणा ॥ आस्ते कुसुममालेव कस्तद्वीर्य्यं वदिष्यति ॥ २३ ॥ यदा विजृम्भतेऽ नन्तो मदाघूर्णित लोचनः ॥ तदा चलति भूरेषा साद्रितोयाब्धि कानना ॥ २४ ॥ गन्धर्व्वाप्सरसः सिद्धाः किन्नरो रग राक्षसाः ॥ नान्तं गुणानां गच्छन्ति तेनानन्तो ऽयमव्ययः ॥ २५ ॥ यस्य नागव धूहस्तै र्लेपितं हरिचन्दनम् ॥ मुहुः श्वासानिलाय स्तं याति दि क्पट वासताम् ॥ २६ ॥ यमाराध्य पुराणर्षि र्गर्गोज्योतींषि तत्व तः ॥ ज्ञातवा न्सकल ञ्चैव निमित्तं पठितं फलम् ॥ २७ ॥ तेनेयं

नागवर्यैश्च शिरसा विधृता मही ॥ बिभर्त्ति मालां लोकानां सदेवा सुर मानुषीं ॥ २८ ॥

इत्यादि ब्राह्मे पुराणे पातालप्रमाण कीर्त्तनन्नामैकोन विंशोऽध्याय: १९ ॥



लोमहर्षण उवाच ॥ ततश्च नरका विप्रा बभूवुः सलिलादधः ॥ प्राणिनो यत्र पात्यन्ते तान् शृणुध्वं द्विजोत्तमाः ॥ १ ॥ रौरवः शूकरो रोधः शालो विशसन स्तथा ॥ महाज्वाल स्तप्तकुम्भो महालोहो विमोहनः ॥ २ ॥ रुधिरान्धो वैतरणी कृमीशः कृमिभोजनः ॥ असिपत्रवनः कृष्णो लालाभच्च स दारुणः ॥ ३ ॥ तथा पूयवहः पापो वह्निज्वालो ह्यधःशिराः ॥ ४ ॥ संदंशः कृष्णसूत्र स्च तमश्चावीचि रेवच ॥ श्वभोजनोथा प्रतिष्ठोह्या वीचिश्च तथापरः ॥ ५ ॥ इत्येवमादय श्चान्ये नरका श्च शदारुणाः ॥ यमस्य विषये घोराः शस्त्राग्नि भयदायिनः ॥ ६ ॥ पतन्ति येषु पुरुषाः पापकर्म्मं रतास्चये ॥ कूटसाक्षी तथासम्यक् पक्षपातेन योवदेत् ७ ॥ यश्चान्यदनृतं वक्ति सनरो याति रौरवम् ॥ भ्रूणहा गुरुहन्ता च गोघ्न स्च मुनिसत्तमाः ॥ ८ ॥ सयाति रौरवंघोरं यश्च श्वासनिरोधकः ॥ सुरापो ब्रह्महा हर्त्ता सुवर्णस्य च शूकरे ॥ ९ ॥ प्रयाति नरकेय स्च तैः संसर्गमुपैति च ॥ राजन्य वैश्यहन्ता च तथैव गुरुतल्पगः ॥ १० ॥ तप्तकुम्भे स्वसागामी घ्नन्ति राजभय स्चये ॥ साध्वी विक्रयकृन्मय पा

नः केश्वर विक्रयी ॥ ११ ॥ तप्तलौहे पतन्त्येते यश्च भक्तं परित्यजेत् ॥
सुतांस्नुषांश्चापि गत्वा महाज्वाले निपात्यते ॥ १२ ॥ अवमन्ता गु
रूणांयो यश्च क्रोष्टा नराधमः ॥ वेददूषयिता यश्च वेदविक्रयक श्च
यः ॥ १३ ॥ अगम्यगामी यश्चैषा स्तेयान्ति श्ववल न्द्विजाः ॥ चौरो
विमोहे पतति मर्यादा दूषक स्तथा ॥ १४ ॥ देवद्विज न्टप द्वेषी र
त्नदूषयिता श्चयः ॥ सयाति कृमिभक्ष्येवै कृमीशे च दुरिष्टिकृत् ॥ १५
पितृदेवातिथी न्यस्तु पर्यनाश्नाति नराधमः ॥ लालाभक्षं सयात्यु
ग्रं शरकर्त्ता च वेधके ॥ १६ ॥ करोति कर्णिनो यश्च यश्च खड्गादि
कृन्नरः ॥ गच्छन्त्येतेविशसन न्नरकंभृशदारुणम् ॥ १७ ॥ असत्प्र
तिग्रहीता च नरके यात्यधो मुखे ॥ अयाज्य याजक स्तत्र तथा
नक्षत्रसूचकः ॥ १८ ॥ कृमिपूयभय ञ्चैको याति मिष्टान्नभुग्नरः ॥
लाक्षामांस रसाना ञ्च तिलानां लवणस्य च ॥ १९ ॥ विक्रेता ब्रा
ह्मणो याति तमेव नरक न्द्विजाः ॥ मार्जार कुक्कुटच्छाग वराहश्व
विहङ्गमान् ॥ २० ॥ पोषय न्नरकं याति तमेव द्विजसत्तमाः ॥
रङ्गोपजीवः कैवर्त्तः कुण्डाशी गरद स्तथा ॥ २१ ॥ सूची माहिष
क स्चैव पर्व्वगामी च योद्विजः ॥ आगारदाही मित्रघ्नः शाकुनि
ग्रामयाजकः ॥ २२ ॥ रुधिरान्धे पतन्त्येते सोमं विक्रीणते चये ॥
मधुहा ग्रामहन्ता च याति वैतरणी न्नरः ॥ २३ ॥ रेतः पानादि
कर्त्तारो मर्यादाभेदिन श्चये ॥ असिपत्रवनं यान्ति वनच्छेदी तथैव
यः ॥ २४ ॥ औरभ्रको मृगव्याधो वह्निज्वाले पतन्तिवै ॥ यान्ति ते

वैतथा विप्रा यश्चापाकेषु वह्निदः ॥ २५ ॥ व्रतोपलोपको यश्च स्वाश्र
माद्विच्युत स्वयः ॥ सन्दंशयातना मध्ये पतत स्तावुभावपि ॥२६॥
दिवास्वप्नेषु स्कन्दन्से येनरा ब्रह्मचारिणः ॥ पुत्रैरध्यापिता येतु ते
पतन्ति श्वभोजने ॥ २७ ॥ एते चान्ये च नरकाः शतशोथ सहस्र
शः ॥ येषु दुष्कृतकर्म्माणो पच्यन्ते यातनागताः ॥ २८ ॥ तथैव पा
पान्येतानि तथा न्यानि सहस्रशः ॥ भुज्यन्ते यानिपुरुषै र्न्नरकाणं
वगोचरैः ॥ २९ ॥ वर्णाश्रमविरुद्धञ्च कर्म्म कुर्व्वन्ति येनराः ॥ क
र्म्मणा मनसा वाचा निरये च पतन्तिते ॥ ३० ॥ अधः शिरोभि
र्दृश्यन्ते नारकै र्द्दिविदेवताः ॥ देवा श्चाधोमुखा न्सर्व्वा नधः पश्य
न्ति नारकान् ॥ ३१ ॥ स्थावराः कृमयोयाश्च पक्षिणः पशवोनराः॥
धार्मिका स्त्रिदशा स्तद्व न्मोक्षिण श्च यथाक्रमं ॥ ३२ ॥ सहस्र भा
गात्प्रथमा द्वितीयानुक्रमा त्तथा ॥ सर्वे ह्येते महाभागा यावन्मुक्ति
समाश्रिताः ॥ ३३ ॥ यावन्तो जन्तवः स्वर्गे तावन्तो नरकौकसः ॥
पापकृ द्यातिनरकं प्रायश्चित्त पराङ्मुखः ॥ ३४ ॥ तृषा तथैव संस्मृत्य
प्रोक्तानि परमर्षिभिः ॥ पापे गुर्व्विणि गुरुणि स्वल्पा न्यल्पेपि तद्वि
दः ॥ ३५ ॥ प्रायश्चित्तानि भोविप्रा जगुः स्वायम्भुवादयः ॥ प्राय
श्चितान्यशेषाणि तपः कर्म्मात्मकानिवै ॥ यानि तेषा मशेषाणां कृ
ष्णानुस्मरणं परं ॥ ३६ ॥ कृतेपापे नुतापोवै यस्यपुन्सः प्रजायते ॥
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परं ॥ ३७ ॥ प्रातर्निशि तथा स
न्ध्या मध्याह्नादिषु संस्मरन् ॥ नारायण मवाप्नोति सद्यः पापक्षय

न्नरः ॥ ३८ ॥ विष्णुसंस्मरणा क्षीण समस्त क्लेशसञ्चयः ॥ मुक्तिं प्रयाति स्वर्गाप्ति स्तस्य विघ्नोनुमीयते ॥ ३९ ॥ वासुदेवे मनोयस्य जप होमार्चनादिषु ॥ तस्यान्तरायो विप्रेन्द्रा देवेन्द्रत्वादिकं फलं ॥ ४० ॥ क्वनाक पृष्ठगमनं पुनरावृत्ति लक्षणं ॥ क्वजपो वासुदेवेति मुक्तिवीज मनुत्तमं ॥ ४१ ॥ तस्मा दहर्निशं विष्णुं संस्मरन्पुरुषो द्विजाः ॥ नयाति नरकं शुद्धः संक्षीणा खिलपातकः ॥ ४२ मनः प्रीतिकरः स्वर्गो नरक स्तद्विपर्य्ययः ॥ नरकस्वर्ग संज्ञेवै पाप पुण्ये द्विजोत्तमाः ॥ ४३ ॥ वस्त्वेकमेव दुःखाय सुखायेर्ष्योद्भवाय च ॥ कोपापवपत स्तस्मा द्वस्तु दुःखात्मकं कुतः ॥ ४४ । मनसःपरिणामोयं सुखदुःखादि लक्षणं ॥ ज्ञानमेव परंब्रह्म ज्ञानम्बन्धाय चेष्यते ॥ ४५ ॥ ज्ञानमेक मिदंविश्वं नज्ञाना द्विद्यतेपरं ॥ विद्याविद्येति विप्रा ज्ञानमेवा वधार्य्यते ॥ ४६ ॥ एवमेत न्मयाख्यातं भवता म्मण्डलम्भुवः ॥ पातालानि च सर्व्वाणि तथैव नरका द्विजाः ॥ ४७ ॥ समुद्राः पर्व्वता स्चैव द्वीपा वर्षाणि निम्नगाः ॥ संक्षेपा त्सर्वमाख्यातं किम्भूयः श्रोतुमिच्छथ ॥ ४८ ॥

इत्यादि ब्राह्मे पुराणे नरकानुकीर्त्तनं नाम

विंशोऽध्यायः २० ॥

—०—

मुनय ऊचुः ॥ कथित म्भवता प्रष्ण मस्माकं सकलं त्वया ॥ भुव र्लोकादिकान् लोकान् श्रोतु मिच्छामहे वयं ॥ १ ॥

तथैव ग्रहसंस्थानं प्रमाणानियथातथा ॥ समाचक्ष्व महाभाग यथा
वल्लोमहर्षण ॥ २ ॥ लोमहर्षणउवाच ॥ रविचन्द्रमसो यांवन्म
यूखैरवभासते ॥ ससमुद्रसरिच्छैला तावती पृथिवीस्मृता ॥ ३ ॥
यावत्प्रमाणा पृथिवी विस्तार परिमण्डला ॥ नभस्तावत्प्रमाणंहि
विस्तार परिमण्डलं ॥ ४ ॥ भूमेर्योजन लक्षेतु सौरं विप्रास्तु मण्ड
लं ॥ लक्षे दिवाकरस्यापि मण्डलं शशिनः स्थितं ॥ ५ ॥ पूर्णे शत
सहस्रेतु योजनानां निशाकरात् ॥ नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्प्र
काशते ॥ ६ ॥ द्विलक्षे चोत्तरे विप्रा बुधोनक्षत्र मण्डलात् ॥ ताव
त्प्रमाणभागेतु बुधस्याप्युशना स्थितः ॥ ७ ॥ अङ्गारकोपि शुक्रस्य
तत्प्रमाणे व्यवस्थितः ॥ लक्षद्वयेन भौमस्य स्थितो देवपुरोहितः ॥ ८
सौरि र्वृहस्पतेरूर्ध्वं द्विलक्षे समवस्थितः ॥ सप्तर्षिमण्डलं तस्मा ल्ल
क्षमेकं द्विजोत्तमाः ॥ ९ ॥ ऋषिभ्यस्तु सहस्राणां शतादूर्ध्वंव्यवस्थि
तः ॥ मेढीभूत समस्तस्य ज्योतिश्चक्रस्य वैध्रुवः ॥ १० ॥ त्रैलोक्यमेत
त्कथितं संक्षेपेण द्विजोत्तमाः ॥ इज्याफलस्य भूरेषा इज्याचात्र प्र
तिष्ठिता ॥ ११ ॥ ध्रुवादूर्ध्वं महर्लोको यत्रते कल्पवासिनः ॥ एकयो
जनकोटीषु यतंते कल्पवासिनः ॥ १२ ॥ द्वेकोटीतु जनोलोको यत्र
ते ब्रह्मणः सुताः ॥ सनन्दनाद्याः कथिता विप्राश्चामल चेतसः ॥ १३
चतुर्गुणोत्तरे चोर्द्धं जनलोका त्तपःस्मृतः ॥ वैराजायत्रतेदेवाः
स्थिता देहविवर्जिताः ॥ १४ ॥ षड्गुणेतु तपोलोका त्सत्यलोको वि
राजते ॥ अपुन र्मारकायत्र ब्रह्मलोकोहि सःस्मृतः ॥ १५ ॥ पादग

र्थ्यं हि यत्किञ्चि द्वस्त्ववस्ति धरणीतले ॥ सभूर्लोकः समाख्यातो वि
स्तरोस्य मयोदितः ॥ १६ ॥ भूमिसूर्य्यान्तरं यच्च सिद्धादि मुनिसे
वितम् ॥ भुवर्लोकस्तु सोप्युक्तो द्वितीयो मुनिसत्तमाः ॥ १७ ॥ ध्रुव
सूर्य्यान्तरं यत्तु नियुतानि चतुर्द्दश ॥ स्वर्लोकः सोपि कथितो लोक
स्थान विचिन्तकैः ॥ १८ ॥ त्रैलोक्य मेतत्कृतकं विप्रैश्च परिपठ्यते॥
जन स्तप स्तथासत्य इति चाकृतकं त्रयं ॥ १९ ॥ कृतका कृतकयो
र्मध्ये महर्लोक इतिस्मृतः ॥ शून्योभवति कल्पांते योत्यंतं नविनश्य
ति ॥ २० ॥ एतेसप्त मयालोका यथावत्कथिता द्विजाः ॥ पाताला
नि च सप्तैव ब्रह्माण्डस्यैष विस्तरः ॥ २१ ॥ एत दण्डकटाहेन तिर्य्यं
गूर्ध्वं मध स्तथा ॥ कपित्थस्य यथावीजं सर्व्वतो वै समावृतम् ॥ २२
दशोत्तरेण पयसा द्विजा श्चाण्डंच तत्स्मृतम् ॥ सचाम्बु परिवारो
सौ वह्निना परिवेष्टितः ॥ २३ ॥ वह्निस्तु वायुनावायु र्विप्रास्तु नभ
सावृतः ॥ आकाशोपि मुनिश्रेष्ठा महता परिवेष्टितः ॥ २४ ॥ द
शोत्तराणि सर्व्वाणि विप्रास्त्वेतानि सप्तवै ॥ महांतं च समावृत्य प्र
धानं समवस्थितं ॥२५॥ अनन्तस्य नतस्यान्तः संख्यानंचापिविद्यते ॥
तदनन्त मसंख्यातं प्रमाणेनापि वैयतः ॥ २६ ॥ हेतुभूत मशेषस्य
प्रकृतिः सापराजिता ॥ अण्डानांतु सहस्राणां सहस्राण्य युतानि
च ॥ २७ ॥ ईदृशानां तथातत्र कोटिकोटि शतानि च ॥ दारुण्य
ग्निर्यथा तैलं तिलेतद्व त्पुमानपि ॥ २८ ॥ प्रधाने वस्थितो व्यापी
चेतनात्मनि वेदनः ॥ प्रधानंचपुमांश्चैव सर्व्वभूतात्मभूतया ॥२९ ॥

विष्णुशक्त्या द्विजश्रेष्ठाः प्रकृत्याश्रय धर्मिणौ ॥ ततःसेन पृथग्भावे का
रणं संश्रयस्य च ३० ॥ क्षोभकारणभूता च सर्गकाले द्विजोत्तमाः॥
यथाशैत्यञ्जले वातो बिभर्त्ति कणिकागतम् ॥ २१ ॥ जगच्छक्तिस्त
था विष्णोः प्रधान पुरुषात्मकम् ॥ यथा च पादपोमूलस्कंधशाखा
दिसंयुतः ॥ ३२ ॥ आदिबीजा त्प्रभवति बीजान्यन्यानि चैततः॥
प्रभवन्ति ततस्तेभ्यो भवन्त्यन्ये परेद्रुमाः ॥ ३३ ॥ तेपितल्लक्षणद्रव्य
कारणानुगताः स्मृताः॥ एवमव्याकृतात्पूर्वं जायन्तेमहदादयः ॥ ३४
विशेषास्तु ततस्तेभ्यः सम्भवन्ति सुरादयः ॥ तेभ्यश्च पुत्रा स्तेषांस्तु
पुत्राणा मपरेस्तुताः ॥ ३५ ॥ बीजा द्वृक्षप्ररोहेण यथा नापचय
स्तरोः ॥ भूतानां भूतसर्गेण नैवास्त्यपचयस् तथा ॥ ३६ ॥ सन्नि
धानाद्यथा काश कलाद्याः कारणान्तरोः ॥ तथैवा परिणामेन वि
श्वस्य भगवान्हरिः ॥ ३७ ॥ व्रीहिबीजे यथामूलं पत्रांकुरतया प
रे ॥ काण्डकोषस् तथापुष्पं क्षीरं तद्वच्च तन्दुलाः ॥ ३८ ॥ तुषा
कणाश्च सन्तोवै यांत्याविर्भावमात्मनः ॥ प्ररोहहेतु सामंग्र मासा
द्य मुनिसत्तमाः ॥ ३९ ॥ तथा कर्म्मस्वनेकेषु देवाद्या स्तनवःस्थिताः ॥
विष्णुशक्तिं समासाद्य प्ररोह मुपयान्तिवै ॥ ४० ॥ सच विष्णुः प
रंब्रह्म यतःसर्व्वमिदञ्जगत् ॥ जगच्चयोन यच्चेदं यस्मिं श्च लयमे
ष्यति ॥४१ ॥ तद्ब्रह्मतत्परंधाम सदसत्परमंपदं ॥ यस्य सर्व्वमभेदेन
जगदेत चराचरम् ॥ ४२ ॥ सएवमूलप्रकृति र्व्यक्तरूपो जगच्चसः॥
तस्मिन्नेवलयं सर्वं यान्ति तत्र भवन्तिवै ॥ ४३ ॥ कर्त्ता क्रियाणां स

च दृश्यतेवै सएव तत्कर्म्मफलं च तज्जयत् ॥ यागादि यत्साधन म
प्यशेषतो हरेर्न्नकिंचिद् व्यतिरिक्त मस्तितत् ॥ ४४ ॥

इत्यादि ब्राह्मे पुराणे भूर्भुवःस्वरादि कीर्त्तनं
नामैकविंशोऽध्यायः २१ ॥



लोमहर्षण उवाच ॥ तारामयं भगवतः शिशुमाराकृतिंप्रभोः ॥
दिविरूपं हरेर्यत्तु तस्यपुच्छे स्थितोध्रुवः ॥ १ ॥ सैषभ्रमन् भ्रामयति
चन्द्रा दित्यादिकान् ग्रहान् ॥ भ्रमन्त मनुयान्तिस्म नक्षत्राणि च
चक्रवत् ॥ २ ॥ सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैःसह ॥ वाता
नीकमयैर्बन्धै र्ध्रुवेबद्धानि तानिवै ॥ ३ ॥ शिशुमाराकृतिं विप्रा यद्रू
पं ज्योतिषां दिवि ॥ नारायणः परन्धाम तस्याधारः स्वयंहरिः ॥ ४ ॥
उत्तानपाद तनय स्तमाराध्य प्रजापतिः ॥ सतारा शिशुमारस्य
ध्रुवः पुच्छे व्यवस्थितः ॥ ५ ॥ आधारः शिशुमारस्य सर्व्वाध्यक्षो ज
नार्द्दनः ॥ ध्रुवस्य शिशुमारस्य ध्रुवपुच्छे व्यवस्थितः ॥ ६ ॥ तदाधारं
जगच्चेदं सदेवासुर मानुषं ॥ येनविप्रा प्रधानेन तन्मे शृणुत सांप्र
तम् ॥ ७ ॥ विवस्वा नष्टभिर्मासै र्ग्रसत्यंभो रसात्मकम् ॥ वर्षत्यम्बुत
तस्मान्न मन्नादप्यखिलं जगत् ॥ ८ ॥ विवस्वा नंशुभि स्तीक्ष्णै रा
दाय जगतो जलं ॥ सोमं पुष्यत्यथेन्दुस्च वायुनाडीमये र्दिवि ॥ ९ ॥
नालै र्विक्षिपतेभ्रेषु धूमाग्न्यनिल मूर्त्तिषु ॥ नभ्रश्यन्ति यत स्तेभ्यो
जलान्यभ्राणि तान्यतः ॥ १० ॥ अभ्रस्थाः प्रपतन्त्यापो वायुना सम्

दीरिताः ॥ संस्कारं कालजनितं विप्राश्च व्योम्न निर्मलाः ॥ ११ ॥
सरित्समुद्र भौमास्तु तथापः प्राणिसम्भवाः ॥ चतुःप्रकारा भगवा
नादत्ते सविते द्विजाः ॥ १२ ॥ आकाशगंगा सलिलं तदाहृत्य गभ
स्तिमान् ॥ अनभ्रगत मेवोर्व्यां सद्यःक्षिपति रश्मिभिः ॥ १३ ॥ तस्य
संस्पर्श निर्धूत पापपङ्को द्विजोत्तमाः ॥ नयाति नरकं मर्त्यो दिव्यं
स्नानंहि तत्स्मृतम् ॥ १४ ॥ दृष्ट्वा सूर्यंहि यद्वारि पतत्यभ्रै र्विना
दिवः ॥ आकाशगंगा सलिलं तद्गोभिः क्षिप्यतेरवेः ॥ १५ ॥ कृत्ति
कादिषु ऋक्षेषु विषमेष्वम्बु यद्दिवः ॥ दृष्ट्वार्कपतितंज्ञेयं तद्गांगं दि
ग्गजोज्झितम् ॥ १६ ॥ युग्मर्क्षेषुतु तत्तोयं पतत्यर्केपि लंदिवः ॥
तत्सूर्यरश्मिभिः सद्यः समादाय निरस्यते ॥ १७ ॥ उभयं पुण्यमत्य
र्थं नृणां पापहरं द्विजाः ॥ आकाशगंगा सलिलं दिव्यंस्नानं महा
मुने ॥ १८ ॥ यत्तुमेघैः समुत्सृष्टंवारि तत्प्राणिनां द्विजाः ॥ पुष्णा
त्योषधयः सर्व्व जीवनाया मृतंहितत् ॥ १९ ॥ तेनवृद्धिं परान्नीतः
सकल स्त्वौषधीगणः ॥ औषध्यः फलपाकान्ताः प्रजानां तत्प्रजाय
ते ॥ २० ॥ तेनयज्ञा न्यथाप्रोक्तान्मानवाः शास्त्रचाक्षुषाः॥ कुर्व्वन्त्य
हर हस्तैश्च देवानाप्या ययन्तिते ॥ २१ ॥ एवं यज्ञाश्च वेदाश्च वर्णा
श्च द्विजपूर्व्वकाः ॥ सर्व्वदेव निकायाश्च पशुभूतगणा श्चये ॥ २२ ॥
वृष्ट्याधृत मिदंसर्वं जगत्स्थावर जङ्गमं ॥ एत न्निष्पाद्यते वृष्टिः स
विश्रा मुनिसत्तमाः ॥ २३ ॥ आधारभूतः सवितु र्ध्रुवो मुनिवरोत्त
माः ॥ ध्रुवस्य शिशुमारोसौ सोपि नारायणाश्रयः ॥ २४ ॥ हृदिना

रायणस्तस्य शिशुमारस्य संस्थितः ॥ विभर्त्ति सर्वभूताना मादिभू
तःसनातनः ॥ २५ ॥ एवमाद्यं मुनिश्रेष्ठा ब्रह्माण्डं समुदाहृतं ॥
भूसमुद्रादिभि र्युक्तं किमन्य च्छ्रोतुमिच्छत ॥ २६ ॥

इत्यादि ब्राह्मे पुराणे ध्रुवसंस्थिति र्नाम

द्वाविंशोऽध्यायः २२ ॥

—:०:—

मुनय ऊचुः ॥ पृथिव्यां यानितीर्थानि धन्यान्यायतनानि च॥
वक्तुमर्हसि धर्म्मज्ञ श्रोतुन्नो वर्त्तते मनः ॥ १ ॥ लोमहर्षण उवाच ॥
यस्यहस्तौ च पादौ च मनश्चैव सुसंयतं ॥ विद्यातप श्च कीर्त्ति श्च स
तीर्थफल मश्नुते ॥ २ ॥ मनोविशुद्धं पुरुषस्य तीर्थं वाचो मनस्त्वि
न्द्रियनिग्रह स्तपः ॥ एतानि तीर्थानि शरीरजानि स्वर्गस्यमार्गं प्र
तिवोधयन्ति ॥ ३ ॥ चित्तमन्तर्गतं दुष्टं तीर्थस्नानै र्नशुध्यति ॥ शत
शोयजलै र्धौतं सुराभाण्ड मिवाशुचिः ॥ ४ ॥ नतीर्थानि नदाना
नि नव्रतानि नचाश्रमाः ॥ दुष्टाशयं दुष्टरुचिं नपुनन्त्य जितेन्द्रि
यम् ॥ ५ ॥ इन्द्रियाणि वशेकृत्वा यत्रयत्र वसेन्नरः ॥ तत्रतत्र कुरु
क्षेत्रं प्रयागं पुष्करं तथा ॥ ६ ॥ तच्छृणुध्वं प्रवक्ष्यामि तीर्थान्याय
तनानि च ॥ संक्षेपेण मुनिश्रेष्ठाः पृथिव्यां यानिकानिवै ॥ ७ ॥ वि
स्तरेण नशक्यं तद्वक्तुं वर्षशतैरपि ॥ प्रथमं पुष्करं तीर्थं नैमिषार
ण्यमेव च ॥ ८ ॥ प्रयाग ञ्च प्रवक्ष्यामि धर्म्मारण्यं द्विजोत्तमाः ॥
धेनुकं चम्पकारण्यं सैन्धवारण्य मेवच ॥ ९ ॥ पुण्यञ्च मगरारण्यं

दण्डकारण्य मेवच ॥ गयाप्रभासंश्रीतीर्थं दिव्यंकनखलं तथा ॥ १०
भृगुतुङ्गं हिरण्याक्षं भीमारण्यं कुशस्थली ॥ लोहार्गलं सकेदारं
मन्दरारण्य मेवच ॥ ११ ॥ महालयं कोटितीर्थं सर्व्वपापहरंतथा ॥
रूपतीर्थं शूकरञ्च चक्रतीर्थं महाफलम् ॥ १२ ॥ व्यासतीर्थं सोम
तीर्थं तीर्थं साखोटकं तथा ॥ तीर्थं कोकामुखं पुण्यं बदरीशैल मे
वच ॥ १३ ॥ सोमतीर्थं तुङ्गकूटं तीर्थं स्कन्दाश्रमं तथा ॥ सूर्यप्रभं
धेनुसर: सप्तसामुष्मिकं तथा ॥ १४ ॥ धर्म्मोद्भवं कोटि तीर्थं सार्व्व
कामिक मेवच ॥ सूर्यप्रभं महाकुण्डंतीर्थं सोमाभिषेचनम् ॥ १५ ॥
महाश्रोत्रं कोरकंच पञ्चधारं त्रिधारकम् ॥ सप्तधारैक धारं च
तीर्थंचामर कण्टकम् ॥ १६ ॥ शालग्रामञ्चक्रतीर्थं कदलीह्रद मु
त्तमम् ॥ विद्युत्प्रभंदेवह्रदं तीर्थंविष्णु प्रभन्तथा ॥१७॥ शङ्खप्रभं दे
व कुण्डं तीर्थंवज्रा युधंतथा ॥ वस्त्रापदं वर्हपदं लोकारोहण मेव
च ॥ १८ ॥ स्वयंवटंमद्र वलं कौमारंचैव दिवाकरी ॥ द्वीपे सार
स्वतन्देवं विजयं कामदं तथा ॥ १९ ॥ सोऽक्षयाङ्गो प्रचारस्य चवर
श्चन पूर्णवान् ॥ स्नानकुण्डं प्रयागंच गुहाविष्णुपदन्तथा ॥ २० ॥
कन्याकुण्डंवायुकुण्डं जंबुमार्गन्तथोत्तमम् ॥ गभस्तितीर्थञ्च तथा
ययातिपत्तनं शुचि: ॥ २१ ॥ कोटितीर्थं भद्रवटं महाकालवनंतथा ॥
नर्मदा च परंतीर्थं तीर्थं वीजंतथार्वुदम् ॥ २२ ॥ पञ्चतीर्थं सदा
सिष्टं तीर्थं वैप्रियसंज्ञकं ॥ तीर्थञ्च वार्षिकं नाम तथा पञ्जरकं
शुभम् ॥ २३ ॥ सुतीर्थं ब्रह्मरुद्रञ्च तीर्थं कन्याकुमारिका ॥ श्र

ह्मतीर्थं पञ्चनदं रेणुका तीर्थमेव च ॥ २४ ॥ पैतामह ञ्च विमलं रौद्रपादं तथोत्तमं ॥ मणिमन्त ञ्च कामाख्यं कृष्ण तीर्थं कुलिङ्ग कम् ॥ २५ ॥ श्रीशङ्कयजन ञ्चैव तथैव ब्रह्मवालका ॥ पुष्पंन्यासं पुण्डरीकं मणिमन्थं तथोत्तमं ॥ २६ ॥ दीर्घमन्तं हंसपादं तीर्थञ्च शयनं तथा ॥ दशाश्वमेधं केदारं तमसोद्भेद एवच ॥ २७ ॥ रुद्र कूपं संयमनीं तीर्थं संभावनासिकं ॥ समन्तपञ्चकं तीर्थं ब्रह्मतीर्थं सुदर्शनं ॥ २८ ॥ सततं पृथिवीतीर्थं पारिप्लव पृथूदकौ ॥ दशाश्वमेधिकं तीर्थं सार्चिदं विजयं तथा ॥ २९ ॥ कोटि तीर्थं पंचनदं वाराहं यक्षिणोहृदं ॥ पुण्डरीकं सोमतीर्थं मुञ्जावटरथोत्तमं ॥ ३० ॥ वदरीवन मासीनं ववूरवण मेवच ॥ स्वर्लोकद्वार संतीर्थं कपिलातीर्थ मेवच ॥ ३१ ॥ सूर्यतीर्थं दक्षस्थानि भवाभवनमेव च ॥ तीर्थं च यचराचक्ष्यं ब्रह्मतीर्थं सुतीर्थकं ॥ ३२ ॥ कामेश्वरं मातृतीर्थं तीर्थं शातवनं तथा ॥ स्थानं भौमस्य हंसस्य सारसं सरसंतथा ॥ ३३ ॥ दशाश्वमेधं केदारं ब्रह्मजुम्बर मेवच ॥ सप्तर्षिकुण्डंच तथा तीर्थं देव्याः सुसंयतं ॥ ३४ ॥ इहास्पदं कोटिकृतं किंदानं किंजयं तथा ॥ कारण्डवन्तु विघ्नंच त्रिविष्टप तथापरं ॥ ३५ ॥ पाणिखातं मिश्रकं च मधुकंट मनोमयौ ॥ कौशिकी देवतीर्थं च कन्यातीर्थं मथोत्तमं ॥ ३६ ॥ ब्रह्मतीर्थं मनस्तीर्थं तीर्थं चैवानपावनं ॥ सौगन्धिकं वनञ्चैव मणितीर्थं सरस्वती ॥ ३७ ॥ ईशान तीर्थं प्रवरं पावनं पंचयज्ञकं ॥ त्रिशूलधारं माहेन्द्रं देवस्थानं महा

लयम् ॥ ३८ ॥ शाकम्भरी देवतीर्थं सुवर्णाख्यं कपीमदम् ॥ श्वो
रेश्वरं विरूपाक्षं भृगुतीर्थं कुशोद्भवं ॥ ३९ ॥ ब्रह्मावर्त्तं ब्रह्मयोनिं
नीलपर्व्वत मेववा ॥ भद्रकर्णं हृदश्चैव शङ्कुकर्णं हृदं तथा ॥ ४० ॥
सप्तसारस्वतं चैव तीर्थं मौञ्जनसं तथा ॥ कपालमोचनं चैव अवकी
र्णंच पंचकम् ॥ ४१ ॥ चतुः सामुद्रिकं चैव सत्कांचन सहस्रिकं ॥
रेणुकं पंचकटकं विमोचन मथौनसान् ॥ ४२ ॥ स्थाणुतीर्थं कुरो
स्तीर्थं स्वर्गद्वारं कुशध्वजं ॥ विश्वेश्वरं वामकं तथा नारायणा
श्रमं ॥ ४३ गंगाहृदं वटंचैव वदरी पावनं तथा ॥ इन्द्रमार्गश्च के
शवं जिरिकावास मेवच ॥ ४४ ॥ सोमतीर्थञ्च भोविप्राः कोटिती
र्थञ्च पुष्करं ॥ कोटितीर्थं स्थली चैव भद्रकाली हृदं तथा ॥ ४५ ॥
अरुन्धतीवनं चैव ब्रह्मावर्त्तं तथोत्तमं ॥ अश्वदेवी कुब्जवनं यमुना
प्रभवं तथा ॥ ४६ ॥ वीरप्रमोक्षं सिद्धार्थं मायाविद्योद्भवं तथा ॥ म
हाहृदो वेतविका रूपंसुन्दरिकाश्रमम् ॥ ४७ ॥ ब्रह्माणी तीर्थं चै
व गंगोद्भव सरस्वती ॥ वाजकातीर्थ ञ्च नदी विमलाशोक मेव
च ॥ ४८ ॥ गौतमैरावती तीर्थं तीर्थं शतसहस्रिकम् ॥ भर्तृ स्था
नं कोटितीर्थं वराचैवाथ कापिली ॥ ४९ ॥ तीर्थं पञ्चनदं चैव मा
र्कण्डेयस्य धीमतः ॥ सोमतीर्थं शिवोदञ्च तीर्थं मत्स्योदरीतथा ॥ ५०
सूर्य्यप्रभं सूर्य्यतीर्थं सोमकंवन मेवच ॥ अरुणास्पदं वामनकं सूर्यती
र्थं सवालुकं ॥ ५१ ॥ तीर्थं चैवा विमुक्ताख्यं नीलकण्ठहृदं तथा ॥
पिशाच मोचनं चैव सुभद्राहृद मेवच ॥ ५२ ॥ कुण्डंच विमलं त

स्य तीर्थं स्वर्गद्वारस्य च ॥ श्रेष्ठस्थान ह्रदं चैव समुद्रं कूप मेव च ॥ ५३ ॥ जैगीषव्यवनं चैव हरिकेशवनं तथा ॥ अजामुखसरस्चैव घण्टाकर्णह्रदं तथा ॥ ५४ ॥ पुण्डरीकह्रदश्चैव वापिका कर्कोटकस्य च ॥ स्थानस्तम्भ कुम्भ ञ्च विनायकह्रद स्तथा ॥ ५५ ॥ कूपंसिद्धोद्भव स्चैव पुण्यंब्रह्मसर स्तथा ॥ भद्रावासं तथातीर्थं नागतीर्थं ससोमकम् ॥ ५६ ॥ भक्तह्रदं चीरसरः प्रेताधारंकुमारकं ॥ ब्रह्मावर्त्तं कुशावर्त्तं दधिकर्णो दयाजकं ॥ ५७ ॥ शुक्रतीर्थं महातीर्थं तीर्थश्रेष्ठं महानदी ॥ दिव्यंब्रह्मसरः पुण्यं गयाशीर्षाक्षयवटम् ॥ ५८ ॥ दक्षिणं श्चोत्तरं चैव गोमयं हयशाल्विकम् ॥ कपिलाह्रदं वृषध्वजं सावित्रीह्रद मेवच ॥ ५९ ॥ अघनाशनं गौतवनं योनिद्वार ञ्च धेनुकं ॥ धन्यकं कोटिकाख्य ञ्च मातङ्गं ह्रद मेवच ॥ ६० ॥ पितृकूपं रुद्रकूपं मतितीर्थं सुमालिनं ॥ ब्रह्मस्थानं पञ्चकुण्डो मणिकर्णह्रदं तथा ॥ ६१ ॥ शुक्लस्याश्रम स्चैव शुक्लह्रद मेवच ॥ तीर्थंजनककूपाख्यं पुण्यंविनशनं तथा ॥ ६२ ॥ श्रोकाख्यं भारतं चैव तीर्थं ज्येष्ठालिकं तथा ॥ विश्वेश्वरं पुण्यशतं कन्यासंवेध मेवच ॥ ६३ ॥ निधिरामभव ञ्चैव वसिष्ठाश्रम मेवच ॥ देवकूट ञ्च कूपञ्च कौशिकाश्रम मेवच ॥ ६४ ॥ कुशकर्णह्रदं चैव कौशिकी द्रुममेव च ॥ धर्म्मतीर्थं काञ्चनं च तीर्थं मौद्दालकं तथा ॥ ६५ ॥ दण्डात्मा मालिनी तीर्थं तीर्थं चैव नर्मखण्डका ॥ सन्ध्यातीर्थं कारतीर्थं कपिला लोहितार्णवम् ॥ ६६ ॥ श्रोणोद्भ

बंवन्गशुलमां रामभक्तीक तीर्थकं ॥ पुष्पावर्त्तंहृदं श्रीम त्तीर्थं वद
रिकाश्रमम् ॥ ६७ ॥ रामतीर्थं वितस्ता च मेरुजातीर्थ मेवच ॥
रोहिण्याः कूपवरद मिन्द्रद्युम्न सरस्वतं ॥ ६८ ॥ सावसर्गं समा
पैन्द्रं श्रीतीर्थं श्रीनदी तथा ॥ इन्दुतीर्थं वार्षिकं च कौवेर हृद
मेवच ॥ ६९ ॥ कन्यातीर्थं च गोकर्णं गोपतिस्थान मेवच ॥ सर्व
त्तं पापनिष्ठासं सप्तगोदावरी हृदम् ॥ ७० ॥ बदरीहृदमन्यच्च
ब्रह्मस्थान विवर्द्धनं ॥ जातीहृद न्देवहृदं कुशप्रथन मेवच ॥ ७१ ॥
सर्व्वदेवव्रत ञ्चैव कन्याश्रमहृदं तथा ॥ महाराजहृदं पुण्यं ब्रह्म
तीर्थं च कुन्दकम् ॥ ७२ ॥ अङ्गार तीर्थञ्च तथा बड्डारण्यक मे
वच ॥ मेधाविनं देव हृदं तीर्थं ञ्चामर वर्त्तनम् ॥ ७३ ॥ म
न्दाकिनी हृदं पुण्यं चम न्दाहेश्वरं तथा ॥ गंगा तीर्थं त्रिपु
रुषं भीम ताण्डव वासुकम् ॥ ७४ ॥ पृथू कूटं श्वाक्ष कूटं
शोषं रोहितकं पुनः ॥ कपिला हृदं समाख्य ञ्च वासिष्ठं कपि
लाहृदम् ॥ ७५ ॥ तथान्यं बालखिल्या नां सप्तर्षी णां तथा
परम् ॥ तथान्य ञ्च महर्षीणा मक्षखण्डित हृदं तथा ॥ ७६ ॥
तीर्थेष्वेतेषु विधिव त्सम्यक् श्रद्धा समन्वितः ॥ स्नानं करोति
योमर्त्यः सोपवासो जितेन्द्रियः ॥ ७७ ॥ देवा नृषीन्मनुष्यां स्च
पितॄन् सन्तर्प्य च क्रमात् ॥ अभ्यर्च्य देवता स्तत्र स्थित्वा च
रजनी द्वयम् ॥ ७८ ॥ पृथक् पृथक् फलन्तेषु प्रतिदिष्ट ञ्च
भोद्विजाः ॥ प्राप्नोति हयमेधस्य नरो नास्त्यत्र संशयम् ॥ ७९ ॥

यस्त्विमं शृणुयान्नित्यं तीर्थमाहात्म्य मुत्तमम् ॥ पठेच्च श्रद्धया वा
पि सर्व्वपापैः प्रमुच्यते ॥ ८० ॥

इत्यादि ब्राह्मे पुराणे तीर्थमाहात्म्यवर्णनं नाम
त्रयोविंशोऽध्यायः २३ ॥



मुनय ऊचुः ॥ पृथिव्यामुत्तमां भूमिं धर्म्मकामार्थ मोक्षदां॥
तीर्थानां मुत्तमंब्रूहि तीर्थनो वदताम्वर ॥ १ ॥ लोमहर्षण उवाच॥
इमंप्रश्नं ममगुरुं पप्रच्छुर्वैपुरातनं ॥ तमहं संप्रवक्ष्यामि यत्पृच्छथ
द्विजोत्तमाः ॥ २ ॥ स्वाश्रमे सुमहापुण्ये नानापुष्पो पशोभिते ॥
नानाद्रुम लताकीर्णे नानामृगगणै र्युते ॥ ३ ॥ कुरुक्षेत्रे समासीनं
व्यासं मतिमताम्वरम् ॥ महाभारत कर्त्तारं नानाशास्त्र विशार
दम् ॥ ४ ॥ पराशरसुतं शान्तं पद्मपत्रायतेक्षणं ॥ दृष्टु मभ्यायपुः
प्रीत्या मुनयः शंसितव्रताः ॥ ५ ॥ काश्यपो जमदग्निश्च भरद्वा
जोथगौतमः ॥ वशिष्टो जैमिनिर्धौम्यो मार्कण्डेयश्चवाल्मिकिः॥६॥
विश्वामित्रः शतानन्दो वात्स्यो गर्गोथ आसुरिः ॥ सुमन्तु र्भार्गवो
रामः कण्वो मेधातिथि र्गुरुः ॥ ७ ॥ माण्डव्य श्च्यवनो धूम्रो असि
तो देवल स्तथा ॥ मौद्गल्य स्तृणबाहु श्च पिप्पलादः कृतव्रतः॥८॥
सम्वर्त्तः कौशिको रैभ्यो मैत्रेयो हारित स्तथा ॥ शाण्डिल्य श्च तथा
गस्त्यो दुर्वासा लोमश स्तथा ॥ ९ ॥ नारदः पर्वत श्चैव वैशम्पायन
गालवौ ॥ भास्करिः पूरणःसूतः पुलस्त्यः कपिल स्तथा ॥ १० ॥

उलूकः प्रश्रयोवायु र्देवस्थान श्च तुम्बुरः ॥ सनत्कुमारः कृष्णश्च पैलः
कृष्णानुभौतिकः ॥ ११ ॥ एतैर्मुनिवरै श्चान्यैर्वृतः सत्यवतीसुतः ॥
रराज समुनिर्श्रीमा न्नक्षत्रैरिव चन्द्रमाः ॥ १२ ॥ कथान्तेतु मुनि
श्रेष्टाः कृष्णं सत्यवतीसुतं ॥ पप्रच्छुः संशयंसर्वं तपोवन निवासि
नः ॥ १३ ॥ मुनय ऊचुः ॥ पृच्छाम त्वा म्महाभाग ब्रूहिनो द्विज
सत्तम ॥ श्रेयःकिमत्र संसारे भैरवे लोमहर्षणे ॥ १४ ॥ उपदेश प्र
धानेन लोकानुद्धर्त्तु मर्हसि ॥ दुर्लभं परमं चेत्रं वक्तुमर्हसि मोक्ष
दम् ॥ १५ ॥ पृथिव्यां कर्म्मभूमि श्च श्रोतुमिच्छामहे वयं ॥ कृत्वा
किलनरः सम्यक् कर्मभूमौ यथोदितम् ॥ १६ ॥ प्राप्नोति परमां सि
द्धिं नरक श्च विकर्मलः ॥ मोक्षक्षेत्रे तथामोक्षं प्राप्नोति परमं सु
धीः ॥१७ ॥ तस्माद्ब्रूहिमहाप्राज्ञ यत्पृष्टो सिद्धिजोत्तमैः ॥ श्रुत्वा
तुवचनं तेषां मुनीनां भावितात्मनां ॥ व्यासःप्रोवाच मतिमा न्भूत
भव्यभविष्यवित् ॥ १८ ॥ व्यासउवाच ॥ शृणु ध्वं मुनयःसर्वं वक्ष्यामि
यद्पृच्छथ ॥ यःसम्वादो ऽभवत्पूर्वं ऋषीणां ब्रह्मणासह ॥ १९ ॥
मेरुपृष्टे सुविस्तीर्णे नानारत्न विभूषिते ॥ नानाद्रुम लताकीर्णे ना
नापुष्पोपशोभिते ॥ २० ॥ तत्रासीनं जगन्नाथं जगद्योनिं चतुर्मु
खम् ॥ जगत्पतिं जगद्वंद्यं जगदाधार मीश्वरम् ॥ २१ ॥ केचि
त्स्तुवन्तितं देवं केचिद्गायन्ति चाग्रतः ॥ केचि द्वाद्यानि वादन्ते के
चिन्नृत्यन्ति चापरे ॥ २२ ॥ एवंप्रमुदितेलोके सर्वभूत समागमे ॥
नानाकुसुम गन्धाढ्ये दक्षिणानिल सेविते ॥ २३ ॥ भृग्वाद्यामुनयो

देवाः अधिपत्य पितामहं ॥ इममर्थं ऋषिवराः पप्रच्छुः पितरं द्विजाः ॥ २४ ॥ भगवञ्श्रोतुमिच्छामः कर्मभूमिं महीतले ॥ वक्तुमर्हसि देवेश मोक्षश्चेत्र च दुर्लभम् ॥ २५ ॥ व्यास उवाच ॥ तेषां वचन माकर्ण्य प्राहब्रह्मा सुरेश्वरः ॥ पप्रच्छुस्ते यथाप्रश्नं तत्सर्वं मुनिसत्तमाः ॥ २६ ॥

इत्यादि ब्राह्मे पुराणे देवऋषिसम्वादे प्रश्नाध्यायो नाम चतुर्विंशः २४ ॥

—:०:—

ब्रह्मोवाच ॥ शृणुध्वं मुनयःसर्वे यद्वक्ष्यामि सांप्रतं ॥ पुरा णवेदसंबद्धं भुक्तिमुक्तिप्रदं शिवं ॥ १ ॥ पृथिव्यां भारतंवर्षं कर्मभूमिरुदाहृतं ॥ कर्म्मणांफल भूमिस्त्वे स्वर्गञ्च नरकं तथा ॥ २ ॥ तस्मिन्वर्षे नरःपापं कृत्वाकर्म मुविद्विजाः ॥ अवश्यं फलमाप्नोति शुभस्याथा शुभस्य च ॥ ३ ॥ ब्राह्मणाद्याः स्वयंकर्म कृत्वासम्यक् सुसंयताः ॥ प्राप्नुवन्ति नराःसिद्धिं तस्मिन्वर्षे नसंशयः ॥ ४ ॥ धर्म्मञ्चार्थञ्च कामञ्च मोक्षञ्च द्विजसत्तमाः ॥ प्राप्नोति पुरुषःसर्वं तस्मिन्वर्षेतु संयतः ॥ ५ ॥ इन्द्राद्या च सुराःसर्वे तस्मिन्वर्षे द्विजोत्तमाः ॥ कृत्वा सुशोभनंकर्म्म देवत्वं प्रतिपेदिरे ॥ ६ ॥ अन्येपि लेभिरे मोक्षं संयताः संयतेन्द्रियाः ॥ तस्मिन्वर्षे बुधाःशान्ताः वीतरागविमत्सराः ॥ ७ ॥ येवा स्वर्गेपि तिष्ठन्ति विमानेन गतज्वराः ॥ तेकृत्वा सुशुभं कर्म्म तस्मिन्वर्षे दिवङ्गताः ॥ ८ ॥ निवासं भारतेवर्षे आकां

यन्ति सदासुराः ॥ स्वर्गापवर्गफलदे तत्रस्थास्मः कदावयम् ॥ ९ ॥
मुनय ऊचुः ॥ यदेतं द्भवता प्रोक्तं कर्म्म नान्यत्र पुण्यदं ॥ पापदं च
सुरश्रेष्ट वर्षं यित्वाद्भु भारतं ॥ १० ॥ ततः स्वर्गश्च मोक्षश्च मध्यस्था
न्तश्च गच्छते ॥ नवान्यत्र च मर्त्यानां भूमौकर्म्म विधीयते ॥ ११ ॥
तस्मा द्विस्तरतो ब्रह्मन्नस्माकं भारतंवद ॥ यदिलेहि दयास्मासु य
थावस्थिति रेवच ॥ १२ ॥ तस्मादर्षमिदंनाथ येऽस्मिन्वर्षपर्वताः ॥
भेदाश्च तस्यवर्षस्य ब्रूहिसर्व्वं मशेषतः ॥ १३ ॥ ब्रह्मोवाच ॥ शृणुध्वं
भारतंवर्षं नवभेदेन भोद्विजाः ॥ समुद्रान्तरिता ज्ञेया स्तेत्वगम्याः
परस्परम् ॥ १४ ॥ इन्द्रद्वीपं कसेरुमां स्ताम्रवर्णो गभस्तिमान् ॥
नागद्वीप स्तथासौम्यो गन्धर्वो वारुण स्तथा ॥ १५ ॥ अयन्तु नवम
स्तेषां द्वीपः सागरसंवृतः ॥ योजनानां सहस्रं द्वीपोयं दक्षि
णोत्तरात् ॥ १६ ॥ पूर्वेकिराता यस्यास्ते पश्चिमे यवना स्तथा ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्त स्थिताद्विजाः ॥ १७ ॥ इज्या
युद्ध वणिज्याद्यैः कर्मभिः कृतपावनैः ॥ तेषां संव्यवहार श्च एभिः
कर्मभिरिष्यते ॥ १८ ॥ स्वर्गापवर्ग हेतुश्च पुण्यंपापं च वैतथा ॥ म
हेन्द्रो मलयःसह्यः शुक्तिमा नृक्षपर्व्वतः ॥ १९ ॥ विन्ध्यश्च पारि
यात्रश्च सप्तैवात्र कुलाचलाः ॥ तेषां सहस्रशश्चान्ये भूधरा येसमी
पगाः ॥ २० ॥ विस्तारोच्छ्राविणो रम्या विपुला श्चित्रसानवः ॥ को
लाहलः सवैभ्राजो मन्दरो मन्दराचलः ॥ २१ ॥ वाताध्वगो दैवत
श्च मैनाकः सुरस स्तथा ॥ तुङ्गप्रस्थो नागगिरि र्गोधनः पाण्डुरा

चलः ॥ २२ ॥ पुष्पगिरि र्दुर्ज्जयन्तो रैवतोर्वुद एवच ॥ ऋष्यमूकः सगोमन्तः कूटशैलः कृतःस्मरः ॥ २३ ॥ श्रीपर्व्वत श्च शतश्च स्तथा न्येचैवपर्व्वताः ॥ नैतेमिश्रा जनपदा म्लेच्छाद्याश्चैव भागशः ॥ २४ ॥ तैःपीयन्ते सरिच्छ्रेष्टा स्तावुध्यध्वं द्विजोत्तमाः ॥ गंगा सरस्वती सिन्धु श्चन्द्रभागा स्तथापराः ॥ २५ ॥ यमुना शतद्रू विपाशा वित स्तैरावती कुहूः ॥ गोमती धूतपापा च बाहुदा च दृष द्वती ॥ २६ ॥ विपाशा देविका चक्षि श्रीशरा गण्डकी तथा ॥ कौशिकी चापगा चैव हिमवत्पाद निःसृताः ॥ २७ ॥ देवस्मृति र्देववती वातघ्नी सिन्धु रेवच ॥ वेण्याच चन्दना चैव शर्मदा राम कीतथा ॥ २८ ॥ चर्म्मण्वती त्रपोवेदि विदिशा वेत्रवत्यपि ॥ शि प्राद्रवन्ती चतथा पारियात्राश्रयाः स्मृताः ॥ २९ ॥ शोणा महान दी चैव नर्म्मदा सुरथाद्रिया ॥ मन्दाकिनी दशार्णा च चित्रकूटा तथापरा ॥ ३० ॥ चित्रोत्पला वेत्रवती करमोदा पिशाचिका ॥ तथान्यापि लघुश्रोणी विपाशा शैवलानदी ॥ ३१ ॥ सुमेरजाशुक्ति मती नन्दिनी त्रिदिवाकुरुः ॥ ऋक्षपादाश्रिता चैव तथान्या वेग वाहिनी ॥ ३२ ॥ शिप्रा पयोष्णी निर्विन्ध्या तापी शस्त्र त्यताकि नी ॥ वेण्या वैतरणी चैव शिनीवाली कुमुद्वती ॥ ३३ ॥ वापी चैव महागौरी दुर्गावातशिवा तथा ॥ विंध्यपाद प्रसूता स्ता नद्यः पुण्यजलैः शुभाः ॥ ३४ ॥ गोदावरी भीमरथी कृष्णावेणा तथा पगा ॥ तुङ्ग भद्रा सुप्रयोगा तथान्या पाप नाशना ॥ ३५ ॥

सह्यपादविनिष्क्रान्ता इत्येताःसरिताम्बराः ॥ कृतमाला ताम्रपर्णी
पुष्पवत्युपलावती ॥ ३६ ॥ मलयाद्रि समुद्भूताः पुण्याः शीतजला
स्त्विमाः ॥ पितृसोमर्षिकुल्या च वर्तुला त्रिदिवा च या ॥ ३७ ॥
लाङ्गलिनी वंशकरा महेन्द्रप्रभवाः स्मृताः ॥ सर्व्वाःपुण्याः सरस्व
त्यः सर्व्वागंगाः समुद्रगा ॥ ३८ ॥ विश्वस्य मातरः सर्व्वाः सर्व्व
पापहराः स्मृताः ॥ अन्याः सहस्रशः सन्ति क्षुद्रनद्यो द्विजोत्त
माः ॥ ३९ ॥ प्रावृट्काल वहाःसन्ति सदाकाल वहाश्चयाः ॥ म
त्स्याः कुमुदमाल्या च क्रतुलाः काशिकोशलाः ॥ ४० ॥ अन्धकाश्च
कलिङ्गा च मशकाश्च वृकैःसह ॥ मध्यदेशा जनपदाः प्रायशो
मीप्रकीर्त्तिताः ॥ ४१ ॥ सह्यस्य चोत्तरे यस्तु यत्रगोदावरीनदी ॥
पृथिव्यामपिकृत्स्नायां सप्रदेशो मनोरमः ॥ ४२ ॥ गोवर्द्धनं पुरंर
म्यं भार्गवस्य महात्मनः ॥ वहिस्ता श्चानधान्या च कुनीनां कालतो
यदाः ॥ ४३ ॥ अपरान्ता च शूद्राश्च पादपा श्चर्मखण्डिकाः ॥
गान्धारा यवनाश्चैव सिन्धु सौवीरमद्रकाः ॥ ४४ ॥ शतद्रुकाः क
लिङ्गाश्च पारदा हारभूषिकाः ॥ माठराश्चैव कनकाः कैकपादास्तु
मानिकाः ॥ ४५ ॥ क्षत्रियोपनिवेशा श्च वैश्यशूद्र कुलानि च ॥
काम्बोजा श्चैव विप्रेन्द्रा वर्व्वरा श्च सलौकिकाः ॥ ४६ ॥ वीराश्चैव
तुषारा श्च पह्नवाधायता नराः ॥ आत्रेया श्च भरद्वाजाः पुस्कला श्च
दशेरकाः ॥ ४७ ॥ लम्पकाः शूनदाया श्च कुलिका जाङ्गलैः सह ॥
औषधा श्चिलमद्राश्च किराता स्तास्च जातयः ॥ ४८ ॥ तोमरा हंस्य

मार्गाश्च कश्मीराः कदवास्तथा ॥ शूलिका कुहका स्चैव मागधाश्च तथैव च ॥ ४९ ॥ एतेदेशा ह्युदीच्यास्तु प्राच्या न्देशा न्निबोधत ॥ अन्धका मद्रकारा श्च कश्मीराः कत्था स्तथा ॥ ५० ॥ शूलिकाःकुहुका स्चैव सामग्नि रवद्विर्गिरा ॥ तथाप्रचरगा वङ्गा मलदा मालवार्ज्जिताः ॥५१ ॥ ब्रह्मतुङ्गाः प्रातिविन्ध्याः पातापी लिङ्गमर्विकाः ॥ प्राग्ज्योतिषाश्च मद्राश्च विदेहास्ताम्रलिप्तकाः ॥ ५२ ॥ मल्ला मगधकानन्दा प्राच्याजनपदा स्तथा ॥ अथापरे जनपदा दक्षिणा पथवासिनः ॥ ५३ ॥ पूर्णाश्च केवला स्चैव गोलाङ्गूला स्तथैवच ॥ तुष्टिका सुषिका स्चैव कुमारा रामवासकाः ॥ ५४ ॥ महाराष्ट्रमहिषकाः कालिङ्गा स्चैव सर्वशः ॥ अभीराःसहवैश्यिक्याः अटव्या श्च वराश्च ये ॥ ५५ ॥ पुलिन्द्रास्तुविन्ध्यामौलि वैदर्भादण्डकैः सह ॥ पौलिका मौलिका स्चैव अस्माको भोजवर्द्धनाः ॥ ५६ ॥ कौलिका ननसाश्चैव दुम्भावानलकालकाः ॥ दक्षिणात्या स्त्वमीदेशा अपरान्ता न्निबोधत ॥ ५७ ॥ सूर्य्यारका त्कलिवना उल्ला स्तालकटैः सह ॥ इत्येते त्वपरांता श्च शृणु ध्वं विन्ध्यवासिनः ॥ ५८ ॥ मलजाश्च सकेशाश्च मेलका स्चोत्कलैस्सह ॥ उत्तमार्णा दशार्णाश्च भोजाः किष्किन्धकैः सह ॥ ५९ ॥ अपलाः कोशलास्चैव त्रैपुरा वैदिशास्तथा ॥ तुम्बुरास्तु चराश्चैव यवनाः यवनैःसह ॥ ६० ॥ अभया तुण्डिकेरा श्च चर्मराष्ट्रोत्र धर्त्तयः ॥ एतेजनपदाः सर्वे सर्वे विन्ध्यनिवासिनः ॥ ६१ ॥ अतोदेशान् प्रवक्ष्यामि पर्वताश्रमिण श्चये ॥ निहारास्तु समार्गाश्च

कुरावासगणाः खसाः ॥ ६२ ॥ कुण्डप्रावरणाश्चैव उह्लाटव्याः सकुं
च्चकाः ॥ चिन्नमार्गा मालवाश्च किराता स्तोमरैः सह ॥ ६३ ॥
कृतं त्रेतादिकञ्चात्र चतुर्युग कृतोविधिः ॥ एवन्तु भारतंवर्षं नवसं
स्थान संस्थिति ॥ ६४ ॥ दक्षिणेच पुरोचास्य पूर्वेचैव महोदधिः ॥
हिमवा नुत्तरेणास्य कार्मुकस्य यथागुणः ॥ ६५ ॥ तदेतद्भारतं वर्षं
सर्व्ववीजं द्विजोत्तमाः ॥ ब्रह्मत्व ममरेशत्वं देवत्वं मनुजा स्त
था ॥ ६६ ॥ मृगयक्षाप्सरो योनिं तद्वत्सर्वं सरीसृपाः ॥ स्थावराणा
ञ्च सर्वेषा मितोविप्राः शुभाशुभैः ॥ ६७ ॥ प्रयाति कर्म्मभू विप्रा
नान्यालोकेषु विद्यते ॥ देवाना मपि भोविप्राः सादिते समनोर
थाः ॥ ६८ ॥ भारते भवमाप्स्यामो देवत्वा त्प्रच्युताः क्षितौ ॥ मा
नुष्यं कुरुतेतत्तु यन्नप्राप्यं सुरासुरैः ॥ ६९ ॥ तत्कर्म्मनिरते स्तैस्तु
तत्कर्म क्षपणो न्मुखैः ॥ नभारतं समंवर्षं पृथिव्या मस्ति भोद्वि
जाः ॥ ७० ॥ यत्र विप्रादयोवर्णाः प्राप्नुवन्त्यभि वांछितं ॥ धन्या
स्तेभारतेवर्षे जायन्ते येनरोत्तमाः ॥ ७१ ॥ धर्म्मार्थकाम मोक्षाणां
प्राप्नुवन्ति महाफलम् ॥ प्राप्यतेयत्रतपसा फलंपरमदुर्लभं ॥ ७२॥
सर्व्वदा नफलञ्चैव सर्व्वयज्ञफलं तथा ॥ तीर्थयात्राफलं सम्यक् गु
रुसेवाफलं तथा ॥ ७३ ॥ देवताराधनफलं गार्हस्थ्येचैव यत्फलं ॥
इष्टापूर्त्तफलं सर्वं तथाप्यशुभ कर्मणां ॥ ७४ ॥ प्राप्यतेभारतेवर्षे न
चान्य त्तद्द्विजोत्तमाः ॥ कःशक्नोति गुणान्वक्तुं भारतस्या खिलान्
द्विजाः ॥ ७५ ॥ यथादेवा सदाहृष्टा जन्मवांछन्ति शोभनं ॥ एवंस

व्यङ्मया प्रोक्तं भारतं वर्षमुत्तमम् ॥ ७६ ॥ सर्व्वपापहरं पुण्यं धनबुद्धि विवर्द्धनं ॥ यइदं शृणुयान्नित्यं जपेद्वा नियतेन्द्रियः ॥ सर्व्वपापैर्विनिर्मुक्तो विष्णुलोकं सगच्छति ॥ ७७ ॥

इत्यादिब्रह्मपुराणे स्वयंभुऋषिसम्वादे भारतवर्षगुणानुकीर्त्तनन्नाम पंचविन्शोऽध्यायः २५ ॥

—:०:—

ब्रह्मोवाच ॥ तत्रास्ते भारतेवर्षे दक्षिणोदधि संस्थिते ॥ औद्रदेश इतिख्यातः स्वर्गमोक्षप्रदायकः ॥ १ ॥ समुद्रादुत्तरं यावद्गच्छं विरजमण्डलं ॥ देशोसौ गुणशीलानां गुणैःसर्वै रलंकृतः ॥ २ ॥ तत्रदेशे प्रसूताये ब्राह्मणाः संयतेन्द्रियाः ॥ तपः स्वाध्याय निरता वंद्यापूज्या श्च तेसदा ॥ ३ ॥ श्रद्धादाने विवाहे च यज्ञे वाश्राद्ध कर्म्मखि ॥ प्रशस्ताः सर्व्वकार्येषु तत्रदेशोद्भवा नराः ॥ ४ ॥ षट्कर्म्म निरता स्तत्र ब्राह्मणा वेदपारगाः ॥ इतिहास विद श्चैव पुराणार्थ विशारदाः ॥ ५ ॥ सर्व्वशास्त्रार्थ कुशला यज्वानो वीतमत्सराः ॥ अग्निहोत्ररताः केचि त्केचित् स्मार्ताग्नि तत्पराः ॥ ६ ॥ पुत्रदारधनैर्युक्ता होतारः सत्यवादिनः ॥ निवसन्त्युत्कले पुण्ये यज्ञोत्सव विभूषिते ॥ ७ ॥ इतरेपि त्रयोवर्णाः क्षत्रियाद्याः सुसंयताः ॥ स्वधर्मनिरताः शान्ता स्तत्रतिष्ठन्ति धार्मिकाः ॥ ८ ॥ कोणादित्य इतिख्यात स्तस्मिन्देवो दिवाकरः ॥ यंदृष्ट्वा भास्करन्देवं सर्व्व पापैः प्रमुच्यते ॥ ९ ॥ मुनय ऊचुः ॥ श्रोतुमिच्छाम तद्ब्रूहि क्षेत्रं सूर्य्यस्य सांप्रतं ॥

यस्मिन्देशे सुरश्रेष्ठ यत्रास्ते सदिवाकरः ॥ १० ॥ ब्रह्मोवाच ॥ लव
णाम्बोदधेस्तीरे पवित्रे सुमनोहरे ॥ सर्वत्र वालुकाकीर्णे देशे सर्व्व
गुणान्विते ॥ ११ ॥ चम्पकाशोक वकुलैः करवीरैः सितेतरैः ॥ पुन्ना
गैःकर्णिकारैश्च वकुलै र्नागकेसरैः ॥ १२ ॥ जपातगरवाणैश्च
अतिमुक्तैः सकुब्जकैः ॥ मालती कुन्दपुष्पैश्च तथान्यै र्मल्लिकादि
भिः ॥ १३ ॥ केतकी वाणखण्डैश्च वकुलै र्नागकेशरैः ॥ कदम्बैर्लकु
चैःशालैः पनसै र्देवदारुभिः ॥ १४ ॥ शरलै र्मुचुकुन्दैश्च चन्दनैश्च
सितेतरैः ॥ अश्वत्थैः सप्तपर्णैश्च आम्रै राम्रातकै स्तथा ॥ १५ ॥
तालैः पूगफलै श्चैव नारिकेलैः कपित्थकैः ॥ अन्यैश्च विविधै र्वृक्षैः
सर्वतः समलंकृते ॥ १६ ॥ क्षेत्रं तत्र रवेःपुण्य मास्तेजगति विश्रुतं ॥
समन्ता द्योजनं साग्रं भुक्तिमुक्ति प्रदायकम् ॥ १७ ॥ आस्ते तत्र
स्वयंदेवः सहस्रांशु र्दिवाकरः ॥ कोणादित्य इतिख्यातो भुक्तिमुक्ति
प्रदायकः ॥ १८ ॥ माघेमासि सितपक्षे सप्तम्यां संयतेन्द्रियः ॥ कृतो
पवासो यस्तत्र स्नात्वातु मकरालये ॥ १९ ॥ कृतशौचो विशुद्धात्मा
स्मरन्देवं दिवाकरं ॥ सागरे विधिवत्स्नात्वा सूर्योपान्ते समाहि
तः ॥ २० ॥ देवानृषी न्मनुष्यांश्च पितॄ न्सन्तर्पये द्बुधः ॥ उत्तार्य्य
वाससीधौते निर्मले परिधायवै ॥ २१ ॥ आचाम्य प्रयतो भूत्वा तौ
रेतस्य महोदधेः ॥ उपविश्योदयेकाले प्राङ्मुखः सवितुस्तदा ॥ २२
विलिख्यपद्मं मेधावी रक्तचन्दन वारिणा ॥ अष्टपत्रं केशराढ्यं व
र्तुलं चोर्द्ध्वकर्णिकं ॥ २३ ॥ तिलतन्दुलतोयञ्च रक्तचन्दन संयुतं ॥

रक्तपुष्पञ्च दर्भञ्च प्रक्षिप्य ताम्रभाजने ॥ २४ ॥ ताम्राभावेऽर्कप
त्रस्य पुटेकृत्वा तिलादिकं ॥ विधायत न्मुनिश्रेष्टाः पात्रं पात्रेण वि
न्यसेत् ॥ २५ ॥ अङ्गन्यास करन्यासं कृत्वांगै हृंदयादिभिः ॥ आ
त्मानं भास्करं सम्यक् भावश्रद्धा समन्वितः ॥ २६ ॥ मध्ये चाग्निदले
धीमान् नैऋते प्रश्वसनेदले ॥ कामारिगोचरे चैव सुमध्ये चैव पूज
येत् ॥ २७ ॥ प्रभूतं विमलन्द्वेव माराध्य परमं सुखम् ॥ संपूज्य
पद्मञ्चाताद्य गगना त्तत्रभास्करम् ॥ २८ ॥ कर्णिकोपरि संस्थाप्य
ततोमुद्रां प्रदर्शयेत् ॥ कृत्वा स्नानादिकं सर्वं ध्यात्वातं सुसमाहि
तः ॥ २९ ॥ सित पद्मोपरि रविं तेजोबिम्बे व्यवस्थितं ॥ पिङ्गाचं
द्विभुजंरक्तं पद्महस्ता कृताम्बरम् ॥ ३० ॥ सर्वलक्षण सम्पन्नं सर्वा
भरण भूषितं ॥ सुरूपं वरदं शान्तं प्रभामण्डल भूषितम् ॥ ३१ ॥
उद्यन्तं भास्करं दृष्ट्वा सांद्रसिन्दूर सन्निभं ॥ तत स्तत्पात्र मादाय
जानुभ्यां धरणीं गतः ॥ ३२ ॥ कृत्वाशिरसि तत्पात्र मेकचित्त स्तु
वाग्यतः ॥ त्र्यक्षरेणतु मंत्रेण सूर्य्यायार्घ्यं निवेदयेत् ॥ ३३ ॥ अदी
चितस्तु तस्यैव नाम्नैवार्घ्यं प्रयच्छति ॥ श्रद्धया भावयुक्तेन भक्तिग्रा
ह्यो रविर्यतः ॥ ३४ ॥ अग्निनैऋत वायीश मध्ये पूर्वादि दिक्षु च ॥
गंशिरश्च शिखाकर्म नेत्रमस्त्रं च पूजयेत् ॥ ३५ ॥ दत्वार्घ्यं गन्ध
धूपञ्च दीपं नैवेद्य मेवच ॥ कृत्वा स्तुत्वा नमस्कृत्वा मुद्रांकृत्वा वि
सर्जयेत् ॥ ३६ ॥ येचार्घ्यं संप्रयच्छन्ति सूर्य्याय नियतेन्द्रियाः ॥
ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्राश्च संयताः ॥ ३७ ॥ भक्ति

भावेन सततं विशुद्धेनां तरात्मना॥ तेभुक्त्वा भिमतान् भोगान् प्रा
प्नुवन्ति परांगतिं॥ ३८॥ त्रैलोक्यदीपकं देवं भास्करं गगनेचरं॥
येसंस्मरन्ति मनुजा स्तेसर्वे सुखभाजनाः॥ ३९॥ यावन्न दीयते
चार्घ्यं भास्कराय यथोदितं॥ तावन्नपूजयेद्विष्णुं शंकरं वासुरे
श्वरं॥ ४०॥ तस्मा त्प्रयत्न मास्थाय दद्यादर्घ्यं दिनेदिने॥ आदि
त्याय शुचिर्भूत्वा पुष्पैर्गन्धै र्मनोरमैः॥ ४१॥ एवं ददाति यश्चार्घ्यं
सप्तम्यां सुसमाहितः॥ आदित्याय शुचिः स्नातः सलभे दीप्सितंफ
लम्॥ ४२॥ रोगी विमुच्यते रोगा द्वित्तार्थी लभतेधनं॥ विद्यां
प्राप्नोति विद्यार्थी सुतार्थी सुतवान् भवेत्॥ ४३॥ यंयंकाम मभि
ध्यायन् सूर्य्यायार्घ्यं प्रयच्छति॥ तस्यतस्य फलं सम्यक् प्राप्नोति पुरु
षःसुधीः॥ ४४॥ स्नात्वैवं सागरे दत्वा सूर्य्यायार्घ्यं प्रणम्य च॥
नरोवा यदिवानारी सर्व्वकामफलं लभेत्॥ ४५॥ सूर्य्यं गंगांभसि
स्नातः कुशैरासिच्य मूर्द्धनि॥ सर्व्वपाप विनिर्मुक्तो नरोयाति त्रि
विष्टपं॥ ४६॥ ततः सूर्य्यालयं गच्छेत् पुष्पमादाय वाग्यतः॥ प्रवि
श्य पूजयेद्भानुं गत्वातं त्रिःप्रदक्षिणं॥ ४७॥ तांत्रिकै र्वैदिकैर्मन्त्रै
र्बुधो भानोस्त्रियो तथा॥ पूजयेत्परया भक्त्या कोणार्कं मुनिसत्त
माः॥ ४८॥ गन्धैः पुष्पै स्तथा धूपै र्दीपै र्नैवेद्यकैरपि॥ दण्डवत्प्र
णिपातै श्च जयशब्दै स्तथापरैः॥ ४९॥ एवंसंपूज्य तंदेवं सहस्रां
शुं जगत्प्रभुं॥ दशाना मश्वमेधानां फलंप्राप्नोति मानवः॥ ५०॥
सर्व्वपाप विनिर्मुक्तो युवा दिव्यवपुर्द्धरः॥ सप्तावरा न्सप्तपरान्वंशा

नुद्धृत्य गोद्विजाः ॥ ५१ ॥ विमानेनार्कवर्णेन कामगेन सुवर्चसा ॥
उपगीयमानो गन्धर्वैः सूर्य्यलोकं सगच्छति ॥ ५२ ॥ भुक्त्वा तत्र व
रान् भोगान् यावदाभूत संप्लवम् ॥ पुण्यक्षया दिहायातः प्रवरे ब्रा
ह्मणेकुले ॥ ५३ ॥ चतुर्वेदी भवेद्विप्रः स्वधर्म्मनिरतः शुचिः ॥ योगं
दिवस्पतेः प्राप्य ततोमोक्ष मवाप्नुयात् ॥ ५४ ॥ चैत्रे मासि सितेप
क्षे यात्रां दमनभञ्जिकां ॥ यःकरोति नरस्तत्र पूर्वोक्तं सफलं लभे
त् ॥ ५५ ॥ अयनोत्थापने भानोः संक्रांत्यां विषुवायने ॥ वारेरवेस्ति
थौचैव सर्व्वकालेष्व वाद्विजाः ॥ ५६ ॥ येतत्र यात्रां कुर्वन्ति पुरुषाः
संयतेन्द्रियाः ॥ विमानेनार्कवर्णेन सूर्य्यलोकं ब्रजन्तिते ॥ ५७ ॥
आस्तेतत्र महादेव स्तीरे नदनदीपतेः ॥ कामेश्वर इतिख्यातः स
र्व्वकाम फलप्रदः ॥ ५८ ॥ येतं पश्यन्ति कामारिं स्नात्वासम्यक् म
होदधौ ॥ गन्धैः पुष्पै स्तथाधूपै र्दीपै र्नैवेद्यकै र्वरैः ॥ ५९ ॥ प्रणि
पातै स्तथास्तोत्रै र्गीतै र्वाद्यैर्मनोहरैः ॥ राजसूय फलंप्राप्य वाजि
मेधफलं तथा ॥ ६० ॥ प्राप्नुवन्ति महात्मनः संसिद्धिं परमांतथा ॥
कामगेन विमानेन किंकिणीजालमालिना ॥ ६१ ॥ उपगीयमाना
गन्धर्वैः शिवलोकं ब्रजन्तिते ॥ आहूतं संप्लवं यावत् भुक्त्वा भोगान्
मनोरमान् ॥ ६२ ॥ पुण्यक्षया दिहागत्य चतुर्वेदा भवन्तिते ॥ शां
करंयोग मासाद्य ततोमोक्षं ब्रजन्तिच ॥ ६३ ॥ यस्तत्र सवितुःक्षेत्रे
प्राणां स्त्यजति मानवः ॥ ससूर्य्यलोक मास्थाय देववन्मोदते दि
वि ॥ ६४ ॥ पुनर्मानुषतां प्राप्य राजाभवति धार्मिकः ॥ योगंरवेः

समासाद्य ततोमोक्ष मवाप्नुयात् ॥ ६५ ॥ एवंमया मुनिश्रेष्ठाः प्रो क्तंक्षेत्रं सुदुर्लभं ॥ कोणार्कस्योदधेस्तीरे भुक्तिमुक्तिफलप्रदं ॥ ६६ ॥

इत्यादि ब्रह्मपुराणेस्वयम्भूऋषिसम्वादे कोणादित्यमाहात्म्य वर्णनंनाम षड्विंशोऽध्यायः २६ ॥

—:०:—

मुनय ऊचुः ॥ श्रुतोस्माभिः सुरश्रेष्ठ भवता यदुदाहृतं ॥ भास्करस्य परंक्षेत्रं भुक्तिमुक्ति फलप्रदम् ॥ १ ॥ नतृप्ति मधिगच्छामः शृण्वन्तः सुखदां कथां ॥ भवद्वक्त्रोद्भवां पुण्या मादित्यस्या घनाशिनीं ॥ २ ॥ अतःपरं सुरश्रेष्ठ ब्रूहिनो वदताम्बर ॥ देवपूजा फलंयच्च यच्चदान फलं भवेत् ॥ ३ ॥ प्रणिपाते नमस्कारे तथाचैव प्रदक्षिणे ॥ धूप दीपप्रदाने च सम्मार्जनविधौ चयत् ॥ ४ ॥ उपवासे च यत्पुण्यं य त्पुण्यं नक्तभोजने ॥ अर्घ्यस्य कीदृशःप्रोक्तः कुत्रवासंप्रदीयते ॥ ५ ॥ कथञ्च क्रियतेभक्तिः कथंदेवः प्रसीदति ॥ एतत्सर्वं सुरश्रेष्ठ श्रोतु मिच्छामहे वयम् ॥ ६ ॥ ब्रह्मोवाच ॥ अर्घ्यपूजादिकं सर्वं भास्कर स्यद्विजोत्तमाः ॥ भक्तिंश्रद्धां समाधिञ्च कथ्यमानं निबोधत ॥ ७ ॥ मनसो भावनाभक्ति रिच्छाश्रद्धा च कीर्त्यते ॥ ध्यानं समाधि रि त्युक्तं शृणुध्वं सुसमाहिताः ॥ ८ ॥ तत्कथां श्रावयेयस्तु भक्तिमान् पूजये त्तुवा ॥ अग्निसुश्रूषकश्चैव सवैभक्तः सनातनः ॥ ९ ॥ तच्चि त्तस्तन्मना श्चैव देवपूजारतः सदा ॥ तत्कर्मकुरुते यस्तु सवैभक्तः सनातनः ॥ १० ॥ देवार्थं क्रियमाणानि यःकर्माण्य नुमन्यते ॥ कौ

र्त्तनाद्वापरो विप्राः सवै भक्तः परोनरः ॥ ११ ॥ नाभ्यसूयेत तद्भक्ता
न्ननिन्द्या चान्यदेवतां ॥ आदित्य व्रतचारी च सवै भक्तः परोन
रः ॥ १२ ॥ गच्छन्तिष्ठ न्स्वपन्जिघ्र न्नुन्मिष न्निमिषन्नपि ॥ यः
स्मरेद्भास्करं नित्यं सवै भक्ततरोनरः ॥ १३ ॥ एवं विधात्वियं भ
क्तिः सदाकार्य्या विजानता ॥ भक्त्या समाधिना चैव तत्वेन मन
सातथा ॥ १४ ॥ क्रियते नियमोयस्तु दानंविप्राय दीयते ॥ प्रति
गृह्णन्ति तं देवा मनुष्याः पितृभिर्युताः ॥ १५ ॥ भावशुद्धि कृतं यद्य
त्ततः सर्वं फलं लभेत् ॥ स्तुतिजप्यो पचारेण पूजयेद् योविवस्व
तः ॥ १६ ॥ उपवासेन भक्त्यावै सर्व्वपापैः प्रमुच्यते ॥ प्रणिधाय
शिरोभूम्यां नमस्कारं करोतियः ॥ १७ ॥ तत्क्षणा त्सर्व्वपापेभ्यो
मुच्यते नात्रसंशयः ॥ भक्तियुक्तोनरो योसौ रवेः कुर्य्यात्प्रदक्षि
णं ॥ १८ ॥ प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥ सूर्य्यंमनसि
यःकुर्य्यात् कृत्वाव्योम प्रदक्षिणं ॥ १९ ॥ प्रदक्षिणीकृता तेन सप्त
द्वीपाभवन्तिह ॥ एकाहारो नरोभूत्वा षष्ठ्यांयोर्चयतेरविं ॥ २० ॥
नियमव्रतचारी च रवेर्भक्ति समन्वितः ॥ सप्तम्या न्व महाभागाः
सोऽश्वमेधफलं लभेत् ॥ २१ ॥ अहोरात्रोपवासेन पूजयेद्यस्तु भा
स्करं ॥ अग्निप्रभेन यानेन सूर्य्यलोकं सगच्छति ॥ २२ ॥ सप्तम्या
मुतषष्ठ्यांवा सयाति परमांगतिम् ॥ कृष्णपक्षस्य सप्तम्यां सोपवासो
जितेन्द्रियः ॥ २३ ॥ सर्वरत्नोपहारेण पूजयेद्यस्तु भास्करं ॥ प
द्मप्रभेन यानेन सूर्य्य लोकं सगच्छति ॥ २४ ॥ शुक्लपक्षस्य सप्तम्या

मुपवासपरोनरः ॥ सर्वशुक्लोपहारेण पूजयेद्यस्तु भास्करं ॥ २५ ॥
सर्वपाप विनिर्मुक्तः सूर्यलोकं सगच्छति ॥ अर्कसम्पुट संयुक्तमुदक
मञ्जतं पिबेत् ॥ २६ ॥ क्रमवृद्ध्या चतुर्विंश देकैकं क्षपयेत्तु नः ॥
द्वाभ्यां सम्वत्सराभ्यान्तु समाप्तनियमोभवेत् ॥ २७ ॥ सर्वकामप्रदा
ह्येषा प्रशस्ता ह्यर्कसप्तमी ॥ शुक्लपक्षस्य सप्तम्यां यदा दित्यदिनं भ
वेत् ॥ २८ ॥ सप्तमी विजयानाम तत्रदत्तं महाफलम् ॥ स्नानंदा
नं तपोहोम उपवासं तथैवच ॥ २९ ॥ सर्वविजय सप्तम्यां महापा
तक नाशनं ॥ येचादित्य दिनेप्राप्ते श्राद्धं कुर्वन्ति मानवाः ॥ ३० ॥
यजन्ते च महाश्वेतं तेलभन्ते महाफलं ॥ येषांधर्म्याः क्रियाः सर्वाः
सदैवोद्दिश्य भास्करं ॥ ३१ ॥ नकुले जायतेतेषां दरिद्रोव्याधितो
पिवा ॥ श्वेतया रक्तया वापि पीतम्रत्तिकया पिवा ॥ ३२ ॥ उपले
पनकर्त्तातु चिन्तितं लभतेफलं ॥ चित्रभानुं विचित्रैस्तु कुसुमै श्च
सुगन्धिभिः ॥ ३३ ॥ पूजये त्सोपवासोयः सकामा नीप्सितान् लभे
त् ॥ घृतेन दीपंप्रज्वाल्य तिलतैलेन वापुनः ॥ ३४ ॥ दीर्घायुर्वपुषा
युक्त श्चक्षुषा नसहीयते ॥ दीपदानपरो नित्यं ज्ञानदीपेन दीप्य
ते ॥ ३५ ॥ स्पष्टबुद्धीन्द्रिय श्चापि सकदाचि त्प्रमुच्यते ॥ तिलाःप
वित्रं परमं तिलानां दानमुत्तमम् ॥ ३६ ॥ अग्निकार्ये च दीपेच म
हापातक नाशनं ॥ दीपंददाति योनित्यं देवतायतनेषु च ॥ ३७ ॥
चतुष्पथेषु रथ्यासु रूपवा न्सुभगोभवेत् ॥ हविर्भिः प्रथमःकल्पो द्वि
तीय स्त्वौषधीरसैः ॥ ३८ ॥ वसामेदोस्थि निर्यासै र्नतुदेयः कदाच

न॥ भवत्यूर्द्धगति र्दीपो नक्कदाचि दधोगतिः॥ ३९॥ दातादीप्य
ति चाप्येवं नतिर्यग्गति माप्नुयात्॥ ज्वलमानं तदादीपं नहरे न्ना
पिनाशयेत्॥ ४०॥ दीपहर्त्ता भवेदन्ध स्तमोगति रसुप्रभः॥ दी
पदाता स्वर्गलोके दीप्यमानो विराजते॥ ४१॥ यःसमालभते नि
त्यं चन्दनागुरु चम्पकैः॥ संयुज्यते नरःश्रेष्टो धनेन यशसा श्रि
या॥ ४२॥ रक्तचन्दन सम्मिश्रै रक्तपुष्पैः शुचिर्नरः॥ उदयेर्घ्यं स
दादत्वा सिद्धिं संवत्सरा ल्लभेत्॥ ४३॥ उदया त्परिवर्त्तस्य यावद
स्तमनं स्थितः॥ जपन्नभिमुखः किंचित् मंत्रंस्तोत्र वापुनः॥ ४४
आदित्यव्रत मेतत्तु महापातक नाशनं॥ अर्घ्यंसहितं चैव सर्वंसां
गं प्रदापयेत्॥ ४५॥ उदये श्रद्धयायुक्तः सर्व्व पापैः प्रमुच्यते॥
सुवर्णधेन्वनड्वाहं वसुधां वस्त्रसंयुतां॥ ४६॥ अर्घ्यंप्रदाता लभते स
प्तजन्मानुगंफलं॥ अग्नौ तोयेन्तरिक्षेच शुचौभूम्यांतथैवच॥ ४७॥
प्रतिमायां तथापिण्ड्यां देयमर्घ्यं प्रयत्नतः॥ नापसव्यं नसव्य ञ्च
दद्यादभिमुखः सदा॥ ४८॥ सघृतं गुग्गुल ञ्चापि रवे र्भक्तिसम
न्वितः॥ दद्यादभिमुखं सर्व्व मर्च्चनं भक्तिमान्नरः॥ ४९॥ तत्त्व
णात्सर्व्वपापेभ्यो मुच्यते नात्रसंशयः॥ श्रीवासं देवदारुं च सजक
ञ्च तथैवच॥ ५०॥ कर्पूरागुरु धूपानि दत्वावै स्वर्गगामिनः॥ अ
यनेतूत्तरे सूर्य्य मथवा दक्षिणायने॥ ५१॥ पूजयित्वा विशेषेण
सर्व्वपापैः प्रमुच्यते॥ विषुवेषूपरागेषु षडशीति मुखेषुच॥ ५२॥
पूजयित्वा विशेषेण सर्व्वपापैः प्रमुच्यते॥ एवंवेलासुसर्वासु अवेला

सुच मानवः ॥ ५३ ॥ भक्त्या पूजयते योर्कं सोर्कलोके महीयते ॥
कृशरैः पायसैः पूपैः फलमूल घृतोदनैः ॥ ५४ ॥ बलिंदत्वा च सू
र्य्याय सर्वान्कामा नवाप्नुयात् ॥ घृतेन तर्पणंकृत्वा सर्व्वश्रेष्ठो भवेन्न
रः ॥ ५५ ॥ क्षीरेण तर्पणंकृत्वा मनस्तापै र्नयुज्यते ॥ दध्नातु तर्प
णंकृत्वा कार्य्यसिद्धिं लभेन्नरः ॥ ५६ ॥ स्नानार्थं माहरे द्वस्तु
जलंभानोः समाहितः ॥ तीर्थाद्वा शुचिवाप्यावा सयाति परमांग
तिम् ॥ ५७ ॥ छत्रंध्वजं वितानव्वा पताकां चामराणि च ॥ श्रद्ध
याभानवे दत्वा गतिमिष्टा मवाप्नुयात् ॥ ५८ ॥ यद्यत् द्रव्यं नरोभ
क्त्या आदित्याय प्रयच्छति ॥ तत्तत्फल मवाप्नोति शतसाहस्रम्भा
स्करात् ॥ ५९ ॥ मानसं वाचिकम्वापि कर्मणायद्यद्दुष्कृतं ॥ सर्वंसू
र्य्यप्रसादेन तदशेषं व्यपोहति ॥ ६० ॥ एकाहेनापि यद्भानोः पूज
याप्राप्यते फलं ॥ यथोक्तदक्षिणै रिष्टै र्नतत्क्रतु शतैरपि ॥ ६१ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भूऋषिसम्वादे सूर्यपूजानियमभक्ति
माहात्म्यंनाम सप्तविंशोऽध्यायः २७ ॥



मुनयऊचुः ॥ अहोदेवस्य माहात्म्यं श्रुतमेवं जगत्पतेः ॥ भा
स्करस्य सुरश्रेष्ठ वदतस्ते सुदुर्लभम् ॥ १ ॥ भूयःप्रब्रूहि देवेश यत्प्र
च्छामो जगत्पते ॥ श्रोतुमिच्छाम हेब्रह्मन् परंकौतूहलं हिनः ॥ २
गृहस्थो ब्रह्मचारी च वानप्रस्थो थभिक्षुकः ॥ यइच्छे न्मोक्षमास्था
तुं देवतां कांयजेतसः ॥ ३ ॥ कुतोह्यस्य ध्रुवःस्वर्गः कुतो निश्रेयसंप

रं॥ स्वर्गतस्यैव किंकुर्य्या येननच्यवते पुनः ॥ ४ ॥ देवानां याचको देवः पितृणां याचकःपिता ॥ तस्मात्परतरं नास्ति तन्मेब्रूहि पिता मह ॥५॥ कुतःसृष्टमिदंसर्वं ब्रह्मन्स्थावरजङ्गमं ॥ प्रलयेच कमभ्येति तद्भवा न्वक्तुमर्हति ॥६॥ ब्रह्मोवाच॥ उद्यन्नएषकुरुते जगद्वि तिमिरं करैः ॥ नातः परतरोदेवः कश्चिदन्यो द्विजोत्तमाः॥ ७ ॥ अनादि निधनोह्येषः पुरुषः शाश्वतोऽव्ययः ॥ तापयन्नेष त्रींल्लोका न्भ्रमन् रश्मिभि रुल्बणः ॥ ॥ ८ ॥ सर्वस्य जगतो नाथः सर्व्वसाक्षी शुभा शुभे ॥ संक्षिप त्येषभूतानि तथा विसृजतेपुनः ॥९॥ एषभाति तप त्येष वर्षत्येष गभस्तिभिः ॥ एषधाता च भूतादि र्भूतात्मा भूतभाव नः ॥ १० ॥ नह्येष क्षयमायाति नह्येष क्षयमण्डलः ॥ पितृणांहि पिताह्येष देवतानांहि देवता ॥ ११ ॥ ध्रुवंस्थानं स्मृतंह्येष यस्मान्न च्यवतेपुनः ॥ सर्गकाले जगत्कृत्स्न आदित्यात् संप्रचयते ॥ १२॥ प्रलयेच तमभ्येति भास्करं दीप्ततेजसं ॥ योगिनश्चाच सांख्याश्च त्य क्त्वा गृहकलेवरं ॥ १३ ॥ वायुभूता विशंत्यस्मिन् तेजोराशौ दिवा करे ॥ अस्यरश्मि सहस्राणि शाखास्विव विहङ्गमाः ॥ १४ ॥ वसं त्याश्रित्य मुनयः संसिद्धा दैवतैःसह ॥ गृहस्था जनकाद्या च राजा नो योगधर्म्मिणः ॥ १५ ॥ वालखिल्यादय श्चैव ऋषयो ब्रह्मवादि नः ॥ वानप्रस्था च व्यासाद्या भिक्षुः पञ्चशिख स्तथा ॥ १६ ॥ योग माश्याय सर्वेते प्रविष्टाः सूर्य्यं मण्डलं ॥ शुको व्याससुतः श्रीमान् योगधर्म्म मवाप्तः ॥ १७ ॥ आदित्य किरणान्गत्वा ह्यपुनर्योगमा

स्थिताः॥ शब्दमात्रे श्रुतिसुखा ब्रह्मविष्णु शिवादयः ॥ १८ ॥ प्र
त्यक्षोयं परोदेवः सूर्यस्तिमिर नाशनः॥ तस्मा दन्यत्र भक्तिर्हि न
कार्य्याशुभमिच्छता ॥ १९ ॥ दृष्टंनबाधते यस्मादद्दृष्टं नित्यमेवहि॥
ततोभवद्भिः सततमभ्यर्च्यो भगवान्रविः ॥ २० ॥ सहिमाता पिता
चैव कृत्स्नस्य जगतोगुरुः ॥ अनाद्यो लोकनाथोसौ रश्मिमाली ज
गत्पतिः ॥ २१ ॥ पितृत्वेष स्थितोयस्मात् तपते यो द्विजोत्तमाः ॥
अनादि निधनोब्रह्मा नित्यमक्षय एवच ॥ २२ ॥ सृष्ट्वा प्रजापतीन्
सर्वान् सृष्ट्वाच विविधा प्रजाः ॥ सृष्ट्वा ससागरा न्सर्वान् भुवनानि
चतुर्द्दश ॥ २३ ॥ ततः शतसहस्रांशु रव्यक्तस्य पुनःस्वयं ॥ कृत्वाद्वा
दशधात्मान मादित्य मुपपद्यते ॥ २४ ॥ इन्द्रो धाताच पर्जन्य स्त्व
ष्टापूषा यमोभगः ॥ विवस्वान् विष्णुरंशुश्च वरुणोमित्र एवच ॥२५
आभि र्द्वादशधातेन सूर्येण परमात्मना ॥ कृत्स्नं जगदिदंव्याप्तं मू
र्त्तिभिस्तु द्विजोत्तमाः ॥ २६ ॥ तस्यया प्रथमामूर्त्ति रादित्यस्येन्द्र
संज्ञिता ॥ स्थितासा देवराजत्वे देवानां रिपुनाशिनी ॥ २७ ॥
द्वितीया तस्य यामूर्त्ति र्नाम्ना धातेति विश्रुता ॥ स्थिता प्रजापति
त्वेच विधाता सृजतेप्रजाः ॥ २८ ॥ तृतीया तस्य मूर्त्तिर्या पर्जन्य
इति विश्रुता ॥ मेघेष्ववस्थिता सातु वर्षत्येष गभस्तिभिः ॥ २९ ॥
चतुर्थी तस्य मूर्त्तिर्या नाम्ना त्वष्टेति विश्रुता ॥ स्थिता वनस्पतौ सा
तुश्चौषधीसु च सर्वतः ॥ ३० ॥ पञ्चमी तस्य मूर्त्तिर्या नाम्नापूषेति
विश्रुता ॥ अन्नेष्ववस्थिता सातु प्रजांपुष्णाति नित्यशः ॥ ३१ ॥

मूर्त्तिःषष्टी रवेर्यातु अर्यमाइति विश्रुता ॥ वायोः संवरणा सातु दे
वेभरस माश्रिता ॥ ३२ ॥ भानोर्यां सप्तमीमूर्त्ति नाम्ना भागेति वि
श्रुता ॥ भूमिष्ववस्थिता सातु शरीरेषुच देहिनां ॥ ३३ ॥ मूर्त्तिया
त्वष्टमीतस्य विवस्वानिति विश्रुता ॥ अग्नौप्रतिष्ठिता सातु पचत्यन्नं
शरीरिणां ॥ ३४ ॥ नवमी चित्रभानोर्या मूर्त्तिर्विष्णुस्य नामतः ॥
प्रादुर्भवति सानित्यं देवानां रिपुनाशिनी ॥ ३५ ॥ दशमी तस्य
यामूर्त्तिं रंशुमालीति विश्रुता ॥ वायौ प्रतिष्ठिता सातु प्रह्लादयति
वैप्रजाः ॥ ३६ ॥ मूर्त्ति स्त्वेकादशी भानो र्नाम्नावरुण संज्ञिता ॥
जलेषुवस्थिता सातु प्रजारचति नित्यशः ॥ ३७ ॥ मूर्त्ति र्याद्वाद
शीभानो र्नाम्ना मित्रस्य संज्ञिता ॥ लोकानां सहितार्थाय स्थिता
चन्द्रस्य मण्डले ॥ ३८ ॥ वहुकालं तपस्तेपे स्थितासातु सरित्तटे ॥
वायुभच स्तपस्तेपे स्थितोमैत्रेण चचुषा ॥ ३९ ॥ अनुगृह्ण स्तदा
भक्तान् वरैर्नानाविधै स्तुसा ॥ एवमाद्यंहि तत्स्थानं पश्चा त्वांवेन
स्थापितं ॥ ४० ॥ तत्रमित्रः स्थितोयस्मा त्तस्मान्मित्रवनं स्मृतम् ॥
आभि र्द्वादशभिस्तेन सवित्रा परमात्मना ॥ ४१ ॥ कृत्स्नं जगदि
दंव्याप्तं मूर्त्तिभिस्तु द्विजोत्तमाः ॥ तस्मात् ध्येया सुनस्यासु द्वादश
स्वासु मूर्त्तिषु ॥ ४२ ॥ भक्तिमद्भिर्नरै र्नित्यं तद्गतेनांतरात्मना ॥
इत्येवं द्वादशादित्यं जगद्ज्ञात्वातु मानवः ॥ नित्यं श्रुत्वा पठित्वा
च सूर्यलोके महीयते ॥ ४३ ॥ मुनयऊचुः ॥ यदितावदयंसूर्य्यं
स्वादिदेवः सनातनः ॥ ततःकस्मात्तपस्तेपे वरेप्सुःप्राकृतोयथा ॥ ४४

ब्रह्मोवाच ॥ एतद्वः संप्रवक्ष्यामि परंगुह्यं विभावसोः ॥ दृष्टोमित्रे
णयत्पूर्वं नारदाय महात्मने ॥ ४५ ॥ प्राक्प्रयोक्ताखलु यास्तुभ्यं र
वेर्द्वादशमूर्त्तयः ॥ मित्रश्चवरुणश्चोभौ तासां तपसिसंस्थितौ ॥ ४६ ॥
अब्भक्षो वरुणस्तासां तस्थौ पश्चिमसागरे ॥ मित्रोमित्रवने तस्मि
न्वायुभक्ष स्तपस्तपः ॥ ४७ ॥ अथमेरुगिरेः शृङ्गात् प्रच्युतो गन्ध
मादनं ॥ नारदः सुमहद्भूतः सर्व्वलोकां श्चरन् वशी ॥ ४८ ॥
आजगामाथ तत्रैव यत्रमित्रो परन्तपः ॥ तंदृष्ट्वातु तपश्चन्तं तस्य
कौतूहलं ह्यभूत् ॥ ४९ ॥ योऽव्यय श्चाव्ययश्चैव व्यक्ताव्यक्तः सनात
नः॥ धृतमेकात्मकं येन त्रैलोक्यंमिदं महात्मना ॥ ५० ॥ यःपिता स
र्व्वदेवानां सुराणामपि यःपरः ॥ अयजद्दैवतां कांवा पितृन् वा
कानसौ यजेत् ॥ ५१ ॥ इतिसंचिंत्यमनसा तंदेवं नारदोऽब्रवीत् ॥
वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे ॥ ५२ ॥ त्वमजः शाश्वतो
धाता महामूर्त्ति रनुत्तमः ॥ भूतंभव्यं भविष्यच्च त्वयिसर्वं प्रतिष्ठि
तं ॥ ५३ ॥ चत्वारो ह्याश्रमादेव गृहस्थाद्या स्तथैवच ॥ यजन्तेत्वा
महरह र्नानामूर्त्ति समाश्रितं ॥ ५४ ॥ पिता माताहि सर्वस्य दैव
तंत्वंहि शाश्वतं ॥ यजसे पितरंकंत्वं देवञ्चापि नविद्महे ॥ ५५ ॥
मित्रउवाच ॥ अवाच्यमेतद्वक्तव्यं परंगुह्यंसनातनं ॥ त्वयिभक्ति
गतंब्रह्मन् प्रवक्ष्यामि यथातथम् ॥ ५६ ॥ यत्तत्सूक्ष्म मविज्ञेय मव्य
क्तमचलं ध्रुवं ॥ इन्द्रियै रिन्द्रियार्थैश्च सर्व्वभूतै र्विवर्जितं ॥ ५७ ॥
सोह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चैवकथ्यते ॥ त्रिगुणाद्व्यतिरिक्तो सौ

पुरुषश्चैव कल्पितः ॥ ५८ ॥ हिरण्यगर्भो भगवान् सैषवुद्धि रिति स्मृतः ॥ महानिति च योगेषु प्रधानश्चैव कथ्यते ॥ ५९ ॥ सांख्ये च कथ्यते योगे नामभि र्वहुधात्मकः ॥ सविचरूपो विश्वात्मा एकाच रइति स्मृतः ॥ ६० ॥ धृतमेकाचरं येन त्रैलोक्य मिदमात्मना ॥ अशरीरः शरीरेषु सर्वेषु निवसत्यसौ ॥ ६१ ॥ वसन्नपि शरीरेषु न चलिष्यति कर्म्मभिः ॥ ममा न्तरात्मा तव च येचान्ये देहसंस्थि ताः ॥ ६२ ॥ सर्वेषां साक्षिभूतोऽसौ नग्राह्यः केनचित् क्वचित् ॥ सगुणो निर्गुणो विश्वो ज्ञानगम्यो ह्यसौ स्मृतः ॥ ६३ ॥ सर्व्वतःपा णिपादान्तं सर्व्वतोचि शिरोमुखं ॥ सर्व्वतः श्रुतिमल्लोके सर्व्वमावृ त्य तिष्ठति ॥ ६४ ॥ विश्वमूर्द्धा विश्वभुजो विश्वपादाचि नासिकः ॥ एकश्चरति वैचेत्रे स्वैरचारी यथासुखं ॥ ६५ ॥ चेत्राख्येव शरीरा णि तेषांचैव यथासुखं ॥ तानिवेत्ति सयोगात्मा ततः चेत्रज्ञ उच्य ते ॥ ६६ ॥ अव्यक्ते परेशेते पुरुषस्तेन चोच्यते ॥ विश्वं वहुविधं ज्ञेयं सर्व्वः सर्वत्र उच्यते ॥ ६७ ॥ यस्मात्स वहुरूपत्वा द्विश्वरूप इतिस्मृतः ॥ तस्यैकस्य समत्वंहि सवै कःपुरुषः स्मृतः ॥ ६८ ॥ महा पुरुष शब्दंहि विभर्त्येकः सनातनः ॥ सत्ववुद्धि क्रियापन्नः स्रजत्या त्मान मात्मना ॥ ६९ ॥ शतधा सहस्रधा चैव तथा शतसहस्रधा ॥ कोटयश्च करोत्येष प्रत्यगात्मान मात्मना ॥ ७० ॥ आकाशात् पति तंतोयं याति स्वादुतरं यथा ॥ भूमेरेष विशेषेण तथा गुणरसान् रसः ॥ ७१ ॥ एकएव यथावायु र्देहेष्वेवहि पञ्चधा ॥ एकत्वं च ए

थकत्वञ्च तथातस्य नसंशयः ॥ ७२ ॥ स्थानांतर विशेषाच्च यथाग्नि
र्लभते परां ॥ संज्ञांयथा भुवाद्येषु ब्रह्माद्येषु तथाप्यसौ ॥ ७३ ॥ य
थादीप सहस्राणि दीपएकः प्रसूयते ॥ तथा रूपसहस्राणि सएकः
संप्रसूयते ॥ ७४ ॥ यदाच वुध्यत्यात्मानं तदातरति केवलः ॥ एक
त्वंप्रलये चास्य वहुत्वंच प्रवर्त्तते ॥ ७५ ॥ नित्यं हिनास्ति जगतां
भूतं स्थावर जंगमं ॥ अक्षय स्याप्रमेयस्य सर्व्वस्य सर्गउच्यते ॥ ७६ ॥
यस्मा दव्यक्तमुत्पन्नं त्रिगुणं मुनिसत्तमाः ॥ अव्यक्ताव्यक्त भावस्था
यासा प्रकृति रुच्यते ॥ ७७ ॥ तांयोनिं ब्रह्मणोविद्धि योसौ सदस
दात्मकः ॥ लोकेच पूज्यते योसौ दैवेपित्र्ये च कर्म्मणि ॥ ७८ ॥
नास्ति तस्मात्परो ह्यन्यः पितादेवेपि वाद्विजाः ॥ आत्मना सतु वि
ज्ञेय स्ततस्तं पूजयाम्यहं ॥ ७९ ॥ स्वर्गस्थापिहि येकेचि त्तंनपश्य
न्ति देहिनः ॥ तेतु गच्छन्ति देवर्षे तेनोद्दिष्टं फलार्द्दितम् ॥ ८० ॥
तेदेवाः स्वाश्रमस्था श्च नानाष्टत्ति मुपाश्रिताः ॥ भक्त्या संपूजय
न्त्यायं गतिञ्चैषां ददातिसः ॥ ८१ ॥ सहि सर्व्वगति श्चैव निर्गुण
श्चैव कथ्यते ॥ एवंश्रुत्वा च ज्ञात्वाच पूजयामि दिवाकरं ॥ ८२ ॥
येच तद्भाविता लोके एकतत्वं समाश्रिताः ॥ एत दभ्यधिकं तेषां य
देकं प्रविशंत्युत ॥ ८३ ॥ इतिगुह्य समुद्देश स्तवनारद कीर्त्तितः ॥
एतद्भक्त्याव देवर्षे त्वयापि परमंश्रुतं ॥ ८४ ॥ सर्वैश्च मुनिभि र्वापि
पुराणे यैरिदंश्रुतं ॥ सर्वेंचपरमात्मानं पूजयन्ति दिवाकरं ॥ ८५ ॥
ब्रह्मोवाच ॥ एवमेव पुराख्यातं नारदायतु भानुना ॥ मयापि वःस

माख्याता कथाभानो र्द्विजोत्तमाः ॥ ८६ ॥ इदमाख्यान मार्षेयं म
याख्यातं द्विजोत्तमाः ॥ नव्यनादित्यभक्ताय इदंदेयंकदाचन ॥ ८७
यश्चैत च्छ्रावयेन्नित्यं यश्चैनं शृणुयान्नरः ॥ सहस्रसार्चिषं देवं प्रवि
शेन्नात्र संशयः ॥८८ ॥ मुच्येदार्त्त स्तथारोगा च्छुत्वेमामादितः क
थां ॥ जिज्ञासु र्लभतेज्ञानं गतिमिष्टां तथैवच ॥ ८९ ॥ चेमेणल
भतेध्यान मिदंयः पठतेपधि ॥ योयंकामयते कामं सतंप्राप्नोत्यसंश
यम् ॥ ९० ॥ तस्माद्भवद्भिः सतत मभ्यर्च्यो भगवान्रविः ॥ सचधा
ताविधाता च कृत्स्नस्य जगतोगुरुः ॥ ९१ ॥

इत्यादिब्रह्मपुराणे स्वयम्भुऋषिसम्वादे आदित्यमाहात्म्यवर्ण
नन्नामाष्टाविन्शोऽध्यायः २८ ॥

—:०:—

ब्रह्मोवाच ॥ आदित्यमूल मखिलं त्रैलोक्यं मुनिसत्तमाः ॥ भवत्य
स्माज्जगत्सर्वं सदेवासुर मानुषं ॥ १ ॥ रुद्रोपेन्द्र महेन्द्राणां विप्रे
न्द्रास्त्रिदिवौकसां ॥ महाद्युतिमतां चैव तेजोवै सार्वलौकिकं ॥ २ ॥
सर्वात्मा सर्व्वलोकेशो देवदेवः प्रजापतिः ॥ सूर्य्यएव त्रिलोकस्य मू
लंपरम दैवतम् ॥ ३ ॥ अग्नौ प्रास्ताहुतिःसम्य गादित्य मुपतिष्ठते ॥
आदित्या ज्जायतेवृष्टि र्वृष्टेरन्नं ततःप्रजाः ॥ ४ ॥ सूर्य्या त्प्रसूयते
सर्वं तत्रचैव प्रलीयते ॥ भावाभावौहि लोकाना मादित्या न्निःसृ
तौपुरा ॥ ५ ॥ एषतु ध्यानिनां ध्यानं मोक्षश्चाप्येष मोक्षिणां ॥ त
त्रगच्छन्ति निर्वाणं जायन्तेऽस्मा त्पुनःपुनः ॥ ६ ॥ चणा मुहूर्तादि

वसा निशा पक्षाश्च नित्यशः ॥ मासाः सम्वत्सरा श्चैव ऋतवश्च युगा
नि च ॥ ७ ॥ तथादित्यादृते ह्येषां कालसंख्या नविद्यते ॥ कालादृ
तेननियमो नाग्नौ विहरणक्रिया ॥ ८ ॥ धातूनां प्रविभागाश्च पुष्प
मूलफलं कुतः ॥ एवंवै शस्यनिष्पत्ति स्तृणौषधि गणाःकुतः ॥ ९ ॥
स्वभावो व्यवहाराणां जन्तूनां दिविचेह च ॥ जग त्प्रभावाद्धि कृते
भास्कराद्वारि तस्करात् ॥ १० ॥ नादृष्ट्रातपते सूर्य्यो नादृष्ट्रा प
रितप्यते ॥ नादृष्ट्रा परितप्यन्ते वारिणा दीप्यतेरविः ॥ ११ ॥ वसं
तेकपिलः सूर्य्यो ग्रीष्मे काञ्चन सन्निभः ॥ श्वेतो वर्षासु वर्णेन
पाण्डुः शरदि भास्करः ॥ १२ ॥ हेमन्ते ताम्रवर्णाभः शिशिरे लो
हितोरविः ॥ इत्यंवर्णाः समाख्याताः सूर्य्यस्य ऋतुसम्भवाः ॥ १३ ॥
ऋतुस्वभावे वर्णैश्च सूर्य्यः क्षेमसुभिक्ष कृत् ॥ तथादित्यस्य नामानि
सामान्यानीह द्वादश ॥ १४ ॥ द्वादशैव पृथक्त्वेन तानि वक्ष्याम्य शे
षतः ॥ आदित्यः सविता सूर्य्यो मिहिरोर्कः प्रभाकरः ॥ १५ ॥ मा
र्त्तण्डो भास्करो भानु श्चित्रभानु र्दिवाकरः ॥ रवि र्द्वादशभि स्तेषां
ज्ञेयः सामान्यनामभिः ॥ १६ ॥ विष्णुर्धाता भगःपूषामित्रेन्द्रो वरु
णोर्य्यमा ॥ विवस्वा नंशुमां स्त्वष्टा पर्ज्जन्यो द्वादशस्मृताः ॥ १७ ॥
इत्येते द्वादशादित्याः पृथक्त्वेन व्यवस्थिताः ॥ उत्तिष्ठन्तिसदा ह्ये
ते मासै र्द्वादशभिः क्रमात् ॥ १८ ॥ विष्णुस्तपतिचैत्रे तु वैशाखेचा
र्य्यमा तथा ॥ विवस्वान्ज्येष्टमासेतु आषाढे चांशुमान्स्मृतः ॥ १९ ॥
पर्ज्जन्यः श्रावणेमासि वरुणः प्रोष्टसंज्ञके ॥ इन्द्र अश्वयुजे मासि

धाता तपति कार्त्तिके ॥ २० ॥ मार्गशीर्षे तथामित्रः पौषे पूषादि
वाकरः ॥ माघे भगस्तु विज्ञेय स्त्वष्टातपति फाल्गुणे ॥ २१ ॥ श
तैर्द्वादशभि र्विष्णु रंशुभि र्दीप्ततेजसा ॥ दीप्यते गोसहस्रेण श
तैश्च त्रिभिरर्य्यमा ॥ २२ ॥ द्विसप्तैव विवस्वांस्तु अंशुमान् पञ्चभि
स्त्रिभिः ॥ विवस्वानिव पर्ज्जन्यो वरुणो थार्यमातथा ॥ २३ ॥ इन्द्र
स्तुद्विगुणैः षड्भि र्धातैकादशभिः स्मृतः ॥ मित्रव द्भगवां स्त्वष्टा स
हस्रेण शतेनच ॥ २४ ॥ उत्तरार्क क्रमेर्कस्य वर्द्धते रश्म यस्तथा ॥
दक्षिणोपक्रमे भूयो ह्रसते सूर्यरश्मयः ॥ २५ ॥ एवं रश्मिसहस्रेण
सूर्यलोकस्तु संग्रहः ॥ भिद्यते ऋतुमासाद्यं संग्रहंवह्रधापुनः ॥ २६ ॥
एवंनाम्ना चतुर्विंश देवतेषां प्रकीर्त्तिताः ॥ विस्तरेण सहस्रन्तु पुन
रन्यत् प्रकीर्त्तितम् ॥ २७ ॥ मुनयऊचुः ॥ येत न्नामसहस्रेण स्तुव
न्त्यर्कं प्रजापते ॥ तेषांभवति किंपुण्यं गतिश्च परमेश्वर ॥ २८ ॥
ब्रह्मोवाच ॥ शृणुध्वंमुनिशार्दूलाः सारभूतं सुभाषितं ॥ अलंनाम
सहस्रेण पठनीयं स्तवंशुभम् ॥ २९ ॥ यानिनामानि गुह्यानि पवि
त्राणि शुभानि च ॥ तानि वः कीर्त्तयिष्यामि शृणुध्वं भास्करस्य
वै ॥ ३० ॥ विकर्त्तनो विवस्वांश्च मार्त्तण्डो भास्करो रविः ॥ लोकप्र
काशकः श्रीमान् लोकचक्षु र्ग्रहेश्वरः ॥ ३१ ॥ लोकसाक्षी त्रि
लोकेशः लोककर्त्ता तमिस्रहा ॥ तपन स्तापनश्चैव शुचिः सप्ताश्व
वाहनः ॥ ३२ ॥ गभस्तिहस्तो ब्रह्मण्यः सर्व्व देव नमस्कृतः ॥
एकविंशति इत्येष स्तवइष्टः सदारवेः ॥ ३३ ॥ श्री रारोग्य कर

श्चैव धनवृद्धि यशस्करः ॥ स्तवराजेति विख्यात स्त्रिषु लोकेषु विश्रुतः ॥ ३४ ॥ यएतेन द्विजश्रेष्टाः द्वेसंध्ये स्तमनोदये ॥ स्तौति सूर्य्यं शुचिर्भूत्वा सर्व्वपापैः प्रमुच्यते ॥ ३५ ॥ मानसं वाचिकं वापिदेहजं कर्म्मजंतथा ॥ एकजप्येनतत्सर्वं नश्यत्यर्कस्यसन्निधौ ॥ ३६ एकजप्यस्य होमस्य संध्योपासन एवच ॥ धूपमंत्रो ऽर्घ्यमंत्रस्य वलिमंत्र स्तथैव च ॥ ३७ ॥ अन्नप्रदाने स्नानेच प्रणिपाते प्रदक्षिणे ॥ पूजितोयं महामंत्रः सर्व्वपापहरः शुभः ॥ ३८ ॥ तस्माद्यूयं प्रयत्नेन स्तवेनानेन वैद्विजाः ॥ स्तुवध्वं वरदंदेवं सर्व्वकामफलप्रदं ॥ ३९

इत्यादिब्रह्मपुराणे स्वयम्भुऋषिसम्वादे मार्त्तण्डस्य चतुर्विंशतिनामानुकीर्त्तन न्नामैकोन त्रिंशोऽध्यायः २९ ॥



मुनयऊचुः ॥ निर्गुणः शाश्वतोदेव स्त्वयाप्रोक्तो दिवाकरः ॥ पुनर्द्वादशधा जातः श्रुतोस्माभि स्त्वयोदितः ॥ १ ॥ सकथं तेजसोराशिः स्त्रियागर्भे महाद्युतिः ॥ सम्भूतो भास्करो जात स्तन्नः संशयोमहान् ॥ २ ॥ ब्रह्मोवाच ॥ दक्षस्य दुहिताःश्रेष्टा वभूवुः षष्टिशोभनाः ॥ अदिति र्दिति र्दनुश्चैव विनताद्या स्तथैवच ॥ ३॥ दक्षस्ताः प्रददौ कन्याः कश्यपाय त्रयोदश ॥ अदिति र्जनयामास देवान् त्रिभुवनेश्वरान् ॥ ४ ॥ दैत्या न्दिति र्दनुश्चोग्रान् दानवा न्वलदर्पितान् ॥ विनताद्या स्तथाचान्यान् सुषुवुः स्थाणुजङ्गमान् ॥ ५ ॥ आसान्च पुत्रदौहित्रैः पौत्र दौहित्रकादिभिः ॥ व्याप्त मेत ज्जग त्सर्वं

तेषां तासाञ्च वैमुने: ॥ ६ ॥ तेषां काश्यप पुत्राणां प्रधानो देवताग
णः ॥ सात्विका राजसा श्चैव तामसा श्च त्रिधागणाः ॥ ७ ॥ देवा
न्यज्ञभुज श्चक्रे तथा त्रिभुवनेश्वरान् ॥ स्रष्टा सर्व्वविदां श्रेष्ठ: पर
मेष्टीप्रजापतिः ॥ ८ ॥ तानबाधन्त सहिताः सपत्ना दैत्यदानवाः ॥
राक्षसाश्च ततोयुद्धं तेषामासी त्सुदारुणं ॥ ९ ॥ दिव्यं वर्षसहस्रंतु
तत्रातीयन्तदेवताः ॥ जयिनश्चाभवन्युद्धे बलिनोदैत्यदानवाः ॥ १० ॥
ततो निराकृता देवा दैतेयै र्दानवै स्तथा ॥ हृतं त्रिभुवनं दृष्ट्वा अ
दिति र्मुनिसत्तमाः ॥११ ॥ आच्छिन्न यज्ञभागांश्च क्षुधासंपीडितान्
स्वर्गं ॥ आराधनाय सवितुः परंयत्नं प्रचक्रमे ॥ १२ ॥ एकाग्रा नि
यताहारा परंनियम माश्रिता ॥ तुष्टाव तेजसांराशिं गगनस्थं दि
वाकरं ॥ १३ ॥ अदितिरुवाच ॥ नमस्तुभ्यं परंसूक्ष्मं प्रणभ्यं बिभ्रते
तुलं ॥ धामधामवतामीशं धामाधारं च शाश्वतम् ॥ १४ ॥ जगता
मुपकाराय त्वामहं नौमि गोपते ॥ आदानस्य च यद्रूपं तीव्रं तस्मै
नमाम्यहं ॥ १५ ॥ गृहीत मष्टमासेषु कालेनेंदुमयं रसं ॥ बिभ्रत
स्तवयद्रूप मतितीव्रं नतास्मिते ॥ १६ ॥ संध्ययोरुभयो र्यत्तद्रजसो
संयुतंसमे ॥ मनोरथ ञ्च योदद्या न्नमस्तस्मै गुणात्मने ॥ १७ ॥
यद्रूप मृग्यजुःसाम्नां संध्याह्ने तपते भवान् ॥ विश्वमेतत् त्रयीसंज्ञं
नमस्तस्मै प्रभावते ॥ १८ ॥ यत्तु तस्मा त्परंरूप मोमित्युक्त्वा भिसं
हितं ॥ अस्थूल ममलञ्चैव नमस्तस्मै सनातन ॥ १९ ॥ ब्रह्मोवाच
एवंसन्नियता देवी चक्रेस्तोत्र महर्निशं ॥ निराहारा विवस्वन्त

मारिराधयिषुर्द्विजाः॥ २०॥ ततःकालेनमहताभगवांस्तपनोद्विजाः॥
प्रत्यक्षतां मगात्तस्या दाक्षायिस्या द्विजोत्तमाः॥ २१॥ साददर्शम
हाकूटं तेजसां वरसंहतं॥ भूमौ च संस्थितं भानुं ज्वालामालाति
दुःसहं॥ २२ तंदृष्ट्वा च ततोदेवी साध्वसं परमंगता॥ प्रसादं कु
रुपश्येयं यद्रूपं तेदिवाकर॥ २३॥ जगद्दाय प्रसीदेति नत्वांपश्या
मि गोपते॥ भक्ताबु कम्पक विभोभक्तान् स्त्वं पाहि मे सुतान्
॥ २४॥ ततः सतेजस स्तस्मा दाविर्भूतो दिवाकरः॥ अदृश्यत त
दादित्य स्तप्त ताम्रोपमः प्रभुः॥ २५॥ तन्नतां प्रणतांदेवीं तस्याः
सन्दर्शने द्विजाः॥ प्राहवाक्यं हृणुष्वैकं वरंमत्तोय मिच्छसि॥ २६
प्रणता शिरसा सातु जानुपीडित मेदिनी॥ प्रत्युवाच विवस्वन्तंव
रदं समुपस्थितम्॥ २७॥ देवप्रसीद पुत्राणां हृतंत्रिभुवनं मम॥
यज्ञभागा श्च दैतेयै दानवै श्च वलाधिकैः॥ २८॥ तन्निमित्तं प्र
सादंत्वं कुरुष्व ममगोपते॥ अंशेन तेषां भ्रातृत्वं गत्वा तान्नाशय
द्विषः॥ २९॥ यथा मेतनयाभूयो यज्ञभागभुजः प्रभो॥ भवेयुर
धिपाश्चैव त्रैलोक्यस्य दिवाकर॥ ३०॥ तथानुकम्पां पुत्राणां सुप्र
सन्नोरवे मम॥ कुरु प्रपन्नार्त्तिहर कार्यकर्त्ता त्वमच्युत॥ ३१॥
ततस्तामाह भगवान् भास्करो वारितस्करः॥ प्रणता मदितिंपुत्रे
प्रसादसुमुखो विभुः॥ ३२॥ सहस्रांशेन तेगर्भे सम्भूतोह मशेष
तः॥ तेपुत्र शत्रूपीडयित्द्दन् नाशयाम्याशु निर्वृतः॥ ३३॥ इत्यु
क्त्वा भगवान् भास्वा नन्तर्द्धान मुपागतः॥ निवृत्ता सापि तपसः

संग्रामाखिल वांछिता ॥ ३४ ॥ ततो रश्मि सहस्रात्तु सुषुम्नाख्यो
रवेःकरः ॥ विप्रावतारं संचक्रे देवमातुस्तदोदरे ॥ ३५ ॥ कृच्छ्रां
चांद्रायणादींश्च साचक्रे सुसमाहिता ॥ शुचिना धारयाम्येतं दि
व्यं गर्भमिति द्विजाः ॥ ३६ ॥ ततस्तां कश्यपः प्राह किंचित्कोप
प्लुताक्षरं ॥ किम्मारयसिगर्भाण्ड मितिनित्योपवासिनी ॥ ३७ ॥
साच तंप्राह गर्भाण्ड मेतत्पश्यामि चामरं ॥ नमारितं विपक्षाणां
मृत्युरेष भविष्यति ॥ ३८ ॥ ब्रह्मोवाच ॥ इत्युक्त्वा तंततो गर्भं मु
त्ससर्जसुदारुणं ॥ जाज्वल्यमानंतेजोभिः पत्युर्वचनकोपिता ॥ ३९
तंदृष्ट्वा कश्यपो गर्भं मुद्यद्भास्कर वर्चसं ॥ तुष्टाव प्रणतोभूत्वा वा
ग्भि रिज्याभि रादरात् ॥ ४० ॥ संस्तूयमानः सतदा गर्भाण्डात्
प्रकटोऽभवत् ॥ पद्मपत्र सुवर्णाभ स्तेजसाव्याप्य दिङ्मुखं ॥ ४१ ॥
अथान्तरिक्षा दाभाष्य कश्यपं मुनिसत्तमं ॥ सभार्यं मेघगम्भीर वा
गुवाचा शरीरिणी ॥ ४२ ॥ मारितंते यतःप्रोक्त मेतदण्डं त्वया
दिते ॥ तस्मान्मुने सुतस्तेयं मार्त्तण्डोवै भविष्यति ॥ ४३ ॥ हनि
ष्यत्यसुरांश्चापि यज्ञभागहरां स्तवरीन् ॥ देवानिशम्येति रवे र्गग
नात्समुपागतां ॥ ४४ ॥ प्रहर्षमतुलं याता दानवाश्च हृतौजसः ॥
ततो युद्धाय दैतेया नाजुहाव शतक्रतुः ॥ ४५ ॥ सहदेवै र्यदायु
क्तो दानवा श्च समभ्ययुः ॥ तेषांयुद्ध मभूद्घोरं देवाना मसुरैः स
ह ॥ ४६ ॥ शस्त्रास्त्रप्रहितं दीप्तं समस्त भुवनान्तरं ॥ तस्मि न्युद्धे
भगवता मार्त्तण्डेन निरीक्षिताः ॥ ४७ ॥ तेजसा दह्यमाना स्ते

भस्मीभूता महासुराः ॥ ततः प्रहर्ष मतुलं प्राप्ताः सर्वे दिवौक
सः ॥ ४८ ॥ तुष्टुवु स्तेजसां योनिं मार्त्तण्ड मदितिं तथा ॥ स्वा
धिकारां स्ततःप्राप्ता यज्ञभागांश्च पूर्ववत् ॥ ४९ ॥ भगवा नपि मा
र्त्तण्डः स्वाधिकार मथाकरोत् ॥ कदम्बपुष्पव द्भास्वा नधश्चोर्द्ध्वं च
रश्मिभिः ॥ ५० ॥ वृत्तोग्निपिण्ड सदृशो येनाभाति स्फुटंवपुः ॥
मुनयऊचुः ॥ कथं कान्ततरं पश्चाद्रूपं समवाप्तवान् रवि ॥ ५१ ॥
कदम्ब गोलकाकारं तन्नोब्रूहि जगत्पते ॥ ब्रह्मोवाच ॥ अथ तस्मै
ददौ कन्यां संज्ञांनाम विवस्वते ॥ ५२ ॥ प्रसाद्य प्रणतो भूत्वा वि
श्वकर्म्मा प्रजापतिः ॥ त्रीण्यपत्या न्यसौतस्य जनयामास गोप
तिः ॥ ५३ ॥ द्वौपुत्रौ सुमहाभागौ कन्या ञ्च यमुनां पुनः ॥ यत्ते
जोभ्यधिकं तस्य मार्त्तण्डस्य विवस्वतः ॥ ५४ ॥ तेनाति तापयामा
स त्रींल्लोकान् सचराचरान् ॥ गोलकाकार तद्रूपं दृष्ट्वासंज्ञा विव
स्वतः ॥ ५५ ॥ असहन्तीतु तत्तेजः स्वांछायां वाक्य मब्रवीत् ॥
संज्ञोवाच ॥ अहंयास्यामि भद्रन्ते स्वमेव भवनं पितुः ॥ ५६ ॥ नि
र्विकारं त्वयाप्यत्र स्थेयं मच्छासनाच्छुभे ॥ इमौ च बालकौ मह्यं क
न्या च वरवर्णिनी ॥ ५७ ॥ सम्भाव्या नैव चाख्येय मिदं भगवतेत्व
या ॥ छायोवाच ॥ आकेश ग्रहणा द्देवि आप्राणा न्नैव कर्हिचि
त् ॥ ५८ ॥ आख्यास्यामि मतंतुभ्यं गम्यतां यत्रवांछितं॥ इत्युक्ताव्री
डितासंज्ञा जगाम पितृमन्दिरम् ॥ ५९ ॥ वत्सराणां सहस्रन्तु व
समाना पितुर्गृहे ॥ भर्त्तुः समीपं याहीति पित्रोक्ता सा पुनः प

नः ॥ ६० ॥ अगच्छ इडवाभूत्वा कुरूनथोत्तरां स्ततः ॥ तत्रतेपे त
पःसाध्वी निराहारा द्विजोत्तमाः ॥ ६१ ॥ पितुः समीपा दायाता
संज्ञावाक्येन तत्परा ॥ तद्रूपधारिणी छाया भास्करं समुपस्थि
ता ॥ ६२ ॥ तस्यांच भगवान्सूर्यः संज्ञेयमिति चिन्तयन् ॥ तथैव ज
नयामास द्वौपुत्रौ कन्यका तथा ॥ ६३ ॥ संज्ञातु पार्थिवी तेषा मा
त्मजानां तथाकरोत् ॥ स्नेहं नपूर्व जातानां तथाकृतवतीतुसा ॥ ६४
मनुस्तु तत्क्षमत्तस्या यमस्तस्या नचक्षमे ॥ बहुधा पाल्यमानस्तु पि
तुःपत्न्यास्तु दुःखितः ॥ ६५ ॥ सवै कोपाच्च बाल्याच्च भाविनोऽर्थस्य
वैबलात् ॥ पदा सन्तर्जयामास नतुदेहे निपातयत् ॥ ६६ ॥ छायो
वाच ॥ पदातर्जयसे यस्मा त्पितुर्भार्यां गरीयसीं ॥ तस्मा त्तवैषच
रणः पतिष्यति नसंशयः ॥ ६७ ॥ यमस्तु तेनशापेन भृशं पीडित
मानसः ॥ मनुनासह धर्मात्मा पित्रे सर्वं न्यवेदयत् ॥ ६८ ॥ यम
उवाच ॥ स्नेहेन तुल्यमस्मासु मातास्माकं नवर्त्तते ॥ विसृज्यज्यायसो
यस्मात् कनीयांसं बुभूषति ॥ ६९ ॥ तस्यां समुद्यतः पादो नतु देहे
निपातितः ॥ बाल्याद्वा यदिवामोहा त्तद्भवान् क्षन्तुमर्हति ॥ ७० ॥
शप्तोहं तातकोपेन जनन्यातनयो यतः ॥ ततोमन्येन जननी मिमां
वैतपतास्वर ॥ ७१ ॥ तवप्रसादाच्चरणो नपतेद्भगवन् यथा ॥ मातृ
शापादयं देव तथाचिन्तय गोपते ॥ ७२ ॥ रविरुवाच ॥ असंश
यंपुत्रमह द्भविष्यत्यत्र कारणं ॥ येन त्वामाविश त्क्रोधो धर्मज्ञं ध
र्मशालिनं ॥ ७३ ॥ सर्वेषामेव शापानां प्रतिघातोहि विद्यते ॥ नतु

मात्राभि शप्तानां क्वचिच्छाप निवर्त्तनम् ॥ ७४ ॥ नशक्य मेत न्मि थ्यातु कर्त्तुम्मातु र्वचस्तव ॥ किञ्चित्तेहं विधास्यामि तव शापापनो दनं ॥ ७५ ॥ कृमयो मांस मादाय प्रयास्यन्ति महीतलं ॥ कृतंतस्या वचःसत्यं त्वञ्च त्रातोभविष्यसि ॥ ७६॥ ब्रह्मोवाच ॥ आदित्यस्त्व ब्रवीच्छायां किमर्थं तनयेषुवै ॥ तुल्येष्वप्यधिकः स्नेह एकंप्रतिक्रिये त्त्वया ॥ ७७ ॥ नूनंतेषां नजननी संज्ञाख्यापि क्वचिद्गता ॥ वि गुणेष्वप्य पत्येषु माता शापंनदास्यति ॥७८ ॥ सातत्परिहरन्ती च शापाद्भीता तथारवेः ॥ कथयामास वृत्तान्तं सश्रुत्वा श्वशुरं य यौ ॥ ७९ ॥ सचापि तं यथान्याय मर्चयित्वा विभावसुं ॥ निर्दग्धु कामं कोपेन शान्तयामास सुव्रतः ॥८०॥ विश्वकर्मोवाच ॥ तवाति तेजसाव्याप्त मिदंरूपं सुदुःसहं ॥ असहन्तीतु तत्संज्ञा वने चरति वैतपः ॥ ८१ ॥ द्रक्ष्यतेतां भवानद्य स्वांभार्य्यां शुभचारिणीं ॥ रूपा र्थंभवतो ऽरण्ये चरन्ती सुमहत्तपः ॥ ८२ ॥ श्रुतं मे ब्रह्मणोवाक्यंय दिते देवरोचते ॥ रूपं निवर्त्तयाम्यद्य तवकांतं दिवस्पते ॥ ८४ ॥ ब्रह्मोवाच ॥ ततो विवस्वतो रूपं प्रागासीत्परिमण्डलं ॥ ततस्तथे ति तंप्राह त्वष्टारं भगवान् रविः ॥ ८५ ॥ विश्वकर्म्मा ह्यनुज्ञातः शाकद्वीपे विवस्वतः ॥ भ्रमिमारोप्य तत्तेजः शातनायोपचक्रमे ॥ ८६ भ्रमता शेषजगतां नाभिभूतेन भास्वता ॥ समुद्राद्र्यर्थं सुद्वेल सा करोह महीनभः ॥ ८७ ॥ गगनं चाखिलं विप्राः सचन्द्र ग्रहता रकं ॥ अधोगतं महाभागा बभूवा क्षिप्तमण्डलम् ॥ ८८ ॥ विचि

प्रचलिताः सर्वे बभूवुश्च तथाम्बुदाः ॥ व्यभिद्यन्त तथा शैलाः शीर्णसा
नुविवन्धनाः ॥ ८९ ॥ ध्रुवाधाराश्च शेषाणि धिष्ण्यानि मुनिसत्त
माः ॥ उपद्रश्मि निबन्धानि बन्धनानि अधोययुः ॥ ९० ॥ वेगभ्रम
णसंघात वायुक्षिप्ताः सहस्रशः ॥ व्यशीर्य्यंत तथा मेघा घोरराव वि
राविणः ॥ ९१ ॥ भास्वद्भ्रमण विभ्रान्त भूम्याकाशरसातलं ॥ जग
दाकुलमत्यर्थं तदासी न्मुनिसत्तमाः ॥ ९२ ॥ त्रैलोक्यं सकलं वीक्ष्य
भ्रममाणं सुरर्षयः ॥ देवाश्च ब्रह्मणा सार्द्धं भास्वन्तमभितुष्टुवुः ॥ ९३ ॥
आदिदेवोसि देवानां जातमेत त्स्वयम्भुवः ॥ सर्ग स्थित्यन्त कालेषु
त्रिधा भेदेन तिष्ठसि ॥ ९४ ॥ स्वस्ति तेस्तु जगन्नाथ धर्मवर्ष दिवा
कर ॥ इन्द्र स्त्वागत्य देवैस्तु वीक्ष्यमाण मथास्तुवत् ॥ ९५ ॥ जयदे
व जगद्व्यापिन् जयाशेष जगत्पते ॥ ऋषयश्च ततः सप्त वसिष्ठात्रि पु
रोगमाः ॥ ९६ ॥ तुष्टुवु र्विविधैः स्तोत्रैः स्वस्तिस्त्वस्तीति वादिनः ॥
वेदोक्ताभि रथाख्याभि र्वालखिल्या श्च तुष्टुवुः ॥ ९७ ॥ अङ्गिरा या
श्च भास्वन्तं लिख्यमानं मुदायुताः ॥ त्वं नाथ मोक्षिणां मोक्षो ध्येय
स्त्वं ध्यानिनां परः ॥ ९८ ॥ त्वं गतिः सर्व्वभूतानां कर्मकाण्ड विव
र्त्तिनां ॥ संप्रपूज्यस्तु देवेश शक्तोस्तु जगतां पते ॥ ९९ ॥ शक्तोस्तु
द्विपदे नित्यं शक्तश्चास्तु चतुष्पदे ॥ ततो विद्याधरगणा यक्षराक्षस
पन्नगाः ॥ १०० ॥ कृताञ्जलिपुटाः सर्वे शिरोभिः प्रणता रविम् ॥
ऊचुस्ते विविधा वाचः मनःश्रोत्र सुखावहाः ॥ १०१ ॥ सह्यं भवन्तु
तत्तेजो भूतानां भूतभावन ॥ ततो हाहा हूहू श्चैव नारद स्तुम्बुरु

स्तथा ॥ १०२ ॥ उपगायितुमारब्धा गन्धर्वं कुशलोत्तमाः ॥ षड्ज
मध्यम गान्धार ग्रामत्रय विशारदाः ॥ १०३ ॥ मूर्छनाभि श्च तालै
श्च संप्रयोगैः सुखप्रदं ॥ विश्वाचीच घृताचीच उर्वश्यय तिलोत्त
मा ॥ १०४ ॥ मेनका सहजन्याच रम्भा चाप्सरसाम्बरा ॥ नन्दतुर्ज
गतामीशे लिख्यमाने विभावसौ ॥ १०५ ॥ हावभाव विलासाद्यान्
कुर्वंत्यो ऽभिनया न्वहून् ॥ प्रवाद्यन्त ततस्तत्र वीणा वेणवादि झ
र्झराः ॥ १०६ ॥ पणवाः पुष्कला श्चैव मृदङ्ग पटहानकाः ॥ देवदुं
दुभयःशंखाः शतशोथ सहस्रशः ॥ १०७ ॥ गायद्भि श्चैव नृत्यद्भिर्गं
न्धर्वै श्चाप्सरो गणैः ॥ तूर्य्य वादित्र निर्घोषैः सर्वं कोलाहली
कृतम् ॥ १०८ ततःकृताञ्जलिपुटाभक्तिनम्रात्ममूर्त्तयः ॥ लिख्यमाने
सहस्रांशौ प्रणेमुःसर्व्वदेवताः ॥१०९॥ ततः कोलाहलेतस्मिन् सर्व्व
भूत समागमे ॥ तेजसःशातनञ्चक्रे विश्वकर्म्माशनैःशनैः ॥ ११०॥
आजानुलिखितश्चासौ निपुणंविश्वकर्म्मणा ॥ नाभ्यनन्दंश्च लिखनं
ततस्तेनावतारितः ॥ १११ ॥ भर्त्तुर्निर्भासितं रूपंतेजसोहननेनतु ॥
कान्तात्कान्तनरंरूप मधिकंशुशुभेयतः ॥ ११२॥ इतिहिसकल धर्म्म
कालहेतो र्हरिकमलासन विष्णुसंस्तुतस्य॥ तदुपरि लिखनंनिशम्य
भानो र्व्रजति दिवाकर लोक मायुषोंते ॥ ११३ ॥ एवं जन्मरवेःपूर्वं
वभूवमुनिसत्तमाः ॥ रूपञ्चपरमंतस्य मयासम्परिकीर्त्तितम् ॥११४॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषि सम्वादे मार्त्तण्डस्य शरीर
लिखनं नाम त्रिंशोऽध्यायः ३० ॥

मुनयऊचुः ॥ भूयोपि कथयास्माकं कथां सूर्य्यसमाश्रितां ॥ नतृप्ति मधिगच्छामः शृण्वन्तः सुखदां कथां ॥ १ ॥ योयंदीप्तो महातेजा वह्निराशि समप्रभः ॥ एतद्वेदितु मिच्छामः प्रभावोस्य कुतः प्रभो ॥ २ ॥ ब्रह्मोवाच ॥ तमोभूतेषु लोकेषु नष्टे स्थावर जङ्गमे ॥ प्रकृतेर्गुणहेत्वर्थः पूर्वं वुद्धिरजायत ॥ ३ ॥ अहङ्कारस्ततोजज्ञे महाभूतप्रवर्त्तकः ॥ वायुग्नि रापः खंभूमि स्तत स्त्वण्ड मजायत ॥ ४ ॥ तस्मिन्नण्डे त्विमेलोकाः सप्तचैव प्रतिष्ठिताः ॥ पृथिवी सप्तभिर्द्वीपैः समुद्रैश्चैव सप्तभिः ॥ ५ ॥ तत्रैवा वस्थितो ह्यासी दहं विष्णुर्महेश्वरः ॥ विमूढा स्तामसाः सर्वे प्रध्यायन्ति तमीश्वरम् ॥ ६ ॥ ततोधिष्णो महातेजाः प्रादुर्भूत स्तमोनुदः ॥ ध्यानयोगेन चास्माभिर्विज्ञातः सर्व्वदैवतः ॥ ७ ॥ श्रुत्वा च परमात्मानं सर्वएव पृथक् पृथक् ॥ दिव्याभिः स्तुतिभि र्देवः स्तुतोस्माभि स्तदेश्वरः ॥ ८ ॥ आदिदेवोसि देवाना मैश्वर्य्या त्परमेश्वरः ॥ आदिकर्त्तासि भूतानां देवदेवो दिवाकरः ॥ ९ ॥ जीवनः सर्वभूतानां देवगन्धर्व्व रक्षसां ॥ त्वंब्रह्मा त्वंमहादेवः त्वंविष्णु स्त्वं प्रजापतिः ॥ १० ॥ वायुः सोमश्च इन्द्रश्च विवस्वान् वरुण स्तथा ॥ त्वंकालः पालकः सृष्टिकर्त्ता हर्त्ताप्रभुस्तथा ॥ ११ ॥ सरितःसागराःशैला विद्युदिन्द्रधनूंषि च ॥ प्रलयः प्रभवश्चैव व्यक्ताव्यक्तः सनातनः ॥ १२ ॥ ईश्वरात् प्रभवाविद्या विद्यायाः परतःशिवः ॥ शिवा त्परतरोदेव स्त्वमेव परमेश्वरः ॥ १३ ॥ सर्वतः पाणि पादान्तं सर्वतोक्षि शिरो मुखं ॥

सहस्रांशुः सहस्राक्षः सहस्रचरणेक्षणः ॥१४॥ भूतादि र्भूर्भुवःस्वश्च
महः सत्यंतपोजनः ॥ सर्वप्रदीपनंदिव्यं सर्व्वलोकप्रकाशकम् ॥१५
दुर्न्निरीक्ष्यं सुरेन्द्राणां यद्रूपं तस्यतेनमः ॥ सुरसिद्धगणै र्जुष्टं भृ
ग्वत्रिपुलहादिभिः ॥ १६ ॥ स्तुतस्य परमंरक्तं यद्रूपं तस्य तेनमः ॥
वेद्यं वेदविदां नित्यं सर्व्वज्ञान समन्वितम् ॥ १७ ॥ सर्व्वदेवा धिदे
वस्य यद्रूपं तस्यतेनमः ॥ विश्वकृ द्विश्वभूत ञ्च वैश्वानर सुरार्चित
म् ॥ १८ ॥ विश्वस्थिति मवेद्यञ्च यद्रूपं तस्यतेनमः ॥ अविज्ञेय म
नालंब्य मध्यात्मगति मव्ययं ॥ अनादिनिधन ञ्चैव यद्रूपं तस्य ते
नमः ॥ १९ ॥ नमोनमः कारण कारणाय नमोनमः पाप विमोच
नाय ॥ नमो नमस्ते दिति वन्दिताय नमो नमो रोग विनाशना
य ॥ २० ॥ नमोनमः सर्व्ववरप्रदाय नमो नमः सर्व्वसुखप्रदाय ॥
नमो नमः सर्व्वधनप्रदाय नमो नमः सर्व्वमतिप्रदाय ॥ २१ ॥ स्तु
तः सभगवानेवं तैजसं रूपमास्थितः ॥ उवाच वाचा कल्याण्या को
वरो वःप्रदीयतां ॥ २२ ॥ देवाऊचुः ॥ तवातितेजसां रूपं नकश्चि
त्सोढु मुत्सहेत् ॥ सहनीयं भवत्वेव हिताय जगतः प्रभो ॥ २३ ॥
एवमस्त्विति सोप्युक्त्वा भगवान् दिनकृ द्विभुः ॥ लोकानां कार्य्यसि
द्ध्यर्थं घर्मवर्ष हिमप्रदः ॥ २४ ॥ ततः सांख्याश्च योगाश्च येचान्ये
मोक्षकांक्षिणः ॥ ध्यायन्तो ध्यानिनांदेवं हृदयस्थं दिवाकरं ॥ २५ ॥
सर्व्वलक्षणहीनोपि युक्तो वा सर्व्वपातकैः ॥ सर्व्वन्तु तरते पापं दे
वमर्कं समाश्रितः ॥ २६ ॥ अग्निहोत्रा श्च वेदाश्च यज्ञा श्च वङ्गदक्षि

णाः ॥ भानो र्भक्ति नमस्कारा स्कलां नार्हन्ति षोडशीं ॥ २७ ॥
तीर्थानां परमं तीर्थं मङ्गलाना ञ्च मङ्गलम् ॥ पवित्र ञ्च पवित्रा
णां प्रपद्यध्वं दिवाकरं ॥ २८ ॥ शक्रादैः संस्तुतं देवं ये नमस्यन्ति
भास्करं ॥ सर्व्वकल्मष निर्मुक्ताः सूर्य्यलोकं व्रजन्तिते ॥ २९ ॥
मुनयऊचुः ॥ चिरात्प्रभृतिनो ब्रह्मन् श्रोतुमिच्छा प्रवर्त्तते ॥ नाम
ष्टशतं ब्रूहि यत्त्वयोक्तं पुरारवेः ॥ ३० ॥ ब्रह्मोवाच ॥ अष्टोत्तर
शतं नाम्नां शृणुध्वं गदतो मम ॥ भास्करस्य परं गुह्यं स्वर्गमोक्षप्र
दंद्विजाः ॥ ३१ ॥ ओं सूर्य्योर्य्यमा भग स्त्वष्टा पूषार्कः सविता र
विः ॥ गभस्तिमानजः कालो मूर्त्तिर्द्धाता दिवाकरः ॥ ३२ ॥ पृथि
व्यापश्च तेजश्च खंवायुश्च परायणं ॥ सोमो बृहस्पतिः शुक्रो बुधो
ङ्गारक एवच ॥ ३३ ॥ इन्द्रो विवस्वान् दीप्तांशुः शुचिः शौरिः श
नैश्वरः ॥ ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दोवै श्रवणो यमः ॥ ३४ ॥ वैद्यु
तो जाठरश्चाग्नि रैन्धनं स्तेजसांपतिः ॥ धर्म्मध्वजो वेदकर्त्ता वेदा
ङ्गो वेदवाहनः ॥ ३५ ॥ कृतं त्रेता द्वापरश्च कलिः सर्व्वमलाश्रयः ॥
कलाकाष्टा मुहूर्त्ता श्च क्षपा मासा स्तथाक्षणाः ॥ ३६ ॥ सम्वत्सर
करोऽश्वत्थः कालचक्रो विभावसुः ॥ पुरुषः शाश्वतो योगी व्यक्ता
व्यक्तः सनातनः ॥ ३७ ॥ कालाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमो
नुदः ॥ वरुणः सागरोंऽशु श्च जीमूतो जीवनोऽरिहा ॥ ३८ ॥ भूता
श्रयो भूतपतिः सर्व्वलोकनमस्कृतः ॥ स्रष्टा संवर्त्तको वह्नी सर्गस्या
दिकरो ऽचलः ॥ ३९ ॥ अनन्तः कपिलो भर्त्ता सर्व्वगः सर्व्वतो मु

ख: ॥ पद्मो विषादो वरद: सर्व्वभूतहितेरत: ॥ ४० ॥ मन:सुपर्णो भूतादि: शीघ्रग: प्राणधारण: ॥ धन्वन्तरि र्द्धूमकेतु रादिदेवो दितेःसुत: ॥ ४१ ॥ द्वादशात्मा रविन्दाक्ष: पिता माता पितामह: ॥ स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपं ॥ ४२ ॥ देहकर्त्ता प्रशांतात्मा विश्वात्मा विश्वतोमुख: ॥ चराचरात्मा सूक्ष्मात्मा मैत्रेय: करुणान्वित: ॥ ४३ ॥ एतद्वै कीर्त्तनीयस्य सूर्य्यस्या मिततेजस: ॥ नामाष्टशत माख्यातं मया प्रोक्तं द्विजोत्तमा: ॥ ४४॥ सुरगण पितृयक्षसेवितं ह्यसुर निशाचर सिद्धवन्दितं ॥ वरकनक हुताशनप्रभं प्रणिपतितोस्मि हिताय भास्करं ॥ ४५ ॥ सूर्य्योदये यस्सुसमाहित:पठेत् सपुत्रदाराधनरत्न सञ्चयान् ॥ लभेत जातिस्मरतां नर: सदा स्मृतिञ्च मेधाञ्च सविन्दते परां ॥ ४६ ॥ इमं स्तवं देववरस्य योनर: प्रकीर्त्तयेच्छुद्धमना:समाहित:॥ विमुच्यते शोकदवाग्नि सागरा ल्लभेत कामान् मनसा यथेप्सितान् ॥ ४७ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भु ऋषि सम्वादे सूर्यनामाष्टशतकं नामैकत्रिंशोऽध्याय: ३१ ॥

—:०:—

ब्रह्मोवाच॥ योसौ सर्व्वगतोदेव स्त्रिपुरारि स्त्रिलोचन:॥ उमाप्रियकरो रौद्र श्चन्द्रार्द्धकृतशेखर: ॥ १ ॥ विद्राव्य विबुधान् सर्वान् सिद्धविद्याधरा नृषीन् ॥ गन्धर्व यक्षनागां श्च तथान्यां श्च समाहितान् ॥ २ ॥ जघान पूर्वं दक्षस्य यजतो धरणीतले ॥ यज्ञंसम्बद्ध म

न्नायं सर्व्वसम्भारसंभृतं ॥३॥ यस्यप्रतापसंत्रस्ताः शक्राद्यास्त्रिदिवौ
कसः ॥ शान्तिं नलेभिरे विप्राः पुनस्तं शरणं गताः ॥ ४ ॥ सस्रा
स्तेतत्र वरदः शूलपाणि र्वृषध्वजः ॥ पिनाकपाणि र्भगवान् दक्ष
यज्ञविनाशनः ॥ ५ ॥ महादेवो ल्कलेदेशे कृत्तिवासा वृषध्वजः ॥
एकाम्रके मुनिश्रेष्ठाः सर्वकामप्रदो हरः ॥ ६ ॥ मुनयऊचुः ॥ किम
र्थं सभवोदेवः सर्व्वभूतहिते रतः ॥ जघान दक्षयज्ञंस सर्वै र्दैवैरलं
कृतं ॥ ७ ॥ नह्यल्पकारणं तत्र यतो मन्यामहे वयं ॥ श्रोतुमिच्छा
महे ब्रूहि परंकौतूहलं हिनः ॥ ८ ॥ ब्रह्मोवाच ॥ दक्षस्यास न्सुताः
श्रेष्ठाः कन्यायाः पतिसंगताः ॥ स्वेभ्योगृहेभ्य आनीता स्ताःपिताभ्य
र्चयद्गृहे ॥ ९ ॥ तत स्त्वभ्यर्च्चिताः सर्वा निवसन्त्यः पितुर्गृहे ॥
तासांज्येष्ठा सतीनाम पत्नीया त्र्यम्बकस्यवै ॥ १० ॥ नाजुहावात्म
जां तांवै दक्षोरुद्र मभिद्विषन् ॥ अकरो त्सन्नतिं दक्षो नचकांचि
न्महेश्वरे ॥ ११ ॥ जामाता श्वसुरे तस्मिन् स्वभावा त्तेजसिस्थि
तः ॥ ततोज्ञात्वा सतीसर्वा प्राप्तास्ताच पितुर्गृहं ॥ १२ ॥ आजगा
माप्यनाहूता सासती स्वपितुर्गृहं ॥ ताभ्योहीनां पिताचक्रे सत्याः
पूजामसांप्रतं ॥ १३ ॥ ततोब्रवी त्सापितरं देवी क्रोधा दमर्षिता ॥
यवीयसीभ्यः श्रेष्ठाहं किन्नपूजसि मांविभो ॥ १४ ॥ असत्कृता मवि
ज्ञाय कृतवानसि गर्हितं ॥ अहंज्येष्ठा वरिष्टाच मांत्वं सत्कर्त्तु मर्ह
सि ॥ १५ ॥ एवमुक्तो ब्रवीद्देनां दक्षः संरक्तलोचनः ॥ त्वत्तः श्रेष्ठा
वरिष्टा श्च पूज्याबालाः सुतामम ॥ १६ ॥ तासां येचैव भर्त्तार स्ते

मे वज्ञमताः सति ॥ ब्रह्मिष्ठा श्च ब्रतस्था श्च महायोगाः सुधार्म्मिं
काः ॥ १७ ॥ गुणैश्चैवा धिकास्वाच सर्वैते त्र्यम्बकात्सति ॥ वसिष्ठो
त्रिः पुलस्त्यश्च अङ्गिराः पुलहःक्रतुः ॥ १८ ॥ भृगुर्मरीचि श्च तथा
श्रेष्ठाजामातरो मम ॥ तैश्चापि स्पर्द्धंतेसर्वो नित्यंतेचैवतंप्रति ॥ १९
तेनत्वां नवुभूषामि प्रतिकूलोहिमेभवः ॥ इत्युक्तवांस्तदादक्षः संप्रमू
ढेन चेतसा ॥ २० ॥ शापार्थमात्मनश्चैव येचोक्तावैमहर्षयः ॥ तथो
क्ता पितरं साबै क्रुद्धादेवी तमब्रवीत् ॥ २१ ॥ वाङ्मनः कर्म्मभि
र्यस्मा ददुष्टंतं विगर्हसि ॥ तस्मा त्त्यजाम्यहं देह मिमंतात तवात्म
जम् ॥ २२ ॥ तत स्तेनापमानेन सती दुःखा दमर्षिता ॥ अब्रवीद्व
चनं देवी नमस्कृत्य स्वयम्भुवे ॥ २३ ॥ यत्राह सुपपद्येहं पुनर्देहेन
भास्वता ॥ तत्राप्यहं मसम्मूढा सम्भूता धार्मिकी पुनः ॥ २४ ॥ ग
च्छेयं धर्मपत्नी च त्र्यम्बकस्य च धीमतः ॥ तत्रैवाथ समानाव्य यु
ज्यात्मानं समादधे ॥ २५ ॥ धारयामास चाग्नेयी धारणामात्म
नात्मनि ॥ तत आत्मानमुत्थाप्य वायुना समुदीरितः ॥ २६ ॥ सर्वा
ङ्गेभ्यो विनिःसृत्य वह्निर्भस्म चकारतां ॥ तदुपश्रुत्य निधनं सत्यादे
व्याः सशूलधृक् ॥ २७ ॥ संवादञ्च तयोर्बुद्ध्वा यथातथ्येनशंकरः ॥
दक्षस्य च ऋषीणा ञ्च चुकोप भगवान्प्रभुः ॥२८॥ यस्माद्त्वमता द
क्षा त्मत्कृतेना गतासती ॥ प्रशस्ता स्तेतराः सर्वाः स्वसुता भर्तृभिः
सह ॥ २९ ॥ तस्मा द्वैवस्वतेप्राप्ते पुनरेते महर्षयः ॥ उत्पत्स्यन्ति द्वि
तीयवै तवयज्ञे ह्ययोनिजाः ॥ ३० ॥ भूतेवै ब्रह्मणः सत्रे चाक्षुषस्या

न्तरेमनोः ॥ अभिव्याहृत्य सप्तर्षीन् दत्तं सोम्यशप त्पुनः ॥ ३१ ॥
भविता मानुषो राजा चाक्षुषस्यान्तरेमनोः ॥ प्राचीनवर्हिषः पौत्रः
पुत्र स्यापि प्रचेतसां ॥ ३२ ॥ दक्षइत्येव नाम्नात्वं मारिषायां जनि
ष्यसि ॥ कन्यायां शाखिना ञ्चैव प्राप्तेवै चाक्षुषेन्तरे ॥ ३३ ॥ अहं
तत्रापि तेविघ्नमाचरिष्यामि सुव्रत ॥ धर्मकामार्थ युक्तेषु कर्मस्वि
हपुनःपुनः ॥ ३४ ॥ ततोवै व्याहृतोदक्षो रुद्रं सोम्यशप त्पुनः ॥ य
स्मात्त्वं मत्कृतेक्रूर ऋषीन्व्याकृतवानसि ॥ ३५ ॥ तस्मात्सार्द्धंसुरैर्य
ज्ञे नत्वां यक्ष्यन्ति हिद्विजाः ॥ कृत्वाहुतिं तवक्रूर नत्वां यक्ष्यन्ति
कर्मसु ॥ ३६ ॥ इहैव वत्स्यसे लोके दिवं हित्वा युगक्षयात् ॥ ततो
देवैः शतैः सार्द्धं नेज्यते पृथिवीतले ॥ ३७ ॥ रुद्रउवाच ॥ चातु
र्वर्ण्यंतु देवानां तेचाप्यन्नं नभुञ्जते ॥ नभोक्षेसहितस्ते स्तुततो भो
क्ष्याम्यहं पृथक् ॥ ३८ ॥ सर्वेषामेव लोकाना मादिर्भूर्लोक उच्यते ॥
तमहं धारयाम्येकः स्वेच्छया नतवाज्ञया ॥ ३९ ॥ तस्मि न्धृते सर्व्व
लोकाः सर्वेतिष्ठन्ति शाश्वताः ॥ तस्मा दहं वसामीह सततं नतवा
ज्ञया ॥ ४० ॥ ततो भिव्याहृतो दक्षो रुद्रेणामित तेजसा ॥ स्वाय
म्भुवंतनुं त्यक्त्वा उत्पन्नो मानुषेष्विह ॥ ४१ ॥ यदा गृहपति र्दक्षो
यज्ञानामीश्वरःप्रभुः ॥ समस्तेनेह यज्ञेन सोयजद्दैवतैःसह ॥ ४२ ॥
अथदेवी सतीयातु प्राप्ता वैवस्वतेन्तरे ॥ मेनायां तामुमां देवीं जन
यामास शैलराट् ॥ ४३ ॥ सातु देवीसती पूर्वमासी त्पश्चा दुमा भ
वत् ॥ सहव्रता भवस्यैव नैतया मुच्यते भवः ॥ ४४ ॥ याव दिच्छति

संस्थानं प्रभुं मन्वन्तरेष्विह ॥ मारीचं कश्यपं देवी यथादितिरनु
व्रता ॥ ४५ ॥ साक्षं नारायणं श्रीस्तु मघवन्तं शचीयथा ॥ विष्णुंकी
र्तिरुमासूर्यं वशिष्टं चाप्यरुन्धती ॥ ४६ ॥ नैतांस्तु विजहंत्येता भ
र्तृन्देव्यः कथञ्चन ॥ एवं प्राचेतसो दक्षो जज्ञेवैचाक्षुषेन्तरे॥ ४७॥
प्राचीनवर्हिषः पौत्रः पुत्र श्चापि प्रचेतसां ॥ दशभ्यस्तु प्रचेतोभ्यो
मारिषायां पुनर्नृपः ॥ ४८ ॥ जज्ञे रुद्राभिशापेन द्वितीय इतिनः
श्रुतं ॥ भृग्वादयस्तु तेसर्वे जज्ञिरेवै महर्षयः ॥ ४९ ॥ आद्येत्रेतायु
गेप्राप्ते मनो वैवस्वतस्यह ॥ देवस्य महतो जज्ञे वारुणीं बिभ्रत स्त
नुम् ॥ ५० ॥ इत्येषोनुशयो ह्यासी त्तयो र्जात्यन्तरागतः ॥ शापेत
योर्वै दक्षस्य त्र्यम्बकस्य च धीमतः ॥ ५१ ॥ तस्मा न्नसंशयः कार्य्यो
वैरेष्विह कदाचन ॥ जात्यन्तरगतस्यापि भावितस्यशुभाशुभैः ॥ ५२
देहान्तरे कथन्तस्याः पुनर्देहं नमुञ्चति ॥ वासना नजहात्येव देहां
तरगतेष्वपि ॥ ५३ ॥ दुःखं त्वनुशयात्पुंस स्तत्र कार्य्या विजान
ता ॥ ५४ ॥ मुनयऊचुः ॥ कथंरूपेण सापूर्वं दक्षस्य दुहितासती ॥
त्यक्त्वादेहं पुनर्जाता गिरिराजगृहे प्रभो ॥ ५५ ॥ देहान्तरे पुन
स्तस्याः कथंदेहो बभूवह ॥ भवेन सहसंयोगः सम्वादश्च तयोःक
थम् ॥ ५६ ॥ स्वयम्बरः कथंवृत्त स्तस्मिन्निह हिमाचले ॥ विवाह
श्च जगन्नाथ सर्वैश्वर्यं समन्वितः ॥ ५७ ॥ तत्सर्वं विस्तरा द्ब्रह्मन्नू
वक्तुमर्हसि सांप्रतं ॥ श्रोतु मिच्छामहे पुण्यां कथां चाति मनोर
मां ॥ ५८ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूलाः कथां पापप्रणा

शिनीं ॥ उमाशंकरयोः पुण्यां सर्वकाम फलप्रदां ॥ ५९ ॥ कदा
चित्स्वगृहं प्राप्तं कश्यपं द्विपदाम्वरं ॥ अपृच्छ द्विमवा न्प्रीतो
लोकेख्यातिकरं हितं ॥ ६० ॥ केनाक्षयास्तु लोकाःस्युः ख्याति श्च
परमा मुने ॥ तथैव चार्चनीयस्त्वं सत्वे तत्कथयस्वमे ॥ ६१ ॥
कश्यप उवाच ॥ अपत्येन महाबाहो सर्वमेत दवाप्यते ॥ ममख्या
ति रपत्येन ब्रह्मणो ऋषिभिःसह ॥ ६२ ॥ किं न्नपश्यसि शैलेन्द्र
यतो माम्परि पृच्छसि ॥ वर्णयिष्यामि तच्चापि यतोदृष्टं पुराच
ल ॥ ६३ ॥ वाराणसी महंगच्छ न्नपश्यं संस्थितं दिवि ॥ विमानं
स्वनवद्दिव्य मनौपम्य महर्द्धिमत् ॥ ६४ ॥ तस्याधस्ता दार्त्तनादं ग
र्त्तस्थाने शृणोम्यहं ॥ तमहं तपसा ज्ञात्वा तत्रैवा न्तर्हितः स्थि
तः ॥ ६५ ॥ अथागात्तत्र शैलेन्द्र विप्रो नियमवा ञ्छुचिः ॥ तीर्था
भिषेक पूतात्मा परेतपसि संस्थितः ॥ ६६ ॥ अथ सोनुजगामा ग्रे
व्याघ्रेणा भीषितो द्विजः ॥ विवेश तंतदा देशं सगर्त्तो यत्र भूध
र ॥ ६७ ॥ गर्त्तोधो वीरणस्तम्बे लम्बमानां स्तथापितॄन् ॥ अद्रा
क्षयदार्त्तो दुःखार्त्ता स्तानपृच्छ च सद्विजः ॥ ६८ ॥ केयूयं वीर
णस्तम्बे लम्बमाना ह्यधोमुखाः ॥ दुःखिताःकेनमोक्ष श्च युष्माकं
भवितानघाः ॥ ६९ ॥ पितर ऊचुः ॥ वयंते कृतपुण्यस्य पितरः स
पितामहाः ॥ प्रपितामहा श्च पत्याम स्त्वदुष्टेनकर्मणा ॥ ७० ॥
बालकोयं महाभाग गर्त्तरूपेण संस्थितः ॥ त्वञ्चापि वीरणस्तंव
स्त्वयिलम्बामहे वयम् ॥ ७१ ॥ यावत्त्वं जीवसे विप्र तावदेव वयं

स्थिताः ॥ च्चतेत्वयिगमिष्यामोनरकंपापचेतसि ॥७२॥ यदित्वंदार
संयोगं कृत्वा पत्यगुणोत्तरं ॥ उत्पादयसि तेनास्मा न्मुच्यामो वय
मोक्षसः ॥ ७३ ॥ नान्येन तपसा पुत्र तीर्थानाञ्च फलेन च ॥ ए
तत्कुरु महाबुद्धे तारयस्व पितॄन् भयात् ॥ ७४ ॥ स तथेति प्रति
ज्ञाय आराध्य वृषभध्वजं ॥ पितॄनुभयात् समुद्धृत्य गणत्वंप्रपक्का
रवै ॥ ७५ ॥ स्वयं रुद्रस्यदयितः सुरेशोनाम नामतः ॥ सम्भूतो
विमलस्यैव रुद्रस्य गणपोऽभवत् ॥ ७६ ॥ तस्मा त्कृत्वा तपोघोर म
पत्यगुणवद्धृशं ॥ उत्पादयस्व शैलेन्द्र सुतांत्वंवरवर्णिनीं ॥ ७७ ॥
ब्रह्मोवाच ॥ सएवमुक्तो ऋषिणा शैलेन्द्रो नियमास्थितः ॥ तपश्च
काराप्यतुलं येनतुष्टिरभून्मम ॥ ७८ ॥ तमागत्य तदाचाहं वरदो
स्मीति चाब्रुवं ॥ ब्रूहि तुष्टोस्मि शैलेन्द्र तपसानेन सुव्रत ॥ ७९ ॥
हिमवानुवाच ॥ भगवन् पुत्रमिच्छामि गुणैः सर्वैरलंकृतं ॥ एवम्ब
रंप्रयच्छस्व यदितुष्टोसि नःप्रभो ॥ ८० ॥ तस्यतद्वचनं श्रुत्वा गिरि
राजस्य भोद्विजाः ॥ तदातस्मैवरंचाहं दत्तवान्मनसेप्सितं ॥ ८१ ॥
कन्याभविश्री शैलेन्द्र तपसानेन सुव्रत ॥ यस्याःप्रसादा त्सर्वत्र की
र्त्तिमाप्स्यसि शोभनां ॥ ८२ ॥ अर्च्चितः सर्वदेवानां तीर्थकोटिसमा
वृतः ॥ पावनस्यैव पुण्यस्य देवानामपि सर्वतः ॥ ८३ ॥ ज्येष्ठा च
साभविश्रीते अन्येचानुगते शुभे ॥ ब्रह्मोवाच ॥ एवमुक्त्वा ततस्वाहं
तत्रैवान्तर धीतवान् ॥ ८४ ॥ सोपिकालेन शैलेन्द्रो मेनायामुत्पा
दयत् ॥ अपर्णा मेकपर्णाञ्च तथाचैवैकपाटलां ॥ ८५ ॥ न्यग्रो

धसेकपर्णान्तु पाटल ञ्चैकपाटला ॥ अशित्वा त्वेकपर्णान्तु अनिकेतातपोऽचरत् ॥ ८६ ॥ शतंवर्षसहस्राणां दुश्चरं देवदानवैः ॥ आहार मेकपर्णेन एकपर्णा समाचरत् ॥ ८७ ॥ पाटलेन तथैकेन विदधे चैकपाटला ॥ पूर्णेवर्षसहस्रेतु आहारं तेप्रचक्रतुः ॥ ८८॥ अपर्णान्तु निराहारा तांमाताप्रत्य भाषत ॥ उमाइति निषेधन्ती ह्युमेत्येव तदाभवत् ॥ ८९ ॥ सातथोक्ता तयामात्रा देवी दुश्चरचारिणी ॥ तेनैव नाम्ना लोकेषु विख्याता सुरपूजिता ॥ ९० ॥ एतत्तु त्रिकुमारीकं जगत्स्थावर जङ्गमं ॥ एतासां तपसाहत्तं याव द्भूमिर्द्धरिष्यति ॥ ९१ ॥ तपःशरीरा स्ताः सर्वा स्तिस्रो योगसमन्विताः ॥ सर्वाश्चैव महाभागा स्तथाच स्थिरयौवनः ॥ ९२ ॥ त्रैलोक्यमातर श्चैव ब्रह्मचारिण्य एवच ॥ अनुगृह्णन्ति लोकांश्च तपसाखिल सर्वदाः ॥ ९३ ॥ उमा तासाम्बरिष्टा च ज्येष्टा च वरवर्णिनी ॥ महायोगबलोपेता महादेव मुपस्थिता ॥ ९४ ॥ दत्तक श्चोशनातस्य पुत्रः सभृगुनन्दनः ॥ असितस्यैकपर्णान्तु देवलं सुखुवे सुतं ॥ ९५ ॥ यातुतासां कुमारीणां तृतीया ह्येकपाटला ॥ पुत्रं सातमलर्कस्य जैगीषव्य मुपस्थिता ॥ ९६ ॥ तस्या स्च शंखलिखितौ स्मृतौ पुत्रावयोनिजौ ॥ उमातु यामयातुभ्यं कीर्त्तिता वरवर्णिनी ॥ ९७ अथतस्या स्तपोयोगा त्त्रैलोक्यमखिलं तथा ॥ प्रधूमितमिहालक्ष्य वच स्तामह मब्रुवं ॥ ९८ ॥ देवि किंतपसा लोकांस्तापयस्यसि शोभने ॥ त्वयाऽसृष्टमिदंसर्वं मांकृत्वा तद्विनाशय ॥ ९९

त्वंहि धारयसे लोकानिमा न्सर्वान् स्वतेजसा ॥ ब्रूहि किंते जगन्मातः प्रार्थितं संप्रसीदनः ॥ १०० ॥ देव्युवाच ॥ यदर्थं तपसोद्य च चराम्मो पितामह ॥ त्वमेव तत्वं जानीषे ततः पृच्छसि किंपुनः ॥ १०१ ॥ तत स्तामब्रुवं चाहं यदर्थं तप्यसे शुभे ॥ सत्वां स्वयमुपागम्य इहैव वरयिष्यति ॥ १०२ ॥ सर्वस्यच पतिःश्रेष्टः सर्वलोकेश्वरेश्वरः ॥ वयंसदेव तस्येमे वश्याः किंकरवादिनः ॥ १०३ ॥ सदेवदेवः परमेश्वर श्च स्वयम्भु रायास्यति वैतवान्तिकं ॥ उदाररूपो विकृतादिरूपः समानरूपोहि नयस्यकश्चित् ॥ १०४ महेश्वरः पर्वतलोकवासी चराचरेशः प्रथमो ऽप्रमेयः ॥ विनेन्दुना हीन्दुसमानवर्चसा विभीषणं रूपमिवाश्रितोयः ॥ १०५ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषि सम्वादे

द्वात्रिंशोऽध्यायः ३२ ॥

—:०:—

ब्रह्मोवाच ॥ ततस्ता मब्रुव न्देवा सदा गत्वातिसत्वरं ॥ देवि येनैवसृष्टासि नविना यत्त्वयाशुभे ॥ १ ॥ सभर्त्ता तवदेवेशो भविता मातपःकृथाः ॥ ततःप्रदक्षिणं कृत्वा देवा विप्रा गिरेःसुतां ॥ २ ॥ जग्मुस्वादर्शनं तस्याः साचापि विरराम ह ॥ सादेवी मुक्तमित्येव मुक्त्वातस्याश्रमं महत् ॥ ३ ॥ द्वारिजात मशोक ञ्च समुपा श्रित्य चस्थिता ॥ अथाया चन्द्रतिलक स्त्रिदशार्त्तिहरो हरः ॥ ४ ॥ विकृतं रूपमास्थाय ह्रस्वबाहुर एवच ॥ निभग्न नासिको भूत्वा कु

ध्वजः केशान्तपिङ्गलः ॥ ५ ॥ उवाच विकृताक्षस्तु देवित्वां वरयाम्य
हं ॥ अथोमायोग संसिद्धा ज्ञात्वा शंकरमागतं ॥ ६ ॥ अन्तर्भाव
विशुद्धात्मा क्रियातुष्टा नलिक्षया ॥ तमभ्यर्च्यार्घ्यपाद्याभ्यां मधुप
र्केण चैवह ॥ सम्पूज्य सुमनोभिस्तं ब्राह्मणं ब्राह्मणप्रिया ॥ ७ ॥
देव्युवाच ॥ भगव न्नस्वतंत्राहं पिता मेजननी तथा ॥ सप्रभु र्मम
दानेवै कन्याहं द्विजपुङ्गव ॥ ८ ॥ गत्वा याच स्वपितरं ममशैलेन्द्र
मव्ययं ॥ सचे द्ददाति मांविप्र तुभ्यं तद्रुचितं मम ॥ ९ ॥ ब्रह्मोवा
च ॥ ततः सभगवा न्देव स्तथैव विकृतः प्रभुः ॥ उवाच शैलराजा
नं सुतां मेयच्छ शैलप ॥ १० ॥ सतं विकृतरूपेण ज्ञात्वारुद्रमथा
व्ययं ॥ भीतः शापाच्च विमना इदंवचन मब्रवीत् ॥ ११ ॥ शैले
न्द्र उवाच ॥ भगव न्नावमन्योसि ब्राह्मणा भुविदेवताः ॥ मनीषि
तन्तु यत्पूर्वं तच्छृणुष्व महातप ॥ १२ ॥ स्वयम्बरो मेदुहितु र्भवि
ता विप्रपूजितः ॥ वरयेद्वं स्वयंभद्र सभर्त्तास्या भवेदिति ॥ १३ ॥
ब्रह्मोवाच ॥ तच्छ्रुत्वा शैलवचनं भगवान् वृषभध्वजः ॥ देव्याः स
मीपमागत्य इदमाह महामनाः ॥ १४ ॥ देवि पित्रा त्वनुज्ञातः
स्वयम्बर इतिश्रुतिः ॥ तत्रत्वंवरयित्रीयं सतेभर्त्ताकिलानघे ॥ १५ ॥
तदा गमिष्यामिपुन र्दुर्लभात्वं वरानने ॥ रूपवन्तं किमुत्सृज्य वृ
णीषे मादृशं कथं ॥ १६ ॥ ब्रह्मोवाच ॥ तेनोक्ता सातदा तत्र भा
वयन्ती तदीरितं ॥ भावञ्च रुद्रनिहितं प्रसादं मनसस्तथा ॥ १७ ॥
प्रासंप्योवाच देवेशं मातेभू द्बुद्धिरन्यथा ॥ अहं त्वां वरयिष्यामि

नान्यभूतं कथञ्चन ॥ १८ ॥ अथवा तेऽस्ति सन्देहो मयिविप्र कथ
ञ्चन ॥ इहैवत्वांमहाभाग वरयामि मनोरथं ॥ १९ ॥ ब्रह्मोवाच॥
गृहीत्वा स्तवकंपौष्पं हस्ताभ्यां साधुसम्मता ॥ स्कन्धे शम्भोः समा
धाय देवीप्राह हतोसिसे ॥ २० ॥ ततः सभगवान्देव स्तयाऽव्याहत
स्तदा ॥ उवाच तमशोकन्वै वाचा सञ्जीवयन्निव ॥ २१ ॥ यस्माच्च
तवपुष्पेण स्तवकेन हतोह्यहं ॥ तस्मात्त्वं जरयात्यक्त अमरः संभवि
ष्यसि ॥ २२ ॥ कामरूपो कामपुष्पः कामदो दयितोमम ॥ सर्वाभ
रणपुष्पौघः सर्वपुष्पफलोपगः ॥ २३ ॥ सर्वार्थभश्चद् स्वैव अन्हतस्त
वएवच ॥ सर्वगन्धश्च देवानां भविष्यसि हृढप्रियः ॥ २४ ॥ निर्भयः
सर्वलोकेषु चरिष्यसि सुनिव्रतः ॥ आश्रमं चेदमत्यर्थं चित्रकूटेति
विश्रुतं ॥ २५ ॥ योऽभियास्यति पुत्रार्थी सोऽश्वमेधमवाप्स्यति॥ यत्र
तत्र मृतस्यापि ब्रह्मलोकं गमिष्यति ॥ २६ ॥ यश्चात्र नियमै र्युक्तः
प्राणान् सम्यक् परित्यजेत् ॥ सदेव्या स्तपसायुक्तो महागणपतिर्भ
वेत् ॥ २७ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा तदादेवो ह्यश्वच्छद्रिमवस्तुतां॥
अन्तर्दधे जगत्स्रष्टा सर्वभूत महेश्वरः २८ ॥ साचदेवी गतेतस्मि
न् भगवत्यमितात्मनि ॥ तत एवोन्मुखी भूत्वा सभार्यां सम्विवेश
ह ॥ २९ ॥ उन्मुखीसा भवेत्तस्मि न्महेष्वासे प्रजापतौ ॥ निशेव
चन्द्ररहिता नवश्री विमनादता ॥ ३० ॥ अथ शुश्राव साशब्दं वा
लस्यार्त्तस्य शैलजा ॥ सरस्युदक सम्पूर्णे समीपे वाश्रमस्य च ॥ ३१ ॥
सकृत्वा बालरूपन्तु देवदेवः शिवस्तदा ॥ क्रीडितः सरसोमध्ये ग्रा

हग्रस्तो भवत्तदा ॥ ३२ ॥ योगमायां समास्थाय प्रिय व्चोद्भवकार
णं ॥ यद्रूपः सरसोमध्ये तद्रूपं समभाषत ॥ ३३ ॥ त्रातुमां कश्चि
दित्याह ग्राहेण हृतचेतसं ॥ धिक्कष्टं वालएवाह मप्राप्तार्थ मनोर
थः ॥ ३४ ॥ प्रयामि निधनं वक्त्रे ग्राहस्यास्य दुरात्मनः ॥ शोचामि
नस्वकंदेहं ग्राहग्रस्तं सुदुःखितं ॥ ३५ ॥ किन्तुशोचामि पितरंमा
तरंचतपस्विनीं ॥ श्रुत्वा ग्राहेणनिधनं प्राप्तंनिधनमुत्सुकौ ॥ ३६ ॥
प्रियपुत्रा वेकपुत्रौ प्राणान्नूनं त्यजिष्यतः ॥ अहोवत सुकष्टन्वै यो
हंवालो ऽकृतश्रमः ॥ ३७ ॥ आर्त्तं स्वातप सम्प्तानी यास्यामि निध
नोन्मुखः ॥ ३८ ॥ ब्रह्मोवाच ॥ श्रुत्वातु देवी तन्नादं विप्रस्या तस्य
शोभना ॥ उत्थाय प्रस्तुतातत्र यत्रतिष्ठतिसद्विजः ॥ ३९ ॥ सापश्य
दिंदुवदना वालकं चारुरूपकं ॥ ग्राहस्य मुखमापन्नं वेपमान मव
स्थितम् ॥ ४० ॥ सोपिग्राहवरःश्रीमान् दृष्ट्वा देवीमुपागतां ॥ तंग्र
हीत्वा द्रुतंयातो मध्यं सरसएवहि ॥ ४१ ॥ सकृष्यमाण स्तेजस्वी
नादमार्त्तं तथाकरोत् ॥ अथाह देवी दुःखार्त्ता वालंदृष्ट्वा महाव्र
ता ॥ ४२ ॥ ग्राहराज महासत्व वालकं ह्येकपुत्रकं ॥ विसृजेमंम
हादंष्ट्र क्षिप्रं भीमपराक्रम ॥ ४३ ॥ ग्राह उवाच ॥ योदेवि दिवसे
षष्ठे प्रथमं समुपैतिमां ॥ सआहारो ममपुरा विहितो लोककर्तृ
भिः ॥ ४४ ॥ सोयं ममहाभागे षष्ठेहनि गिरीन्द्रजे ॥ ब्रह्मणा वि
हितोनूनं नैनंमोक्ष्ये कथञ्चन ॥ ४५ ॥ देव्युवाच ॥ यन्मया हिमव
च्छृङ्गे चरितं तपउत्तमं ॥ तेन वालमिमं मुञ्च ग्राहराज नमोस्तु

ते ॥ ४६ ॥ ग्राह उवाच ॥ मुञ्चेयं तपसा देवि ब्राह्मणं वालं शुभानने ॥
तद्ब्रवीमि कुरुश्रेष्ठे तथा मोक्षमवाप्स्यति ॥ ४७ ॥ देव्युवाच ॥ महा
ग्राह वदस्वाशु यत्त्वता मविगर्हितं ॥ तत्कृतं नात्रसन्देहो यतोमेब्रा
ह्मणाः प्रियाः ॥ ४८ ॥ ग्राह उवाच ॥ यत्कृतं वैतपः किञ्चि द्भ
वत्या स्वयमुत्तमं ॥ तत्सर्वं मेप्रयच्छस्व ततोमोक्ष मवाप्स्यति ॥ ४९॥
देव्युवाच ॥ जन्मप्रभृति यत्पुण्यं महाग्राह कृतंमया ॥ तवसर्वं मया
दत्तं वालंमुंच महाग्रह ॥ ५० ॥ ब्रह्मोवाच ॥ प्रजज्वाल ततोग्राह
स्तपसातेन संहतः ॥ आदित्य इव मध्याह्ने दुर्निरीक्ष्य स्तदाभव
त् ॥ ५१ ॥ उवाचचेदं दुष्टात्मा देवीं लोकस्यधारिणीं ॥ देविकिंकृ
तमेताव द्विनिश्चित्य महामते ॥ ५२ ॥ तपसोप्यर्जनं दुःखं तस्यत्या
गोनशस्यते ॥ गृहाण तपएतच्च वालंचेमं सुमध्यमे ॥ ५३ ॥ तुष्टो
स्मिते विप्रभक्त्या विप्रंतस्मा ददामिते ॥ सात्वेवमुक्ता ग्राहेण उवा
चेदं महाव्रता ॥ ५४ ॥ देव्युवाच ॥ देहेनापि मयाग्राह रक्ष्योवि
प्रः प्रयत्नतः ॥ तपःपुन र्मयाप्राप्यं नचाप्यो ब्राह्मणःपुनः ॥ ५५ ॥
सुनिश्चितं महाग्राह कृतंवालस्य मोक्षणं ॥ नविप्रेभ्यस्तपःश्रेष्ठं श्रेष्ठा
मेब्राह्मणामताः ॥ ५६ ॥ दत्वाचाहं नगृह्णामि ग्राहेन्द्र विदितं
हिते ॥ नहिकश्चिन्नरो ग्राह प्रदत्तं पुनराहरेत् ॥ ५७ ॥ दत्तमे
तन्मयातुभ्यं नाददामिहि तत्पुनः ॥ त्वय्येव रमतामेत द्वाल श्चायं
विमुच्यतां ॥ ५८ ॥ तथोक्तस्तां प्रशस्याथ मुक्त्वावालं नमस्यच ॥ दे
वीमादित्य सग्राह स्तत्रैवान्तरधीयत ॥५९ ॥ वालोपि सरसस्तीरे

मुक्तोग्राहेण वैतदा ॥ स्वप्नलब्धद्रवार्थीव तत्रैवान्तरधीयत ॥ ६० ॥
तपसोपचयं देवी मत्वा हिमगिरीन्द्रजा ॥ भूयएवतपः कर्त्तुं मारे
मे नियमास्थिता ॥ ६१ ॥ कर्त्तुकामान्तपो भूयो ज्ञात्वातां शंकरः
स्वयं ॥ प्रोवाच वचनंविप्रा मारुथा स्तपदूत्युत ॥ ६२ ॥ मह्यमेतत्त
पोदेवि त्वयादत्तं महाव्रते ॥ तेनैव चाचयंतुभ्यं भविष्यति सहस्र
धा ॥ ६३ ॥ इतिलब्ध्वा वरं देवी तपसोचय मुत्तमं ॥ स्वयम्बर मु
दीचन्ती तस्थौ प्रीता मुदायुता ॥ ६४ ॥ इदंपठे योहिनरः सदैव
गिरीन्द्रकन्या चरणान्तु सम्यक् ॥ स्वदेहमेदं समवाप्य पूतो भवेन्न
योग्रस्तु कुमारतुल्यः ॥ ६५ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषिसम्वादे देवीस्वयम्बरं
नामत्रयस्त्रिंशोऽध्यायः ३३ ॥



ब्रह्मोवाच ॥ विस्तृते हिमवत्पृष्ठे विमानशतसंकुले ॥ अभवत्तुका
लेन शैलपुत्र्याः स्वयम्बरः ॥ १ ॥ अथ पर्वतराजोसौ हिमवा न्ध्या
नकोविदः ॥ दुहितु र्देवदेवेन ज्ञात्वा तदभिमंत्रितं ॥ २ ॥ जानन्न
पि महाशैलः स्वाचारलक्षणेच्छया ॥ स्वयम्बरं ततोदेव्याः स्वयंलो
केष्वघोषयत् ॥ ३ ॥ देवदानव सिद्धानां सर्वलोकनिवासिनां ॥ व
णुयात्तं महादेवं समक्षं यदिमेसुता ॥ ४ ॥ तदेव सुकृतं श्लाघ्यं त
पसोभ्युदयस्तथा ॥ इतिसंचिन्त्यशैलेन्द्रः कृत्वाहृदि महेश्वरं ॥ ५ ॥
आब्रह्मकेषु देवेषु देव्याः शैलेन्द्रसत्तमः ॥ कृत्वा रत्नाकुलं देशं

स्वयम्बर मचीकरत् ॥ ६ ॥ यथैव माघोभितमात्रएव स्वयम्बरे तत्र नगेन्द्र पुत्र्याः ॥ देवादयः सर्वजगन्निवासाः समाययु र्दिव्यगृहीत वेशाः ॥ ७ ॥ प्रफुल्लपद्मासन सन्निविष्टः सिद्धैर्वृतो योगिभि रप्रमेयैः ॥ विज्ञापितस्तेन मघीश्वराज्ञा गतस्तदाहं भिदशैरुपेतः ॥ ८ ॥ अष्टाणांसहस्रं सुरराट् सविभ्रद् दिव्याङ्गहारः स्मगुदात्तरूपः ॥ ऐरावतं सर्वगजेन्द्रमुख्यं स्रवन्मदासार कृतप्रवाहं ॥ ९ ॥ आरुह्य सर्वामरराट् सवज्रं विभ्रन्समागात् पुरतःसुराणां ॥ तेजः प्रभावाधिकतुल्यरूपी प्रोद्भासयन्सर्वदिशो विवस्वान् ॥ १० ॥ हैमंविमानं विधृतातपत्र मारूढमागात्त्वरितंजवेन ॥ मणिप्रदीप्तो ज्वलकुण्डलश्च वह्न्यर्कतेजः प्रतिमो विमाने ॥ ११ ॥ समभ्यगा त्कश्यपसूनुरेक मादित्यमध्यान्नगतो मरीचौ॥ पीताङ्गयष्टिः सुकृताङ्गहार स्तेजोवतांगोसहस्रप्रभावः ॥ १२ ॥ दण्डं समादाय कृतान्तआगा दारुह्य भीमंमहिषं जवेन ॥ महामहीध्रोच्छ्रित आतपत्रः स्वर्णादिरत्नार्चितचारुवेशः ॥ १३ ॥ समीरणः सर्वजगद्विभर्ता विमानमारुह्य समभ्यगाद्वि ॥ सन्तापयन्सर्वसुरासुरेशांस्तेजोधिक स्तेजसि सन्निविष्टः ॥ १४ ॥ वह्निःसमभ्येत्य सुरेन्द्रमध्ये ज्वलन्प्रतस्थे वरवेशधारी ॥ नानामणि प्रज्वलिताङ्गयष्टि र्जगत्सर न्दिव्यविमानमग्र्यम् ॥ १५ ॥ आरुह्य सर्वत्र विशोभिवेशः सएजएज स्त्वरितोभ्यगाच्च ॥ आप्याययन्सर्वसुरासुरेशान् कांत्या च वेशेन च चारुरूपः ॥ १६ ॥ ज्वलन्महारत्नविचित्ररूप विमानमारुह्य शशी समायात् ॥ श्यामाङ्गय

ष्टिः सुविभक्तवेशः सर्वाङ्गमाबद्ध सुगन्धमालः ॥ १७ ॥ तार्क्ष्यंसमा
रुह्य महेन्द्रकल्पं गदाधरोसौ त्वरितः समायात् ॥ अथाश्विनौ चा
पि भिषग्वरौद्वा वेकं विमानं त्वरयाधिरुह्य ॥ १८ ॥ मनोहरावुज्व
लचारुवेशा वाजग्मतु र्देववरौ सुधीरौ ॥ सहस्रभोगः स्फुरदग्निरू
पो विचित्रवेषो ज्वलनार्कतेजाः ॥ १९ ॥ साद्धं सनागैरपरैर्महात्मा
विमानमारुह्य समभ्यगा च ॥ दितेःसुतानाञ्च महासुराणां वज्रा
र्कशक्रानिलतुल्य भासां ॥ २० ॥ वरानुरूपं प्रविधायवेशं द्वन्द्वंसमा
गात् पुरतःसुराणां ॥ गन्धर्वराजः सच चारुरूपी विश्वावसु र्दिव्य
विमानचारी ॥ २१ ॥ गन्धर्वसंघैः सहितोप्सरोभिः स्वयम्बरार्थं तु
समाजगाम ॥ अन्येच देवा स्त्रिदिवौकसो याः पृथक् पृथक् चारुवि
चित्रवेशाः ॥ २२ ॥ आजग्मु रारुह्य विमानपृष्ठं गन्धर्वयक्षोरगकि
न्नराश्च ॥ राज्ञांपति स्तत्रसुरेन्द्रमध्ये राजाधिराजो धिकतुल्यमू
र्त्तिः ॥ २३ ॥ आज्ञावलैश्वर्यकृत प्रमोदे विशाधिका च्चैव सुराधि
कारः ॥ हेतु स्त्रिलोकस्य जगत्प्रसूति र्मातास्च तेषां ससुरासुरा
णां ॥ २४ ॥ पत्नीच शम्भोः पुरुषस्य धीमतो गीतापुराणे प्रकृतिः
पराया ॥ दक्षस्यकोपा द्धिमव त्गृहेशा कार्य्यार्थमाया त्त्रिदिवौकसां
हि ॥ २५ ॥ विमानपृष्ठे मणिहेमतुष्टे स्थिताचल चामरवीजिता
ङ्गी ॥ सर्वर्त्तुपुष्पां सुसुगन्धमालां प्रगृह्यदेवी प्रसभंप्रतस्थे ॥ २६ ॥
ब्रह्मोवाच ॥ मालांप्रगृह्य देव्यान्तु स्थितायां देवसंसदि ॥ शक्रादै
रागतैर्देवैः स्वयम्बर उपागते ॥ २७ ॥ देव्या जिज्ञासया शम्भुर्भू

त्वापञ्चशिखःशिशुः॥ उत्सङ्गतलसंसुप्तो बभूवषममहाद्युतिः॥ २८
ततोददर्शतं देवी शिशुं पञ्चशिखं स्थितं॥ ज्ञात्वा च सर्वं वचना
ज्जहृषे प्रीतिसंयुता॥ २९॥ अथ साशुद्धसंकाशा कांक्षितं प्राप्य स
त्पतिं॥ निष्टत्तैव तदालक्ष्मी कृत्वासा हृदितंविभुम्॥ ३०॥ ततोदृ
ष्ट्वाशिशुं देवा देव्या उत्सङ्गवर्त्तिनं॥ कोयमत्रेति संमंत्र्य चुक्रुशु र्भृ
शमोहिताः॥ ३१॥ वज्रमाहारय त्तस्य वाङ्कमुत्क्षिप्य वृत्रहा॥
सबाहुरुत्थित स्तस्य तथैवसमतिष्ठत॥ ३२॥ स्तम्भितः शिशुरूपेण
देवदेवेन शम्भुना॥ वज्रं क्षेप्तुं नोशशाक वृत्रहाचलितुन्नच॥ ३३॥
भगोनाम ततोदेव आदित्यः काश्यवोबली॥ उत्क्षिप्य स्वायुधंदीप्तं
क्षेप्तुमिच्छन्हि मोहितः॥ ३४॥ तस्यापि भगवा न्बाहुं तथैवास्तम्भ
यद्विभुः॥ शिरःसंकम्पयन् विष्णुः सक्रोधः समुदैक्षत॥ ३५॥ ब
लंतेजश्च योगञ्च तथैवास्तम्भय द्विभुः॥ अथतेषु स्थितेष्वेवं मन्युम
न्यसुरेषु च॥ ३६॥ अहं परमसंविग्नो ध्यानमास्थाय शंकरं॥ बुद्ध
वान्देवदेवेश मुमोत्सङ्ग समाश्रितम्॥ ३७॥ ज्ञात्वाहं परमेशानं
शीघ्रमुत्थायसादरं॥ ववन्देचरणंशम्भोः स्तुतवांस्तमहंद्विजाः॥ ३८
पुराणैः सामसंगीतैः पुण्याख्यै र्गुह्यनामभिः॥ अज स्त्वमजरो दे
वो विभुःस्रष्टा परात्परं॥ ३९॥ प्रधानपुरुष स्त्वंहि ब्रह्मध्येयं यद
क्षयम्॥ अन्वतं परमात्मान मीश्वरं कारणमद्भुत्॥ ४०॥ ब्रह्मह्य
क्प्रकृतेः स्रष्टा सर्वज्ञ स्प्रकृतेःपरः॥ इयञ्च प्रकृति र्देवी सदाते सृ
ष्टिकारिणी॥ ४१॥ पत्नीरूपं समास्थाय जगत्कारण मागता॥

नमस्तुभ्यं महेशान देव्याश्चैव सदानमः ॥ ४२ ॥ प्रसादा त्तवदेवेति
योगाच्च उमयाप्रभाः ॥ देवाद्यास्तु इमेसृष्टा मूढा स्त्वद्योगमाय
या ॥ ४३ ॥ कुरुप्रसादमे तेषां यथापूर्वं भवन्त्विमे ॥ ततएवमहं वि
प्रा विज्ञाप्य परमेश्वरं ॥ ४४ ॥ स्तम्भितान्सर्वदेवांस्ता निद र्श्याहं
तथोक्तवान् ॥ मूढास्तु देवताःसर्वा नैनं बुध्यत शंकरं ॥ ४५ ॥ ग
च्छध्वं शरणं सर्वे शीघ्रञ्चैव महेश्वरं ॥ सार्द्धंभवान्या देवेशं परमा
त्मान मव्ययम् ॥ ४६ ॥ ततः संस्तम्भिताः सर्वे तथैव त्रिदिवौकसः ॥
प्रणेमु र्मनसाःसर्वे भावशुद्धेन चेतसा ॥ ४७ ॥ अथतेषां प्रसन्नोऽभू
द्देवदेवो महेश्वरः ॥ यथापूर्वं चकाराशु देवतानां तनूस्तदा ॥ ४८ ॥
ततएवं प्रवृत्तेतु सर्वदेव निवारणे ॥ वपुश्चकार देवेश स्त्र्यक्षं परम
मद्भुतम् ॥ ४९ ॥ तेजसातस्य तेसर्वा श्चक्षुरप्रार्थय न्विभुम् ॥ तेभ्यः
सपरमञ्चक्षु स्त्वदद दृष्टिशक्तिमत् ॥ ५० ॥ प्रादा त्परमदेवेशोप
श्यामस्ते तदाप्रभुं ॥ तेदृष्ट्वा परमेशानं तृतीयेचक्षुधारिणम् ॥ ५१ ॥
तमज्ञाया मेनिरेदेवं सर्वएव सुरेश्वराः ॥ तस्यदेवी तदादृष्टा समक्षं
त्रिदिवौकसां ॥ ५२ ॥ पादयोः स्थापयामास स्रङ्माला ममितद्यु
तेः ॥ साधुसाध्विति संप्रोच्य देवतास्ताः पुनर्विभुम् ॥ ५३ ॥ सहदे
व्या नमश्चक्रुः शिरोभि र्भूतलाश्रितैः ॥ अथास्मि न्नन्तरे विप्रा स्त
मवं दैवतैःसह ॥ ५४ ॥ हिमवन्तं महाशैल मुक्तवांश्च महाद्युतिं ॥
श्लाघ्यः पूज्यश्च सर्वेषां मान्योसि भूधर ॥ ५५ ॥ शर्वेण सह
सम्बन्धो यस्यतेऽभ्युदयो महान् ॥ क्रियतां स्वस्तिउद्वाहः किमर्थंस्थी

यतेपरं ॥ ५६ ॥ ततःप्रणम्य हिमवान् मांतदा प्रत्यभाषत ॥ त्वमेव
कारणन्देव यज्ञस्योदयं मम ॥ ५७ ॥ प्रसीद सहसोत्पत्ति हेतुस्वा
पित्वमेवहि ॥ उद्वाहेतु यथा याद्दक् तद्विधत्स्व पितामह ॥ ५८ ॥
ततएवम्वचः श्रुत्वा गिरिराजस्य भोद्विजाः ॥ उद्वाहः क्रियतां देव
उद्वाह ब्मोक्तवान् विभुं ॥ ५९ ॥ मामाह शंकरो देवो यथाप्रभृति
लोकपः ॥ तत्क्षणा च ततोविप्रा श्रक्षाभि र्निर्मितं परम् ॥ ६० ॥
उद्वाहार्थं महेशस्य नानारत्नोप शोभितं ॥ रत्नानि निर्ममे कश्चि
द्धेममौक्तिक मेवच ॥ ६१ ॥ मूर्त्तिमन्त मुपागम्य शतज्वक्रुः पुरोत्त
मं ॥ चित्रमारकती भूमिः सुवर्णस्तम्भ भूषिता ॥ ६२ ॥ भास्वत्स्फ
टिकभित्तौभि र्मुक्ताहारावलम्बिता ॥ तस्मिन्द्वारि पुरंरम्यं उद्वाहा
र्थं विनिर्मितम् ॥ ६३ ॥ शुशुभे देवदेवस्य महेशस्य महात्मनः ॥ सो
मादित्यौ समन्तात्र तापयन्तौ महामणौ ॥ ६४ ॥ सौरभेयं मनोरम्यं
गन्धमादाय मारुतः ॥ प्रववौसुखसंस्पर्शो भवभक्तिंप्रदर्शयन् ॥ ६५
समुद्रास्तत्र चत्वारः शक्राद्या स सुरोत्तमाः ॥ देवनद्यो महानद्यः
सिद्धा मुनय एवच ॥ ६६ ॥ गन्धर्वाप्सरसः सर्वे नागयक्षाः सराक्ष
साः ॥ श्रौदकाः खेचरा स्वान्ये किन्नरा देवचारणाः ॥ ६७ ॥ तुम्बु
रु नारदो हाहा हूहू सैवतु सामगाः ॥ रत्नान्यादाय चान्यैस्र त
त्राजग्मु स्तदापरम् ॥ ६८ ॥ ऋषयः कुशलास्तत्र वेदगीता स्तपोध
नाः ॥ पुण्याहोद्वाहिकान् मंत्रान् जेपुः संहृष्टमानसाः ॥ ६९ ॥ ज
गतो मातरः सर्वा देवकन्याश्च कृत्स्नशः ॥ गायन्ति हर्षिताः सर्वा

उद्वाहे परमेष्टिनः ॥ ७० ॥ ऋतवःषट् समन्तत्र नानागन्ध सुखाव
हाः ॥ उद्वाहे शंकरस्येति मूर्त्तिमन्त उपस्थिताः ॥ ७१ ॥ नीलजी
मूतसंकाशै रन्धकारप्रवर्षिभिः ॥ केकायमानैः शिखिभि र्न्रृत्यमानै
श्च सर्वशः ७२ ॥ विलोलपिङ्गलस्पष्ट विद्युल्लेख विलासिता ॥ क्रुद्ध
दापीड शुक्लाभि र्वलाकाभि श्च शोभिता ॥ ७३ ॥ प्रत्यग्रश्वन्तान
शिलींध्रकन्धरा लताकुला व्युन्नतपल्लवा शुभा ॥ शुभाम्बुधारा प्रव
यैः स्वरैर्धितै र्मंदालसै र्भेकगणै श्च नादिता ॥ ७४ ॥ प्रियेषु कालो
द्धृतमानसानां मनस्विनीनामपि कामिनीनां ॥ मयूरकेकाभि रुतैः
क्षणेन मनोहरै र्मानविभंगहेतुभिः ॥ ७५ ॥ यथाग्निवर्णोत्पलपाद
मूर्त्तिना सुवर्णकांत्या कुटिलेन सर्वतः ॥ पयोदसंघातसमीपवर्त्तिना
महेन्द्रचापेन भृशंविराजता ॥ ७६ ॥ विचित्रपुष्पै श्च रसैः सुगन्धि
भि र्घनाम्बुसम्पर्कतया सुशीतलैः ॥ विकम्पयन्ती पवनै र्मनोहरैःसु
राङ्गनाना मलकावलीशुभा ॥ ७७ ॥ गर्जत्पयोदस्थगितें दुविम्बा
नवाम्बुसिक्तो द्धृतपारविम्बा ॥ निरीक्षिता स्वादरसुत्सुकाभि र्निः
श्वासधूता पथिकागताभिः ॥ ७८ ॥ हंसनूपर शब्दाढ्या समुन्न
तपयोधरा ॥ चलद्विद्युल्लताहारा स्पष्टपद्मविलोचना ॥ ७९ ॥ श्व
सितजलदवृन्दा धारचित्राम्बुहंसा गलितसलिलधारा यातकम्पो
त्पलाक्षी ॥ सरसकुसुमरेणुः क्लृप्तसर्वाङ्गशोभा गिरिदुहितृ विवाहे
प्रावृडाविर्बभूव ॥ ८० ॥ मेघकञ्चुकनिर्मुक्ता पद्मकोषोद्गवस्तनी ॥
हंसनूपुरनिर्ह्रादा शरद्रम्यदिगन्तरा ॥ ८१ ॥ विस्तीर्ण पुलिनश्रो

णी कूजल्लारव मेखला ॥ प्रोत्फुल्लेन्दीवरश्याम विलोचनमनोह
रा ॥ ८२ ॥ पक्वविम्बाधरपुटा कुन्ददन्तप्रहासिनी ॥ नवश्यामल
ताश्यामा कुन्ददन्ती परिस्कृता ॥ ८३ ॥ चन्द्रांशुहारवर्य्येण कंठो
रस्थलजालिना ॥ प्रह्लादयंती नारीव सर्वेषां त्रिदिवौकसां ॥८४॥
समदालिकुलोद्गीत मधुरस्वरभाषिणी ॥ चलत्कुमुदसंघात चारु
कुण्डलशोभिनी ॥ ८५ ॥ रक्ताशोकप्रशाखोत्थ पल्लवाङ्गुलि धारि
णी ॥ तत्पुष्पसञ्चयमयै र्वासोभिः समलंकृता ॥ ८६ ॥ रक्तोत्पला
ग्रचरणा जातीपुष्पनखावली ॥ कदलीस्तम्भचारूरुःशशाङ्कवदना
तथा ॥ ८७ ॥ सर्वलक्षणसम्पना सर्वालङ्कारभूषिता ॥ प्रेम्णास्पृश
तिकान्तेव सानु रागमनोरमा ॥ ८८॥ निर्मुक्ताषितमेघकञ्चुकपुटा
पूर्णेन्दुविम्बानना मीनांभोजविलोचना रविकरप्रोद्भिन्नपद्मस्तनी॥
नानापुष्परजः सुगन्धिपवन प्रह्लादिनी चेतसां तत्रासीत्कलहंस नू
पुररवा देव्याविवाहे शरत् ॥ ८९ ॥ अत्यर्थं शीतलाम्भोभिः प्लावय
न्तौ दिशस्तदा ॥ ऋतू हेमन्त शिशिरा वाजग्मतुरतियुती ॥ ९० ॥
ताभ्यामृतुभ्यां संप्राप्तो हिमवान्सनगोत्तमः ॥ प्रालेयचूर्णवर्षाभ्यां चि
प्रप्रेष्य इवावभौ ॥ ९१ ॥ तेन प्रालेयवर्षेण घनेनैव हिमालयः ॥
अगाधेन तदा रेजे क्षीरोद इव सागरः ॥ ९२ ॥ ऋतुपर्य्यायसंप्राप्तो
वभूव समहाद्युतिः ॥ साधूपचारा त्सहसा कृतार्थ इव दुर्ज्जनः ॥ ९३ ॥
प्रालेयपटलच्छन्नैः शृङ्गैस्तु शुशुभे नगः ॥ छत्रै रिव महाभोगै श्चा
मरैः पृथिवीपतिः ॥ ९४ ॥ मनोभवोद्रेककराः सुराणां सुराङ्गना

ना न्व सुज्ञः समीराः ॥ स्वच्छाम्बुपूर्णा स्व तथानलिन्यः पद्मोत्पला नां कुसुमैरुपेताः ॥ ९५ ॥ विवाहे गुरुकन्यायो वसन्तः समगाद नु ॥ ९६ ॥ ईषल्लसुद्भिन्नपयोधराग्रा नार्य्योयथा रन्यतरा वभूवुः ॥ नात्युष्णशीतानि सरः पयान्सिकिञ्जल्कचूर्णैः कपिलीकृतानि ॥ चक्रा ह्वयुग्मो रुपनादिते स्व पपुः प्रहृष्टाः सुरदन्तिमुख्याः ॥ ९७ ॥ प्रिय ङ्गुंसूततरव सूतांश्चापि प्रियङ्गवः ॥ तर्जयन्त इवान्योन्यं मञ्जरीभि श्चकाशिरे ॥ ९८ ॥ हिमवच्छृङ्गशृङ्गेषु तिलकाः कुसुमोत्करैः ॥ शि शुभिः कार्य्यमुद्दिश्य वृद्धाइव समागताः ॥ ९९ ॥ फुल्ला शोकलता स्तत्र रेजिरे शालसंश्रिताः ॥ कामिन्यइव कान्तानां कण्ठालम्बित मूर्त्तयः ॥ १०० ॥ तस्मिन्नृतौ चूतकदम्बनीपा स्तालास्तमालाः सर लाः कपित्थाः ॥ अशोकसर्ज्जार्जुनकोविदाराः पुन्नाग नागेश्वरक र्णिकाराः ॥ १०१ ॥ लवङ्गकाला गुरुसप्तपर्णा न्यग्रोधशोभा जन नारिकेलाः ॥ वृक्षास्तथान्ये फलपुष्पवन्तो दृश्यन्तिसर्वंत्र मनोहरा श्च ॥ १०२ ॥ जलाशया स्चैव सुवर्णतोया श्चक्राह्वकारंडव हंसजु ष्टाः ॥ कोयष्टिदात्यूह वलाकयुक्ता दृश्यन्ति नीलोत्पल पद्म व र्णाः ॥ १०३ ॥ खगा स्व नानाविध भूषितांगा दृश्यन्ति वृक्षेषु वि चित्रपक्षाः ॥ क्रीडाप्रयुक्ता स्त्वग्रपूरयन्तः कुर्वंति शब्दा न्मदनेरि तांगाः ॥ १०४ ॥ तस्मिन् गिरावद्रिसुता विवाहे ववुश्चवाताः सुख शीतलांगाः ॥ पुष्पाणि शुभ्राण्यपि पातयन्तः शनैर्नगेभ्यो मलया द्रिजाताः ॥ १०४ ॥ तथैव सर्वे ऋतव स्व पुण्या श्चकाशिरेऽन्योन्य

विमिश्रितांगाः॥ येयस्य लिङ्गानि च कीर्त्तितानि तेतत्र दृश्यन्तिम
नोहराणि॥ १०६॥ समदालिकुलोङ्गीत लताकुसुमसञ्चयाः॥ प
परस्परं हिमालय्यो भीषयन्त्यो विरेजिरे॥ १०७॥ नीलानि नी
लाम्बुरुहैः पयांसि गौराणि शुक्लैश्च मृणालदण्डैः॥ रक्तैश्च रक्तानि
तथासितानि मत्तद्विरेफावलिपत्रजुष्टैः॥ १०८॥ हैमानि विस्तीर्ण
जलेषु केचि न्निरन्तरं चाल्पसरःसु केचित्॥ वैडूर्य्यनानालिसरःसु
केचित् प्रजज्ञिरे पद्मवनानि सर्वतः॥ १०९॥ वाप्य स्तत्राभवन्
रम्याः कमलोत्पल भूषिताः॥ नानाविहंग संघुष्टा हैमसोपान पंक्त
यः॥ ११०॥ शृंगाणि तस्यतुगिरेः कर्णिकारैः सुपुष्पितैः॥ समु
च्छ्रितान्यविरलै र्हिमानीवपक्ष्विजाः॥ १११॥ ईषदुद्भिन्नकुसुमैः
पाटलैश्चैव पाटलाः॥ संवभुर्दिशःसर्वाः पवनाकम्पिमूर्त्तिभिः॥११२
कृष्णास्तु पिंगा नीलाभा नीला शोकमहीरुहाः॥ गिरौ दृष्टा वि
फुल्लाश्च परस्पर्द्धन्तेपरस्परं॥११३॥ चारुरागनिघुष्टानि किंशुकानां
वनानि च॥ पर्वतस्य नितम्बेषु सर्वेष्वेवहि रेजिरे॥ ११४॥ तमा
लगुल्मै स्तस्यासौ च्छोभा हिमवत स्तदा॥ नीलजीमूत संघातै
र्निलीनैरिव सन्धिषु॥ ११५॥ निकामपुष्पैः सुविशालशाखैः समु
च्छ्रितै श्चम्पकचन्दनै श्च॥ प्रमत्तपुंस्कोकिल संप्रलापै र्हिमाचलो
तीव तदा रराज॥ ११६॥ शब्दंश्रुत्वा ऋतुमदकलं सर्वतः कोकि
लानां वल्गत्पक्षाः सुमधुरतरं नीलकण्ठा विनेदुः॥ तेषां शब्दै रु
पचितवनः पुष्पचापेषु हस्तः सञ्जीभूत स्त्रिदशवनिताः वेद्मसंगेष्व

नङ्गः ॥ ११७ ॥ षट्सूर्य्यातपे चापि प्रायसोष्ण जलाशयः ॥ देवी
विवाहसमये श्रीष्मआगा द्धिमाचलं ॥ ११८ ॥ सर्वापि तरुभिस्त
त्र लताकुसुम सञ्चयैः ॥ शोभयामास शृंगाणि प्रालेयाद्रेः समंत
तः ॥ ११९ ॥ तस्यापि च कृतोस्तत्र वायवः सुमनोहराः ॥ ववुःपा
टलविस्तीर्णं कदम्बार्जुनगन्धयः ॥ १२० ॥ वाप्यः प्रफुल्लपद्मा स्च कु
सुमारुणमूर्त्तयः ॥ अभजंस्तटघुष्टानि कलहं सकदम्बकाः ॥ १२१
तथा कुरवका स्चापि कुसुमावृतमूर्त्तयः ॥ सर्वेषु नगशृंगेषु भ्रमराव
लिसेविताः ॥ १२२ ॥ वकुलास्च निलंवेषु विशालेषु मदोत्कटः ॥ स
सृजुस्च मनोज्ञानि कुसुमानि समन्ततः ॥ १२३ ॥ इति कुसुम वि
चित्रसर्वहत्ता विविधविहङ्गमनादरम्यदेशाः ॥ हिमगिरितनया वि
वाहभूत्यै समुपययु र्ऋतुभि र्मुनिप्रवीराः ॥ १२४ ॥ ततएवं प्रवृत्तेतु
सर्वभूत समागमे ॥ नानावाद्य शताकीर्णे विवाहार्थं द्विजाः स्व
यं ॥ १२५ ॥ शैलपुत्री मलंकृत्य योग्याभरणसम्पदा ॥ पुरं प्रवेश
यामासुः स्वयमादाय भोद्विजाः ॥ १२६ ॥ ततस्तु पुनरेवेश मह
त्त्वेनोक्तवान्विभुं ॥ हविर्जुहोतु वह्नौतु उपाध्यायपदे स्थितः ॥ १२७
मामाह शंकर स्चैव देवदेवो जगत्पतिः ॥ यद्यदिष्टं सुरेशान तत्कु
रुष्व यथेप्सितं ॥ १२८ ॥ कर्त्तास्मि वचनंसर्वं ब्रह्मन्स्तवजगद्विभो ॥
ततस्त्वाहं प्रहृष्टात्मा कुशानादायसत्वरं ॥ १२९ ॥ हस्तंदेवस्यदेव्या
स्च योगवन्धेन युक्तवान् ॥ ज्वलन स्च स्वयन्तत्र कृताञ्जलिपुटः स्थि
तः ॥ १३० ॥ श्रुतिगीतै र्महामन्त्रै र्मूर्त्तिमद्भि रुपस्थितैः ॥ यथोक्त

विधिना हुत्वा सर्पिं स्तदव्वलं हविः ॥ १३१ ॥ ततस्तं ज्वलनं देवं कारयित्वाप्रदक्षिणं ॥ मुक्त्वा हस्तसमायोगं सहितःसर्वदैवतैः ॥ १३२ पुष्पैश्च मानसैः सिद्धैः प्रहृष्टेनान्तरात्मना ॥ इत्तउद्वाह कालेतु प्रणो मुख्य ब्रषध्वजम् ॥ १३३ ॥ योगिनैव तयोर्विप्रा स्तदुमापरमेशयोः ॥ उद्वाहः सपरोहत्तो यन्द्वेत्तविदुः क्वचित् ॥ १३४ ॥ इतिवः सर्वमा ख्यातं स्वयम्बरमिदंशुभं॥उद्वाहश्चैवदेवस्य श्रुणुध्वं परमाद्भुतं ॥ १३५॥

इत्यादि ब्रह्मपुराणेस्वयंभुऋषिसम्वादे उमाशंकरयोर्विवाहो नाम चतुस्त्रिंशोऽध्यायः ३४ ॥

—:(०):—

ब्रह्मोवाच ॥ अथहत्ते विवाहेतु भवस्यामिततेजसः ॥ प्रहर्षम तुलंगत्वा देवाः शक्रपुरोगमाः ॥ १ ॥ तुष्टुवुर्वाग्भिरिष्टाभिः प्रणेमुस्तेमहेश्वरं ॥ नमः पर्वतलिङ्गाय पर्वतेशाय तेनमः ॥ २ ॥ नमः कीर्त्तिविनाशाय दात्रेच शुभसम्पदां ॥ नमो नीलशिखण्डाय अम्बिकापतये नमः ॥ ३ ॥ नमः पवनरूपाय शतरूपाय वैनमः ॥ नमोभैरवरूपाय विरूपनयनाय च ॥ ४ ॥ नमः सहस्रनेत्राय सहस्रचरणाय च ॥ नमो देवस्वरूपाय देवाङ्गाय नमोनमः ॥ ५ ॥ विष्टम्भनाय शक्रस्य वाहो वेंदमिताय च ॥ चराचराधिपतये शमनाय नमो नमः ॥ ६ ॥ सलिलाश्रय लिङ्गाय युगान्ताय नमोनमः ॥ नमः कपालमालाय कपालसूत्रधारिणे ॥ ७ ॥ नमः कपालहस्ताय दण्डिने गदिने नमः ॥ नम स्त्रैलोक्यनाथाय पशुलोकरताय च ॥ ८ ॥ न

मः खट्वाङ्गहस्ताय प्रमथार्त्तिहराय च ॥ नमो यज्ञशिरोहर्त्रे कृष्णा
केशापहारिणे ॥ ९ ॥ भगनेत्रनिपाताय पूष्णोदन्तहराय च ॥ न
मः पिनाकशूलासि खड्गमुद्गरधारिणे ॥ १० ॥ नमोस्तु कालका
लाय तृतीयनयनायच ॥ अन्तकान्तकृतेचैवं नमः पर्वतवासिने ॥ ११ ॥
सुवर्णरेतसे चैव नमः कुण्डलधारिणे ॥ दैत्यानां योगनाशाय यो
गिने गुरवे नमः ॥ १२ ॥ शशाङ्कादित्यनेत्राय ललाटनयनायच ॥
नमः श्मशानरतये श्मशानवरदाय च ॥ १३ ॥ नमोऽवनतनाथाय
त्र्यंबकाय नमोनमः ॥ अशनीशतहासाय पर्वतेशाय वैनमः ॥ १४॥
गृहस्थाय नमोनित्यं जटिले ब्रह्मचारिणे ॥ नमो मुण्डार्द्धमुण्डाय
पशूनां पतये नमः ॥ १५ ॥ सलिले तप्यमानाय योगैश्वर्य्यप्रदायच ॥
नमः शान्ताय दान्ताय प्रलयोत्पत्तिकारिणे ॥ १६ ॥ नमोस्तु ग्रह
कर्त्रे च स्थितिकर्त्रे नमोनमः ॥ नमो रुद्रायवसवे आदित्यायाश्वि
ने नमः ॥ १७ ॥ नमः पित्रेथ साध्याय विश्वेदेवाय वैनमः ॥ महा
देवाय चित्राय शूलिने च नमोनमः ॥ १८ ॥ प्रधानायाप्रमेयाय
कार्य्याय कारणाय च ॥ पुरुषाय नमस्तेस्तु पुरुषेच्छाकरायच ॥ १९ ॥
नमः पुरुषसंयोग प्रधानगुणकारिणे ॥ प्रवर्त्तकाय प्रकृतेः पुरुषस्य च
सर्वशः ॥ २० ॥ कृताकृतस्य संकर्त्रे फलसंयोगदाय च ॥ सर्वज्ञाय
च सर्वत्र नमो नियत कारिणे ॥ २१ ॥ नमो वैशसकर्त्रे च गुणा
नां वृत्तिदाय च ॥ नमस्ते देवदेवेश नमस्ते भूतभावन ॥ शिव सौ
म्यमुखो दृष्टा भवसौम्यहि नःप्रभो ॥ २२ ॥ ब्रह्मोवाच ॥ एवं सभ

गवान्देवो जगत्पति रुमापतिः ॥ स्तूयमानःसुरैः सर्वैं रमरानिदम
ब्रवीत् ॥ २३ ॥ रुद्र उवाच ॥ दृंष्ट्रासुख स सौख्य स देवाना मस्मि
वैसुराः ॥ वरान् ब्रूत यथेष्ट च्च दातास्मि तदसंशयम् ॥ २४ ॥ तत
स्ते प्रणताः सर्वे सुरा ऊचु स्त्रिलोचनं ॥ तदेव भगवान् हस्ते वर
एवावतिष्टते ॥ २५ ॥ यदाकार्य्यं तदा नस्त्वं दास्यसेवरमीप्सितं ॥
एवमस्त्विति तानुक्त्वा विसृज्य च सुरान् हरः ॥ २६ ॥ लोकांश्च प्र
मथैः सार्द्धं विवेश भवनं ततः ॥ ॥ २७ ॥ यस्तु हरोत्सव मद्भुतमेतं
गायति दैवतविप्र समक्षं ॥ संप्रतिरूप गणेशसमानो देहविपर्य्यय
मेत्य सुखीस्यात् ॥ २८ ॥ ब्रह्मोवाच ॥ विप्रवर्य्या स्तवं हीमं शृणुया
द्यःपठेत वा ॥ ससर्वलोकगो देवैः पूज्यते ह्यसुरादिभिः ॥ २९ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषिसम्वादे पंचत्रिंशो
ऽध्यायः ३५ ॥

—:०:—

ब्रह्मोवाच॥ प्रविष्टेभवनंदेवे सूपविष्टेवरासने॥ सपत्नान्मन्मथः क्रू
रो देवं वेद्धुमना भवत् ॥ १ ॥ तमनाचारसंयुक्तं दुरात्मानं कुलाध
मं ॥ लोकान्सर्वां स्ताप्यमानं सर्वाङ्गा वरणात्मकं ॥ २ ॥ ऋषीणां
विघ्नकर्त्तारं नियमानांव्रतैःसह ॥ युक्तपापस्य रूपेण रत्यासह समा
गतम् ॥ ३ ॥ अथाततायिनं विप्रा वेद्धुकामं सुरेश्वरः ॥ नयनेन तृ
तीयेन सावज्ञं तमवैक्षत ॥ ४ ॥ ततोस्य नेत्रजोवह्नि र्ज्वालामालास
हस्रवान् ॥ संदृतं रतिभर्त्तारं मदहत्सपरिच्छदम् ॥ ५ ॥ सदह्यमा

नः करुणा मार्त्तः क्रोशति विस्वरं ॥ प्रसादयं स्य तद्देवं पपात धर
णीतले ॥ ६ ॥ अथ सोग्निपरीताङ्गो मन्मथो लोकतापनः ॥ पपात
भस्मता त्त्वैव चणेन समपद्यत ॥ ७ ॥ पत्नीतु करुणा तस्य विलला
पसुदुःखिता ॥ ताञ्च देवीच दुःखार्त्ता मघांच करुणायती ॥ ८ ॥
तस्या स्य करुणं ज्ञात्वा देवौतौ करुणात्मकौ ॥ ऊचतुस्तां समालो
क्य समाश्वास्य सुदुःखितां ॥ ९ ॥ दग्धएष ध्रुवंभद्रे नास्योत्पत्तिरि
हेष्यते ॥ अशरीरोपि तेभद्रे कार्य्यं सर्वं करिष्यति ॥ १० ॥ यदातु
विष्णु र्भगवान् वसुदेवसुतः शुभे ॥ तदा तस्यसुतो भूयः पतिस्ते स
म्भविष्यति ॥ ११ ॥ ब्रह्मोवाच ॥ ततः साच वरंलब्ध्वा कामपत्नी
शुभानना ॥ जगामेष्टं तदादेशं प्रीतियुक्ता गतक्लमा ॥ १२ ॥ दग्ध्वा
कामं तदा विप्राः सतुदेवो वृषध्वजः ॥ रेमेतत्रोमयासार्द्धं प्रहृष्टस्तु
हिमाचले ॥ १३ ॥ कन्दरेषु च रम्येषु पद्मिनीषु सरःसु च ॥ नि
र्जनेषु च रम्येषु कर्णिकारवनेषु च ॥ १४ ॥ नदीतीरेषु कान्तेषु कि
न्नराचरितेषु च ॥ शृङ्गेषु शैलराजस्य तडागेषु सरःसु च ॥ १५ ॥
वनवासिषु चम्पासु नानापक्षिरुतेषु च ॥ तीर्थेषु पुण्यतोयेषु मुनी
नामङ्गणेषु च ॥ १६ ॥ एतेषु पुण्येषु मनोहरेषु देशेषु विद्याधरभू
षितेषु ॥ गन्धर्वयक्षासुरसेवितेषु रेमेसदेव्या सहितस्त्रिनेत्रः ॥ १७ ॥
देवैः सहेन्द्रै र्मुनियक्षसिद्धै र्गन्धर्वविद्याधर दैत्यमुख्यैः ॥ अन्यैश्च स
र्वै र्विविधै र्वृतोसौ तस्मिन्नगे हर्षमवापशंभुः ॥ १८ ॥ नृत्यन्ति तत्रा
प्सरसः सुवेशा गायन्ति गन्धर्व गणा स्य हृष्टाः ॥ ध्यायन्ति विप्रास्त्व

प्रवादयन्ति केचित्तु तं देववरं स्तुवन्ति ॥ १९ ॥ एवं सदेवै स्व गणै
रुपेतो महाबलैः शङ्करभावितुल्यैः ॥ देव्याः प्रियार्थं भगनेत्रहन्ता
गिरिं न तत्याज तदा महात्मा ॥ २० ॥ ऋषय ऊचुः ॥ देव्या सहा
थ भगवान् स्थितस्तत्र यकामहा ॥ अकरोत्किं महादेव एतदिच्छा
मवेदितुं ॥ २१ ॥ ब्रह्मोवाच ॥ भगवान् हिमवच्छृङ्गे सहदेव्या यदृ
च्छया ॥ गणैस्तै र्विविधाकारै र्हासं सञ्जनय न्प्रभुः ॥ २२ ॥ देवीं
बालेंदुतिलको रमयंश्च रसेनतां ॥ महाप्रभावैःसर्वज्ञैः कामरूपधरैः
शुभैः ॥ २३ ॥ आसीनां काञ्चनेशुभ्रे आसने परमाद्भुते ॥ साथ दृ
ष्ट्वा सतीं देवी मागतां वररूपिणीं ॥ २४ ॥ आसनेनमहार्हेण सम्भा
नयदनिन्दितां ॥ अथ देव्यासहासीना मेनाकमललोचना ॥ २५ ॥
आसीनां तामथोवाच मेना हिमवतः प्रिया ॥ चिरस्यागमनं तुभ्यं
गिरिपुत्रि शुभेक्षणे ॥ २६ ॥ दरिद्रक्रीडने स्त्वंहि भर्त्रा क्रीडसि
संगता ॥ येदरिद्रा भवन्तीह तथैवच निराश्रयाः ॥ २७ ॥ उमेत
एवंक्रीडन्ति यथा तवपतिः शुभे ॥ ब्रह्मोवाच ॥ सैव मुक्ताथ मात्रा
तु नातिहृष्टमना भवत् ॥२८ ॥ महत्या क्षमयायुक्ता किञ्चिन्नोवा
च मातरं ॥ विसृष्टा सातदा मात्रा गत्वा देवमुवाचह ॥ २९ ॥
भगव न्देवदेवेश नेहवत्स्यामि भूधरे ॥ अन्यंदश मयावासं भुवनेषु
महाद्युते ॥ ३० ॥ देवउवाच ॥ सदात्व मुच्यमानावै मया वासार्थं
मीश्वरि ॥ अन्यं नरोचितवती वासस्त्वै देवि कर्हिचित् ॥ ३१ ॥
इदानीं स्वयमेवं त्वं वासमन्यत्र शोभने ॥ कस्मा न्मृगयसे देवि ब्रू

हितन्मे शुचिस्मिते ॥ ३२ ॥ देव्युवाच ॥ गृहंगताहं देवेश पितु
रथमहात्मनः ॥ दृष्टा चतत्र मेमाता विजने लोकभावन ॥ ३३ ॥
आसनादिभि रभ्यर्च्य माता मामथभाषत ॥ उमेतव सदाभर्त्ता द
रिद्रक्रीडनैः शुभे ॥ ३४ ॥ क्रीडतेनहि देवानां क्रीडाभवतितादृ
शी ॥ यत्क्रीडसि महादेव गणैश्च विविधै स्तथा ॥ ३५ ॥ रमसे त
दनिष्टंहि ममभातु र्वृषध्वज ॥ ब्रह्मोवाच ॥ ततोदेवः प्रहस्याथ दे
वींहासयितुं विभुः ॥ ३६ ॥ एवमेतन्नसन्देहः कस्मान्मन्यु रभूत्तव॥
कृत्तिवासा ह्यवासा च श्मशाननिलय श्वह ॥ ३७ ॥ अनिकेतो ह्य
रण्येषु पर्वतानां गुहासु च ॥ विचरामि गणैर्नग्नै र्हंतोंभोजविलो
चने ॥ ३८ ॥ माक्रुधोदेवि मातुस्त्वं तथ्यं मातावदत्तव ॥ नहिमा
तृसमोबन्धु र्जन्तूनामस्ति भूतले ॥३९॥ देव्युवाच ॥ नमेस्तिवन्धुभिः
कृत्यं किञ्चि त्त्रिपुरनाशन ॥ तथाकुरु महादेव यथान्यत्र रमाम
हे ॥ ४० ॥ ब्रह्मोवाच ॥ श्रुत्वा सदेव्या वचनं सुरेश स्तस्याःप्रिया
र्थं श्वशुरं विहाय ॥ जगाम मेरुं सुरसिद्धसेवितं भार्य्यासहायःस्व
गणैश्च युक्तः ॥ ४१ ॥

इत्यादि ब्रह्मपुराणे स्वयंभुऋषिसम्वादे उमाशंकरयोर्हिमव
त्परित्यागो नाम षट्त्रिंशोऽध्यायः ३६ ॥



ऋषयऊचुः ॥ प्राचेनसस्य दक्षस्य कथं वैवस्वतेन्तरे ॥ विना
शमभव द्ब्रह्मन् हयमेधे प्रजापतेः ॥ १ ॥ देव्यामन्युकृतंबुद्ध्वा क्रुद्धः

सर्वात्मकः प्रभुः ॥ कथंविनाशितो यज्ञो दक्षस्यामित तेजसः ॥ म
हादेवेन रोषाद्वैतन्नःप्रब्रूहि विस्तरात् ॥ २ ॥ ब्रह्मोवाच॥ वर्णयिष्या
मिभोविप्रा महादेवेनवैयथा ॥ क्रोधा द्विध्वंसितोयज्ञो देव्याःप्रिय
चिकीर्षया ॥ ३ ॥ पुरामेरौ द्विजश्रेष्ठाः शृङ्गं त्रैलोक्यपूजितम् ॥
ज्योतिस्कंनाम सावित्रं सर्वरत्नविभूषितम् ॥ ४ ॥ अप्रमेय नाधृष्यं
सर्वदेवै र्नमस्कृतं ॥ तत्रदेवो गिरितटे सर्वधातुविभूषिते ॥ ५ ॥ प
र्य्यङ्कइव विभ्राज न्नुपविष्टो बभूवह ॥ शैलराजसुता चास्य नित्यं
पार्श्वस्थिता भवत् ॥ ६ ॥ आदित्या च महात्मानो वसवश्च महौज
सः ॥ तथैवच महात्मानावश्विनौ भिषजाम्बरौ ॥ ७ ॥ तथा वैश्रव
णोराजा गुह्यकैः परिवारितः ॥ यक्षाणामीश्वरः श्रीमान् कैलास
निलयः प्रभुः ॥ ८ ॥ उपासते महात्मान शुक्रना च महामुनिः ॥
सनत्कुमारप्रमुखा स्तथैवपरमर्षयः ॥ ९ ॥ अङ्गिरःप्रमुखा स्चैव त
था देवर्षयोपि च ॥ विश्वावसुश्च गन्धर्व स्तथा नारदपर्वतौ ॥ १०॥
अप्सरोगणसंघा च समाजग्मु रनेकशः ॥ ववौ शिवसुखोवायु र्ना
नागन्धवहःशुचिः ॥ ११ ॥ सर्व्वर्त्तुकुसुमोपेताः पुष्पवन्तोवनद्रुमाः ॥
तथाविद्या धराश्चैव सिद्धाश्चैव तपोधनाः ॥ १२॥ महादेवं पशुपतिं
पर्युपासन्त तत्रवै ॥ भूतानिचतथान्यानि नानारूपधराण्यथ ॥१३ ॥
राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः ॥ बहुरूपधरा धृष्टा
नानाप्रहरणायुधाः ॥ १४ ॥ देवस्यानुचरा स्तत्र तस्थु र्वैश्वानरोप
माः ॥ नन्दीश्वरश्च भगवान् देवस्यानुमते स्थितः ॥ प्रगृह्य ज्वलितं

शूलं दीप्यमानं स्वतेजसा ॥ १५ ॥ गंगा च सरितां श्रेष्ठा सर्वतीर्थ जलोद्भवा ॥ पर्युपासततंदेवं ऋषयो द्विजसत्तमाः ॥ १६ ॥ एवं स भगवां स्तत्र पूज्यमानः सुरर्षिभिः ॥ देवैश्च सुमहाभागै र्महादेवो व्यवस्थितः ॥ १७ ॥ कस्यचि त्त्वथकालस्य दक्षोनाम प्रजापतिः ॥ पूर्वोक्तेन विधानेन यक्ष्यमाणोऽभ्यपद्यत ॥ १८ ॥ ततस्तस्मिन् खं देवाः सर्वे शक्रपुरोगमाः ॥ गमनाय समागम्य बुद्धिमावेदिरेतदा ॥ १९ ॥ तेविमानै र्महात्मानो ज्वलद्भि र्ज्वलनप्रभाः ॥ देवस्यानुमते गच्छन् गंगाद्वारं मितिश्रुतिः ॥ २० ॥ गन्धर्वाप्सरसाकीर्णं नानाद्रुमलतावृतं ॥ ऋषिसंघैः परिवृतं दक्षं धर्मभृतांवरं ॥ २१ ॥ पृथिव्या मन्तरिक्षे च येच स्वर्लोकवासिनः ॥ सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम् ॥ २२ ॥ आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः ॥ विष्णुना सहिताः सर्वे आगता यज्ञभागिनः ॥ २३ ॥ तत्रागताःसुरवरा आज्यपाः सोमपा स्तथा ॥ अश्विनौ मरुत श्चैव नानादेवगणास्तदा ॥ २४ ॥ एते चान्येच बहवो भूतग्राम स्तथैव च ॥ जरायुजाण्डजा श्चैव सहसा स्वेदजोद्भिदाः ॥ २५ ॥ आहूतामन्त्रिताः सर्वे देवैःसह महर्षिभिः ॥ विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ॥ २६ ॥ दधीचिस्तु तदातत्र ऋषिस्तं यज्ञमण्डपं ॥ रुद्रेण रहितंदृष्ट्वा ऋषी न्वाक्यमभाषत ॥ २७ ॥ दधीचिरुवाच ॥ ऋषयोऽस्मि न्महायज्ञे शंकरः सर्वनायकः ॥ नदृश्यते विना तेन यज्ञोऽयं नैवशोभते ॥ २८ ॥ अपूज्यपूजने चैव पूज्यानां चाप्यपूजने ॥

नरः पापमवाप्नोति महद्वै नात्रसंशयः ॥ २९ ॥ एवमुक्त्वातु विप्रर्षिः पुनर्दक्षमुवाचह ॥ पूज्यन्तु पशुभर्त्तारं कस्मान्नार्च्चयसेविभुं ॥ ३० ॥ दक्षउवाच ॥ सन्तीमेवहवोरुद्राः शूलहस्ताः कपर्द्दिनः ॥ एकादश स्थानगता नान्यंविद्मो महेश्वरं ॥ ३१ ॥ दधीचिरुवाच ॥ सर्वेषामे वमन्त्रोयं येनासौ ननिमन्त्रितः ॥ यथाहं शंकरादूर्द्ध्वं नान्यं पश्या मि दैवतं ॥ तथा दक्षस्य विपुलो यज्ञोयं नभविष्यति ॥ ३२ ॥ दक्ष उवाच ॥ एतन्मखेशाय सुवर्णपात्रेः हविःसमस्तं विधिमन्त्रपूतं ॥ विष्णोर्नयाम्य प्रतिमस्यभागं यच्छस्व विप्रा नतुशंकराय ॥ ३३ ॥ ज गत्प्रभोस्तस्य दधीचभागं विष्णोश्च नित्यं विधिमन्त्रपूतं ॥ तस्माद हं देश्वरायदद्यां यज्ञस्यभागंनतुशंकराय ॥३४॥ ब्रह्मोवाच॥ गतास्तु देवतान्मात्वा शैलराजसुतातदा ॥ उवाचवचनंसाध्वी देवंपशुपतिं पतिम् ॥ ३५ ॥ उमोवाच ॥ भगवन् क्वप्रयांत्येते देवाः शक्रपुरोग माः ॥ ब्रूहितत्त्वेन तत्त्वज्ञ संशयोमे महानयं ॥३६ ॥ महेश्वरउवा च ॥ दक्षोनाम महाभागः प्रजानां पतिरुत्तमः ॥ हयमेधेन यजते तत्रयान्ति दिवौकसः ॥ ३७ ॥ देव्युवाच ॥ यज्ञमेतं महाभाग कि मर्थंत्वं नगच्छसि ॥ केनवा प्रतिषेधेन गमनंते नविद्यते ॥ ३८ ॥ महेश्वर उवाच ॥ सुरैरेव महाभागे सर्वमेतदनुष्ठितं ॥ यज्ञेषु मम सर्वेषु नभाग उपकल्पितः ॥ ३९ ॥ पूर्व्वभागोपपन्नेन मार्गेण वर वर्णिनि ॥ नमे सुराः प्रयच्छन्ति भागंयज्ञस्य धर्मतः ॥ ४० ॥ उमो वाच ॥ भगवन् सर्व्वदेवेषु प्रभावाभ्यधिको गुणैः ॥ अजेयश्चाप्यधृष्य

च तेजसा ओजसा श्रिया ॥ ४१ ॥ अनेनतु महाभाग प्रतिषेधेन मागतः ॥ अतीवदुःखमापन्ना वेपथुस्तु महानयम् ॥ ४२ ॥ किन्ना मदानं नियमं तपोवा कुर्य्यांसुखं येनपति र्ममाद्यः ॥ लभेत भागं भगवाननन्तो यज्ञस्यभागं ह्यथवा तृतीयम् ॥ ४३ ॥ एवं ब्रुवाणां भगवान् विचिन्त्य पत्नीं प्रहृष्टः क्षुभितांस्तुवाच ॥ नवेत्सि मांदेवि कृशोदराङ्गि किन्नामयुक्तं वचनं तवेदम् ॥ ४४ ॥ अहंहि जानामि विशालनेत्रे ध्यानेन सर्व्वेच्च विदन्तिसन्तः ॥ तवाद्यकोपेनतु सर्व्वदेवा लोकत्रयं सर्व्वमथप्रणष्टं ॥ ४५ ॥ मामेव मखेशं सततं स्तुवन्ति रथन्तरेणापि च सामगेन ॥ मांब्राह्मणाः क्रतुभिर्वै यजन्ते ममाध्वर्य्यवः कल्पयन्ते च भागं ॥ ४६ ॥ देव्युवाच ॥ प्राकृतोपिहि भगवन् मनस्वी जनसंसदि ॥ स्तौति गर्वायते चापि स्त्रीसान्निध्ये विशेषतः ॥ ४७ ॥ भगवानुवाच ॥ नात्मानं स्तौमि देवेशि यच्च त्वमनुगच्छसि ॥ किंवच्यामि वरारोहे भागार्थे वरवर्णिनि ॥ ४८ ॥ एवमुक्त्वातु भगवान् पत्नीं प्राणैरपि प्रियां ॥ सोसृजद्भगवा न्वक्त्रा द्भूतं क्रोधाग्निसम्भवम् ॥ ४९ ॥ तमुवाच ध्वंसमखं दक्षस्येति महेश्वरः ॥ नाशयाशु व्रतंभूत दक्षस्य मदनुज्ञया ॥ ५० ॥ ततोनस्यप्रयुक्तेन सिंहवेगेन लीलया ॥ देव्यामन्युकृतंज्ञात्वा हतोदक्षस्यसःक्रतुः ॥ ५१ ॥ मन्युना च महाभीमा भद्रकाली महेश्वरी ॥ आत्मानं कर्मसाक्षित्वे तेनसार्द्धं सहान्वगात् ॥ ५२ ॥ सएव भगवा न्क्रोधात् प्रेतावासकृतालयः ॥ वीरभद्रेति विख्यातो देव्या मन्युप्रमार्जकः ॥ ५३ ॥

सोऽसृजद्रोमकूपेभ्य आत्मनैव गणेश्वरान् ॥ रुद्रानुगान् रुद्रगणा
न् रुद्रवीर्य्यपराक्रमान् ॥ ५४ ॥ रुद्रस्यानुचराः सर्वे सर्वे रुद्रपरा
क्रमाः ॥ तेनिपेतुस्ततस्तूर्णं शतशोऽथ सहस्रशः ॥ ५५ ॥ ततः कि
लकिलाशब्द आकाशं पूरयन्निव ॥ तेनशब्देन महता त्रस्ताः सर्वे
दिवौकसः ॥ ५६ ॥ पर्व्वताश्च व्यशीर्य्यन्त चकम्पे च वसुन्धरा ॥ म
रुतश्च ववुस्सर्वे घूर्णुर्वरुणालयाः ॥ ५७ ॥ अग्नयो नैव दीप्यंते
न च दीप्यति भास्करः ॥ ग्रहा नैव प्रकाशन्ते नक्षत्राणि नतार
काः ॥ ५८ ॥ ऋषयोनप्रकाशन्ते नदेवानचदानवाः ॥ एवंहि तिमि
रीभूते निर्दहन्ति विमानिताः ॥ ५९ ॥ प्रभञ्जना ववुर्घोराः पूयवि
ट्पाटयन्निव ॥ प्रणदन्ति तथाचान्ये विमर्दन्ति तथापरे ॥ ६० ॥
धावन्त्यन्ये प्रधावन्ति वायुवेगा मनोजवाः ॥ चूर्ण्यंते यज्ञपात्राणि
यज्ञस्यायतनानि च ॥ ६१ ॥ शीर्य्यमाणान्यवायन्त वाताइव नभस्त
लात् ॥ दिव्यानुपानभक्ष्याणां राशयः पर्व्वतोपमाः ॥६२ ॥ क्षीरन
द्य स्तथाचान्ये घृतपायस कर्दमाः ॥ मधुमण्डोदका दिव्या खण्डश
र्करवालुकाः ॥ ६३ ॥ षड्रसा विहरन्त्यन्ये गुडकुल्या मनोरमाः ॥
उच्चावचानि मांसानि भक्ष्याणि विविधानि च ॥ ६४ ॥ यानिकानि
च दिव्यानि लेह्यचोष्याणि यानि च ॥ भुञ्जन्ति विविधै र्वक्त्रै र्विलु
म्पन्ति क्षिपन्ति च ॥ ६५ ॥ रुद्रकोपा महाकायाः कालाग्निसदृशो
पमाः ॥ क्षोभयन्तोऽथ शैलाभा भीषयन्तश्च सर्व्वशः ॥ ६६ ॥ क्रीड
न्ति विविधाकारा चिक्षिपुः सुरयोषितः ॥ रुद्रकोपप्रयुक्ता स्च सर्व्व

देवैःसुरक्षितम् ॥ ६७ ॥ तंयज्ञमदहच्छीघ्रं भद्रकाल्याःसमीपतः ॥ चक्रुरन्ये यथानादान् सर्व्वभूतभयंकरान् ॥ ६८ ॥ छित्वा शिरोऽन्ये यज्ञस्य व्यनदन्तो भयङ्करं ॥ ६९ ॥ ततः शक्रादयो देवा दक्षश्चैवप्र जापतिः ॥ ऊचुः प्रांजलयोभूत्वा कथ्यतां कोभवानिति ॥ ७० ॥ वीरभद्र उवाच ॥ नाहंदेवो नदैत्योवा नच भोक्तुमिहागतः ॥ नैव द्रष्टुंच देवेन्द्रा नच कौतूहलान्वितः ॥ ७१ ॥ दक्षयज्ञविनाशार्थं संप्राप्तोऽहं सुरोत्तमाः ॥ वीरभद्रेति विख्यातो रुद्रकोपा द्विनिःसृ तः ॥ ७२ ॥ भद्रकाली च विज्ञेया देव्याःक्रोधाद्विनिर्गता ॥ प्रेषि ता देवदेवेन यज्ञान्तिकमुपागता ॥ ७२ ॥ शरणं गच्छ राजेन्द्र दे वदेवमुमापतिम् ॥ वरःक्रोधोपिरुद्रस्य वयन्तुपरिचारकाः ॥ ७३ ॥ निखातोत्पातितै र्यूपैरपविद्धै स्ततस्ततः ॥ उत्पतद्भिः पतद्भिश्च गृ ध्रैरामिषगृद्धिभिः ॥ ७४ ॥ पक्षवात विनिर्द्धूतैः शिवा शतनिना दितैः ॥ मत्तश्चयज्ञो नृपतेर्वध्यमान स्तदागणैः ॥ ७५ ॥ स्थास्था य मृगरूपम्वै खमेवाभ्यपत त्तदा ॥ तन्तुयज्ञं यथारूपं गच्छन्त मुप लभ्यसः ॥ धनुरादाय वाणञ्च तदर्थमगम त्प्रभुः ॥ ७६ ॥ ततस्त स्यगणेशस्य क्रोधादमिततेजसः ॥ ललाटात् प्रसृतोघोरः स्वेदविंदु र्बभूवह ॥ ७७ ॥ तस्मिन् पतितमात्रे च स्वेदविन्दौ तदाभुवि ॥ प्रादुर्भूतो महानग्नि र्ज्वलत्कालानलोपमः ॥ ७८ ॥ तत्रोदपद्यत त दा पुरुषोहि द्विजोत्तमाः ॥ ह्रस्वोतिमात्रो रक्ताक्षो हरिश्मश्रु र्वि भीषणः ॥ ७९ ॥ ऊर्द्धकेशो ऽतिरोमाङ्गः सैन्यान्तक स्तथैवच ॥

करालः कृष्णवर्णांश्च रक्तवाससस्तथैव च ॥ ८० ॥ तंयज्ञं समदहावा हुर्देह न्कक्षमिवानलः ॥ देवाश्च प्रद्रुताः सर्वे गता भीता दिशोद श ॥ ८१ ॥ तेनतस्मि न्विचरता विक्रमेण तदाञ्चवै ॥ पृथिवी व्य चलत्सर्वा सप्तद्वीपा समन्ततः ॥ ८२ ॥ महाभूते प्रवृत्तेतु देवलोके भयङ्करे ॥ तदा चाहं महादेव मब्रुवं प्रतिपूजयन् ॥ ८३ ॥ भवतो पिसुराः सर्वे भागंदास्यन्ति वैप्रभो ॥ क्रियतां प्रतिसंहारः सर्व्वदेवे श्वर त्वया ॥ ८४ ॥ इमाश्च देवताः सर्वा ऋषयश्च सहस्रशः ॥ तव क्रोधा न्महादेव नशान्ति सुपलेभिरे ॥ ८५ ॥ यश्चैषपुरुषो जातः स्वेदतस्ते सुरर्षभ ॥ ज्वरोनामैष धर्मज्ञ लोकेषु प्रचरिष्यति ॥ ८६॥ एकीभूतस्य नह्यस्य धारणे तेजसः प्रभो ॥ समर्था सकला पृथ्वी व हुधा सृज्यतामयं ॥ ८७ ॥ इत्युक्तः समयादेवो भागेचैवप्रकल्पि ते ॥ भगवान्मां तथेत्याह देवदेवः पिनाकधृक् ॥ ८८ ॥ परा ञ्च प्रीतिमगम त्प्राप्तवान्वै पिनाकधृक् ॥ दक्षोपि मनसादेवं भवंशरण मन्वगात् ॥ ८९ ॥ प्राणापानौ संनिरुध्य चित्तस्थाने प्रयत्नतः ॥ विवार्य्य सर्व्वतोदृष्टिं हृत्तिदृष्टि रमित्रजित् ॥ ९० ॥ स्मितं कृत्वा ब्रवीद्वाक्यं ब्रूहि किंकरवाणिते ॥ श्राविते च महाख्याने देवानां पि तृभिःसह ॥ ९१ ॥ तमुवा चाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः ॥ भीतः शङ्कितविश्वस्तः पञ्चाश्रु वदनेक्षणः ॥ ९२ ॥ दक्षउवाच ॥ यदिप्रसन्नो भगवा न्यदिवाहं तवप्रियः ॥ यदिवाहमनुग्राह्यो यदि देयोवरोमम ॥ ९३ ॥ यद्दग्धं भक्षितंपीतं ग्रसितंयच्चनाशितम् ॥

चूर्णीकृतापविद्धञ्च यज्ञसंस्कार मीदृशं ॥ ९४ ॥ दीर्घकालेन महता प्रयत्नेन च साधितं ॥ नचमिथ्याभवे न्मह्यं त्वत्प्रसादा न्महेश्वर ॥ ९५ ॥ तथास्त्वित्याह भगवान् भगनेत्रहरो हरः ॥ धर्माध्यक्षो महादेव स्त्र्यम्बकस्य प्रजापतिम् ॥ ९६ ॥ जानुभ्यामवनिं गत्वा दक्षोलब्ध्वा भवाद्वरं ॥ नाम्नां चाष्टसहस्रेण स्तुतवांस्तं वृषध्वजम् ॥ ९७ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषि सम्वादे दक्षयज्ञ विध्वंशनं नाम सप्तत्रिंशोऽयः ३७ ॥

—:०:—

ब्रह्मोवाच ॥ एवंदृष्ट्वा तदादक्षः शंभोर्वीर्य्यं द्विजोत्तमाः ॥ प्राञ्जलिः प्रणतोभूत्वा संस्तोतु मुपचक्रमे ॥ १ ॥ दक्षउवाच ॥ नमस्ते देवदेवेश नमस्ते वलसूदन ॥ देवेन्द्र त्वबलश्रेष्ठ देवदानवपूजित ॥ २ ॥ सहस्राक्ष विरूपाक्ष त्र्यम्बकयक्षाधिपप्रिय ॥ सर्वतः पाणिपादान्त सर्वतोक्षिशिरोमुख ॥ ३ ॥ सर्व्वतः श्रुति मंल्लोके सर्व्वमावृत्य तिष्ठसि ॥ शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय ॥ ४ ॥ गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोस्तुते ॥ शतोदर शतावर्त्त शतजिह्व शतानन ॥ ५ ॥ गायन्तित्वां गायत्रिणो अर्च्चयन्ति ह्यर्किणः ॥ देवदानवगोप्ता च ब्रह्माचत्वं शतक्रतुः ॥६॥ मूर्त्तिमांस्त्वंमहामूर्त्तिः समुद्रः सरसांनिधिः ॥ सर्वाह्यस्मि न्देवतास्ते गावो गोष्ठइवासते ॥ ७ ॥ नैकं: शरीरे पश्यामि सोममग्निं जलेश्वरम् ॥

आदित्यमथविष्णुं च ब्रह्माणं महद्दस्पतिम् ॥ ८ ॥ क्रियाकारणकार्य्यञ्च कर्त्ताकारणमेवच ॥ असच्च सदसच्चैव तथैवप्रभवाप्ययः ॥ ९ ॥ नमोभवाय शर्वाय रुद्राय वरदाय च ॥ पशूनांपतये चैव नमोऽस्त्वन्धकघातिने ॥ १० ॥ त्रिजटाय त्रिशीर्षाय त्रिशूलवरधारिणे ॥ त्र्यम्बकायाम्बिकेशाय त्रिपुरघ्नायवैनमः ॥ ११ ॥ नमोर्द्ध्वदंष्ट्रकेशाय शुष्काय विकृतायच ॥ विलोहिताय धूम्राय नीलग्रीवायवैनमः ॥ १२ ॥ नमोऽस्त्वप्रतिरूपाय विरूपाय शिवाय च ॥ सूर्य्याय सूर्य्यपतये सूर्य्यध्वजपताकिने ॥ १३ ॥ नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ॥ नमो हिरण्यवर्णाय हिरण्यकवचाय च ॥ १४ ॥ हिरण्यकृतचूडाय हिरण्यपतयेनमः ॥ नमस्त्वखण्डाय मुण्डाय विप्रदण्डधराय च ॥ १५ ॥ दण्डिने शङ्कुकर्णाय चण्डचण्डाय वैनमः ॥ हिरण्यकेशाय नमः शुष्काय विकृताय च ॥ १६ ॥ अभ्रुवाताय चण्डाय पर्णसंघशयाय च ॥ नमोस्तुत्यायस्तुत्याय स्तूयमानाय वैनमः ॥ १७ ॥ सर्वाय सर्वभत्ताय सर्व्वभूतान्तराय च ॥ नमो होत्राय मन्त्राय शुक्लध्वजपताकिने ॥ १८ ॥ नमोनम्याय नम्याय नमः किलकिलाय च ॥ नमस्ते शेषमालाय पञ्चाय जटिलाय च ॥ १९ ॥ स्थिताय धावमानाय भूताय कुटिलायच ॥ नमोनर्त्तनशीलाय मुखवादित्रकारिणे ॥ २० ॥ नमो ज्येष्ठाय श्रेष्ठाय दलप्रमथनाय च ॥ कलनाय च कल्याय क्षमायोपशमाय च ॥ २१ ॥ उग्रायच नमोनित्यं नमश्च दशबाहवे ॥ नमः कपालहस्ताय शितभस्मप्रियाय च ॥ २२ ॥ विभीषणाय भी

माय भीमव्रतधरायच ॥ पवनोक्तविवक्त्राय खड्गजिह्वोग्रदंष्ट्रिणे ॥ २३ पक्षमासलवार्धाय तुम्बवीणाप्रियाय च ॥ अघोरघोररूपाय घोराद्घोरतरायच ॥ २४ ॥ नमः शिवाय शान्ताय नमः शान्ततरायच ॥ नमो वुद्धाय शुद्धाय संविभागप्रियाय च ॥ २५ ॥ प्रपञ्चाय तथोग्राय नमः सांख्यपराय च ॥ नम स्वण्डैकघण्टाय घण्टानादाय घण्टिने ॥ २६ ॥ सहस्रशतघण्टाय घण्टामालाप्रियाय च ॥ प्राणदण्डाय नित्याय नमस्ते लोहिताय च ॥ २७ ॥ हुंहुंकाराय रुद्राय हुंहुंकारप्रियाय च ॥ नमः शशिधरे नित्यं गिरिवृक्षप्रियाय च ॥ २८ ॥ मार्गमांसशृगालाय तारकाय तराय च ॥ नमो यज्ञाधिपतये कृताय प्रकृताय च ॥ २९ ॥ यज्ञवाहाय दान्ताय तथ्याय विनयाय च ॥ नमस्तुण्डाय रन्ध्राय तडितांपतये नमः ॥ ३० ॥ अन्नदायान्नपतये नमस्त्वन्नभुजाय च ॥ नमः सहस्रशीर्षाय सहस्रचरणाय च ॥ ३१ ॥ सहस्रोद्यतशूलाय सहस्रनयनाय च ॥ नमो वालार्कवर्णाय वालरूपधराय च ॥ ३२ ॥ नमो वालार्करूपाय वालक्रीडनकायच ॥ नमः शुद्धाय वुद्धाय क्षोभणाय क्षयायच ॥ ३३ ॥ तरङ्गांकित केशाय मुक्तकेशाय वैनमः ॥ नमः षट्कर्मतुष्टाय त्रिकर्मनियताय च ॥ ३४ ॥ वर्णाश्रमाणांविधिवत् पृथक्धर्मप्रवर्त्तिने ॥ नमो ज्येष्ठाय श्रेष्टाय नमः कलकलाय च ॥ ३५ ॥ श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च ॥ धर्मार्थकाममोक्षाय क्रथाय क्रथनाय च ॥ ३६ ॥ सांख्याय सांख्यमुख्याय योगाधिपतये नमः ॥ नमोर

थ्याविरथ्याय चतुष्पथरताय च ॥ ३७ ॥ कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ॥ ईशानवज्रसंघात हरिकेश नमोस्तुते ॥ ३८ ॥ त्र्यम्बकायांबिकानाथ व्यक्ताव्यक्त नमोस्तुते ॥ ३९ ॥ कामकामद कामघ्न तृप्तो तृप्तनिवारण ॥ सर्वगर्भ स्च सर्वघ्न सद्योजात नमोस्तुते ॥ ४० ॥ उन्मादनशतावर्त्त गंगातोयार्द्रमूर्द्धज ॥ चन्द्रार्द्धसंयुगावर्त्त मेघावर्त्त नमोस्तुते ॥ ४१ ॥ नानार्थदानभर्त्ता च अर्थद स्च त्वमेवहि ॥ अन्नस्रष्टाच भोक्ता च यज्ञभुक्चतथानलः ॥ ४२ ॥ जरायुजाण्डज स्चैव स्वेदजोद्भिज एवच ॥ त्वमेव देवदेवेश भूतग्रामस्चतुर्विधः ॥ ४३ ॥ चराचरस्य स्रष्टात्वं प्रतिहर्त्ता त्वमेवच ॥ त्वमेव ब्रह्मविश्वेश असुर्ब्रह्मविदामपि ॥ ४४ ॥ सर्वस्य परमायोनिः स्वधात्वंज्योतिषांनिधिः ॥ ऋक्सामानि तथोंकार माहु स्त्वां ब्रह्मवादिनः ॥ ४५ ॥ हायिहायि हुतवहो हुतवा न्हुतिवासकृत् ॥ गायन्ति त्वांसुरश्रेष्ट सामगा ब्रह्मवादिनः ॥ ४६ ॥ यजुर्मय ऋङ्मयस्त्वं सामाथर्वपस्तथा ॥ सेव्यसे ब्रह्मविद्भिस्त्वं कल्पोपनिषदांगणैः ॥ ४७ ॥ ब्राह्मणाः चत्रिया वैश्याः शूद्रा वर्णाश्रमा स्चये ॥ त्वमेवाश्रमसंघा स्च विद्युत्स्तनित मेवच ॥ ४८ ॥ सम्वत्सर स्त्वमृतवो मासो मासार्द्ध एवच ॥ कलाकाष्टानिमेषा स्च नक्षत्राणि युगास्तथा ॥ ४९ ॥ वृषाणां ककुदं त्वंहि गिरीणां शिखराणि च ॥ सिंहो मृगाणाञ्च पतिस्तचको नन्तभोगिनां ॥ ५० ॥ चीरोदो ह्युदधीना ञ्च मन्त्राणां यजुरेवच ॥ वज्रं प्रहरणाना ञ्च व्रतानां सत्यमेवच ॥ ५१ ॥ त्वम

वस्था वापुषश्च रागोमोहः शमःक्षमा ॥ व्यवसायो धृतिर्लोभः काम क्रोधौ जयाजयौ ॥ ५२ ॥ त्वंगदी त्वंशरी चापी खट्वाङ्गी त्वंध्व जी रथी ॥ छेत्ता भेत्ता प्रहर्त्ता च नेता मन्ता भितोगतः ॥ ५३ ॥ दशलक्षणसंयुक्तो धर्मोर्थः कामएवच ॥ इन्द्रः समुद्रः सलिलः पल्व लानि सरांसि च ॥ ५४ ॥ लतावल्य स्तृणौषध्यः पशवो मृगपक्षि णः ॥ द्रव्यकर्मगुणारम्भः कालः पुष्पफलप्रदः ॥ ५५ ॥ आदि श्चा न्तश्च मध्यश्च गायत्र्योंकार एवच ॥ हरितो लोहितः कृष्णो नीलः पीत स्तथारुणः ॥ ५६ ॥ कद्रुश्च कपिलश्चैव कपोतो मेचक स्तथा ॥ सुवर्णरेता विख्यातः सुवर्णश्चाप्यतो मताः ॥ ५७ ॥ सुवर्णनामाच तथा सुवर्णप्रिय एवच ॥ त्वमिन्द्र श्च यमश्चैव त्वं मित्रो धनदोन लः ॥ ५८ ॥ उत्फुल्लचित्रभानु श्च स्वर्भानु र्भानुरेवच ॥ होत्रं चैव हुतश्चैव तथाच हुतभुक् प्रभुः ॥ ५९ ॥ सौपर्णं च्च तथाब्रह्म यजु षां शतरुद्रियं ॥ पवित्रञ्च पवित्राणां मंगलानाञ्चमंगलं ॥ ६० ॥ गिरिः पापान्तको हृचो जीवः प्रजलएवच ॥ प्राणश्च त्वं रजश्च त्वं तमःसत्वगुण स्तथा ॥ ६१ ॥ प्राणोपानः समानश्च उदानो व्यानए वच ॥ उन्मेषश्च निमेषश्च कालकला स्तथैवच ॥ ६२ ॥ लोहितांगश्च दंष्ट्री च महावक्त्रो महोदरः ॥ शुचिरोमा हरिश्मश्रु रूर्द्ध्वकेश श्च लोचनः ॥ ६३ ॥ गीतवादित्रनृत्याङ्गो गीतवादनकप्रियः ॥ मत्स्यो जलो जनोजन्यो जनकारक एवच ॥ ६४ ॥ विकालश्च सुदुःकालः कालःकालविनाशनः ॥ मृत्युश्चैवक्षयोन्तश्च क्षमामायाकरोऽकरः ॥ ६५

सम्वर्त्तो नर्त्तन श्चैव सम्वर्त्तक वलाहकौ ॥ घण्टाकी घण्टकी घण्टी
घण्टाली लवणोदधिः ॥ ६६ ॥ ब्रह्मकालाग्नि वक्त्रश्च दण्डी मुण्ड
स्त्रिदण्डधृक् ॥ चतुर्युग श्चतुर्वेदो चातुर्वेद श्चतुर्मुखः ॥ ६७ ॥ चा
तुराश्रम्यनेता च चातुर्वर्ण्यंकर श्चहि ॥ गूढव्रतश्च गूढश्च गूढव्रतनि
षेवितः ॥ ६८ ॥ तरण स्तारण श्चैव सर्वानुभूतचारणः ॥ धाता वि
धाता संधाता विधाता धरणीधरः ॥ ६९ ॥ तपोब्रह्म च सत्यञ्च ब्र
ह्मचर्य्यं तथार्ज्जवं ॥ भूतात्मा भूतकृद्भूतो भूतभव्य भवोद्भवः ॥ ७० ॥
भूर्भुवः स्वर्हित श्चैव ह्यतोह्यग्नि र्महेश्वरः ॥ रेचणो दीचणाकान्तो
दान्तो दान्तविनाशनः ॥ ७१ ॥ ब्रह्मावर्त्त सुरावर्त्त कामावर्त्त नमो
स्तुते ॥ कामविम्बनिहन्ता च कर्णाकरस्तत्प्रियः ॥ ७२ ॥ सुखच
न्द्राचिमुखरो विमुखः सुमुखोन्मुखः ॥ चतुर्मुखो मुखश्चैव रणो
ह्यभिमुखः सदा ॥ ७३ ॥ हिरण्यगर्भः शकुनि र्न्नंदोऽन्नपति र्वि
राट् ॥ अधर्मोपमहादर्भो दण्डधारी रणप्रियः ॥ ७४ ॥ गोनेत्रगो
प्रतीरश्च गोदाय स्वरवाहनः ॥ त्रैलोक्यगोप्ता गोविन्दो गोप्तांगो ग
र्गएवच ॥ ७५ ॥ सप्रतिष्ठः स्थिरश्चैव कम्पकश्च सुनिश्चलः ॥ दुर्वार
णो दुर्विषहो दुर्दर्पो दुरतिक्रमः ॥ ७६ ॥ दुर्वरो दुर्विशो नित्यो दु
र्दमोविजयोजयः ॥ शशःशशांकशयनः सतृष्णस्वतृषाज्वरः ॥ ७७
आधयो व्याधय श्चैव व्याधिहा व्याधिप श्चयः ॥ सद्यो यज्ञमृगव्या
धो व्याधिनामा करोकरः ॥ ७८ ॥ शिखण्डी पुण्डरीक श्च कंड
रीकावलोकनः ॥ दण्डघ्नोदंडयितानेता रौद्रभागविनाशनः ॥ ७९

विषपोऽमृतप श्चैव सुरापः चीरगोमयः ॥ मधुप श्चाज्यप श्चैव सर्व्व पश्च वलावलः ॥ ८० ॥ वृषांगदाक्षो वृषभ स्तथा वृषभलोचनः ॥ वृषभश्चैव विख्यातो लोकानां लोकसंस्कृतः ॥ ८१ ॥ चन्द्रादित्यौ चचुषीते हृदयं च पितामहः ॥ अग्निष्टोम स्तथा देवो धर्म्मोधर्मप्र साधितः ॥ ८२ ॥ नब्रह्मा नच गोविन्दः पुराणऋषयो नच ॥ मा हात्म्यं वेदितुंशक्ता याथातथ्येन तेपिव ८३ ॥ शिवोमा मूर्त्तयः सू क्ष्मा स्तामह्यंपान्तुदर्शनात् ॥ ताभिर्मां सततंरच पितापुत्रमिवौर सं ॥ ८४ ॥ रचसां रचणीयोऽहं त्वयानघ नमोस्तुते ॥ भक्तानुक म्पोभगवा न्भक्तश्चाहं सदात्वयि ॥ ८५ ॥ ॥ यःसहस्राण्यनेकानि पुंसामाहत्य निर्हिशेत् ॥ तिष्ठ त्येकसमुद्रान्त स्तेषु सप्तसु नित्य शः ॥ ८६ ॥ जितनिद्रा जितश्वासाः सत्वस्थाः समदर्शिनः ॥ ज्यो तिःपश्यन्ति पुञ्जानां तस्मैयोगात्मने नमः ॥ ८७ ॥ संभक्ष्य सर्व्वभू तानि युगान्ते समुपस्थितः ॥ यःशेते जलमध्यस्थ स्तंप्रपद्ये वुशायि नं ॥ ८८ ॥ प्रविश्य वदनंराहो र्यःसोमं पिवतेनिशि ॥ ग्रसत्यर्कं च स्वर्भानु र्भूत्वा सोमं तथारविं ॥ ८९ ॥ अंगुष्ठमात्रः पुरुषः देह स्थःसर्व्वदेहिनां ॥ सचरचतु मांनित्यं रचच सततंभवान् ॥ ९० ॥ येनाप्युत्पादिता देवा पञ्चत्वायगता क्षये ॥ तेषांस्वाहा स्वधा चैव आहुस्त्वां च स्तुवन्तुवा ॥ ९१ ॥ यत्रारोहन्ति देशस्थाः प्राणिनो ऽवतरन्तिवा ॥ हर्षयन्ति च हृष्यन्ति यन्नान्नेभ्यश्च नित्यशः ॥ ९२ ॥ स्थलो जलनदीदुर्गे पवनेषु गुहासु च ॥ वृचमूलेषु गोष्ठेषु कान्ता

रगह्नेषु च ॥ ९३ ॥ चतुष्पथेषु रथ्यासु कान्तारेषु सभासु च ॥ हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ॥ ९४ ॥ येषुपञ्चसु भूतेषु दिशासु विदिशासु च ॥ इन्द्रार्कयो र्मध्यगता येचचन्द्रार्करश्मिभिः ॥ ९५ ॥ रसातलगता येच येच तस्मात्परं गताः ॥ नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्योस्तु नित्यशः ॥ ९६ ॥ सर्वस्त्वं सर्वगो देवः सर्वभूतपति र्भवः ॥ सर्वभूतान्तरात्मा च तेनत्वं नानिमन्त्रितः ॥ ९७ ॥ त्वमेव तेजसांदेव यज्ञै र्विविधदक्षिणैः ॥ त्वमेवकर्त्ता सर्वस्य तेनत्वं ननिमन्त्रितः ॥ ९८ ॥ अथवा माययादेव मोहितः सर्वरूपया ॥ तस्मात्तु कारणाद्वापि तेनत्वं ननिमन्त्रितः ॥ ९९ ॥ प्रसीद ममदेवेश त्वमेव शरणंमम ॥ त्वं गति स्त्वं प्रतिष्ठा च नान्योस्तीति मतिर्मम ॥ १०० ॥ स्तुत्वैवं समहादेवं विरराम महामतिः ॥ भगवानपि सुप्रीतः पुनर्दक्षमभाषत ॥ १०१ ॥ परितुष्टोऽस्मितेदक्ष वाक्येनानेन सुव्रत ॥ वहुनात्र किमुक्तेन मत्समीपं गमिष्यसि ॥ १०२ ॥ तथैव मब्रवी द्वाक्यं त्रैलोक्याधिपति र्भवः ॥ शिवउवाच ॥ श्रुत्वा स्वापकरंवाक्यं सर्वज्ञ वाक्यमाहितं ॥ १०३ ॥ देशदर्शनकर्त्तव्यं त्वयाद्विप्र शुभंत्विदं ॥ अहं यज्ञहन स्तुभ्यं दृष्टमेतत्पुरानघ ॥ १०४ ॥ भूयस्त्वं वरमिदं मत्तोगृह्णीष्व सुव्रत ॥ प्रसन्नःसुमुखोभूत्वा ममैकाग्रमनाः शृणु ॥ १०५ ॥ अश्वमेधसहस्रस्य वाजपेय शतस्य च ॥ प्रजापते मत्प्रसादा त्फलभागी भविष्यसि ॥ १०६ ॥ वेदान् षडंगान्बुद्ध्यस्व सांख्ययोगांश्च कृत्स्नशः ॥ तप

सुविपुलं तस्या दुस्तरं देवदानवैः ॥ १०७ ॥ अब्दैर्दशभिः संयुक्तैः सू
क्ष्ममप्रज्ञानिचितं ॥ वर्णाश्रमकृतैर्धर्मैर्विनीतं नकचित्क्षमं ॥ १०८ ॥
गन्ताचैव व्यवसितं पशुपाश विमोचणं ॥ १०९ ॥ सर्वेषामाश्रमाणां
च मयापाशुपतंव्रतं उत्पादितं दक्षशुभं सर्वपापविमोचनं ॥ ११० ॥
अश्वमेधस्य यत्सम्यक् फलंलभति पुष्कलं ॥ तथास्तु सुमहाभाग
शान्त्यर्थमेष वैज्वरः ॥ १११ ॥ एवमुक्त्वातु देवेशः सपत्नीकः सहानु
गः ॥ अदर्शनमनुप्राप्तो दक्षस्या मिततेजसः ॥ ११२ ॥ अवाप च त
थाभागं यथोक्तं चोमया भवः ॥ ज्वरञ्च सर्वधर्मज्ञो बहुधा व्यभज
त्तदा ॥ ११३ ॥ शांत्यर्थं सर्वभूतानां शृणुध्वमथ वैद्विजाः ॥ शिखा
भितापो नागानां पर्वतानां शिलाजतुः ॥ ११४ ॥ अपान्तु नीलि
कांविद्या न्निर्मोको भुजगेषु च ॥ खोरकः सौरभेयाना मूषरः ए
थिवीतले ॥ ११५ ॥ शुकानामपि धर्मज्ञा दृष्टिप्रत्यवरोधणं ॥ रन्धा
गतमथाश्वानां शिखोद्भेदश्च बर्हिणां ॥ ११६ ॥ नेत्ररोगः कोकिल
स्य ज्वरःप्रोक्तो महात्मना ॥ अजानां पित्तभेदश्च सर्वेषामिति नःश्रु
तं ॥ ११७ ॥ शुकानामपि सर्वेषां हिक्काच प्रोच्यतेज्वरः ॥ शार्दूले
ष्वथ वैविप्राः श्रमोज्वर इहोच्यते ॥ ११८ ॥ मानुषेषुतु धर्मज्ञा ज्व
रोनामेष कीर्त्तितः ॥ मरणे जन्मनि तथा मध्येचापि निवेशि
तः ॥ ११९ ॥ एतन्माहेश्वरं तेजो ज्वरोनाम सुदारुणः ॥ नमस्य
श्चैव मान्यश्च सर्वप्राणिभिरीश्वरः ॥ १२० ॥ इमांज्वरोत्पत्तिमदी
नमानसः पठेत्सदायस्तु समाहितोनरः ॥ विमुक्तरोगः सनरो

मुदायुतो लभेत कामांश्च यथामनीषितान् ॥ १२१ ॥ दक्षप्रो
क्तंस्तवं चापि कीर्त्तयेच्च शृणोतिवा ॥ नापदं प्राप्नुयात्किञ्चि द्दी
र्घमायुरवाप्नुयात् ॥ १२२ यथासर्वेषु भूतेषु वरिष्ठो भगवान्भवः ॥
तथास्तवो वरिष्ठोयं स्तवानां दक्षनिर्मितः ॥ १२३ ॥ यशश्चायुः सु
खैश्वर्य वित्तादिजयकांक्षिभिः ॥ स्तोतव्यो भक्तिमास्थाय विद्याका
मैश्च यत्नतः ॥ १२४ ॥ व्याधितो दुःखितोदीनो नरोग्रस्तो भयादि
भिः ॥ राजकार्य्यनियुक्तोवा मुच्यते महतोभयात् ॥ १२५ ॥ अने
नैवतु देहेन गणानां सगणेश्वरः ॥ इहलोके सुखंप्राप्य गणराडुप
पद्यते ॥ १२६ ॥ नंयक्षा नपिशाचावा ननागा नविनायकाः ॥ कुर्यु
र्विघ्नं गृहेतस्य यत्रसंस्तूयते भवः ॥ १२७ ॥ शृणुयाद्वा इदंनारी भ
क्तायभवभाविता ॥ पितृपक्षेभर्तृपक्षे पूज्याभवतिचैवहि ॥ १२८॥
शृणुयाद्वा इदंसर्वं कीर्त्तयेद्वाप्यभीक्ष्णशः ॥ तस्य सर्वाणिकार्य्याणि
सिद्धिं गच्छंत्यविघ्नतः ॥ १२९ ॥ मनसा चिन्तितं यच्च यच्च वाचाप्यु
दीरितं ॥ तत्तत्सम्पद्यते तस्य स्तवस्यास्यानुकीर्त्तनात् ॥ १३० ॥ देवस्य
सगुहस्याथ देव्यानन्दीश्वरस्य च ॥ बलिंविभवतः कृत्वा दमेन निय
मेन च ॥ १३१ ॥ ततःप्रयुक्तो गृह्णीया न्नामान्याशु यथाक्रमं ॥ ई
प्सितांल्लभते सोऽर्थान् कामान् भोगांश्च मानवः ॥ १३२ ॥ मृत स्व
स्वर्गमाप्नोति स्त्रीसहस्र समावृतः ॥ सर्वकामविमुक्तोवा युक्तोवा स
र्व्वपातकैः ॥ १३३ ॥ पठन्दक्षकृतं स्तोत्रं सर्व्वपापैः प्रमुच्यते ॥ मृत
श्चगणसायुज्यं पूज्यमानः सुरासुरैः ॥ १३४ ॥ वृषेण विधियुक्तेन

विमानेनविराजते ॥ आभूतसंप्लवस्थायी रुद्रस्यानुचरोभवेत् ॥ १३५
इत्याह भगवान्व्यासः पराशरसुतः प्रभुः ॥ नैतद्देयते कश्चि न्नैत
च्छ्राव्यंस्तु कस्यचित् ॥ १३६ ॥ श्रुत्वेमं परमंगुह्यं येपिस्युः पापयो
नयः ॥ वैश्याः स्त्रियश्च शूद्राश्च रुद्रलोकमवाप्नुयुः ॥ १३७ ॥ श्राव
येयस्तु विप्रेभ्यः सदा पर्वसु पर्वसु ॥ रुद्रलोकमवाप्नोति द्विजोवै
नात्रसंशयः ॥ ॥ १३८ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषिसम्वादे दक्षस्तवो नामाष्ट
त्रिंशोऽध्यायः ३८ ॥



लोमहर्षण उवाच ॥ श्रुत्वैवं तेमुनिवराः कथां पापप्रणाशि
नीं ॥ रुद्रक्रोधोद्भवांपुण्यां व्यासश्चवदतो द्विजाः ॥ १ ॥ पार्वत्याश्च
तथारोषं क्रोधंशंभोश्च दुःसहं ॥ उत्पत्तिं वीरभद्रस्य भद्रकाल्या श्च
सम्भवं ॥ २ ॥ दक्षयज्ञविनाशं च वीर्यंशंभो स्तथाद्भुतम् ॥ पुनःप्र
सादंदेवस्य दक्षस्य सुमहात्मनः ॥ ३ ॥ यज्ञभागञ्च रुद्रस्य दक्षस्य
च फलंक्रतोः ॥ द्विजावभूवुः सुप्रीता विस्मिताश्च पुनःपुनः ॥ ४ ॥
पप्रच्छुश्च पुनर्व्यासं कथाशेषञ्च तेद्विजाः ॥ पृष्टः प्रोवाच तान्व्या
सः क्षेत्रमेकाम्रकं पुनः ॥ ५ ॥ व्यासउवाच ॥ ब्रह्मप्रोक्तां कथां चै
व श्रुत्वा तहृषिपुङ्गवाः ॥ प्रशशंसुस्तदा हृष्टा रोमांचित तनूरु
हाः ॥ ६ ॥ ऋषयऊचुः ॥ अहोदेवस्य माहात्म्यं त्वयाशंभोः प्रकी
र्त्तितं ॥ दक्षस्यच सुरश्रेष्ट यज्ञविध्वंसनं तथा ॥ ७ ॥ एकाम्रकं

त्रेत्तरं वक्तुमर्हसि सांप्रतं ॥ श्रोतुमिच्छामहे ब्रह्मन् परं कौतूहलं हिनः ॥ ८ ॥ व्यासउवाच ॥ तेषां तद्वचनं श्रुत्वा लोकनाथ श्चतुर्मुखः ॥ प्रोवाच शंभोस्तत्क्षेत्रं भूतले भुक्तिमुक्तिदं ॥ ९ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः ॥ सर्वपापहरं पुण्यं क्षेत्रं परमदुर्लभं ॥ १० ॥ लिङ्गकोटिसमायुक्तं वाराणस्याः समं शुभं ॥ एकाम्रकेति विख्यातं तीर्थाष्टकसमन्वितम् ॥ ११ ॥ एकाम्रवृक्षस्तत्रासीत् पुराकल्पे द्विजोत्तमाः ॥ नाम्नातस्यैव तत्क्षेत्र मेकाम्रकमितिश्रुतं ॥ १२ ॥ हृष्टपुष्टजनाकीर्णं नरनारीसमन्वितं ॥ विद्वांसगणभूयिष्ठं धनधान्यादिसंयुतं ॥ १३ ॥ गृहगोकुलसंबाधं नानारत्नोपशोभितं ॥ पराट्टालकसंकीर्णं वीथीभिः समलंकृतं ॥ १४ ॥ गजहंसनिभैःशुभ्रैः प्रासादैरुपशोभितं ॥ सुकुलद्वार संयुक्तं स्फीतप्राकारतोरणं ॥ १५ ॥ रचितं शस्त्रसंघैश्च परिखाभिरलंकृतं ॥ सितरक्तै स्तथापीतैः कृष्णैःश्यामै श्च वर्णकैः ॥ १६ ॥ ध्वजैः समीरणोद्धतैः पताकाभि रलंकृतं ॥ नित्योत्सव प्रमुदितं नानावादित्र वादितं ॥ १७ ॥ वीणावेणुमृदंगै श्च प्रेक्षणाभिरलंकृतं ॥ देवतायतनैर्दिव्यैः प्रकारोद्यानमण्डितैः ॥ १८ ॥ पूजाविचित्ररचितैः सर्वत्र समलंकृतं ॥ स्त्रियस्तु मुदितास्तत्र दृश्यन्ते तनुमध्यमाः ॥ १९ ॥ हारैरलंकृतग्रीवाः पद्मपत्रायतेक्षणाः ॥ पीनोन्नतकुचाः श्यामाः पूर्णेन्दुसमाननाः ॥ २० ॥ स्थिरालकाः सुकपोलाः कांचीनूपुर नादिताः ॥ हंसवारणगामिन्यः कुचभारावनामिताः ॥ २१ ॥ सुकेश्यस्त्वा

रुजघनाः कर्णान्तायतलोचनाः ॥ सर्वलक्षणसम्पन्नाः सर्वाभरणभू
षिताः ॥ २२ ॥ दिव्यवस्त्रधराः शुभ्राः काश्चि त्कांचनसन्निभाः ॥
दिव्यगन्धानुलिप्ताङ्गाः कर्णाभरणभूषिताः ॥ २३ ॥ मदालसाश्चसु
श्रोण्यो नित्यंप्रहसिताननाः ॥ विद्युन्निस्पष्टदशना बिम्बौष्ठ्यो मधुर
स्वराः ॥ २४ ॥ ताम्बूलरञ्जितमुखा विदग्धाः प्रियदर्शनाः ॥ शुभ
गाः प्रियवादिन्यो नित्यं यौवनगर्विताः ॥ २५ ॥ दिव्यवस्त्रधराः प्र
स्ताः सर्वाचारिन्नमण्डिताः ॥ क्रीडन्ति ताःसदातत्र स्त्रिय श्चाप्सर
सोपमाः ॥ २६ ॥ स्वेस्वेगृहे प्रमुदिता दिवारात्रौ वरांगनाः ॥ पुरु
षास्तत्र दृश्यन्ते रूपयौवनगर्विताः ॥ २७ ॥ सर्वलक्षणसम्पन्नाः स
र्वाभरण भूषिताः ॥ ब्राह्मणा क्षत्रिया वैश्याः शूद्राश्च मुनिसत्त
माः ॥ २८ ॥ स्वधर्मनिरता स्तत्र निवसन्ति सुधार्मिकाः ॥ अन्या
स्तत्र तिष्ठन्ति वारमुख्याः सुलोचनाः ॥ २९ ॥ घृताची मेनकातु
ल्या यथारम्भा तिलोत्तमा ॥ उर्वशीसदृशी चैव पूर्वचित्तिनिभा
स्तथा ॥ ३० ॥ विश्वाची सहजन्या च प्रम्लोचासदृशा स्तथा ॥ स
र्वास्ता प्रियवादिन्यः सर्वा विहसिताननाः ॥ ३१ ॥ कलाकौशलसंयु
क्ताः सर्वाश्च गुणमण्डिताः ॥ एवंभूताः स्त्रियस्तत्र नृत्यगीत विशा
रदाः ॥ ३२ ॥ निवसन्ति मुनिश्रेष्ठाः सर्वाःस्त्री गुणगर्विताः ॥ प्रेक्ष
णालापकुशलाः सुन्दर्यः प्रियदर्शनाः ॥ ३३ ॥ यासां कटाक्षपातेन
मोहंगच्छन्ति मानवाः ॥ नतत्र निर्धनाः सन्ति नमूर्खा नापिविदि
षः ॥ ३४ ॥ नरोगिणो नमलिना नकदर्य्या नमायिनः ॥ नरूपही

नादुर्वृत्ता नपरद्रोहकारिणः ॥ ३५ ॥ तिष्ठन्ति मानवास्तत्र क्षेत्रे
जगतिविश्रुते ॥ सर्वर्त्तुसुखसंचारं सर्वसत्वसुखावहं ॥ ३६ ॥ नाना
जनपदाकीर्णं सर्वसस्यसमन्वितं ॥ कर्णिकारैश्च पनसैश्चम्पकै नाग
केशरैः ॥ ३७ ॥ पाटलाशोकवकुलैः कपित्थै र्बीजपूरकैः ॥ चूतनि
म्बकदम्बैश्च नारंगै र्धवखादिरैः ॥ ३८ ॥ शालैस्तालैस्तमालैश्च
नारिकेलैः शुभाञ्जनैः ॥ अर्जुनैः सप्तपर्णैश्च कोविदारैः सपिप्प
लैः ॥ ३९ ॥ लकुचैः सरलैर्लोध्रैर्हिंतालैर्देवदारुभिः ॥ पलाशैर्मु
चुकुन्दैश्च पारिजातैः सकुब्जकैः ॥ ४० ॥ कदलीवनखण्डैश्च जम्बू
पूगफलैस्तथा ॥ केतकीकरवीरैश्च अतिमुक्तैश्च किंशुकैः ॥ ४१ ॥
मन्दारकुन्दपुष्पैश्च तथान्यैः पुष्पजातिभिः ॥ नानापक्षिरुतैः सेव्यै
र्वनैर्नन्दनोपमैः ॥ ४२ ॥ फलभारनतैर्वृक्षैः सर्वसत्वसुखकरैः ॥
चकोरैः शतपत्रैश्च भृङ्गराजैः सकोकिलैः ॥ ४३ ॥ कलविंकै र्मयूरै
श्च प्रियपुत्रैःशुकैस्तथा ॥ जीवजीवकहारीतैः कक्कुभै श्चाव धिष्ठि
तैः ॥ ४४ ॥ नानापक्षिगणैश्चान्यैः कूजद्भि र्मधुरस्वरैः ॥ दीर्घिका
भिस्तडागैश्च पुष्करिण्योऽल्पवारिभिः ॥ ४५ ॥ नानाजलाशयैः
पुण्यैः पद्मिनीखण्डमण्डितैः ॥ सरांसिच मनोज्ञानि प्रसन्नसलि
लानि च ॥ ४६ ॥ कुमुदैः पुण्डरीकैश्च तथानीलोत्पलैः शुभैः ॥ क
दम्बैश्चक्रवाकैश्च तथैवजलकुक्कुटैः ॥ ४७ ॥ कारण्डवैः प्लवैर्हंसैस्त
थान्यैर्जलचारिभिः ॥ एवंनानाविधैर्वृक्षैः पुष्पैर्नानाविधैःपरैः ॥ ४८
रम्यैर्जलाशयैःपुण्यैः शोभितं तत्समंततः ॥ आस्तेतत्र स्वयंदेवः कृ

त्तिवासा वृषध्वजः ॥ ४९ ॥ हिताय सर्वलोकस्य भुक्तिमुक्तिप्रदःशि
वः ॥ पृथिव्यां यानितीर्थानि सरितः सागराणि च ५० ॥ पुष्करि
एयस्तडागाश्च वाप्यः कूपाश्च सागराः ॥ तेभ्यःपूर्वं समुद्धृत्य जल
विंदू न्पृथक् पृथक् ॥ ५१ ॥ सर्वलोकहितार्थाय रुद्रः सर्वसुरैःसह ॥
तीर्थं विंदुसरोनाम तस्मिन्चेत्रे द्विजोत्तमाः ॥ ५२ ॥ चकार ऋषि
भिःसार्द्धं तेनबिन्दुसरः स्मृतं ॥ अष्टम्यां वहुलेपक्षे मार्गशीर्षे द्विजो
त्तमाः ॥ ५३ ॥ यस्तत्रयात्रां कुरुते विषुवे विजितेन्द्रियः ॥ विधिव
द्विंदुसरसि स्नात्वाश्रद्धासमन्वितः ॥ ५४ ॥ देवानृषीन्मनुष्यांश्च पि
त्हनूसंतर्प्यंयत्नतः॥ तिलोदकेनविधिना नामगोत्रविधानवित् ॥ ५५
स्नात्वैवं विधिवत्तत्र सोऽश्वमेधफलं लभेत् ॥ ग्रहोपरागविषुवे सं
क्रांत्यामयने तथा ॥ ५६ ॥ युगादिषडशीत्या च्च तथान्ये च शुभे
तिथौ ॥ येतत्रदानं विप्रेभ्यः प्रयच्छन्ति धनादिकं ॥ ५७ ॥ अन्यती
र्थाच्छतगुणं फलं तेप्राप्नुवन्तिवै ॥ पिण्डं येसंप्रयच्छन्ति पितृभ्यः स
रसस्तटे॥ पितृणामचयांतृप्तिं तेकुर्वन्ति नसंशयः ॥ ५८ ॥ ततःश
म्भोर्गृहंगच्छेद्वाग्यतः संयतेन्द्रियः ॥ प्रविश्य पूजये त्सर्व कृत्वा चैव
प्रदक्षिणं ॥ ५९ ॥ घृतक्षीरादिभिः स्नानं कारयित्वा शुभंशुचिः ॥
चन्दनेन सुगन्धेन विलिप्य कुसुमेन च ॥ ६० ॥ तत्रसंपूजयेद्देवं च
न्द्रमौलि मुमापतिम् ॥ पुष्पै र्नानाविधै र्मेध्यै र्विल्वार्कं कमलादि
भिः ॥ ६१ ॥ आगमोक्तेन मन्त्रेण वेदोक्तेन च शंकरं ॥ अदीक्षित
स्तु नाम्नैव मूलमन्त्रेण चार्च्चयेत् ॥ ६२ ॥ एवंसंपूज्य तं देवं गन्धपु

ष्यांवरादिभिः ॥ धूपदीपैश्च नैवेद्यै रुपहारै स्तथापरैः ॥ ६३ ॥ दंड
वत्प्रणिपातैश्च गीतैर्वाद्यै र्मनोहरैः ॥ नृत्यजप्यनमस्कारै र्जयशब्दैः
प्रदक्षिणैः ॥ ६४ ॥ एवंसंपूज्य विधिवत् देवदेवमुमापतिं ॥ सर्व्वपा
पविनिर्मुक्ता रूपयौवन गर्विताः ॥ ६५ ॥ कुलैकविंश मुद्धार्य्य दि
व्याभरणभूषिताः ॥ यज्ञानोदानशीलाश्च पृथिव्याःपतयस्तथा ॥ ६६ ॥
मुक्तेश्वरं च सिद्धेशं स्वर्णजालेश्वरं तथा ॥ परमेश्वरं च विख्यातं
सूक्ष्म ञ्चास्रातिकेश्वरं ॥ ६७ ॥ येपश्यं त्यर्चयित्वा स्नात्वा विंदुस
रोंभसि ॥ सर्व्वपापविनिर्मुक्ता विमानवरमास्थिताः ॥ ६८ ॥ सौव
र्णनविमानेन किंकिणीजालमालिना ॥ तल्लोकवासिभिः सार्द्धं याव
दाह्णतसंप्लवं ॥ ६९ ॥ तत स्तस्मादिहायाताः पृथिव्यां युगसंचये ॥
जायन्ते योगिनांगेहे चतुर्वेदि द्विजोत्तमाः ॥ ७० ॥ योगंपाशुपतंप्रा
प्य ततोमोक्षमवाप्नुयुः ॥ शयनोत्थापनेचैव संक्रांत्यामयनेतथा ॥ ७१ ॥
अशोकाख्यां तथाष्टम्यां पवित्रारोपणे तथा ॥ योजनद्वितयंसार्द्धं त्वे
वंतद्भुक्तिमुक्तिदं ॥ ७२ ॥ तस्मिन्क्षेत्रवरे लिङ्गं भास्करेश्वरसंज्ञि
तम् ॥ येप्रपश्यन्ति तन्देवं तस्मिन्कुण्डे महेश्वरं ॥ ७३ ॥ आदित्ये
नार्चितंपूर्वं देवदेवं त्रिलोचनं ॥ सर्व्वपापविनिर्मुक्ता विमानवरमा
स्थिताः ॥ ७४ ॥ उपगीयमानागन्धर्वैः शिवलोकं व्रजन्तिते ॥ तिष्ठ
न्तितत्र मुदिताः कल्पमेकं द्विजोत्तमाः ॥ ७५ ॥ भुक्त्वातु विपुलान्
भोगान् शिवलोके मनोरमान् ॥ पुण्यक्षयादिहायाता जायन्ते प्रव
रेकुले ॥ ७६ ॥ अथवा योगिनांगेहे वेदवेदांगपारगाः ॥ उत्पद्यन्ते

द्विजवरा:सर्व्वभूतहितेरता: ॥ ७७ ॥ मोक्षशास्त्रार्थकुशला: सर्वत्र समबुद्धय: ॥ योगंशंभोर्वरं प्राप्य ततोमोक्षंहि यान्तिवै ॥ ७८ ॥ तस्मिन्क्षेत्रवरे पुण्ये लिङ्गंयद्दृश्यते द्विजा: ॥ पूज्यापूज्या च सर्व्वत्र वनेरथ्यान्तरे पिवा ॥ ७९ ॥ चतुष्पथे श्मशानेवा यत्रकुत्र च तिष्ठति ॥ दृष्ट्वा तल्लिङ्गमव्यग्रं श्रद्धया सुसमाहित: ॥ ८० ॥ स्नापयित्वाघृतं भक्त्या गन्धैःपुष्पै र्मनोहरै: ॥ धूपै र्दीपैः सनैवेद्यै र्नमस्कारैःस्तवैस्तथा ॥ ८१ ॥ दण्डवत्प्रणिपत्याथ नृत्यगीतादिभिस्तथा ॥ संपूज्यैवं विधानेन शिवलोकं व्रजेन्नरः ॥ ८२ ॥ नारीवा द्विजशार्दूला: सततं श्रद्धयान्विता ॥ पूर्वोक्तफल माप्नोति नात्रकार्य्या विचारणा ॥ ८३ ॥ कःशक्नोति गुणान्वक्तुं समस्तान् मुनिसत्तमा: ॥ तस्य क्षेत्रवरस्याथ ऋतेदेवा न्महेश्वरात् ॥ ८४ ॥ तस्मिन् क्षेत्रवरे गत्वा सततं श्रद्धयान्वित:॥ माधवादिषुमासेषु नरोवायदिवांगना ॥ ८५ ॥ यस्मिन्कस्मिंस्तिथौ विप्राः स्नात्वा विंदुसरोंभसि ॥ पश्येद्देवं विरूपाक्षं देवीञ्च वरदां शिवां ॥ ८६ ॥ गणान्चण्डं कार्त्तिकेयं गणेशं वृषभंतथा ॥ कल्पद्रुम ञ्च सावित्रीं शिवलोकं सगच्छति ॥ ८७ ॥ स्नात्वाच कपिलेतीर्थे विधिव त्पापनाशने ॥ प्राप्नोत्यभिमतान् कामान् शिवलोकं सगच्छति ॥ ८८ ॥ यस्तत्रतीर्थे विधिव त्करोति नियतेन्द्रिय: ॥ कुलैकविंशमुद्धृत्य शिवलोकं सगच्छति ॥ ८९ ॥ एकाम्रकेशिवक्षेत्रे वाराणसीसमे शुभे ॥ दानंकरोति यस्तत्र समोक्षं लभतेशुभं ॥ ९० ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषिसम्वादे एकाम्रक्षेत्रवर्णनं
नामैकोनचत्वारिंशोऽध्यायः ३९ ॥



ब्रह्मोवाच ॥ विरजे विरजामाता ब्रह्मणा संप्रतिष्ठिता ॥
यस्याः संदर्शनेमर्त्यः पुनात्यासप्तमं कुलं ॥ १ ॥ सकृद्दृष्ट्वातु तांदेवीं
भक्त्यापूज्य प्रणम्यच ॥ नरःस्ववंशमुद्धृत्य ममलोकं सगच्छति ॥ २
अन्याश्च तत्रतिष्ठन्ति विरजे लोकमातरः ॥ सर्व्वपापहरादेव्यो वर
दाभक्तवत्सलाः ॥ ३ ॥ अस्ति वैतरणीतत्र सर्व्वपापहरानदी ॥ य
स्यांस्नात्वा नरःश्रेष्ठः सर्व्वपापैः प्रमुच्यते ॥ ४ ॥ आस्तेस्वयंभू स्तत्रै
व क्रोडरूपो हरिःस्वयं ॥ दृष्ट्वा प्रणम्यतंभक्त्या नरो विष्णुपदं व्रजे
त् ॥ ५ ॥ कपिले गोग्रहे सोमे तीर्थेचालावुसंज्ञके ॥ मृत्युंजयेक्रो
डतीर्थे वासुके सिद्धकेश्वरे ॥ ६ ॥ तीर्थेष्वेतेषु मतिमान् विरजे
नियतेन्द्रियः ॥ कृत्वाचतीर्थंविधिवत् स्नात्वादेवान्प्रणम्यच ॥ ७ ॥
सर्व्वपापविनिर्मुक्तो विमानवरमास्थितः ॥ उपगीयमानो गन्धर्वैर्म
मलोकेमहीयते ॥ ८ ॥ विरजेयो ममक्षेत्रे पिंडदानं करोतिवै ॥
सकरोत्युत्तमांतृप्तिं पितॄणां नात्रसंशयः ॥ ९ ॥ ममक्षेत्रे मुनिश्रे
ष्ठा विरजेये कलेवरं ॥ परित्यजन्ति पुरुषा स्ते मोक्षं प्राप्नुवन्ति
वै ॥ १० ॥ स्नात्वायःसागरे मर्त्यः पवित्रे कपिलंहरिं ॥ पश्येद्देवीं
च वाराहीं सयाति त्रिदशालयं ॥ ११ ॥ सन्तितीर्थानि पुण्यानि
पुण्यान्यायतनानि च ॥ तस्यमानि मुनिश्रेष्टा वेदितव्यानि तानि

च ॥ १२ ॥ समुद्रस्योत्तरे तीरे तस्मिन्देशे द्विजोत्तमाः ॥ आस्ते गुह्यं परं क्षेत्रं मुक्तिदं पापनाशनं ॥ १३ ॥ सर्वत्रवालुकाकीर्णं पवित्रं सर्वकामदं ॥ दशयोजनविस्तीर्णं क्षेत्रं परमदुर्लभं ॥ १४ ॥ अशोकार्जुनपुन्नागै र्वकुलैः सरलद्रुमैः ॥ पनसै नारिकेलैश्च शालैस्तालैः कपित्थकैः ॥ १५ ॥ चम्पकैः कर्णिकारैश्च चूतविल्वैः सपाटलैः ॥ कदम्बैः कोविदारैश्च लकुचै नागकेशरैः ॥ १६ ॥ शमीषामलकैर्लोध्रै नारंगै र्धवखादिरैः ॥ सर्जभूर्जाश्वकर्णैश्च तमालै र्देवदारुभिः ॥ १७ ॥ मन्दारैः पारिजातैश्च न्यग्रोधागुरुचन्दनैः ॥ खर्जूराम्रातकैःसिद्धै र्मुचुकुन्दैः सकिंशुकैः ॥ १८ ॥ अश्वत्थैः सप्तपर्णैश्च वटविल्वसपाटलैः ॥ शिंशपामलकै र्नीपै स्तिंदुकेंदु विभीतकैः ॥ १९ ॥ सर्वर्त्तुफलगन्धाढ्यैः सर्वर्त्तुकुसुमोज्वलैः ॥ मनोह्लादकरैःशुभ्रै र्नानाविहगनादितैः ॥ २० ॥ श्रोत्ररम्यैः सुमधुरै र्वल्गुभिर्मदनेरितैः ॥ मनसःप्रीतिजननैःशब्दैः खगरवेरितैः ॥ २१ ॥ चकोरैः शतपत्रैश्च भृङ्गराजै स्तथाशुकैः ॥ कोकिलैः कलविंकैश्च हारीतै र्जीवजीवकैः ॥ २२ ॥ प्रियपुत्रै श्चातकैश्च तथान्यै र्मधुरस्वरैः ॥ श्रोत्ररम्यैः प्रियकरैः कूजद्भिश्चाव धिष्ठितैः ॥ २३ ॥ केतकीवनखण्डैश्च अतिमुक्तैः सकुब्जकैः ॥ मालतीकुन्दवाणैश्च करवीरैःसितेतरैः ॥ २४ ॥ जम्बीरारुण कंकोलै र्दाडिमै र्वीजपूरकैः ॥ मातुलुङ्गैः पूगफलै र्हिंतालैः कदलीवनैः ॥ २५ ॥ अन्यैश्च विविधै र्वृक्षैः पुष्पैश्चान्यै र्मनोरमैः ॥ लतावितानगुल्मैश्च विविधैश्चजला

श्रयैः ॥ २६ ॥ दीर्घिकाभि स्तडागैश्च पुष्करिणीभिःसवारिभिः ॥ नानाजलाश्रयैःपुण्यैः पद्मिनीखण्डमण्डितैः ॥२७॥ सरांसिचम नोज्ञानि प्रसन्नसलिलानि च ॥ कुमुदैः पुण्डरीकैश्च तथा नीलोत्प लैःशुभैः ॥ २८ ॥ कल्हारैः कमलैश्चापि अन्वितानि समन्ततः ॥ कदम्बै श्चक्रवाकैश्च तथैव जलकुक्कुटैः ॥ २९ ॥ कारण्डवैः प्लवैर्हंसैः कूर्ममत्स्यै स्तथाद्भुतैः ॥ दात्यूहसारसाकीर्णैः कोयष्टिवक शोभि तैः ॥ ३० ॥ एतैश्चान्यैश्च कूजद्भिः समन्ता ज्जलचारिभिः ॥ खगै र्जलचरै श्चान्यैः कुसुमैश्च जलोद्भवैः ॥ ३१ ॥ गजै र्जलचरै श्चान्यै र्भूषितं सुमनोहरं ॥ ब्रह्मचारि गृहस्थैश्च वानप्रस्थैश्च भिक्षुभिः ॥ ३२॥ स्वधर्मनिरतै र्वर्णै स्तथान्यैः समलंकृतं ॥ हृष्टपुष्टजनाकीर्णं नरना रीसमाकुलं ॥ ३३ ॥ अशेषविद्यानिलयं क्षेत्रं परमदुर्लभं ॥ अस्ति तत्रमुनिश्रेष्टा विख्यातं पुरुषोत्तमं ॥ ३४ ॥ यावद्दुल्कलमर्यादादि क्क्रमेण प्रकीर्त्तिता ॥ तावद्देशप्रमाणेन देशःपुण्यतमोद्दिसः ॥ ३५ यत्रतिष्ठति विश्वात्मा देशे सपुरुषोत्तमः ॥ जगद्व्यापी जगन्नाथ स्तत्रसर्वं प्रतिष्ठितं ॥ ३६ ॥ अहं शक्रश्चरुद्रश्च देवाश्चाग्निपुरोगमाः ॥ निवसामो मुनिश्रेष्टा स्तस्मिन्देशे सदावयं ॥ ३७ ॥ गन्धर्वाप्सरसः सिद्धाः पितरो देवमानुषाः ॥ यक्षविद्याधराः सिद्धा मुनयः संशित व्रताः ॥ ३८ ॥ ऋषयो वालखिल्याश्च काश्यपाद्याः प्रजेश्वराः ॥ सु पर्णाः किन्नरानागा येचान्ये स्वर्गवासिनः ॥ ३९ ॥ सांगा श्च चतु रोवेदाः शास्त्राणि विविधानि च ॥ इतिहास पुराणानि यज्ञाश्च व

रदच्छ्रियाः ॥ ४० ॥ नद्यश्च विविधाः पुण्याः तीर्थान्यायतनानि च॥ सागराश्च तथा शैला स्तस्मिन्देशे व्यवस्थिताः ॥ ४१ ॥ एवं पुण्यतमे देशे देवर्षिपितृसेविते ॥ सर्वोपभोगसहिते वासःकस्यनरोचते ॥ ४२ श्रेष्टत्वं तस्यदेशस्य किञ्चान्यदधिकं ततः ॥ आस्तेयत्र स्वयंदेवो मुक्तिदः पुरुषोत्तमः ॥ ४३ ॥ धन्यास्ते विबुधप्रख्या येवसंत्युत्कले जनाः ॥ तीर्थराजजले स्नात्वा पश्यन्ति पुरुषोत्तमं ॥ ४४ ॥ स्वर्गेवसन्ति तेमर्त्या नतुते राजसालये ॥ येवसंत्युत्कलेक्षेत्रे पुण्ये श्रीपुरुषोत्तमे ॥ ४५ ॥ सफलं जीवितं तेषा मुत्कलानां सुमेधसां ॥ येपश्यन्ति सुरश्रेष्टं प्रसन्नायतलोचनं ॥ ४६ ॥ चारुभ्रूकेशमुकुटं चारुकर्णलतांचितं ॥ चारुस्मितं चारुदन्तं चारुकुण्डलमण्डितं ॥ ४७ ॥ सुनासं सुकपोलंच सुललाटं सुलक्षणं ॥ त्रैलोक्यानन्दजननं कृष्णस्य मुखपङ्कजम् ॥ ४८ ॥

इत्यादि ब्रह्मपुराणे स्वयंभुऋषिसम्वादे उत्कलवर्णनं नाम चत्वारिंशोऽध्यायः ४० ॥

—०—

ब्रह्मोवाच ॥ पुराकृतयुगे विप्राः शक्रतुल्यपराक्रमः ॥ बभूव नृपतिःश्रीमा निन्द्रद्युम्नेति विश्रुतः ॥ १ ॥ सत्यवादी शुचिर्दक्षः सर्वशस्त्रभृतांवरः ॥ रूपवान्सुभगःशूरो दाताभोक्ता प्रियंवदः ॥ २ ॥ यष्टा समस्तयज्ञानां ब्रह्मण्यः सत्यसंगरः ॥ धनुर्वेदेच वेदेच शास्त्रेच निपुणः कृती ॥ ३ ॥ वल्लभो वरनारीणां पौर्णमास्यां यथा श

षी ॥ आदित्यइव दुष्प्रेक्ष्यः शत्रुपक्षक्षयंकरः ॥ ४ ॥ वैष्णवः सत्व
संपन्नो जितक्रोधो जितेन्द्रियः ॥ अध्यात्मविद्याभिरतो मुमुक्षुर्धर्म
तत्परः ॥ ५ ॥ एवं सोपालयत् पृथिवीं राजा सर्व्वगुणाकरः ॥
तस्यबुद्धिः समुत्पन्ना विष्णोराराधनंप्रति ॥ ६ ॥ कथ माराधयिष्या
मि देवदेवं जनार्द्दनं ॥ कस्मिन्क्षेत्रे ऽथवा तीर्थे नदीतीरे तथाश्र
मे ॥ ७ ॥ एवंचिन्तापरः सोऽथ निरीक्ष्य मनसामहीं ॥ आलोक्य
सर्व्वतीर्थानि क्षेत्राण्यायतनानि च ॥ ८ ॥ तानि सर्वाणि संचिन्त्य
जगाम मनसापुनः ॥ विख्यातं परमंक्षेत्रं मुक्तिदं पुरुषोत्तमं ॥ ९ ॥
सगत्वा नृपतिस्तत्र समृद्ध बलवाहनः ॥ अयजत्चाश्वमेधेन विधि
वद्भूरि दक्षिणः ॥ १० ॥ कारयित्वा महोत्सेधं प्रासादं भूरिदक्षि
णं ॥ तत्रसंकर्षणं कृष्णं शुभद्रां स्थाप्य वीर्य्यवान् ॥ ११ ॥ पञ्च
तीर्थं च विधिवत् कृत्वातत्र महीपतिः ॥ स्नानं दानं तपो होमं दे
वताप्रेक्षणं तथा ॥ भक्त्याचाराध्य विधिवत् प्रत्यहं पुरुषोत्तमं ॥ १२
प्रसादा द्देवदेवस्य ततो मोक्षमवाप्तवान् ॥ आस्तेतत्र नदीपुण्या श्रि
प्रानामेति विश्रुता ॥ १३ ॥ तस्यांस्नातस्तु विधिवत् संतर्प्य पितृदेव
ताः ॥ सर्व्वपापविनिर्मुक्तो विमानवरमास्थितः ॥ १४ ॥ भुंक्ते वहु
विधान् भोगान् स्वर्गलोके मनोरमान् ॥ आस्ते तत्रैव भगवान् दे
वदेवोजनार्द्दनः ॥ १५ ॥ गोविन्दस्वामिनामासौ भुक्तिमुक्तिप्रदो
हरिः ॥ सकृद्दृष्ट्वातु तंदेवं भक्त्या पूज्य प्रणम्य च ॥ १६ ॥ उपगी
यमानो गन्धर्वैं विष्णुलोके महीयते ॥ भुंक्ते च विविधान् कामान्

निरातङ्को गतज्वरः ॥ १७ ॥ मार्कण्डेयं वटंकृष्णं दृष्ट्वा रामं च भोद्विजाः ॥ सागरे चेन्द्रद्युम्नाख्ये स्नात्वा मोक्षंलभेद् ध्रुवं ॥ १८॥ मुनयऊचुः ॥ कस्मा त्सन्नृपतिः पूर्व्वमिन्द्रद्युम्नो जगत्पतिः ॥ जगाम परमंक्षेत्रं मुक्तिदं पुरुषोत्तमं ॥ १९ ॥ प्रसादा त्तस्यदेवस्य ततोमोक्षमवाप्तवान् ॥ वाजिमेधेन विधिवद्यष्टवान् पुरुषोत्तमं ॥ २०॥ कथं समर्थफलदे क्षेत्रे परमदुर्लभे ॥ प्रासादं कारयामास श्रेष्ठंत्रैलोक्यविश्रुतं ॥ २१ ॥ कथंकृष्णञ्च रामञ्च सुभद्रां च प्रजापते ॥ निर्ममे राजशार्दूलः सर्व्वलक्षणलक्षितं ॥ २२ ॥ कथंतत्र महीपालः प्रासादे भवनोत्तमे ॥ स्थापयामास मतिमान् कृष्णादीं स्त्रिदशार्चितान् ॥ २३ ॥ एतत्सर्वं सुरश्रेष्ठ विस्तरेण यथातथं ॥ वक्तुमर्हस्यशेषेण चरितं तस्यधीमतः ॥ २४ ॥ नतृप्तिमधिगच्छाम स्तववाक्यामृतेनवै ॥ श्रोतुमिच्छामस्तेतस्मा त्परंकौतूहलं हिनः ॥ २५ ॥ ब्रह्मोवाच ॥ साधुसाधु द्विजश्रेष्ठा यत्पृच्छध्वं पुरातनं ॥ सर्व्वपापहरंपुण्यं भुक्तिमुक्तिप्रदं शुभं ॥ २६ ॥ वक्ष्यामि तस्यचरितं यथावृत्तं कृते युगे ॥ शृणुध्वं मुनिशार्दूलाः प्रयताः संयतेन्द्रियाः ॥ २७ ॥ अवन्तीनाम नगरी मालवे भुविविश्रुता ॥ तस्यूवतस्यनृपतेः पृथिवी ककुदोपमा ॥ २८ ॥ हृष्टपुष्टजनाकीर्णा दृढप्राकारतोरणा ॥ दृढयन्त्रार्गलद्वारा परिखाभि रलंकृता ॥ २९ ॥ नानावणिक् समाकीर्णा नानाभाण्ड सुविक्रया ॥ रथ्यापणवतीरम्या त्रिकचत्वरभूषिता ॥ ३०॥ पुराट्टालकसंयुक्ता सुविभक्त चतुष्पथा ॥ गृहगोपुरसंबाधा वीथी

भिःसमलंकृता ॥ ३१ ॥ राजहंसनिभैः शुभ्रै श्चित्राद्यैश्च मनोहरैः॥
अनेकशतसाहस्रैःप्रसादैःसमलंकृता ॥ ३२ ॥ यज्ञोत्सवप्रमुदिता गी
तवादित्रनिःस्वना ॥ नानावर्णपताकाभि र्ध्वजैश्चसमलंकृता ॥ ३३॥
हस्त्यश्वरथसंकीर्णा पदातिगणसंकुला ॥ नानायोधसमाकीर्णा ना
नाजनपदै र्युता ॥ ३४ ॥ ब्राह्मणैः क्षत्रियै र्वैश्यैः शूद्रै श्चान्यैश्च जा
तिभिः ॥ सम्वृद्धा सामुनिश्रेष्टा विद्वद्भिः समलंकृता ॥ ३५ ॥ नतत्र
मलिनाः सन्ति नमूर्खा नापि दुर्बलाः ॥ नरोगिणो नांगहीना
नद्यूतव्यसनान्विताः ॥ ३६ ॥ सदाहृष्टा सुमनसो दृश्यन्ते पुरुषास्त्रि
यः ॥ क्रीडंत्यस्मि न्दिवारात्रौ हृष्टास्तत्र पृथक्पृथक् ॥ ३७ ॥ सुवे
षाः पुरुषास्तत्र दृश्यन्ते तप्तकुण्डलाः ॥ पुरुषाः शुभगाः शूरा दि
व्यालंकार भूषिताः ॥ ३८ ॥ कामदेवप्रतीकाशाः सर्व्वलक्षणलक्षि
ताः ॥ सुकेशाः सुकपोलाश्च सुमुखाः श्मश्रुधारिणः ॥ ३९ ॥ ज्ञा
तारः सर्व्वशास्त्राणां भेत्तारः शत्रुवाहिनीं ॥ दातारः सर्व्वरत्नानां
भोक्तारः सर्व्वसम्पदां ॥ ४० ॥ स्त्रियस्तत्र मुनिश्रेष्टा दृश्यन्ते सुम
नोहराः ॥ हंसवारणगामिन्यः कर्णान्तायतलोचनाः ॥ ४१ ॥ सुम
ध्या चारुजघनाः पीनोन्नतपयोधराः ॥ सुकेश्य श्चारुवदनाः सुक
पोलाः स्थिरालकाः ॥ ४२ ॥ विद्युद्विस्पष्टदशनाः पूर्णचन्द्र समान
नाः ॥ हारभारोन्नतग्रीवाः कण्ठाभरणभूषिताः ॥ ४३ ॥ विम्बौ
ष्ठ्यो रञ्जितनखा स्ताम्बूलेन विराजिताः ॥ सुवर्णाभरणोपेताः स
र्वालंकारभूषिताः ॥ ४४ ॥ श्यामावदाताः सुश्रोण्यः काञ्चीनूपुर

नादिताः ॥ दिव्यमाल्यधराः सर्व्वा दिव्यगन्धानुलेपनाः ॥ ४५ ॥
विदग्धाः सुमुखाः कान्ता चार्व्वङ्ग्यः प्रियदर्शनाः ॥ रूपलावण्यसंयु
क्ताः सर्वाः प्रहसिताननाः ॥ ४६ ॥ क्रीडंत्यश्च मदोन्मत्ता चत्वरेषु
सभासु च ॥ गीतवाद्यकथालापै रमयन्त्यश्च ताःस्त्रियः ॥ ४७ ॥
वारमुख्याश्च दृश्यन्ते नृत्यगीतविशारदाः ॥ प्रेक्षणालापकुशलाः स
र्वयोषिद्गुणान्विताः ॥ ४८ ॥ अन्याश्च तत्र दृश्यन्ते गुणाढ्या याःकुल
स्त्रियः ॥ पतिव्रताश्च सुभगा गुणैः सर्वैरलंकृताः ॥ ४९ ॥ वनैश्चोप
वनैः पुण्यै रुद्यानैः सुमनोहरैः ॥ देवतायतनै र्दिव्यै र्नानाकुसुमशो
भितैः ॥ ५० ॥ शालैस्तमालै र्बकुलैः कपित्थै र्नागकेशरैः ॥ प्रियालैः
कर्णिकारैश्च पनसै स्सरलद्रुमैः ॥ ५१ ॥ नारंगै र्लकुचै र्लोध्रैः सप्त
पर्णैः सुभाञ्जनैः ॥ चूतविल्वकदम्बैश्च शिंशिपै र्धवखादिरैः ॥ ५२ ॥
पाटलाशोकतगरैः करवीरैः सितेतरैः ॥ पीतैरर्जुनवर्णाग्रै राम्रै
राम्रातकै स्तथा ॥ ५३ ॥ न्यग्रोधाश्वत्थ काश्मीर्यैः पलाशै र्देवदार
भिः ॥ मन्दारैः पारिजातैश्च हिन्तालै र्वीजपूरकैः ॥ ५४ ॥ केत
कीवनखण्डैश्च अतिमुक्तैः सकुब्जकैः ॥ मल्लिकाकुन्दबाणैश्च कदली
खण्डमण्डितैः ॥ ५५ ॥ मातुलुंगैः पूगफलैः करुणैः सिन्धुवारकैः ॥
वहुवारैःकोविदारै र्वदरीसकरञ्जकैः ॥ ५६ ॥ अन्यैश्च विविधैर्वृक्षैः
पुष्पै श्चान्यै र्मनोहरैः ॥ लतागुल्मवितानैश्च उद्यानै र्नन्दनोप
मैः ॥ ५७ ॥ सदाकुसुमगन्धाढ्यैः सदाफलभरानतैः ॥ नानापक्षि
रुतै रम्यै र्नानामुनिगणावृतैः ॥ ५८ ॥ चकोरैः शतपत्रैश्च भृङ्गकैः

प्रियपुत्रकैः ॥ चातकैः प्रियपुत्रैश्च हारीतै र्जीवजीवकैः ॥ ५९ ॥
कलविंकै र्मयूरैश्च शुकैः कोकिलकै स्तथा ॥ कपोतैः खञ्जरीटै श्च
श्येनैः पाशशतै स्तथा ॥ ६० ॥ खगैश्चान्यै र्बहुविधैः श्रोत्ररम्यै र्मनो
हरैः ॥ नानारवैः प्रियकरै र्वल्गुभि र्मदनैरितैः ॥ ६१ ॥ दीर्घिका
कूपवापीभि स्तडागैः सुमनोहरैः ॥ सरितः पुष्करिण्यश्च सरांसि
सुबहूनि च ॥ ६२ ॥ अन्यै र्जलाशयैः कान्तैः कुमुदोत्पलमण्डितैः॥
पद्मैः सितेतरैः शुभ्रैः कह्लारैश्च सुगन्धिभिः ॥ ६३ ॥ अन्यै र्बहुवि
धैः कान्तै र्जलजैः सुमनोहरैः ॥ गन्धामोदरसै र्दिव्यैः सर्वर्त्तुकुसुमो
ज्ज्वलैः ॥ ६४ ॥ हंसकारण्डवाकीर्णै श्चक्रवाकोपशोभितैः ॥ कोयष्टि
बकदात्यूहै र्मद्गुभि श्चैव शोभितैः ॥ ६५ ॥ सारसैश्च बलाकैश्च ना
नाविहगभूषितैः ॥ जलपादैः कदम्बैश्च प्लवैश्च जलकुक्कुटैः ॥ ६६ ॥
खगै र्जलधरै श्चान्यै र्नानाखगविभूषितैः ॥ नानावर्णसदाहृष्टै रा
विभाति च सत्तमैः ॥ ६७ ॥ एवं नानाविधैः पुष्पै र्विविधैश्च जला
शयैः ॥ विविधैः पादपैः पुण्यै रुद्याने र्विविधै स्तथा ॥ ६८ ॥ जल
स्थलभवै श्चैव विहंगै श्चार्वधिष्ठितैः ॥ देवतायतनै र्दिव्यैः शोभिता
सामहापुरी ॥ ६९ ॥ तत्रास्ते भगवान्देव स्त्रिपुरारि स्त्रिलोचनः ॥
महाकालेति विख्यातः सर्व्वकामप्रदः शिवः ॥ ७० ॥ शिवकुण्डे न
रः स्नात्वा विधिव त्तापनाशने ॥ देवान् पितॄ नृषींश्चैव संतर्प्य वि
धिव द्बुधः ॥ ७१ ॥ गत्वा शिवालयं पश्चात् कृत्वा तन्त्रिः प्रदक्षिणं॥
प्रविश्य संयतो भूत्वा धौतवासा जितेन्द्रियः ॥ ७२ ॥ शुभ्रैः पुष्पै

स्तथा गन्धै धूपैर्दीपैश्च भक्तितः ॥ नैवेद्यै रुपहारैश्च गीतवाद्यैः प्रद
चिणैः ॥ ७३ ॥ दण्डवत् प्रणिपातैश्च मन्त्रैः स्तोत्रैश्च शंकरं ॥ संपू
ज्य विधिवद्भक्त्या महाकालं सकृच्छिवम् ॥ ७४ ॥ अश्वमेध सहस्र
स्य फलंप्राप्नोति मानवः ॥ पापैः सर्वैं र्विनिर्मुक्तो विमानैः सार्व्वका
मिकैः ॥ ७५ ॥ आरुह्य त्रिदिवं याति यत्र शम्भोर्निकेतनं ॥ दि
व्यरूपधरः श्रीमान् दिव्यालंकारभूषितः ॥ ७६ ॥ भुंक्ते तत्र वरान्
भोगान् यावदाभूतसंप्लवं ॥ शिवलोके मुनिश्रेष्ठा जरामरण वर्जि
ते ॥ ७७ ॥ पुण्यक्षया दिहायातः प्रवरे ब्राह्मणेकुले ॥ चातुर्वेदी
भवेद्विप्रः सर्वशास्त्र विशारदः ॥ ७८ ॥ योगं पाशुपतं प्राप्य ततो
मोक्षमवाप्नुयात् ॥ आस्तेतत्र नदीपुण्या शिप्रानामेतिविश्रुता ॥७९
तस्यां स्नातस्तु विधिवत् संतर्प्य पितृदेवताः ॥ सर्व्वपाप विनिर्मुक्तो
विमानवर मास्थितः ॥ ८० ॥ भुंक्ते वहुविधान् भोगान् स्वर्गलोके
मनोरमान् ॥ आस्ते तत्रैव भगवान् देवदेवो जनार्द्दनः ॥ ८१ ॥
गोविन्दस्वामिनामासौ भुक्तिमुक्तिप्रदो हरिः ॥ सकृद्दृष्ट्वातु तंदेवं
भक्त्या पूज्यप्रणम्य च ॥ ८२ ॥ तंदृष्ट्वा मुक्तिमाप्नोति त्रिसप्तकुलसं
युतः ॥ विमानेनार्कवर्णेन किंकिणीजालमालिना ॥ ८३ ॥ सर्वका
मसमृद्धेन कामगेन स्थिरेण च ॥ उपगीयमानो गन्धर्वै र्विष्णुलोके
महीयते ॥ ८४ ॥ भुंक्तेच विविधान् कामान् निरातङ्को गतज्वरः॥
आभूतसंप्लवं यावत् सुरूपः सुभगःसुखी ॥ ८५ ॥ कालेनागत्य म
तिमान् ब्राह्मणःस्या न्महीतले ॥ प्रवरे योगिनां गेहे वेदशास्त्रार्थ

तत्ववित् ॥ ८६ ॥ वैष्णवं योगमास्थाय ततोमोक्षमवाप्नुयात् ॥ गो
विन्दस्वामिनामानं विष्णुंतत्रैव भोद्विजाः ॥ ८७ ॥ दृष्ट्वा नरोवा
नारीवा फलंपूर्वोदितं लभेत् ॥ अन्येपि तत्र तिष्ठन्ति देवाः ब्रह्मपु
रोगमाः ॥ ८८ ॥ मातरश्च मुनिश्रेष्टाः सर्वकामफलप्रदाः ॥ दृष्ट्वा
ता विधिवद्भक्त्या संपूज्य प्रणिपत्य च ॥ ८९ ॥ सर्व्वपापविनिर्मुक्तो
नरोयाति त्रिविष्टपं॥एवंसानगरीरम्या राजसिंहेन पालिता॥९०॥
नित्योत्सवप्रमुदिता यथेन्द्रस्यामरावती ॥ पुराष्टदश संयुक्ता सुवि
स्तीर्णचतुष्पथा ॥ ९१ ॥ धनुर्ज्यांघोषनिवहा सिद्धसंगम भूषिता ॥
विद्वांसगण भूयिष्टाध्ययने घोषनादिता ॥ ९२ ॥ इतिहासपुराणा
नि शास्त्राणि विविधानि च ॥ काव्यालंकारका श्चैव श्रूयन्तेऽहर्निशं
द्विजाः ॥ ९३ ॥ एवंमया गुणाढ्यासा स्वावन्तीसमुदाहृता ॥ यस्यां
राजाप्यभूत्पूर्वं मिन्द्रद्युम्नो महीपतिः ॥ ९४ ॥

इत्यादि ब्रह्मपुराणे स्वयंभूऋषिसम्बादे अवन्तीवर्णनं नामैक
चत्वारिंशोऽध्यायः ४१ ॥

—०—

ब्रह्मोवाच॥ तस्यांसन्नृपतिःपूर्वं कुर्वन्राज्य मनुत्तमं ॥ पालया
मास मतिमान् प्रजाः पुत्रानिवौरसान् ॥ १ ॥ सत्यवादी महाप्रा
ज्ञः शूरः सर्वगुणाकरः ॥ श्रुतिमान् धर्मसम्पन्नः सर्व्वशास्त्रश्रुतांव
रः ॥ २ ॥ सत्यवान् शीलवान् दान्तः श्रीमान् परपुरञ्जयः ॥ आ
दित्यइव तेजोभी रूपे राश्विनयोरिव ॥ ३ ॥ वर्द्धमानगुणै र्युक्तः

शक्रतुल्यपराक्रमः॥ शारदेंदुरिवाभाति लक्षणैः समलंकृतः॥४॥
आहर्ता सर्वयज्ञानां हयमेधादिनां तथा॥ दाने यज्ञे तपोभिश्च
तत्तुल्योनास्ति भूपतिः॥ ५॥ सुवर्णमणि मुक्तानां गजाश्वानां च
भूपतिः॥ प्रददौ विप्रमुख्येभ्यो यागे यागे महाधनं॥ ६॥ हस्त्य
श्वरथमुख्यानां कम्बलाजिनवाससां॥ रत्नानांधनधान्यानां मन्तस्तस्य
नविद्यते॥ ७॥ एवं सर्वधनैर्युक्तो गुणैः सर्वैरलंकृतः॥ सर्वकामस
मृद्धात्मा कुर्वन् राज्यमनुत्तमं॥ ८॥ तस्येयं मतिरुत्पन्ना सर्वयोगे
श्वरंहरिं॥ कथमाराधयिष्यामि भुक्तिमुक्तिप्रदंविभुं॥९॥ विचार्य
सर्वशास्त्राणि तन्त्राख्यागमविस्तरं॥ इतिहास पुराणानि वेदांगा
नि च सर्वशः॥१०॥ धर्मशास्त्राणिसर्वाणि नियमा ऋषिभाषितान्॥
वेदान्तानि च सर्वाणि विद्यास्थानानि यानिच॥११॥ गुरूंसंसेव्य य
त्नेन ब्राह्मणान् वेदपारगान्॥ अवाप परमांकाष्ठां कृतकृत्योभवत्त
दा॥ १२॥ संप्राप्य परमंतत्वं वासुदेवाख्य मव्ययम्॥ आन्विज्ञान
मतीतस्तु सुमुक्षुः संयतेन्द्रियः॥१३॥ कथमाराधयिष्यामि देवदेवं
सनातनं॥ पीतवासं चतुर्बाहुं शंखचक्रगदाधरं॥ १४॥ वनमाला
हृतोरस्कं पद्मपत्रायतेक्षणं॥ श्रीवत्सोरसि संयुक्तं सुकुटां गदधारि
णं॥ १५॥ स्वपुरा त्सहिनिष्क्रांत उज्जयिन्याः महीपतिः॥ वलेन
महतायुक्तः सभृत्यः सपुरोहितः॥ १६॥ अनुजग्मु स्ततःसर्वे रथि
नः शस्त्रपाणयः॥ रथैर्विमानसंकाशैः पताकाध्वजशोभितैः॥१७
सादिनश्च तथासर्वे पाशतोमरपाणयः॥ अश्वैः पवनसंकाशै रतुल

ग्मुस्तु तं नृपं ॥ १८ ॥ हिमवत्सम्भवैर्मत्तै वारणैः पर्वतोपमैः ॥ ईषा
दन्तैः सदामत्तैः प्रचण्डैः षष्टिहायनैः ॥ १९ ॥ हेमकक्षैः सपताकैर्घं
टारवविभूषितैः ॥ अनुजग्मुस्तु तं सर्वे जययुद्धविशारदाः ॥ २० ॥
असंख्येयाश्च पादाता धनुःप्रासासिपाणयः ॥ दिव्यमाल्याम्बरधरा
दिव्यगन्धानुलेपिताः ॥ २१ ॥ अनुजग्मुश्च तं सर्वे युवानो हृष्टकुण्ड
लाः ॥ सर्वास्त्रकुशलाः शूराः सदा संग्रामलालसाः ॥ २२ ॥ अन्तः
पुरनिवासिन्यः स्त्रियःसर्वाः स्वलंकृताः ॥ रूपयौवनसम्पन्नाः सर्वाभ
रणभूषिताः ॥ २३ ॥ दिव्यवस्त्रधराः सर्वा दिव्यमाल्यविभूषिताः॥
दिव्यगन्धानुलिप्तांग्यः शरदिंदुसमाननाः ॥ २४ ॥ सुमध्या स्वारुवे
षाश्च चारुकर्णालकांचिताः ॥ बिम्बौष्ठ्य स्चारुदशनाः पद्मपत्रायते
क्षणाः ॥ २५ ॥ ताम्बूलरञ्जितमुखा रचिभिश्च सुरचिताः ॥ यानै
रुच्चावचैः शुभ्रै र्मणिकाञ्चनभूषितैः ॥ २६ ॥ उपगीयमाना स्ताः
सर्वा गायनैः स्तुतिपाठकैः ॥ वेष्टिताः शस्त्रहस्तैश्च अनुजग्मुश्च तं
नृपं ॥ २७ ॥ वेश्याः सर्वाङ्गसुन्दर्यो नानालंकारभूषिताः ॥ सुरू
पाः सुभगाः कान्ताः सर्वस्त्रीगुणसंयुताः ॥ २८ ॥ सर्वास्ता विवि
धैर्यानैः सर्वालंकारभूषिताः ॥ परिवारगणैः सार्द्ध मनुजग्मुस्तु तं
नृपं ॥ २९ ॥ वासग्रामगणाः सर्वे नानापुर निवासिनः ॥ धनैरत्नैः
सुवर्णैश्च सदाराः सपरिच्छदाः ॥ ३० ॥ इतिहासविदश्चैव वेदशा
स्त्रार्थ पारगाः ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा श्चैवा न्त्यजात
यः ॥ ३१ ॥ सुवर्णकाराः कर्मारा लोहकाराश्च कुट्टकाः ॥ मणि

कारा: कुम्भकारा स्वर्णकाराश्च पाचका: ॥ ३२ ॥ पत्त्रकारा वेत्र
कारा: सूत्रधाराश्च शिल्पिन: ॥ केशकारा: स्तम्बकारा इषुकारा
स्तजीविन:॥ ३३॥ चूर्णकारा: शंखकारा: सुधाकाराश्च वाहका: ॥
अपूपकारका: सर्वे तोयविक्रयका स्तथा ॥ ३४ ॥ मालाकारा: पर्व्व
कारा: मद्यविक्रयिण श्चये ॥ मत्स्यविक्रयिण श्चैव मांसविक्रयका स्त
था ॥ ३५ ॥ तैलविक्रयका श्चैव वस्त्रविक्रयका स्तथा ॥ शस्त्रविक्रय
का श्चैव ताम्बूलपण्यजीविन: ॥ ३६ ॥ तृणविक्रयका श्चैव काष्ठविक्र
यका स्तथा ॥ रंगोपजीविन श्चैव रजकाश्च सहस्रश: ॥ ३७ ॥ गो
पाला नापिता श्चैव तथान्ये वस्त्रसूचका: ॥ मेषपाला श्छागपाला
स्तगपालाश्च हंसका: ॥ ३८ ॥ फलविक्रयिण श्चैव पत्रविक्रयका स्त
था ॥ काष्ठविक्रयिण: सर्वे तथा यवसहारिण: ॥ ३९ ॥ धान्यविक्र
यिण श्चैव शक्तुविक्रयिण स्तथा॥ गुडविक्रयका श्चैव तथा लवणजी
विन: ॥ ४० ॥ गायना नर्त्तका श्चैव तथा मंगलपाठका: ॥ शैलूषा:
कथका श्चैव पुराणार्थे विशारदा: ॥ ४१ ॥ कवय: काव्यकर्त्तारो ना
नावाक्यविशारदा: ॥ विषघ्नागारुडाश्चैव नानारत्नपरीक्षका: ॥ ४२ ॥
संकारान्ता श्चकाराश्च कांस्यकारा श्चहटका: ॥ कोषकारा श्चित्रका
रा: कुन्दकाराश्च पावका: ॥ ४३ ॥ दण्डकाराश्चासिकारा: शूराद्यू
तोपजीविन: ॥ मल्ला: सूताश्च कायस्था येचान्ये कर्मकारिण: ॥ ४४ ॥
तन्तुवायरूपकारा वार्त्तिका स्तैलपाचका: ॥ लावजीवा स्तैत्तिरिका
स्वगपक्ष्युपजीविन: ॥ ४५ ॥ गजवैद्या श्चाश्ववैद्या नरवैद्याश्च धीव

रा: ॥ हलवैद्याश्च गोवैद्या येचान्ये छेददाहका: ॥ ४६ ॥ एवं नागर
का: सर्वे येचान्येनानुकीर्त्तिता: ॥ अनुजग्मुस्तु राजानं समस्तपुर
वासिन: ॥ ४७ ॥ यथाव्रजन्तं पितरं ग्रामान्तर समुत्सुकं ॥ अनुया
न्तियथापुत्रा स्तथातं तेहि नागरा: ॥ ४८ ॥ एवं सन्नृपति: श्रीमान्
वृत:सर्वै र्महाजनै: ॥ हस्त्यश्वरथपादातै र्जगामथ शनै:शनै: ॥ ४९
एवं सगत्वान्नृपति: दक्षिणस्योदधे स्तटं ॥ सर्वैस्तै र्दीर्घकालेन वलै
रनुगत:प्रभु: ॥ ५० ॥ ददर्श सागरंरम्यं नृत्यन्तमिव संस्थितं ॥ अ
नेकशतसाहस्रै रुर्मिभिश्च समावृतं ॥ ५१ ॥ नानारत्नालयं पुण्यं
नानाप्राणिसमावृतं ॥ वीचीतरंगवहुलं महाश्चर्य्यसमन्वितं ॥ ५२ ॥
तीर्थराजं महाशब्द मपारं सुभयंकरं ॥ मेघवृन्दप्रतीकाश मगाधं
मकरालयं ॥ ५३ ॥ मत्स्यै: कूर्मै श्च शंखै श्च शुक्तिका नक्रसंकुलै: ॥
शिशुमारै: कर्कटैश्च वृतं सर्पै र्महाविषै: ॥ ५४ ॥ लवणोदं हरे:स्था
नं शयनस्य नदीपतिं ॥ सर्व्वपापहरं पुण्यं सर्व्ववांछाफलप्रदं ॥ ५५ ॥
अनेकावर्त्त गम्भीरं दानवानां समाश्रयं ॥ अमृतस्याकरणं दिव्यं देव
योनिमपां पतिम् ॥ ५६ ॥ वरिष्टं सर्व्वभूतानां प्राणिनां जीवधार
णं ॥ सुपवित्रं पवित्राणां मंगलाना ञ्च मंगलम् ॥ ५७ ॥ तीर्था
नामुत्तमं तीर्थं मव्ययं यादसां पतिम् ॥ चन्द्रवृद्धिक्षयश्चैव पश्यमा
नंप्रतिष्ठितं ॥ ५८ ॥ अभेद्यं सर्व्वभूतानां देवाना मम्रुतालयं ॥ उ
त्पत्तिस्थिति संहार हेतुभूतं सनातनं ॥ ५९ ॥ उपजीव्यंच सर्वेषां
पुण्यं नदनदीपतिं ॥ तंदृष्ट्वा नृपतिश्रेष्टो विस्मयं परमंगत: ॥ ६० ॥

निवास मकरोत्तत्र वेलामासाद्य सागरीं ॥ पुण्येमनोहरे देशे सर्व
भूमिगुणैर्युते ॥ ६१ ॥ चूतैः शालैः कदम्बैश्च पुन्नागैः सरलद्रुमैः ॥
पनसै नारिकेलैश्च लकुचै नागकेशरैः ॥ ६२ ॥ तालैः प्रियालैः ख
र्जूरै नारंगै वीजपूरकैः ॥ शालै राम्रातकै र्लोध्रै र्वकुलै र्वञ्जवार
कैः ॥ ६३ ॥ कपित्थैः कर्णिकारैश्च पाटलाशोकचम्पकैः ॥ दाडिमै
श्च तमालैश्च पारिजातै स्तथार्जुनैः ॥ ६४ ॥ प्राचीनामलकै र्विल्वैः
प्रियङ्गु धवखादिरैः ॥ इंगुदीसप्तपर्णैश्च अश्वत्थागस्त्य जम्बु
कैः ॥ ६५ ॥ मधूकैः करवीरैश्च वहुवारैस्सतिंदुकैः ॥ पलाशवदरै
र्नीपैः चिह्वनिम्बशुभाञ्जनैः ॥ ६६ ॥ चारकैः कोविदारैश्च भल्लाता
मलकैस्तथा ॥ ताडहिन्ताल काकोलैः करञ्जैः सविभीतकैः ॥ ६७॥
सर्जप्रवरकाश्मीर्यैः शालमली देवदारुकैः ॥ शाखोटकै र्विल्ववटैः
कुम्भीगोष्टहरीतकैः ॥ ६८ ॥ गुग्गुलै श्चन्दनैश्चैव स्तथैश्च गुरुपा
दपैः ॥ जम्बीरवरुणाद्यैश्च स्तिलिलै रक्तचन्दनैः ॥ ६९ ॥ एवं ना
नाविधैश्चैव स्तथान्यै र्वहुपादपैः ॥ कल्पद्रुमै र्नीलफलैः सर्वर्त्तु कु
सुमोत्करैः ॥ ७० ॥ नानापचिरुते र्दिव्यै र्मत्तकोकिलनादितैः ॥
मयूरवरसंघुष्टैः शुकसारिवकाकुलैः ॥ ७१ ॥ हरितै र्भृंगराजैश्च
चातकैश्च कपोतकैः ॥ पुष्पितायेषुवृक्षेषु कूजद्भि श्चाव्यधिष्ठितैः ॥ ७२
केतकी वन खण्डैश्च सदा पुष्प धरैः सितैः ॥ मल्लिका कुन्द कु
सुमै र्यूथिका तगरैस्तथा ॥ ७३ ॥ कुटजै र्वाणपुष्पैश्च अतिमुक्तैः
सकुब्जकैः ॥ मालती करवीरैश्च तथा कदलिका वनैः ॥ ७४ ॥

श्चान्येर्नानाविधैः पुष्पैः सुगन्धैश्चारुदर्शनैः ॥ वनोद्यानोपवनजैर्नानावर्णैः सुगन्धिभिः ॥ ७५ ॥ विद्याधरगणाकीर्णैः सिद्धचारणसेवितैः ॥ गन्धर्वोरगरक्षोभिर्भूतापसरसकिन्नरैः ॥ ७६ ॥ मुनियक्षगणाकीर्णैर्नानासत्वनिषेवितैः ॥ मृगैः शाखामृगैः सिंहैर्वराहगर्दभाकुलैः ॥ ७७ ॥ तथान्यैः कृष्णसारैश्च मृगैः सर्वत्रशोभितैः ॥ शार्दूलैर्द्वीपमातङ्गैस्तथान्यैर्वनचारिभिः ७८ ॥ एवन्नानाविधैर्वृक्षैरुद्यानैर्नन्दनोपमैः ॥ लतागुल्मवितानैश्च विविधैश्च जलाशयैः ॥ ७९ ॥ हंसकारंडवाकीर्णैः पद्मिनीखण्डमण्डितैः ॥ कदम्बैश्च पूर्वैर्हंसैश्चक्रवाकोपशोभितैः ॥ ८० ॥ कमलैः शतपत्रैश्च कह्लारैः कुमुदोत्पलैः ॥ खगैर्जलचरैश्चान्यैः पुष्पैर्जलसमुद्भवैः ॥ ८१ पर्वतैर्दीप्तशिखरैश्चारुकन्दरमण्डितैः ॥ नानाद्रुमसमाकीर्णैर्नानाधातुविभूषितैः ॥ ८२ ॥ सर्वाश्चर्यमयैःशृंगैः सर्वभूतालयैःशुभैः ॥ सर्वौषधिसमायुक्तैर्विपुलैर्हिमसानुभिः ॥ ८३ ॥ एवं सर्वैः समुदितैः शोभितं सुमनोहरैः ॥ ददर्श सम्प्रोपात्तः स्थानं त्रैलोक्यपूजितं ॥ ८४ ॥ दशयोजनविस्तीर्णं पञ्चयोजनमायतं ॥ नानाश्चर्यसमायुक्तं क्षेत्रं परमदुर्लभं ॥ ८५ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषिसम्वादे क्षेत्रदर्शनो नाम द्विचत्वारिंशोऽध्यायः ४२ ॥

—०—

मुनयऊचुः ॥ तस्मिन्क्षेत्रवरे पुण्ये वैष्णवे पुरुषोत्तमे ॥

किंतत्र प्रतिमापूर्वं वैष्णवीनस्थिता विभो ॥ १ ॥ येनासौ नृपति स्तत्र गत्वा सबलवाहनः ॥ स्थापयामास कृष्णञ्च रामंभद्रां शुभप्रदां ॥ २ ॥ संशयोनो महानत्र विस्मयश्च जगत्पते ॥ श्रोतुमिच्छामहेसर्वं ब्रूहितत्कारणं ब्रुवन्‌ः ॥ ३ ॥ ब्रह्मोवाच ॥ शृणुध्वं पूर्वसंवृत्तां कथां पापप्रणाशिनीं ॥ प्रवक्ष्यामि समासेन श्रियःपृष्टः पुराहरिः ॥ ४ ॥ सुमेरोः काञ्चनेशृंगे सर्वाश्चर्यसमन्विते ॥ सिद्धविद्याधरैर्यक्षैः सर्वर्तुकुसुमोज्वलैः ॥ ५ ॥ जातरूपप्रतीकाशै र्भूषितैः सूर्यसन्निभैः ॥ अन्यैश्च वक्षभिर्वृक्षैः शालतालादिभिर्वृते ॥ ६ ॥ पुन्नागाशोकसरल न्यग्रोधाम्रातकार्जुनैः ॥ पारिजाताम्रखर्जूरनीपबिल्वकदम्बकैः ॥ ७ ॥ धवखादिरपालाश शीषामलकतिंदुकैः ॥ नारंगाश्वत्थवकुल लोध्रदाडिम दारुकैः ॥ ८ ॥ सर्ज्जाश्वकर्णतगर शिंशिपा भूर्ज्जनिम्बकैः ॥ अन्यैश्च काञ्चनैर्वृक्षैः फलभारावनामितैः ॥ ९ ॥ नानाकुसुमगन्धाढ्यै र्भूषिते त्रिदशाञ्चिते ॥ मालतीयूथिकामल्ली कुन्दवाणकुरूटकैः ॥ १० ॥ करवीरै श्च मुक्तैश्च केतकीकुब्जकिंशुकैः ॥ पाटलागस्त्यकुटज मन्दारकुसुमादिभिः ॥ ११ ॥ अन्यैश्च विविधैः पुष्पै र्मनसःप्रीतिदायकैः ॥ नानाविहग संघैश्च कूजद्भि र्मधुरस्वरैः ॥ १२ ॥ पुंस्कोकिलरुते र्दिव्यै र्मत्तबर्हिणनादितैः ॥ एवंनानाविधै र्वृक्षैः पुष्पैर्नानाविधै स्तथा ॥ १३ ॥ खगैर्नानाविधै श्चैव शोभिते सुरसेविते ॥ तत्रस्थितं जगन्नाथं जगत्स्रष्टारमव्ययं ॥ १४ ॥ सर्वलोकविधातारं वासुदेवाख्यमव्ययं ॥ प्रणम्य

शिरशादेवो लोकानां हितकाम्यया ॥ १५ ॥ पप्रच्छेमं महत्प्रश्नं
भूमौ स्थानमनुत्तमं ॥ श्रीरुवाच ॥ ब्रूहित्वं सर्वलोकेश संशयं मे
हृदिस्थितं ॥ १६ ॥ मर्त्यलोके महाश्चर्यें कर्मभूमौ सुदुर्लभे ॥ येन
मुच्यन्ति देवेश मनुजा स्संसारसागरात् ॥ १७ ॥ आचक्ष्व सर्वदेवे
श प्रणतां यदिमन्यसे ॥ त्वदृतेनास्ति लोकेऽस्मिन् वक्ता संशयनिर्ण
ये ॥ १८ श्रुत्वेदं वचनंतस्या देवदेवो जनार्दनः ॥ प्रोवाच परया
प्रीत्या परंसारामृतोपमं ॥ १९ ॥ सुखोपायं सुसाध्यं च निराया
सं च सत्फलं ॥ श्रीभगवानुवाच ॥ आस्ते तीर्थवरोदेवि विख्यातः
पुरुषोत्तमः ॥ २० ॥ नतेनसदृशः किञ्चित् त्रिषुलोकेषु विद्यते ॥
कीर्त्तना यस्यदेवस्य मुच्यते सर्वपातकैः ॥ २१ ॥ नविज्ञातोमरैः स
र्वै र्नादित्यै र्नचदानवैः ॥ मरीच्याद्यै र्मुनिवरै र्गोपितं मेवरान
ने ॥ २२ ॥ तत्तेऽहं संप्रवक्ष्यामि तीर्थराजञ्च सांप्रतं ॥ भावेनैके
नसुश्रोणि शृणुष्व वरवर्णिनि ॥ २३ ॥ आसीत्कल्पे समुत्पन्ने नष्टे
स्थावरजङ्गमे ॥ प्रलीने देवगन्धर्व्व दैत्यविद्याधरोरगे ॥ २४ ॥ त
मोभूत मिदंसर्वं नप्रज्ञायत किञ्चन ॥ तस्मिं जागर्त्ति भूतात्मा स
महात्मा जगद्गुरुः ॥ २५ ॥ श्रीमां स्त्रिमूर्त्तिरुद्देशो जगत्कर्त्ता म
हेश्वरः ॥ वासुदेवेति विख्यातो योगात्मा हरिरीश्वरः ॥ २६ ॥
सोऽस्वप योगनिद्रांते नाथ्यंभोरुह मव्ययं ॥ पद्मकेशरसंकाशं ब्र
ह्माणं भूतमव्ययं ॥ २७ ॥ आविर्भूत स्ततोब्रह्मा सर्व्वलोकमहेश्व
रः ॥ पञ्चभूतसमायुक्तं सृजतेच शनैःशनैः ॥ २८ ॥ मात्रायो

नीनि भूतानि स्थूलसूक्ष्माणि यानिच ॥ चतुर्विधानिभूतानि स्था
वराणि चराणिच ॥ २९ ॥ ततः प्रजापति र्ब्रह्मा कृत्स्नंसर्वं चरा
चरं ॥ संचिन्त्य मनसात्मानं ससर्ज्ज विविधाः प्रजाः ॥ ३० ॥ मरी
च्यादी न्मुनीन्सर्वां न्गन्धर्वोरगराक्षसान् ॥ सप्तस्वर्गा न्सपातालान्
भुवनानि चतुर्द्दश ॥ ३१ ॥ द्वीपानब्धींश्च दक्षाद्यान् गंगाद्याः सरित
स्तदा ॥ नरवानरसंवद्धान् विविधांश्च विहङ्गमान् ॥ ३२ ॥ जरायु
जाण्डजान्देवि स्वेदजोद्भिदजां स्तथा ॥ ब्रह्मक्षत्रं तथावैश्यं शूद्र
ञ्चैव चतुष्टयं ॥ ३३ ॥ अन्यजातींश्च म्लेच्छांश्च ससर्ज्ज विविधान् ए
थक् ॥ यत्किञ्चि ज्जीवसंज्ञन्तु तृणगुल्म पिपीलिकान् ॥ ३४ ॥
ब्रह्माभूत्वा जगत्सर्वं निर्ममे सचराचरं ॥ दक्षिणांगं तथात्मानं प्र
कृत्यपुरुषं स्वयं ॥ ३५ ॥ वामेनैवतु नारींच द्विधाभूत मकल्पयत् ॥
ततः प्रभृतिलोकेस्मिन् प्रजामैथुनसम्भवाः ॥ ३६ ॥ अधमोत्तम म
ध्यानि समस्तेशाणि यानिच ॥ जगाम ध्यानमास्थाय वासुदेवान्ति
कान्तरं ॥ ३७ ॥ ध्यातमात्रेण देवेशः स्वयमेव जनार्दनः ॥ तस्मि
न्नवो समुत्पन्नः सहस्राक्षः सहस्रपात् ॥ ३८ ॥ सहस्र शीर्षा पुरु
षः पुण्डरीकनिभेक्षणः ॥ सलिलाध्मातमेघाभः श्रीमान् श्रीवत्सल
क्षणः ॥ ३९ ॥ सोपश्य त्सहसायान्तं ब्रह्मा लोकपितामहः ॥ प्रास
नैरर्घ्यपाद्यैश्च अक्षतै रभिनंद्य च ॥ ४० ॥ तुष्टाव परमैः स्तोत्रै विं
रिञ्चो मांसमाश्रितः ॥ ततोहमुक्तवानेवं ब्रह्माणंकमलोद्भवं ॥ ४१॥
कारणंवद मांतात ममचान्यच्च सांप्रतं ॥ ब्रह्मोवाच ॥ जगद्धिताय

देवैश्च मर्त्यलोके च दुर्लभं ॥ ४२ ॥ स्वर्गद्वारञ्च मार्गोपि यज्ञदान
व्रतानि च ॥ योगःसत्यं तपःश्रद्धा तीर्थानि विविधानि च ॥ ४३ ॥
विहाय सर्व्वमेतेषां यत्सुखं कारणंवद ॥ स्थानं जगत्पतेस्तुभ्यं मर्त्य
लोके यदुच्यते ॥ ४४ ॥ सर्वेषामुत्तमं स्थानं ब्रूहिमां पुरुषोत्तम ॥
विधातुर्वचनं श्रुत्वा ततोहं प्रोक्तवान्प्रिये ॥ ४५ ॥ शृणु ब्रह्मन् प्रव
क्ष्यामि निर्मितं भुविदुर्लभं ॥ उत्तमं सर्व्वक्षेत्राणां धन्यं संसारता
रणं ॥ ४६ ॥ गोब्राह्मणहितं पुण्यं चातुर्वर्ण्यसुखोदयं ॥ भुक्तिमु
क्तिप्रदं न्हृणां क्षेत्रं परमशोभनं ॥ ४७ ॥ महत्पुण्यन्तु सर्वेषां व
सतांप्रपितामह ॥ तत्तदाचो त्समुत्पन्नं तीर्थराजं सनातनं ॥ ४८ ॥
विख्यातं परमंक्षेत्रं चतुर्युगयुगादिकृत् ॥ सर्वेषामेव देवाना मृषी
णां ब्रह्मचारिणां ॥ ४९ ॥ दैत्यदानवसिद्धानां गन्धर्वोरगरक्षसां ॥
नागविद्याधराणा ञ्च स्थावरस्य चरस्य च ॥ ५० ॥ उत्तमः पुरुषो य
स्मा त्तस्मात्सः पुरुषोत्तमः ॥ दक्षिणस्योदधे स्तीरे न्यग्रोधो यत्रति
ष्ठति ॥ ५१ ॥ दशयोजनविस्तीर्णं क्षेत्रं परमदुर्लभं ॥ यस्तुकल्पे स
मुत्पन्ने सर्व्वलोकनिवर्हणे ॥ ५२ ॥ विनाशं नैवभवंते स्वयंतत्रैव
मास्थितः ॥ दृष्टमात्रे वटेतस्मिं छायामाक्रम्यवासकृत् ॥ ५३ ॥ ब्रह्म
हत्या प्रमुच्येत पापेष्वन्येषु काकथा ॥ प्रदक्षिणंकृतं यैस्तु नमस्का
रन्तु जन्तुभिः ॥ ५४ ॥ सर्वेनिर्धूतपाप्मान स्तेगताः केशवालयं ॥
न्यग्रोधस्योत्तरे किञ्चि द्दक्षिणे केशवस्य च ॥ ५५ ॥ प्रासादं त
त्रतिष्ठेत पदंधर्ममयं हितत् ॥ प्रतिमांतत्र वैदृष्ट्वा स्वयं देवेन निर्मि

तां॥ ५६॥ अनायासेन वैयान्ति भवनंमे ततोनराः॥ गच्छमानां
स्तुतान् प्रेक्ष्य एकदा धर्मराट् प्रिये॥ ५७॥ मदन्तिक मनुप्राप्य
प्रणम्यशिरसा ब्रवीत्॥ यमउवाच॥ नमस्ते भगवन्देव लोकनाथज
गत्पते॥५८॥ क्षीरोदवासिनं देवं शेषभोगानुशायिनं॥ वरंवरेण्यं
वरदं कर्त्तारमनघं प्रभुं॥ ५९॥ विश्वेश्वरमजं विष्णुं सर्वज्ञ मप
राजितं॥ नीलोत्पलदलश्यामं पुण्डरीकनिभेक्षणं॥ ६०॥ सर्व्व
ज्ञंनिर्गुणं शान्तं जगद्धातार मव्ययं॥ सर्व्वलोकविधातारं सर्व्वस
त्वसुखावहं॥ ६१॥ पुराणपुरुषं वेद्यं व्यक्ताव्यक्तं सनातनं॥ परा
वराणां स्रष्टारं लोकनाथं जगद्गुरुं॥६२॥ श्रीवत्सोरसि संयुक्तं व
नमालाविभूषितं॥ पीतवस्त्रं चतुर्बाहुं शंखचक्रगदाधरं॥ ६३॥
हारकेयूरसंयुक्तं मुकुटां गदधारिणं॥ सर्व्वलक्षणसम्पूर्णं सर्वेन्द्रि
यविवर्जितं॥ ६४॥ कूटस्थमचलं सूक्ष्मं ज्योतीरूपं सनातनं॥ भा
वाभावविनिर्मुक्तं व्यापिनं प्रकृतेःपरं॥ ६५॥ त्वान्नमोस्तु जगन्ना
थईश्वरं सुखदंप्रभुं॥ इत्येवं धर्मराजस्तु पुरान्यग्रोधसन्निधौ॥६६॥
स्तुत्वा नानाविधैः स्तोत्रैः प्रणाममकरोत्तदा॥ तंदृष्ट्वातु महाभा
गे प्रणतं प्रांजलिंस्थितं॥ ६७॥ सोनवद्य कारणं देवि पृष्टवानह
मन्तकं॥ वैवस्वतमहावाहो सर्वदेवोत्तमोह्यसि॥ ६८॥ किमर्थं स्तु
तवान्मत्तः संक्षेपा त्तद्ब्रवीहिमे॥ धर्मराजउवाच॥ अस्मिन्नायतने
पुण्ये विख्याते पुरुषोत्तमे॥ ६९॥ इन्द्रनीलमयी दृष्टा प्रतिमा स
र्व्वकामिकी॥ तांदृष्ट्वा पुण्डरीकाक्ष भावेनैकेन श्रद्धया॥ ७०॥

श्वेताख्यं भवनं यान्ति निःकामास्चैव मानवाः ॥ अतस्चैनं नशक्नोमि व्यापार मरिसूदन ॥ ७१ ॥ प्रसीद सुमहादेव संहरप्रतिमांविभो॥ श्रुत्वा वैवस्वतस्चैत द्वाक्यमुक्तमिदं मया ॥ ७२ ॥ तामवोधं विधास्यामि सिकताभिः समन्ततः ॥ ततः साप्रतिमा देवि वल्लिभि र्गोपितामया ॥ ७३ ॥ यथातन्न नपश्यन्ति मनुजाः स्वर्गकांक्षिणः ॥ प्रच्छाद्यवलिकै र्देवि आतद्रुपपरिच्छदैः ॥ ७४ ॥ यमं प्रस्थापयामास स्वांपुरीं दक्षिणांदिशं ॥ ब्रह्मोवाच ॥ लुप्तायां प्रतिमायान्तु इन्द्रनीलस्य भोद्विजाः ॥ ७५ ॥ तस्मिन्क्षेत्रवरे पुण्ये विख्याते पुरुषोत्तमे ॥ यद्भूतं तन्नवृत्तान्तं देवदेवो जनार्दनः ॥ ७६ ॥ तत्सर्वं कथयामास तस्मै सभगवान्पुरा ॥ इन्द्रद्युम्नस्य गमनं क्षेत्रस्चै संस्कृतं तथा ॥ ७७ ॥ क्षेत्रस्य वर्णनं चैव प्रासादकरणं तथा ॥ हयमेधस्य यजनं स्वप्नदर्शन सेवच ॥ ७८ ॥ लवणश्चोदधे स्तीरे काष्टसंदर्शनंतथा ॥ दर्शनं वासुदेवस्य शिल्पिराजस्य च द्विजाः ॥ ७९ ॥ निर्माणं प्रतिमायास्तु यथावर्ण विशेषतः ॥ स्थापनञ्चैव सर्वेषां प्रासादे भुवनोत्तमे ॥ ८० ॥ यात्राकालञ्च विप्रेन्द्राः कल्पसंकीर्त्तनंतथा ॥ मार्कण्डेयस्य चरितं स्थापनं शंकरस्य च ॥ ८१ ॥ पञ्चतीर्थीय माहात्म्यं दर्शनं शूलपाणिनः ॥ वटस्यदर्शन ञ्चैव व्युष्टिं तस्यच भोद्विजाः ॥ ८२ ॥ दर्शनं वलदेवस्य कृष्णस्य च विशेषतः ॥ सुभद्रायास्तथैव माहात्म्य ञ्चैव सर्वशः ॥ ८३ ॥ दर्शनं नरसिंहस्य व्युष्टिं संकीर्त्तनं तथा ॥ अनन्तवासुदेवस्य दर्शनं पुण्यकीर्त्तनं ॥ ८४ ॥ श्वे

तमाधरमाहात्म्यं स्वर्गद्वारस्य वर्णनं ॥ उदधेर्दर्शनञ्चैव स्नानं त
र्पणमेव च ॥ ८५ ॥ समुद्रस्नान माहात्म्य मिन्द्रद्युम्नस्य चद्विजाः॥
पञ्चतीर्थफलं चैव महाज्येष्ठी तथैव च ॥ ८६ ॥ स्नानं कृष्णस्यहरि
नः सर्व्वयात्राफलं तथा ॥ वर्णनं विष्णुलोकस्य क्षेत्रस्य च पुनःस्त
यम् ॥ ८७ ॥ सर्वंकथितवां स्तथ्यं तस्यैव पुरुषोत्तमः ॥ ८८ ॥

इतिश्री ब्रह्मपुराणे स्वयम्भुऋषि सम्वादे पूर्व्ववृत्तानुकीर्त्तनो
नाम त्रिचत्वारिंशोऽध्यायः ४३ ॥



मुनयऊचुः ॥ श्रोतुमिच्छामहे देव कथांशेषं महीपतेः ॥ त
स्मिन्क्षेत्रवरे गत्वा किञ्चकार नराधिपः ॥ १ ॥ ब्रह्मोवाच ॥ शृ
णुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः ॥ क्षेत्रसंदर्शनञ्चैव कृत्यं
तस्य च भूपतेः ॥ २ ॥ गत्वातत्र महीपालः क्षेत्रं त्रैलोक्यविश्रुतं ॥
ददर्श रमणीयानि स्थानानि सरितस्तथा ॥ ३ ॥ नदीतत्र महापु
ण्या विन्ध्यपादविनिर्गता ॥ विंध्योत्पलेति विख्याता सर्व्वपापहरा
शुभा ॥ ४ ॥ गंगातुल्या महाश्रोता दक्षिणार्णवगामिनी ॥ महान
दीति नाम्नासा पुण्यतोया सरिद्वरा ॥ ५ ॥ दक्षिणस्योदधेः कान्ता
दुहितृशतशोभिता ॥ उभयोस्तीरयो र्यस्या ग्रामा स्व नगराणि
च ॥६॥ दृश्यन्ते मुनिशार्दूलाः सम्पन्नाः सुमनोहराः ॥ हृष्टपुष्टजना
कीर्णा वस्त्राभरण भूषिताः ॥७॥ ब्राह्मणाःक्षत्रिया वैश्याःशूद्रास्त
त्र पृथक्पृथक् ॥ स्वधर्मनिरताः शान्ताः दृश्यन्ते शुभलक्षणाः ॥ ८

ताम्बूलपूर्ण वदना माल्यदाम विभूषिताः ॥ वेदपूर्णमुखा विप्राः षषडङ्गपदक्रमाः ॥ ९ ॥ अग्निहोत्ररताः केचि त्केचि च्चोपासनप्रियाः ॥ सर्व्वशास्त्रार्थकुशला यज्वानो भूरिदक्षिणाः ॥ १० ॥ सभामण्डलहर्म्येषु देवतायतनेषु च ॥ इतिहास पुराणानि वेदाः सांगाः सुलक्षणाः ॥ ११ ॥ काव्यसारकथा स्तत्र श्रूयन्ते च महाजनाः ॥ स्त्रिय स्तद्देशजा विप्रा रूपयौवनगर्विताः ॥ १२ ॥ सम्पूर्णलक्षणोपेता विस्तीर्णश्रोणिमण्डलाः ॥ सरोरुहमुखाः श्यामाः शरच्चन्द्रनिभाननाः ॥ १३ ॥ पीनोन्नतकुचाः सर्व्वाः सुमध्या चारुदर्शनाः ॥ सौवर्णवलयाक्रान्ता दिव्यैर्वस्त्रै रलंकृताः ॥ १४ ॥ कदलीगर्भसंकाशाः पद्मकिञ्जल्कशोभिताः ॥ बिम्बाधरपुटाः कान्ताः कर्णान्तायतलोचनाः ॥ १५ ॥ सुमुखा चारुकेशाश्च हारभारावनामिताः ॥ काचि त्पद्मपलाशाक्ष्यः काश्चि द्दामविभूषिताः ॥ १६ ॥ कुण्डलैः स्वर्णसंयुक्तै र्विस्पष्टवदनाः शुभाः ॥ रम्योदरा स्त्रिवलिभि स्तन्वङ्ग्यश्च तथापराः ॥ १७ ॥ कुटिलालकसंयुक्ताः सीमन्तेन विराजिताः ॥ ग्रीवाभरणसंयुक्ता माल्यदामविभूषिताः ॥ १८ ॥ गीतनृत्यस्वनैर्दिव्यैः क्रीडमाना वराङ्गनाः ॥ वीणावेणुमृदङ्गैश्च पणवैश्चैव गोमुखैः ॥ १९ ॥ शंखदुंदुभिनिर्घोषै र्नानावाद्यै र्मनोहरैः ॥ क्रीडंत्यस्तु सदाहृष्टा विलासिन्यः परस्परं ॥ २० ॥ एवमादि तथानेक नृत्यगीतविशारदाः ॥ दिवारात्रौ मुदायुक्ताः कामोन्मत्ता वरांगनाः ॥ २१ ॥ भिक्षुवैखानसैः सिद्धैः स्नातकै र्ब्रह्मचारिभिः ॥ मन्त्रसिद्धै स्तपःसि

द्वै र्योगसिद्धैः समन्ततः ॥ २२ ॥ दद्दृशे ताद्दृशं राजा चेत्रं परम दुर्लभं ॥ अत्रत्वाराधयिष्यामि भगवन्तं सनातनं ॥ २३ ॥ जगद्गुरुं परंदेवं परम्पारं परम्पदं ॥ सर्वेश्वरं विष्णुमय मरूपमपराजितम् ॥ २४ ॥ इदंतन्मानसंतीर्थं ज्ञातंमे पुरुषोत्तमं ॥ कल्पवृक्षो महाकायो न्यग्रोधो यत्रतिष्ठति ॥ २५ ॥ प्रतिमा चेन्द्रनीलस्य देवदेवेन गोपिता ॥ नचान्तर्हंष्यते चापि प्रतिमा वैष्णवीशुभा ॥ २६ ॥ तथाद्यलं करिष्यामि यथादेवो जगत्पतिः ॥ प्रत्यचं ममचाभ्येति विष्णुःसत्यपराक्रमः ॥ २७ ॥ यज्ञैर्दानै स्तपोभिश्च होमैर्ध्यानै स्तथार्चनैः॥ उपवासैर्वहुविधै श्चरेयंतपउत्तमं ॥२८॥ अनन्यमनसाचैवतन्मनानान्यमानसः॥ विष्ण्वायतनविन्यासं प्रारम्भञ्चकरोम्यहं ॥ २९ ॥

इतिश्रीब्रह्मपुराणे स्वयम्भुऋषिसम्बादे चेत्रवर्णनो नाम चतुश्चत्वारिंशोऽध्यायः ४४ ॥



ब्रह्मोवाच ॥ एवं सपृथिवीपाल श्चिन्तयित्वा द्विजोत्तमाः ॥ प्रासादार्थं हरेस्तत्र प्रारम्भमकरो त्तदा ॥ १ ॥ आनाय्य गणकांस्तत्र ज्योतिः शास्त्रस्य पारगान् ॥ भूमिंसंशोध्य यत्नेन राजातु परयामुदा ॥ २ ॥ ब्राह्मणै र्ज्ञानसम्पन्नै र्वेदशास्त्रार्थपारगैः ॥ अमात्यैर्मन्त्रिभिश्चैव वास्तुविद्याविशारदैः ॥ ३ ॥ तैःसार्द्धन्तु समालोक्य सुमुहूर्त्ते शुभेदिने ॥ सचन्द्रतारसंयोगे ग्रहलग्नशुभे तथा ॥ ४ ॥ जयमङ्गलशब्दैश्च नानावाद्यै र्मनोहरैः ॥ वेदाध्ययननिर्घोषै र्गीतैः

सुमधुरस्वरैः ॥ ५ ॥ पुष्पैर्लाजैः समाकीर्य्य तानुवाच तथाम्बपः ॥
गच्छध्वं सहिताःसर्वे शिलार्थं सुसमाहिताः ॥ ६ ॥ गृहीत्वा शि
ल्पिमुख्यांश्च शिलाकर्मविशारदान् ॥ विन्ध्याचलं सुविस्तीर्णं बहु
कन्दरशोभितं ॥ ७ ॥ निरूप्य वज्रसानूनि छेदयित्वा शिलांशु
भां ॥ सम्वाह्य ताञ्च शकटे नौकाभि र्मोविसंव्यथ ॥ ८ ॥ एवंग
न्तुंसमादिश्य तानूजनान् समहीपतिः ॥ पुनरेवा ब्रवीद्वाक्यं सामा
त्यान् स्वपुरोहितान् ॥ ९ ॥ संगच्छन्तु च सर्वत्र ममाज्ञां प्रवदन्तु
वै ॥ येऽत्र तिष्ठन्ति राजानः पृथिव्यां तानूसुशोघ्रगाः ॥ १० ॥ ह
स्त्यश्वरथपादातैः सामात्यैः सपुरोहितैः ॥ गच्छन्तु सहिताःसर्वे इ
न्द्रद्युम्नस्य शासनात् ॥ ११ ॥ एवंदूताः समाज्ञाता राज्ञा तेनमहा
त्मना ॥ गत्वातदा न्टपानूचु र्वचनं तस्यभूपतेः ॥ १२ ॥ श्रुत्वा तेतु
तदासर्वे दूतानां वचनं न्टपाः ॥ आजग्मु स्त्वरिताहृष्टाः स्वसैन्यप
रिवारिताः ॥ १३ ॥ पूर्वदिक्संस्थिता येच दक्षिणांदिश माश्रिताः॥
पश्चिमायां स्थितायेये उत्तरापथसंस्थिताः ॥ १४ ॥ प्रत्यन्तवासिनो
येवा येवाद्रूपनिवासिनः ॥ पार्वतीयास्च येकेचित् तथाद्वीपनि
वासिनः ॥ १५ ॥ रथैर्नागैः पदातैश्च वाजिभि र्वैनविस्तरैः ॥ संप्रा
प्तावज्रशाविप्राः श्रुत्वेन्द्रद्युम्नशासनं ॥ १६ ॥ प्राप्ता न्नानान्टपान् दृ
ष्ट्वा सामात्या न्सपुरोहितान् ॥ प्रोवाच राजाहृष्टात्मा कार्यसुद्दिश्य
गौरवं ॥ १७ ॥ शृणुध्वं न्टपशार्दूला यथाकिञ्चि द्व्रवीम्यहं ॥ अ
स्मिन्क्षेत्रवरे पुण्ये भुक्तिमुक्तिप्रदे शिवे ॥ १८ ॥ हयमेधं महायज्ञं

प्रासाद ञ्चैव वैष्णवं ॥ कथंशक्तोस्म्यहं कर्त्तु मितिचिन्ताकुलं म
नः ॥ १९ ॥ भवद्भिः समवेतैश्च सर्व्वमेव करोम्यहं ॥ यदियूयं स
हायामे भवध्वं नृपसत्तमाः ॥ २० ॥ इत्येवं वदमानस्य राजराज
स्य धीमतः ॥ सर्वेप्रमुदिता भूत्वा हृष्टास्ते तस्यशासनात् ॥ २१ ॥
वहृषु धनराज्यस्य सुवर्णमणिसंयुतैः ॥ कम्बलाजिनरत्नैश्च राङ्कवा
स्तरणैः शुभैः ॥ २२ ॥ वज्रवैडूर्यमाणिक्यैः पद्मरागेन्द्रनीलकैः ॥
गजैरश्वैर्धनैश्चान्यै रथैरश्वैश्च संयुतैः ॥ २३ ॥ असंख्येयै र्वञ्जवि
धै र्द्रव्यैरुच्चावचै स्तथा ॥ शालिव्रीहियवै श्चैव माषमुद्गतिलै स्त
था ॥ २४ ॥ सिद्धार्थश्चणकै श्चैव गोधूमै र्मसुरादिभिः ॥ श्याम
कै र्मधुकैश्चैव नीवारैः सकुलत्थकैः ॥ २५ ॥ अन्यैश्च विविधै र्धान्यै
र्गान्धारवषैः सहस्रशः ॥ दत्तुधान्यसहस्राणि तण्डुलानाञ्च पाण्डु
भिः ॥ २६ ॥ आपूर्य्य हविषाकुम्भान् शतशोथ सहस्रशः ॥ तथैव
विविधैर्द्रव्यै र्भक्ष्यभोज्यानुलेपनैः ॥ २७ ॥ राजानः पूरयामासु
र्यत्किञ्चि द्द्रव्यसम्भवैः ॥ तान्दृष्ट्वा यज्ञसम्भारा न्सर्व्वसम्पत्समन्वि
तान् ॥ २८ ॥ यज्ञकर्म्मविदो विप्रान् वेदवेदाङ्गपारगान् ॥ शा
स्त्रेषुनिपुणान् द्रष्टान् कुशला न्सर्व्वकर्म्मसु ॥ २९ ॥ ऋषी न्मह
र्षी श्चैव देवर्षीन् राजतापसान् ॥ ब्रह्मचारि गृहस्थांश्च वानप्रस्था
न्यतींस्तथा ॥ ३० ॥ ब्राह्मणां क्षत्रियां श्चान्या नग्निहोत्रे सदाश्रि
तान् ॥ आचार्य्योपाध्यायवरान् स्वाध्यायतपसान्वितान् ॥ ३१ ॥
सदस्यान् शास्त्रकुशलान् यथान्या न्याचकान्वहून् ॥ दृष्ट्वातान् व

पतिः श्रीमानुवाच स्वपुरोहितं ॥ ३२ ॥ ततःप्रयान्तु विद्वांसो ब्रा ह्मणा वेदपारगाः ॥ वाजिमेधानुसिध्यर्थं तेसंपश्यन्तु यज्ञियं ॥ ३३ ॥ इत्युक्तः सतथाचक्रे वचनं तस्यभूपतेः ॥ हृष्टः समन्त्रिभिःसार्द्धं तदा राजपुरोहितः ॥ ३४ ॥ ततोययौ पुरोधास प्राज्ञैःस्थपतिभिःसह ॥ ब्राह्मणान् पुरतःकृत्वा कुशला न्यज्ञकर्म्मणि ॥ ३५ ॥ धारयामास विप्रोसौ यज्ञवाटं यथाविधि ॥ प्रासादशतसम्बाधं मणिप्रचुरकुट्टि मं ॥ ३६ ॥ कारयामास विधिव द्धेमरत्नविभूषितं ॥ सतान्कनकनि र्माश्च तोरणानि इहन्तिवा ॥ ३७ ॥ यज्ञायतनदेशेषु दत्वाशुद्धञ्च काञ्चनं ॥ अन्तःपुराणि राज्ञाञ्च नानादेशनिवासिनां ॥ ३८ ॥ कारयामास धर्म्मात्मा तत्रतत्र यथाविधि ॥ ब्राह्मणानाञ्च वैश्या नां नानादेशसमीयुषां ॥ ३९ ॥ कारयामास विधिव त्सुखवासो न्य नेकशः ॥ प्रियार्थं तस्यन्टपते राययु र्न्टपसत्तमाः ॥ ४० ॥ रत्नान्यने कान्यादाय स्त्रियश्चान्यायुधानि च ॥ तेषां निविशतांस्तेषु शिविरे षुमहात्मनां ॥ ४१ ॥ नदतः सागरस्येव दिवस्पृगभव त्स्वनः ॥ तेषां समागतानाञ्च सराजा मुनिसत्तमाः ॥ ४२ ॥ व्यादिदेशान्नपाना नि शय्या स्वाप्युपचारतः ॥ वाहनानि च विविधाः विशालयवगोर सैः ॥ ४३ ॥ उत्पत्य न्टपतिश्रेष्टान् व्यादिदेश स्वयन्तदा ॥ तदात स्मिन्महायज्ञे वहवो ब्रह्मवादिनः ॥ ४४ ॥ येच द्विजातिप्रवरा स्त त्रासन् द्विजसत्तमाः ॥ समाजग्मुः सशिष्यास्तान् प्रीत्याजग्राह पा र्थिवः ॥ ४५ ॥ सर्व्वांश्चताननुययौ यावदावसथानिति ॥ स्वयमेवम

द्यातेजा ददृशुंर्यज्ञभ्रान्नृपोत्तमः ॥ ४६ ॥ ततःकृत्वा स्थपतयः शिल्पि
नोन्येचयेतदा ॥ कृत्स्नंयज्ञ विधानञ्चा स्तदातस्मै न्यवेदयन् ॥४७॥
ततःश्रुत्वा नृपश्रेष्ठः कृतंसर्व्वमतन्द्रितः ॥ हृष्टरूपोऽभवद्राजा सर्वम
न्त्रिभिरच्युतः ॥ ४८ ॥ ब्रह्मोवाच ॥ तस्मिन्यज्ञे प्रवृत्तेतु वामिनोहे
तुवादिनः ॥ हेतुवादा न्वहूनाहुः परस्परजिगीषवः ॥ ४९ ॥ देवे
न्द्रस्येव विहितं राजसिंहेन भोद्विजाः ॥ ददृशु स्तोरणान्यत्र शात
कुम्भमयानि च ५० ॥ शय्यासनविकारांश्च सुवहू नन्नसंचयान् ॥
स्फाटिकानि च गेहानि कलशा न्वर्द्धमानकान् ॥ ५१ ॥ नहिकि
ञ्चिदसौवर्णं मपश्यन्वसुधाधिपः ॥ यूपांश्च शास्त्रपठितान् दारवा
न्हेमभूषितान् ॥ ५२ ॥ उपक्षिप्ता न्यथाकालं विधिवद्भूरिदक्षि
णैः ॥ स्थलजा जलजा येवा पशवः केचन द्विजाः ॥ ५३ ॥ सर्वा
णिच समायाता स्तत्रापश्यन्त तेनृपाः ॥ गाश्चैव महिषी श्चैव त
थावृद्ध स्त्रियोपिवा ॥ ५४ ॥ उदकानि च सत्वानि श्वापदानिच
यानि च ॥ जरायुजाण्डजातानि स्वेदजान्युद्भिजानि च ॥ ५५ ॥
पार्व्वतीयानि भूतानि भूतानि ददृशु स्तते ॥ एवं प्रमुदितंसर्वं पा
नतो धनधान्यतः ॥ ५६ ॥ यज्ञवाटं नृपाद्दृष्ट्वा परंविस्मयमागमन् ॥
ब्राह्मणानां विशाञ्चैव वहुमृष्टान्नर्द्धिमत् ॥ ५७ ॥ पूर्णे शतसह
स्रेतु विप्राणां तत्रभुज्यतां ॥ दुंदुभि मेंघनिर्घोषो मुहुर्मुहुरवाद्य
त ॥ ५८ ॥ विननादासकृ ज्ञाघा दिवसे दिवसेगते ॥ एवं सवद्वधे
यज्ञ स्तस्यराज्ञः सुधीमतः ॥ ५९ ॥ अन्ना न्युवहून्विप्रा उत्सर्गा

न्पर्व्वतोपमान् ॥ दधिकुल्याश्च ददृशुः पयसश्च ह्रदाञ्जनाः ॥ ६० ॥
जम्बुद्वीपोऽपि सकलो नानाजनपदैर्युतः ॥ द्विजाश्च तत्रदृश्यन्ते रा
त्रस्तस्य महात्मनः ॥ ६१ ॥ तत्रपात्राणि सहस्राणि पुरुषाणां ततस्त
तः ॥ गृहीत्वा भाजनं जग्मु र्बहूनि द्विजसत्तमाः ॥ ६२ ॥ तेवै
तत्रोपभोज्यानि ब्राह्मणेभ्यो ददुःसदा ॥ समागता न्वेदविदो राज्ञ
श्च पृथिवीश्वरान् ॥ ६३ ॥ पूजाञ्चक्रे तदातेषां विधिव द्भूरिदक्षि
णः ॥ दिग्भ्य स्वाभ्यागतान्राज्ञो महासंग्रामशालिनः ॥ ६४ ॥ न
टनर्त्तनकायां श्च गीतनृत्यविशारदान् ॥ इन्दीवरपलाशाक्ष्यः शर
चन्द्रसमाननाः ॥ ६५ ॥ कुलशीलगुणोपेताः सहस्रैकं शताधिकं॥
एवंवभूत परमं पत्नीगणमनोनुगं ॥ ६६ ॥ रथमालाकुलं दिव्यं प
ताकाध्वजशोभितं ॥ रत्नहारयुतंदिव्यं चन्द्रकान्तिसमप्रभं ॥ ६७॥
करिणः पर्व्वताकारा न्मदस्रिक्ता न्मनोहरान् ॥ शतशः कोटिसंघा
तै र्दन्तिभिः कृतभूषणैः ॥ ६८ ॥ वातवेगजवै रश्वैः सिन्धुजातैः सु
शोभनैः ॥ श्वेताश्वैः श्यामकर्णैश्च नानावर्त्तैः समञ्जनैः ॥ ६९ ॥ अ
संख्येयैः पदातैश्च देवपुत्रोपमै स्तथा ॥ इत्येवं ददृशे राजा यज्ञता
टंसविस्तरं ॥ ७० ॥ सुदृष्ट्वैवातुलंप्राप्य संहृष्टोवाक्यमब्रवीत् ॥ आन
यध्वं हयश्रेष्ठं सर्व्वलक्षणलक्षितं ॥ ७१ ॥ हस्तिनः षष्टिवर्षांस्तु कृ
ष्णसारमृगद्विजान् ॥ अनड्वाह न्च गाश्चैव सर्व्वांश्च पशुपालका
न् ॥ ७२ ॥ एवमानाय्य वस्तूनि सहेमकरकानि च ॥ ब्राह्मणेभ्यो
ददौराजा श्रद्धया विधिपूर्व्वकं ॥ ७३ ॥ नानादेश निवासिभ्यो न्द

पेभ्यो विधिवद्धनं ॥ गजानश्वा न्सुवासांसि देशा न्प्रायच्छ दीश्व
रः ॥ ७४॥ विप्रान्नानाविधै रत्नै र्भक्ष्यभोज्यादिसंयुतैः॥ संतर्प्य दीना
नाथांश्च दत्वा नानाविधेप्सितं ॥ ७५ ॥ विप्रा न्नृपा न्विशः शूद्रां
स्तर्पितानिष्टदानतः॥ अनुयज्ञे स्वदेशेभ्यो गमनाय नृपोत्तमः ॥ ७६
स्वकुटुम्बं दासदासि संतोष्येष्टप्रदानतः ॥ मेनेकृतार्थ मात्मान मश्व
मेधमखेनसः ॥ ७७ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भूऋषिसम्वादे पञ्चचत्वारिंशो
ऽध्यायः ॥ ४५ ॥

—०—

ब्रह्मोवाच ॥ एवं वेदोक्तविधिना हयमेधं महामखं ॥ कृत्वा
न्तःकरणशुध्यर्थं भीतःसंसारसागरात् ॥ १॥ एकान्ते उपविश्याथप्राप्तुं
विष्णोःपरम्पदं ॥ तुष्टाव जगतांनाथं जगदानन्ददायकं ॥ २ ॥ रा
जोवाच॥ जगदाधारविश्वेश सर्व्वकामप्रपूरक॥ लक्ष्मीकान्तकृपासि
न्धो भक्तवत्सल सत्प्रिय ॥ ३ ॥ त्राहिविष्णो महाराज भग्नंमां भ
वसागरात् ॥ प्रलयानलसंकाश नमस्ते दितिजान्तक ॥ ४ ॥ नरसिं
हमहावीर्य त्राहिमां दीप्तलोचन ॥ यथा रसातलादुर्वी त्वयादंष्ट्रो
द्धतापुरा ॥ ५ ॥ तथामहावराहत्वं त्राहिमां दुःखसागरात् ॥ ५॥
तवैतेमूर्त्तयः कृष्ण वरदाः संस्तुतामया ॥ त्वञ्चेमे वलदेवाद्याः पृथ
ग्रूपेण संस्थिताः ॥ ६ ॥ अङ्गानि तवदेवेश गरुत्माद्या स्तथा प्र
भो ॥ दिक्पालाः सायुधा श्चैव केशवाद्या स्तथाच्युत ॥ ७ ॥

येचान्ये तवदेवेश भेदाःप्रोक्ता मनीषिभिः ॥ तेपिसर्वे जगन्नाथ प्र
सन्नायतलोचन ॥ ८॥ मयार्चिताः स्तुताःसर्वे तथायूयं नमस्कृताः ॥
प्रयच्छध्वं वरंमह्यं धर्म्मकामार्थमोक्षदाः ॥ ९ ॥ भेदास्ते कीर्त्तिता
येतु हरसंकर्षणादयः ॥ तवपूजार्थं सम्भूता स्तेच त्वयि समाश्रि
ताः ॥ १० ॥ नभेद स्तवदेवेश विद्यते परमार्थतः ॥ विविधं तवय
न्नाथं रूपं तदुपचारतः ॥ ११ ॥ अद्वैतंत्वां कथंद्वैतं वक्तुं शक्नोति
मानवः ॥ एकस्त्वमसि हरिर्व्यापी चित्स्वभावो निरञ्जनः ॥ १२ ॥
परमं तवयद्रूपं भावाभावविवर्ज्जितं ॥ निर्लेपं विमलंसूक्ष्मं कूटस्थ
मचलंध्रुवं ॥ १३ ॥ सर्व्वपापविनिर्मुक्तं सत्तामात्रं व्यवस्थितं ॥ दे
वाश्चपि नजानन्ति कथंजानाम्यहं प्रभो ॥ १४ ॥ अपरं तवयद्रूपं
पीतवस्त्रं चतुर्भुजं ॥ शंखचक्रगदापाणिं मुकुटांगदधारिणं ॥ १५ ॥
श्रीवत्सोरसिसंयुक्तं वनमालाविभूषितं ॥ तदर्चयन्ति विबुधा येचा
न्ये तवसंश्रयाः ॥ १६॥ देवसर्व्वसुरश्रेष्ठ भक्तानामभयप्रद ॥ त्राहि
मां चारुपद्माक्ष विमग्नं विषसागरात् ॥ १७ ॥ नान्यं पश्यामि लो
केशं यस्याहं शरणंव्रजे ॥ त्वामृते कमलाकान्त प्रसीद मधुसूद
न ॥ १८॥ जराव्याधिशतैर्युक्तो नानादुःखै र्निपीडितः ॥ हर्षशो
कान्वितो मूढः कर्म्मपाशैः सुयन्त्रितः ॥ १९ ॥ पतितोहं महारौ
द्रे घोरसंसारसागरे ॥ विषयोदकदुःपारे रागद्वेषसमाकुले ॥ २० ॥
इन्द्रियावर्त्तगम्भीरे तृष्णाशोकोर्म्मिसंकुले ॥ निराश्रये निरालम्बे
निःसारेत्यन्तचञ्चले ॥ २१ ॥ मायया मोहितस्तत्र भ्रमामि सुचि

रंविभो ॥ नानाजातिसहस्रेषु जायमानःपुनःपुनः ॥ २२ ॥ मयाज
न्मान्यनेकानि सहस्राण्ययुतानि च ॥ विविधान्यनुभूतानि संसारे
स्मिन् जनार्द्दन ॥ २३ ॥ वेदाः साङ्गा मयाधीताः शास्त्राणि विवि
धानि च ॥ इतिहास पुराणानि तथा शिल्पान्यनेकशः ॥ २४ ॥
असन्तोषश्च सन्तोषः सञ्चयापचया व्ययाः ॥ मयाप्राप्ता जगन्नाथ
चयश्चाभ्युदयेतराः ॥ २५ भार्य्यारिमित्रवन्धूनां वियोगाः सङ्गमा स्त
था ॥ पितरो विविधादृष्टा मातरश्च तथामया ॥ २६ ॥ दुःखानि
चानुभूतानि मयासौख्यान्यनेकशः ॥ प्राप्ताश्च वान्धवाः पुत्रा भ्रात
रोज्ञातय स्तथा ॥ २७ ॥ मयोषितं तथास्त्रीणां कोष्ठे विण्मूत्रवि
प्लवे ॥ गर्भवासे महादुःख मनुभूतं तथाप्रभो ॥ २८ ॥ दुःखानिया
न्यनेकानि वाल्ये यौवनगोचरे ॥ वार्द्धके च हृषीकेश तानि प्राप्ता
निवैमया ॥ २९ ॥ मरणे यानिदुःखानि यममार्गे यमालये ॥ मया
तान्यनुभूतानि नरके यातनाकुले ॥ ३० ॥ कृमिकीटद्रुमाणा ञ्च
हस्त्यश्व मृगपक्षिणां ॥ महिषोष्ट्रगवां सैव तथान्येषां दिवौक
सां ॥ ३१ ॥ द्विजातीना ञ्च सर्वेषां शूद्राणाञ्चैव योनिषु ॥ नृपा
णां नृपभृत्यानां तथान्येषाञ्च देहिनां ॥ ३२ ॥ गृहेषु तेषामुत्प
न्नो देवतानां पुनःपुनः ॥ गतोस्मि दासतांनाथ धन्यानां वहुशोनृ
णां ॥ ३३ ॥ दरिद्रत्वं चेश्वरत्वं स्वामित्वञ्च तथागतः ॥ हतामया
हतश्चान्यै र्घातितो घातितांस्तथा ॥ ३४ ॥ दत्तमन्यै र्व्वरेन्येभ्यो म
यादत्तमनेकशः ॥ पितृमातृ सुहृद्भ्रातृ कलत्राणां कृतेनष ॥ ३५ ॥

धनिनां श्रोत्रियाणाञ्च दरिद्राणां तपस्विनां ॥ उक्तंदैन्यं बहुवि
धं त्यक्त्वा लज्जा ञ्जनार्द्दन ॥ ३६ ॥ देवतिर्यङ् मनुष्येषु चरेषु स्था
वरेषुच ॥ नपश्यामितु तत्स्थानं यत्राहं नगतःप्रभो ॥ ३७ ॥ कदा
मेनरकेवासः कदास्वर्गे जगत्पते ॥ कदामनुष्यलोकेषु कदा तीर्थ्यज
नेषुच ॥ ३८ ॥ जलयन्त्रे यथाचक्रे घटीरज्जुनिवन्धनी ॥ यातिचो
र्ध्वमध स्चैव कदामध्यञ्च तिष्ठति ॥ ३९ ॥ तथाचाहं सुरश्रेष्ठ कर्म
रज्जुसमाश्रितः ॥ अधश्चोर्ध्वं स्तथामध्ये भ्रमामि कर्मयोगतः ॥४०॥
एवं संसारचक्रेस्मिन् भैरवे लोमहर्षणे ॥ भ्रमामि सुचिरंकालं ना
न्तं पश्यामि कर्हिचित् ॥ ४१ ॥ नजाने किंकरोम्यद्य हरे व्याकुलि
तेन्द्रियः ॥ शोकतृष्णाभिभूतश्च कांदिग्भूतो विचेतनः ॥ ४२ ॥ इ
दानीं त्वामहन्देव विह्वलः शरणंगतः ॥ त्राहिमां दुःखितंकृष्ण म
ग्नंसंसारसागरे ॥ ४३ ॥ कृपांकुरु जगन्नाथ भक्तंमां यदिमन्यसे ॥
त्वदृते नास्तिमेवन्धु र्योसौचिन्तां करिष्यति ॥ ४४ ॥ देवत्वांनाथमा
साद्य नभयम्मेस्ति कुत्रचित् ॥ जीविते मरणे चैव योगेक्षेमेथवा प्र
भो ॥ ४५ ॥ येतुत्वां विधिवद्देवं नार्चयन्ति नराधमाः ॥ सुगतिस्तु
कथन्तेषां भवे त्संसारवेदनात् ॥ ४६ ॥ किन्तेषां कुलशीलेन विद्यया
जीवितेनवा ॥ येषां नजायतेभक्ति र्जगद्धातरि केशवे ॥ ४७ ॥ प्र
कृतिं चासुरींप्राप्य येत्वां निन्दन्ति मोहिताः ॥ पतन्ति नरके तेतु
जायमानाः पुनःपुनः ॥४८॥ नतेषां निःकृति स्तस्मा द्विद्यते नरका
र्णवात् ॥ येदूषयन्ति दुर्वृत्ता स्त्वान्देवं पुरुषाधमाः ॥ ४९ ॥ यत्रयत्र

भवेज्जन्म ममकर्मनिवन्धनात् ॥ तत्रतत्र हरिभक्ति स्त्वयिमास्तु दृढासदा ॥ ५० ॥ आराध्यत्वां सुरादैत्या नरा श्चान्येपि संयताः ॥ अवापुः परमांसिद्धिं कस्तन्देवं नपूजयेत् ॥५१॥ नशक्नुवन्ति.ब्रह्माद्याः स्तोतुंत्वां त्रिदशाहरे ॥ कथं मानुषवुध्याहं स्तौमित्वां प्रकृतेः परम् ॥ ५२ ॥ तथापाज्ञानभावेन यत्स्तुतोसि मयाप्रभो ॥ तत्क्षमस्वापराधस्मे यदिमास्ति कृपामयि ॥ ५३ ॥ कृतापराधेपि हरे क्षमांकुर्वन्ति साधवः ॥ तस्मात्प्रसीद देवेश भक्तस्तेहं समाश्रितः ॥५४॥ स्तुतोसि यन्मयादेव भक्तिभावेन चेतसा ॥ सत्यंभवतु तत्सर्वं वासुदेवनमोस्तुते ॥ ५५ ॥ ब्रह्मोवाच ॥ इत्यंस्तुत स्तदातेन प्रसन्नो गरुडध्वजः ॥ ददौतस्मै मुनिश्रेष्टाः सकलं मनसेप्सितम् ॥ ५६ ॥ यः संपूज्य जगन्नाथं प्रत्यहं स्तौति मानवः ॥ स्तोत्रेणानेन मतिमान् समोक्षं लभतेध्रुवम् ॥ ५७ ॥ त्रिसंध्यं योजपेद्विद्वा निदंस्तोत्रंवरं शुचिः ॥ धर्मञ्चार्थं ञ्च कामञ्च मोक्षंच लभतेनरः ॥५८॥ यःपठेच्छृणुयाद्वापि श्रावयेद्वा समाहितः ॥ सलोकं शाश्वतन्दिव्यं यातिनिर्धूतकल्मषः ॥ ५९ ॥ धन्यञ्चापहरं चेदं भुक्तिमुक्तिप्रदं शिवम् ॥ गुह्यं सुदुर्लभं पुण्यं नदेयं यस्यकस्यचित् ॥ ६० ॥ ननास्तिकाय मूर्खाय नकृतघ्नावमानिने ॥ नदुष्टमतयेदद्यान्नधूर्त्ताय कदाचन ॥६१॥ दातव्यं भक्तियुक्ताय गुणशीलान्विताय च ॥ विष्णुभक्ताय शान्ताय श्रद्धानुष्ठानशालिने ॥ ६२ ॥ इमं समस्ताघविनाशहेतुं कारण्यसंज्ञं सुखमोक्षदं च ॥ अशेषवांछाफलदं वरिष्टं स्तोत्रंमयोक्तंप्र

षोत्तमस्य ॥ ६४ ॥ येतं सुसूक्ष्मं विमलं वरिष्टं ध्यायन्तिनित्यं पुरुषं
पुराणं ॥ तेमुक्तिभाजः प्रविशन्ति विष्णुं मन्त्रैर्यथाज्यं हुतमध्वरा
ग्नौ ॥ ६५ ॥ एकःसदेवो भवदुःखहन्ता परःपरेषां नततोस्ति चा
न्यः ॥ स्रष्टा सपातासतु चान्तकर्त्ता विष्णुः समस्ता खिलसारभू
तः ॥ ६६ ॥ किंविद्यया किंसुगुणैश्च तेषां किंयज्ञदानैश्च तपोभिरु
ग्रैः ॥ येषांनभक्तिर्भवतीहकृष्णे जगद्गुरौ मोक्षसुखप्रदे च ॥ ६७॥
लोकेसधन्यः सशुचिः सविद्वान्मखैस्तपोभिः सगुणैर्वरिष्टः ॥ ज्ञाता
सदाता सतुसत्यवक्ता यस्यास्तिभक्तिः पुरुषोत्तमाख्ये ॥ ६८ ॥

इत्यादि ब्रह्मपुराणे स्वयंभुऋषिसम्बादे कारुण्यस्तवो नाम
षट्चत्वारिंशोऽध्यायः ४६ ॥

—०—

ब्रह्मोवाच॥ कृत्वैवं मुनिशार्दूलाः शतनाम सनातनं ॥ वासु
देवं जगन्नाथं सर्व्वकामफलप्रदम् ॥ १ ॥ चिन्ताविष्टो महीपालः
कुशानास्तीर्य्य भूतले ॥ वस्त्रञ्च तन्मनाभूत्वा सुष्वाप नियतेन्द्रि
यः ॥ २ ॥ कथं प्रत्यक्षमभ्येति देवदेवो जनार्द्दनः ॥ सममार्त्तिह
रोदेव स्तदासाविति चिन्तयन् ॥ ३ ॥ सुप्तस्य तस्यन्रपते वासुदेवो
जगद्गुरुः ॥ आत्मानं दर्शयामास स्वप्नेतस्मै सचक्रवान् ॥ ४ ॥ सद
दर्श च स्वप्नेथ देवदेवं जगद्गुरुं ॥ शंखचक्रधरं देवं गदापद्मादि
पाणिनं ॥ ५ ॥ शार्ङ्गवाणासिसंयुक्तं ज्वलत्तेजोग्रमण्डलं ॥ युगा
न्तादित्यवर्णाभं नीलवैडूर्यसन्निभं ॥ ६ ॥ सुपर्णपृष्ठआसीनं षोड

शार्ङ्गभुजंशुभं ॥ तंचासौ प्राब्रवीद्विप्राः साधुराज न्महामते ॥ ७॥
क्रतुनानेनदानेन विद्याभक्त्या च श्रद्धया ॥ तुष्टोस्मितेमहीपाल ह
याकिमनुशोचसि ॥ ८ ॥ यदत्रप्रतिमा राजन् जगत्पूज्या सनात
नी ॥ यथातां प्राप्स्यसेभूप तन्नुपायं ब्रवीमिते ॥९ ॥ प्रभातायांच
सर्व्वर्य्यां निर्म्मलेभास्करोदये ॥ सागरस्यजलस्यान्ते नानाद्रुमविभू
षिते ॥ १० ॥ जलं तथैववेलायां दृश्यतेतत्र वैमहत् ॥ लवणाब्धो
दधे राजन् तरङ्गैःसमभिप्लुतं ॥११॥ कूलान्तस्थिमहावृक्षः स्थितः
स्थलजलेषु च ॥ वेलाभि र्हन्यमानस्तु नचासौकम्पते ध्रुवः ॥ १२॥
परशुमादाय हस्तेन कुर्व्विंदन्तु ततोव्रज ॥ एकाकीविचरन् राजन्
सत्वम्पश्यसि पादपम् ॥ १३ ॥ अग्रत्यन्त्व समालोक्य छेदयत्व म
शंकितः ॥ छाद्यमानन्तु तंवृक्षं प्रादुरद्भुतदर्शनं ॥ १४ ॥ दृष्ट्वा तेनै
वसंचिन्त्य तदाभूपालदर्शनम् ॥ कुरुषे प्रतिमांदिव्यां जहि चिन्तां
विमोहिनीं ॥ १५ ॥ एवमुक्त्वा महाभागो जगामादर्शनं हरिः ॥
सचापि स्वप्नमालोक्य परंविस्मय मागमत् ॥ १६ ॥ तन्निशान्त्व स
मुद्वीक्ष्य स्थित स्तद्गतमानसः ॥ व्याहर न्वैष्णवान्मन्त्रा न्सूक्त न्वैत
दात्मकं ॥ १७ ॥ प्रभातायां रजन्यान्तु उत्थितः सनृपोत्तमः ॥
स्नात्वा ससागरे सम्यक् यथावद्विधिना ततः ॥ १८ ॥ दत्वादानन्त्व
विप्रेभ्यो ग्रामांश्च नगराणि च ॥ कृत्वा पूर्व्वाह्णिकं कर्म्म जगाम स
नृपोत्तमः ॥ १९ ॥ नरथो नपदातिश्च नगजो नचसारथिः ॥ एका
कीसमहावेलां प्रविवेश महामतिः ॥ २० ॥ तत्रापश्य न्महावृक्षं

तेजोवन्तं महाद्रुमं॥ महातीक्ष्णांमहारौद्रं पुण्यंविपुलमेवच ॥ २१॥
महास्कन्धं महाकायं प्रगुप्रञ्च जलान्तिके ॥ आर्द्रमाञ्जिष्टवर्णाभं
नामजाति विवर्ज्जितम् ॥ २२ ॥ नरनाथ स्तदाविष्णुं द्रुमंदृष्ट्वा मु
दान्वितः ॥ परशुना शातयामास निश्चितेन दृढेनवा ॥ २३ ॥ द्वैधी
कर्त्तुम्मतिस्तत्र वभूवेन्द्रसखस्य च॥ निर्वर्त्यमानेकाष्ठेतु वभूवाद्भुत
दर्शनं ॥ २४ ॥ विश्वकर्म्मा च विष्णुश्च विप्रवेषधरावुभौ ॥ आज
ग्मतु र्महात्मानौ तदातुल्याग्रजन्मनौ ॥ २५ ॥ ज्वलमानौ सुतेजो
भि र्दिव्यस्रगनुलेपनौ ॥ अथतौतुसमागम्य नृपमिन्द्रसखंतदा ॥ २६
तावूचतु र्महाराजं किमत्रत्वं करिष्यसि ॥ किमर्थं च महावाहो
शातितश्च वनस्पतिः ॥ २७ ॥ असहायो महावाहो दुर्गमे निर्जने
वने ॥ महासिन्धुतटे चैव कथम्वै शातितोद्रुमः ॥ २८ ॥ तयोःश्रुत्वा
वचोविप्राः सतुराजा मुदान्वितः ॥ वभाषे वचनं ताभ्यां मृदुम्वै म
धुरं तथा ॥ २९ ॥ दृष्ट्वा तौरूपसम्पन्नौ चन्द्रसूर्याविवागतौ ॥ न
मस्कृत्य जगन्नाथं मत्वा सुखमवस्थितः ॥ ३० ॥ राजोवाच ॥ दे
वदेवमनाद्यन्त मनन्तं जगताम्पतिम् ॥ आराधनाय प्रतिमां करोमी
तिमतिर्मम ॥ ३१ ॥ अहंस देवदेवेन परमेण महात्मना ॥ स्वप्नान्ते
तुसमुद्दिष्टो भवद्भ्यां श्रावितम्मया ॥ ३२ ॥ राज्ञस्तु वचनंश्रुत्वा दे
वेन्द्रप्रतिमस्य च ॥ प्रहस्य तस्मैविश्वेश स्तुष्टो वचनमब्रवीत् ॥ ३३ ॥
साधुसाधु महाभाग राजन्नृपतिसत्तम॥ संसारसागरे घोरे कद
लीदलसन्निभे ॥ ३४ ॥ निःसारे दुःखवज़्ले मोहग्राहसमाकुले ॥

इन्द्रियावर्त्तकलिले दुस्तरे लोमहर्षणे ॥ ३५ ॥ नानाव्याधिशतावर्त्तजलबुद्बुदसन्निभे ॥ यतस्ते मतिरुत्पन्ना विष्णोराराधनाय वै ॥ ३६ ॥ धन्यस्त्वं नृपशार्दूल गुणैः सर्वैरलंकृतः ॥ सुप्रजा पृथिवी धन्या सशैलवनकानना ॥ ३७॥ सपुरग्रामनगरा चतुर्वर्णैरलंकृता॥ यतस्त्वं नृपशार्दूल प्रजापालयिता प्रभुः ॥ ३८ ॥ एह्येहि सुमहाभाग द्रुमेस्मिन् सुखशीतले ॥ अत्रास्माभिरिह तिष्ठत्वं कथाभि र्धर्मसंहितैः ॥ ३९ ॥ अयं मम सहायश्च आगतः शिल्पिनाम्वरः ॥ विश्वकर्मसमः साक्षा न्निपुणः सर्व्वकर्मसु ॥ ४० ॥ मयोद्दिष्टान्तु प्रतिमां करोत्येष तटंत्यज ॥ श्रुत्वैवं वचनंतस्य तदाराजा द्विजन्मनः ॥४१॥ सागरस्य तटंत्यक्त्वा गत्वा तस्यसमीपतः ॥ तस्थौ सनृपतिश्रेष्ठो वृक्षच्छायां सुशीतलां ॥४२ ॥ ततस्तस्मै सविप्रात्मा ददौ प्राज्ञां द्विजाकृतिः ॥ शिल्पिमुख्याय विप्रेन्द्र कुरुष्व प्रतिमामिमां ॥ ४३ ॥ कृष्णरूप म्परं शान्तं पद्मपत्रायतेक्षणं ॥ श्रीवत्सकौस्तुभधरं शंखचक्रगदाधरं ॥ ४४ ॥ चन्द्रगोक्षीरवर्णाभं द्वितीयं स्वस्तिकाङ्कितम् ॥ लाङ्गलास्त्रधरं देव मनन्ताख्यं महाबलं ॥ ४५ ॥ देवदानवगन्धर्व्वयक्षविद्याधरोरगैः ॥ नविज्ञातोहि तस्यान्तः तेनानन्त इति स्मृतः ॥ ४६ ॥ भगिनीं वासुदेवस्य रुक्मवर्णां सुशोभनां ॥ तृतीया न्वै सुभद्राञ्च सर्व्वलक्षणलक्षितां ॥ ४७ ॥ श्रुत्वेति वचनंतस्य विश्वकर्म्मा स्वकर्मकृत् ॥ तत्क्षणा त्कारयामास प्रतिमाः शुभलक्षणाः ॥ ४८ ॥ कुण्डलाभ्यां विचित्राभ्यां कर्णाभ्यां सुविराजितम् ॥

चक्रलाङ्गलविन्यस्त हस्ताभ्यां साधुसङ्गतम् ॥ ४९ ॥ प्रथमं शुक्लव
र्णाभं शरच्चन्द्रसमप्रभं ॥ आरक्ताक्षं महाकायं फणाविकटमस्त
कं ॥ ५० ॥ नीलाम्बरधरं घोरं ललाटञ्च महोन्नतं ॥ कुण्डलैक
धरं दिव्यं गदामुशलधारिणं ॥ ५१ ॥ द्वितीयं पुण्डरीकाक्षं नील
जीमूतसन्निभं ॥ अतसीपुष्पसंकाशं पद्मपत्रायतेक्षणं ॥ ५२ ॥ च
क्रपूर्णकरं दिव्यं सर्व्वपापहरं हरिम् ॥ तृतीयां स्वर्णवर्णाभां पद्मप
त्रायतेक्षणां ॥ ५३ ॥ विचित्रवस्त्रसंछन्नां हारकेयूरभूषिताम् ॥
विचित्राभरणोपेतां रत्नहारावलम्बिताम् ॥ ५४ ॥ पीनोन्नतकुचां
रम्यां विश्वकर्म्मा विनिर्ममे ॥ सतुराजाद्भुतं दृष्ट्वा क्षणेनैकेन नि
र्मिताम् ॥ ५५ ॥ दिव्यवस्त्रयुगच्छन्नां नानारत्नैरलंकृताम् ॥ सर्व्व
लक्षणसम्पन्नाः प्रतिमाश्च मनोहराः ॥ ५६ ॥ विस्मयं परमंगत्वा
इदंवचनमब्रवीत् ॥ किंदेवौ समनुप्राप्तौ द्विजरूपधरावुभौ ॥ ५७॥
उभौ चाद्भुतकर्म्माणौ देवविस्वौ नमानुषौ ॥ देवौवा मानुषौ वापि
यक्षविद्याधरौ चकिं ॥ ५८ ॥ किन्तु ब्रह्महृषीकेशौ किंवसू वाकि
मश्विनौ ॥ नवेद्मि सत्यसद्भावं मायारूपेण संस्थितौ ॥ ५९ ॥ ग
तोस्मि शरणं ताभ्या मात्मामे संप्रकाश्यताम् ॥ ६० ॥

इतिश्री ब्रह्मपुराणे स्वयंभुऋषि सम्वादे प्रतिमोत्पत्ति र्नाम
सप्तचत्वारिंशोऽध्यायः ४७ ॥

—०—

ब्राह्मण उवाच ॥ न.हंदेवो नवायक्षो नदैत्यो नचदेवराट् ॥

नब्रह्मा नच रुद्रोहं विद्धिमां परमेश्वरम् ॥ १ ॥ आर्त्तिघ्नः सर्व्व
लोकानां समग्रवलपौरुषः ॥ आराधनीयो भूताना मन्तं यस्यनवि
द्यते ॥ २ ॥ पठ्यते सर्व्वशास्त्रेषु वेदान्तेषु निगद्यते ॥ यमाज्ञ ध्या
नगम्येति वासुदेवेति योगिनः ॥ ३ ॥ अहमेव स्वयंब्रह्मा अहंविष्णुः
शिवोप्यहं ॥ इन्द्रोहं देवराजस्य यमः संयमनोयमः ॥ ४ ॥ पृथिव्या
दीनि भूतानि त्रेताग्निर्हुतभुङ् नृप ॥ वरुणोपाम्पति स्त्वाहं धरित्री
च महीधरः ॥ ५ ॥ यत्किञ्चिद्वाङ्मयं लोके जगत्स्थावरजङ्गमं ॥
चराचरञ्च यद्विश्वं मदन्योनास्ति किञ्चन ॥ ६ ॥ प्रीतोहं तेनृप
श्रेष्ठ वरंवरय सुव्रत ॥ यदिष्टं तत्प्रयच्छामि हृदियत्ते व्यवस्थित
म् ॥ ७ ॥ मद्दर्शनमपुण्यानां स्वप्नेष्वपि नजायते ॥ त्वंपुनर्दृढभक्ति
त्वा त्मत्यचं दृष्टवानसि ॥ ८ ॥ श्रुत्वैवं वासुदेवस्य वचनं तस्यभोदि
जाः ॥ रोमाञ्चिततनुर्भूत्वा इदंस्तोत्रं जगौनृपः ॥ ९ ॥ राजोवा
च ॥ श्रियःकान्त नमस्तेस्तु श्रीपते पीतवाससे ॥ श्रीदः श्रीशः श्री
निवासः नमस्ते श्रीनिकेतन ॥ १० ॥ आद्यंपुरुषमीशानं सर्वेशं सर्व्व
तोपमं ॥ निःकलं परमं देवं प्रणतोस्मि पुरातनं ॥ ११ ॥ शब्दाती
तं गुणातीतं भावाभावविवर्जितम् ॥ निर्लेपं निर्गुणं सूक्ष्मं सर्व्वज्ञं
सर्व्वभावनं ॥ १२ ॥ प्रावृट्मेघप्रतीकाशं गोब्राह्मणहितं शिवम् ॥
सर्वेषामेव गोप्तारं व्यापिनं सर्व्वभावनम् ॥ १३ ॥ शंखचक्रधरं देवं
गदामुशलधारिणम् ॥ नमस्ते वरदंदेवं नीलोत्पलदलच्छविं ॥ १४ ॥
नागपर्यंकशयनं क्षीरोदार्णववासिनं ॥ नमस्येहं हृषीकेशं सर्व्वपाप

हरं हरिम् ॥ १५ ॥ पुनस्त्वां देवदेवेशं नमस्ये वरदम्बिभुम् ॥ स
र्व्वलोकेश्वरं विष्णुं मोक्षकारण मव्ययम् ॥ १६ ॥ एवंस्तुत्वातु त
न्देवं प्रणिपत्य कृताञ्जलिः ॥ उवाच प्रणतोभूत्वा निपत्यवसुधात
ले ॥ १७ ॥ प्रीतोसि यदिमेनाथ वृणोमि वरमुत्तमं ॥ देवासुराः
सगन्धर्वा यक्षरक्षोमहोरगाः ॥ १८ ॥ सिद्धा विद्याधराः साध्याः
किन्नरा गुह्यकास्तथा ॥ ऋषयोथ महाभागा नानाशास्त्रविशार
दाः ॥ १९ ॥ परिब्राड् योगयुक्ताश्च वेदतत्वार्थकोविदाः ॥ मोक्ष
शास्त्रविदो येन्ये ध्यायन्ति परमम्पदम् ॥ २० ॥ निर्गुणं निर्मलं
शान्तं गुह्यं परमपावनं ॥ तत्पदं गन्तुमिच्छामि त्वत्प्रसादा त्सुदु
र्लभं ॥ २१ ॥ भगवानुवाच ॥ सर्वंभवतु भद्रन्ते यथेष्टं सर्व्वमाप्नु
हि ॥ भविष्यति यथाकामं मत्प्रसादा न्नसंशयः ॥ २२ ॥ दशवर्ष
सहस्राणि तथा नवशतानि च ॥ अव्युच्छिन्नं महद्राज्यं कुरुत्वं न्नृ
पसत्तम ॥ २३ ॥ प्रयास्यसिपदं दिव्यं दुर्लभं यत्सुरासुरैः ॥ पूर्णं
मनोरथं शांतं गुह्यमव्यक्तमव्ययम् ॥ २४ ॥ परात्परतरं सूक्ष्मं नि
र्मलं निश्चलंध्रुवम् ॥ जराशोकविनिर्मुक्तं रूपाकारणवर्ज्जितं ॥ २५ ॥
तदहं दर्शयिष्यामि विज्ञेयाख्यं परम्पदं ॥ यंप्राप्य परमानन्दं प्रा
प्नुसे परमांगतिम् ॥ २६ ॥ कीर्त्तिश्च तवराजेन्द्र तिष्ठत्वत्र मही
तले ॥ यावच्चराचरोलोको यावच्चन्द्रार्कतारकं ॥ २७ ॥ यावत्समु
द्राः सप्तैव यावन्मेर्वादिपर्व्वताः ॥ तिष्ठन्ति दिविदेवाश्च यावत्सर्वंच
राव्ययम् ॥ २८ ॥ इन्द्रद्युम्नसरोनाम तीर्थं यज्ञाङ्गसम्भवं ॥ यत्र

स्नात्वा सकृल्लोकः शक्रलोक मवाप्स्यते ॥ २९ ॥ दास्यति यः पि
ण्डान् तटेस्मिन् सरसः शुभे ॥ कुलैकविंशमुद्धृत्य शक्रलोकं गमिष्य
ति ॥ ३० ॥ पूज्यमानो प्सरोभिश्च गन्धर्वैर्गीतनिःस्वनैः ॥ विमाने
नावसेत्तत्र यावदिन्द्राश्चतुर्दश ॥ ३१॥ सरसो दक्षिणेभागे नैरृत्यां
स्तु समाश्रितः ॥ न्यग्रोध स्तिष्ठतेतत्र तत्समीपेतु मंडपः ॥ ३२ ॥
केतकीवनसंछन्नो नानापादपसंकुलः ॥ नालिकेरैरसंख्यैश्च चम्पकै
र्वकुलैर्वृतः ॥ ३३ ॥ अशोकैः कर्णिकारैश्च पुन्नागै र्नागकेशरैः ॥
पाटलाम्रातसरलैः खदिरै रक्तचन्दनैः ॥ ३४ ॥ न्यग्रोधाश्वत्थखदि
रैःशोभितंसमलंकृतं ॥ आषाढस्यसितेपक्षे पञ्चम्यां पितृदैवते॥३५॥
ऋक्षेनेष्यन्तिनस्तत्र नीत्वा सप्तदिनानिवै ॥ मण्डले स्थाप्य वेश्याभी
रथस्थाभिः सुशोभनैः ॥ ३६ ॥ क्रीडाविशेषवहुलै र्नृत्यगीतमनोह
रैः ॥ चामरैः कनकदण्डैश्च व्यजनैरत्नभूषितैः ॥ ३७॥ वीजयंत्यस्त
थान्योन्यं स्थाप्यन्ति परमाङ्गनाः ॥ ब्रह्मचारी यतिश्चैव स्नातका श्च
द्विजोत्तमाः ॥ ३८ ॥ वानप्रस्था गृहस्थाश्च सिद्धा श्चान्येच ब्राह्मणाः॥
नानामन्त्रपदैः स्तोत्रै ऋग्यजुः सामनिःस्वनैः ॥ ३९ ॥ करिष्यन्ति
स्तुतिं राजन् रामकेशवयोः पुनः ॥ ततःस्तुत्वा तथादृष्ट्वा नमस्कृत्वा
च भक्तितः ॥ ४० ॥ नरो वर्षायुतं दिव्यं श्रीमद्धरिपुरं वसेत् ॥ वी
ज्यमानो प्सरोभिश्च गन्धर्वैर्गीतनिःस्वनैः ॥ ४१ ॥ हाररत्नधरस्त
त्र क्रीडते केशवेनवै ॥ विमानेनार्कवर्णेन रत्नहारेण राजना ॥ स
र्वकामै र्महाभागै स्तिष्ठते भवनोत्तमे ॥४२॥ तत्छाया दिहचागत्य

मनुष्ये ब्राह्मणो भवेत् ॥ कोटिद्व्रनपतिः श्रीमां श्चतुर्वेदो भवेद्ध्रुव
म् ॥ ४३ ॥ एवंतस्मै वरंदत्वा कृत्वा च समयंहरिः ॥ जगामादर्शनं
विप्राः सहितो विश्वकर्म्मणा ॥ ४४ ॥ सतुराजा ततोदृष्ट्वा रोमांचि
ततनूरुहः ॥ कृतकृत्यमिवात्मानं मेने सन्दर्शनाद्धरेः ॥ ४५ ॥ ततः
कृष्णञ्च रामञ्च सुभद्रां च वरप्रदां ॥ रथै र्विमानसंकाशै र्मणि
कांचनचित्रितैः ॥ ४६ ॥ संवाह्यतां तदाराजा जयमङ्गलनिःस्वनैः ॥
आनयामास मतिमान् सामात्यः सपुरोहितः ॥ ४७ ॥ नानावादि
त्रनिर्घोषै र्नानावेदस्वनैः शुभैः ॥ संस्थाप्य च शुभेदेशे पवित्रे सुम
नोहरे ॥ ४८ ॥ ततः शुभेतिथौकाले नक्षत्रे शुभलक्षणे ॥ प्रतिमां
स्थापयामास सुमुहूर्त्ते जनैःसह ॥ ४९ ॥ आचार्यानुमतैरेव सर्वं
कृत्वा महीपतिः ॥ आचार्याय तदादत्वा दक्षिणां विधिवत्प्र
भुः ॥ ५० ॥ ऋत्विग्भ्यस्च विधानेन तथान्येभ्यो धनंददौ ॥ कृत्वाप्र
तिष्ठां विधिव त्प्रासादे भवनोत्तमे ॥ ५१ ॥ स्थापयामास तान्सर्वा
न् विधिदृष्टेन कर्म्मणा ॥ ततःसंपूज्य विधिना नानापुष्पैः सुगन्धि
भिः ॥ ५२ ॥ सुवर्णमणिमुक्ताद्यै र्नानावस्त्रैः सुशोभनैः ॥ रत्नैश्च
विविधै र्दिव्यैः साश्वनै र्ग्रामपत्तनैः ॥ ५३ ॥ ददावन्यानि विषयान्
पुराणि नगराणि च ॥ एवंबहुविधं दत्वा राज्यंकृत्वा यथोचित
म् ॥ ५४ ॥ इष्ट्वाच विविधैर्यज्ञै र्दत्वादानान्यनेकशः ॥ कृतकृत्यस्त
तोराजा त्यक्त्वादेहं दिवंययौ ॥ ५५ ॥ नारायणप्रसादेन जगाम
परमम्पदम् ॥ एवंमया मुनिश्रेष्ठाः कथितोसौ नृपोत्तमः ॥ ५६ ॥

ष्ठेचस्य चैव माहात्म्यं किमन्यच्छ्रोतु मिच्छथ ॥ श्रुत्वैवं वचनन्तस्य ब्रह्मणोऽव्यक्तजन्मनः॥ आश्चर्य्यमेनिरे विप्राः पप्रच्छुश्च पुनर्द्विजाः॥ ५७ मुनयऊचुः ॥ कस्मिन्काले सुरश्रेष्ट गन्तव्यं पुरुषोत्तमं ॥ विधिना केनकर्त्तव्यं पञ्चतीर्थमितिप्रभो ॥ ५८ ॥ एकैकस्य च तीर्थस्य स्नान दानस्ययत्फलं ॥ देवताप्रेक्षणेनैव ब्रूहिसर्वं पृथक् पृथक् ॥ ५९ ॥ ब्रह्मोवाच ॥ निराहारः कुरुक्षेत्रे पादेनैकेन यश्चरेत् ॥ जितेन्द्रियोजितक्रोधः सम्बसेत् वत्सरायुतम् ॥ ६० ॥ दृष्ट्वा सकृत्सुरश्रेष्टं दादश्यां पुरुषोत्तमं ॥ कृतोपवासः प्राप्नोति ततोधिकतरं फलं ॥ ६१॥ तस्माज्ज्येष्टे मुनिश्रेष्टाः प्रयत्नेनसुसंयतैः ॥ स्वर्गमोक्षार्थिभि र्विप्रा द्रष्टव्यः पुरुषोत्तमः ॥ ६२ ॥ पञ्चतीर्थानि विधिव त्कुर्य्याज्ज्येष्टे नरोत्तमः ॥ कृत्वासम्यक् पञ्चतीर्थं द्रष्टव्यः पुरुषोत्तमः ॥ ६२ ॥ सुदूरस्थोऽपि योभक्त्या कीर्त्तये त्पुरुषोत्तमं ॥ अहन्यहनि शुद्धात्मा सोपिविष्णुपुरं ब्रजेत् ॥ ६३ ॥ यात्रांकरोति कृष्णस्य श्रद्धयायःसमाहितः ॥ सर्व्वपापविनिर्मुक्तो विष्णुलोकं ब्रजेन्नरः ॥ ६४ ॥ चक्रं दृष्ट्वा हरेर्दूरा त्प्रासादोपरि संस्थितं ॥ सहसामुच्यते पापा न्नरोभक्त्या प्रणम्य च ॥ ६५ ॥

इत्यादि ब्रह्मपुराणे स्वयंभुऋषिसम्बादे पुरुषोत्तमवर्णनो नामाष्टचत्वारिंशोऽध्यायः ४८ ॥



ब्रह्मोवाच ॥ आसीत्काले मुनिश्रेष्टाः संप्रवृत्ते महाक्षये ॥

नष्टार्कं चन्द्रपवने नष्टस्थावरजङ्गमे ॥ १ ॥ उदिते प्रलयादित्ये प्र
चण्डे घनगर्जिते ॥ उत्पातवीतसंघातैः सञ्जाते तरुपर्व्वते ॥ २ ॥
लोके च संहृते सर्वे महाउल्कानिवर्हणे ॥ शुष्केषु सर्व्वतोयेषु सरःसु
च सरित्सु च ॥ ३ ॥ ततःसम्वर्त्तको वह्निर्वायुनासहितो द्विजाः ॥
लोकन्तु प्राविशत्सर्व्व मादित्यै रुपशोषितं ॥ ४ ॥ पश्चात्स पृथिवीं
भित्वा प्रविश्य च रसातलं ॥ देवदानवयक्षाणां भयंजनयते महा
न् ॥ ५ ॥ निर्द्दहन्नागलोकं च यच्चकिञ्चि त्चितावि ह ॥ अधस्ता
न्मुनिशार्दूलाः सर्वंनाशयते क्षणात् ॥ ६ ॥ ततोयोजनविंशानां स
हस्राणि शतानि च ॥ निर्द्दह न्नाशुगोवायुः सच सम्वर्त्तकोऽन
लः ॥ ७ ॥ सदेवासुरगन्धर्वं सयक्षोरगराक्षसं ॥ ततोदहति संतप्तः
सर्व्वमेव जगत्प्रभुः ॥ ८ ॥ प्रदीप्तोसौ महारौद्रः कल्पाग्निरिति यः
श्रुतः ॥ महाज्वालो महार्चिष्मा न्संप्रदीप्तमहास्वनः ॥ ९ ॥ सूर्य
कोटिप्रतीकाशो ज्वलन्निव सुतेजसा ॥ सतत्रैवादहत्तूर्णं ससुरासु
रमानुषं ॥ १० ॥ एवंविधे महाघोरे महाप्रलयदारुणे ॥ ऋषिः पर
मधर्मात्मा ध्यानयोगपरोऽभवत् ॥ ११ एकः संतिष्ठते विप्रा मार्क
ण्डेयेति विश्रुतः ॥ मोहपाशेन वद्धोसौ क्षुत्तृष्णा व्याकुलेन्द्रि
यः ॥ १२ ॥ सदृष्ट्वा तन्महावह्निं शुष्ककंठोष्टतालुकः ॥ तृष्णार्त्तः
प्रयतोविप्रा स्तदासौ भयविह्वलः ॥ १३ ॥ वभ्राम पृथिवीं सर्वां ङ्का
दिभूतो विचेतनः ॥ त्रातारंनाधिगच्छन्वै द्रुतस्तेतस्तधावति॥ १४ ॥
नलेभे सतदाशर्म्म यत्रविश्रमते द्विजाः ॥ करोमिकिं नजानामि

यस्याहं शरणंव्रजे ॥ १५ ॥ कथं पश्यामि तन्देवं पुरुषेशं सनातनं ॥
तथा सञ्चिन्तयेद्देव मेकाग्रेण सनातनं ॥ १६ ॥ त्वरायुक्तो मुनिस्त्वा
सौ न्यग्रोधस्यान्तिकं ययौ ॥ आसाद्यतं मुनिश्रेष्ठः तस्यमूले समावि
शत् ॥ १७ ॥ नकालो नभयन्तत्र नचाङ्गारप्रवर्षणम् ॥ नसम्बर्त्ताग
मन्तत्र ननुवज्राशनि स्तथा ॥ १८ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषिसम्वादे मार्कण्डेयदर्शनो ना
मैकोनपञ्चाशत्तमोऽध्यायः ४९ ॥

—०—

ब्रह्मोवाच ॥ ततोगजकुलप्रख्या स्तडिन्मालाविभूषिताः ॥ स
मुत्तस्थुर्महामेघा नभस्यद्भुतदर्शनाः ॥ १ ॥ केचिन्नीलोत्पलश्यामाः
केचित्कुमुदसन्निभाः ॥ केचि त्किञ्जल्कसंकाशाः केचित्पीताः पयो
धराः ॥ २ ॥ केचिद्धरितसंकाशाः काकाण्डकनिभा स्तथा ॥ केचि
त्कमलपत्राभाः केचि द्धिङ्गुलसप्रभाः ॥ ३ ॥ केचि त्पुरवराकाराः
केचिद्गिरिवरोपमाः॥ केचिदञ्जनसंकाशाः केचिन्मरकतप्रभाः ॥ ४
विद्युन्मालापिनद्धाङ्गाः समुत्तस्थु र्महास्वनाः ॥ घोररूपा महाभा
गा घोरस्वननिनादिनः ॥ ५ ॥ ततो जलधराः सर्वे समावृत्य नभ
स्तलं ॥ तैरियं पृथिवी सर्वा सपर्वतवनाकरा ॥ ६ ॥ आपूरिता दि
शःसर्व्वाः सलिलौघप्रवर्षिभिः ॥ ततस्ते जलदा घोरा वारिणा मुनि
सत्तमाः ॥ ७ ॥ सर्व्वतः प्लावयामासुः चोदिताःपरमेष्ठिना ॥ वर्षमा
णामहत्तोयं पूरयन्तोवसुन्धरां ॥ ८॥ सुघोरमशिवंरौद्रं नाशयन्ति

ष पावकं ॥ ततोद्वादशवर्षाणि पयोदाः समुपप्लवैः ॥ ९ ॥ धारा
भिःपूरयन्तोवै चोद्यमाना महात्मना ॥ ततः समुद्राः स्वांवेला म
तिक्रामन्ति भोद्विजाः ॥ १० ॥ पर्वताश्चवशीर्यन्ते महीचाशु निम
ज्जति ॥ सर्व्वस्तु समहावात स्तेपयोदा नभस्तलं ॥ ११ ॥ ॥ सुम्वे
ष्टयित्वा नश्यन्ति वायुवेगसमाहताः ॥ ततस्तं मारुतंघोरं सविष्णु
र्मुनिसत्तमाः ॥ १२ ॥ आदिपद्मालयोदेवः पीत्वस्वपिति भोद्वि
जाः ॥ तस्मिन्नेकार्णवे घोरे तमोभूते निराश्रये ॥ १३ ॥ नष्टे देवा
सुरनरे यक्षराक्षसवर्ज्जिते ॥ ततोमुनिः सविश्रान्तो ध्यात्वा च पुरु
षोत्तमं ॥ १४ ॥ ददर्शचच निर्मील्य जलपूर्णां वसुन्धरां ॥ नाप
श्यतवटं नोर्वी न्नदिगादि नभास्करं ॥ १५ ॥ नचन्द्रार्काग्निपवनं
नदेवासुरपन्नगं ॥ निममज्ज तदा विप्रा स्त्रातारं नाधिगच्छ
ति ॥ १६ ॥ एवंतं विह्वलं दृष्ट्वा कृपया पुरुषोत्तमः ॥ प्रोवाचमुनि
शार्दूलं तदाध्यानेनतोषितः ॥ १७ ॥ भगवानुवाच ॥ वत्सप्रीतोस्मि
वालस्त्वं भक्तस्य ममसुव्रत ॥ आगच्छागच्छ शीघ्रेण मार्कंडेयममा
न्तिकं ॥ १८ ॥ माभैर्वत्स नभेतव्यं संप्राप्तोसि ममाग्रतः ॥ मार्कंडेय
मुनेधीर वालस्त्वं श्रमपीडितः ॥ १९ ॥ तस्यतद्वचनं श्रुत्वा मुनिःप
रमकोपितः ॥ उवाच सतदाविप्रा विस्मितश्चाभवन्मुनिः ॥ २० ॥
मार्कंडेयउवाच ॥ कोमन्नाम्ना कीर्त्तयति तपःपरिभवन्निव ॥ वहु
वर्षसहस्राख्यं धर्षयन्निव मेवपुः ॥ २१ ॥ नह्येष समुदाचारो देवेष्व
पि समाहितः ॥ मांब्रह्मा सर्व्वदेवेशो दीर्घायुरिति भाषते ॥ २२ ॥

मार्कंडेयेति प्रोक्तामां मृत्युमोचितु मिच्छति ॥ एवमुक्ता तदा वि
प्राः चिन्ताविष्टोऽभव न्मुनिः ॥ २३ ॥ किंमोहोमां समारूढः कि
स्वामोहो यमागतः॥ इत्थंचिन्तयतस्तस्य उत्पन्नादुःखहामतिः २॥४॥
व्रजामि शरणंदेवं भक्त्याहं पुरुषोत्तमं ॥ सगत्वा शरणं विष्णुं मु
निस्तद्गतमानसः ॥ २५ ॥ ददर्श भूयस्तंवालं स्वपन्तंसलिलोपरि॥
शाखायांतस्य सौवर्णं विस्तीर्णायां महाद्भुतं ॥ २६ ॥ रुचिरे दिव्य
पर्यंके रचिते विश्वकर्म्मणा ॥ वज्रवैडूर्यखचिते मणिविद्रुमशोभि
ते ॥ २७ ॥ नानैश्वर्यसमायुक्तं प्रभामण्डल मण्डितं ॥ तस्योपरि
स्थितं देवं कृष्णं वालवपुर्द्धरम् ॥ २८ ॥ सूर्यकोटिप्रतीकाशं दीप
यन्तं सुवर्चसं ॥ चतुर्भुजं सुन्दराङ्गं पद्मपत्रायतेक्षणं ॥ २९ ॥ श्री
वत्सोरसिसंयुक्तं शंखचक्रगदाधरं ॥ दृष्ट्वातं समुनिर्देवं विस्मयोत्फु
ल्ललोचनः ॥ ३० ॥ रोमाञ्चिततनु र्देवं प्रणिपत्येदमब्रवीत् ॥ अहो
वैकार्णवे घोरे विनष्टे सचराचरे ॥ ३१ ॥ कथमेको ह्ययंवाल स्ति
ष्ठत्यत्रसुनिर्भयः॥ भूतम्भव्यं भविष्यञ्च जानन्नपि महामुनिः॥३२॥
वुबुधेन तनोदेवं माययातस्य मोहितः ॥ यदा नवुबुधे चैनं तदा दुः
खादुवाचह ॥ ३३ ॥ वृथामे तपसोवीर्यं वृथाज्ञानं वृथाक्रिया ॥ वृ
थामे जीवितंदीर्घं वृथामानुष्यजन्म च ३४ ॥ सोहं सुप्तंनजानामि
पर्यंके दिव्यवालकं ॥ एवंसञ्चिन्तयद्विप्रः प्लुवमानो विचेतनः ॥३५॥
प्राणार्थं विह्वलस्तस्तो निर्वेदं गतवांस्तदा ॥ ततोवालार्कसंकाशं स्व
महिम्नि व्यवस्थितम् ॥ ३६ ॥ वालं तेजोमयं विप्रा नशशाकाभि

वीक्षितुं॥ दृष्ट्वातं मुनिमायान्तं सबालःप्रहसन्निव ॥ प्रोवाच मुनिशा
र्दूला सदामेघौघसन्निभः ॥ ३७ ॥ भगवानुवाच ॥ वत्स जानामि
त्वांश्रान्तं प्राणार्थिन मुपस्थितं ॥ शरीरं विशमेक्षिप्रं विश्रामस्ते म
योदितः ॥ ३८ ॥ श्रुत्वास वचनंतस्य किञ्चिन्नोवाच मोहितः ॥
विवेश वदनन्तस्य विष्टतं चावशोमुनिः ॥ ३९ ॥

इतिश्री ब्रह्मपुराणे स्वयम्भुऋषिसंवादे मार्कण्डेय प्रलयदर्शनो
नाम पञ्चाशत्तमोऽध्यायः ५० ॥

—०—

ब्रह्मोवाच ॥ संप्रविश्योदरे तस्य बालस्य मुनिसत्तमः ॥ ददर्श
पृथिवीं कृत्स्नां नानाजनपदैर्वृतां ॥ १ ॥ लवणेक्षुसुरासर्पि दधिदु
ग्धजलोदधीन् ॥ ददर्श सप्तसुद्रांश्च जम्बूप्लक्षं च शाल्मलं ॥२॥ कु
शंक्रौञ्चं च शाकंच पुष्करं च ददर्शसः ॥ भारतादीनि वर्षाणि ते
षाम्वै वर्षपर्व्वतान् ॥ ३ ॥ मेरुञ्च सर्व्वरत्नौघ मपश्य त्कनकाचलं ॥
नानारत्नान्वितैः शृङ्गै र्भूषितं बहुकन्दरं ॥ ४ ॥ अन्यजानन्यजाती
यान् तस्यबालस्य चोदरे ॥ मृगानूशाखा मृगानूसिंहान् वराहां
श्च महाखगान् ॥ ५ ॥ पृथिव्यां तस्यतीर्थाणि ग्रामांश्च नगराणि
च ॥ कृषिगोरक्ष वाणिज्यं क्रयविक्रयणं तथा ॥ ६ ॥ शक्रादि विबु
धान् सर्व्वान् तथान्यांश्च दिवौकसः ॥ गन्धर्वाप्सरसोयक्षा नृषींश्चैव
सनातनान् ॥ ७॥ दैत्यदानवसर्पांश्च नागांश्च मुनिसत्तमाः ॥ यत्कि
ञ्चि त्सर्व्वलोकेषु नष्टं स्थावरजङ्गमं ॥ ८ ॥ अपश्यस्स तदासर्वं तस्य

कुक्षौ द्विजोत्तमाः ॥ अथ किं बहुनोक्तेन कीर्त्तितेन पुनःपुनः ॥९॥
ब्रह्मादिस्तंबपर्य्यन्तं यत्किञ्चित्सचराचरं ॥ भूर्लोकं च भुवर्लोकं स्व
र्लोकं च द्विजोत्तमाः ॥ १० ॥ महर्जन स्तपः सत्य मतलं वितलं त
था ॥ पातालं भूतलं चैव वितलं च रसातलं ॥ ११ ॥ महातलं च ब्र
ह्माण्ड मपश्य त्तस्यचोदरे ॥ अव्याहतगति स्तस्य तदाभू द्द्विजसत्त
माः ॥ १२ ॥ प्रसादात्तस्यदेवस्य स्मृतिलोपश्च नाभवत् ॥ भ्रममाण स्त
दाकुक्षौ कृत्स्नं जगदिदं द्विजाः ॥ १३ ॥ नान्तञ्जगाम देहस्य तस्यवि
ष्णोः कदाचन ॥ यदासौ नगतस्यान्तं तस्यदेहस्य भोद्विजाः ॥ तदातं
वरदन्देवं शरणं गतवान्मुनिः ॥ १४ ॥ ततोसौ सहसाविप्रा वायुवेगे
न निस्सृतः ॥ महात्मनो मुखात्तस्य विवृतात् पुरुषोत्तमाः ॥ १५ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषिसम्बादे कुक्षिदर्शनो नामैक
पञ्चाशत्तमोऽध्यायः ५१ ॥



ब्रह्मोवाच ॥ सनिष्क्रम्योदरा त्तस्य वालस्य मुनिसत्तमः ॥ पु
नश्चैकार्णवामुर्व्वीं मपश्य ज्जनवर्ज्जिताम् ॥ १ ॥ पूर्व्वदृष्टञ्च तन्देवं
ददर्श शिशुरूपिणं ॥ शाखायां वटवृक्षस्य पर्यंकोपरिसंस्थितं ॥ २ ॥
श्रीवत्सोरसि संयुक्तं पीतवस्त्रं चतुर्भुजं ॥ गदामादाय तिष्ठन्तं पद्म
पत्रायतेक्षणं ॥ ३ ॥ सोपितं मुनिमायांतं प्लवमानमचेतनं ॥ दृष्ट्वा
मुखाद्विनिःक्रांतं प्रोवाच प्रहसन्निव ॥ ४ ॥ भगवानुवाच ॥ क
श्चित्त्वयोषितं वत्स विश्रान्तश्च ममोदरे ॥ भ्रममाणश्चकिंतत्र आश्चर्यं

दृष्ट वानसि ॥ ५ ॥ भक्तोसि त्वंमुनि श्रेष्ठ श्रान्तोसि श्रम मा
श्रितः ॥ श्रुत्वा सवचनन्तस्य संप्रहृष्टतनूरुहः ॥ ६ ॥ ददर्शतं सुदुः
प्रेक्ष्यं रत्नै र्दिव्यै रलंकृतं ॥ प्रणम्य शिरसा विप्रा हर्षगद्गदया गि
रा ॥ ७ ॥ कृताञ्जलि स्तदाहृष्टो विस्मितस्य पुनःपुनः ॥ दृष्ट्वातं प
रमात्मानं संस्तोतु मुपचक्रमे ॥ ८ ॥ मार्कंडेयउवाच ॥ देवदेवज
गन्नाथ मायावालवपुर्द्धर ॥ त्राहिमां चारुपद्माक्ष दुःखितं शरणा
गतं ॥ ९ ॥ संतप्तोस्मि सुरश्रेष्ठ सम्वर्त्ताख्येन वह्निना ॥ अङ्गारव
र्षभीतस्य त्राहिमां पुरुषोत्तम ॥ १० ॥ शोषितस्य प्रचण्डेन वायुना
जगदामुना ॥ विह्वलोहं तयाश्रान्तः त्राहिमां पुरुषोत्तम ॥ ११ ॥
तापितस्य तथादित्यैः प्रलयावर्त्तकादिभिः ॥ नशान्ति मभिगच्छामि
त्राहिमां पुरुषोत्तम ॥ १२ ॥ तृषितस्य क्षुधाविष्टो दुःखितस्य जग
त्पते ॥ त्रातारं नानुपश्यामि त्राहिमां पुरुषोत्तम ॥ १३ ॥ अस्मि
न्नेकार्णवे घोरे विनष्टे सचराचरे ॥ नचान्त मधिगच्छामि त्राहि
मां पुरुषोत्तम ॥ १४ ॥ तवोदरेच देवेश मयादृष्टं चराचरं ॥ वि
स्मितोहं विषण्णश्च त्राहिमां पुरुषोत्तम ॥ १५ ॥ संसारेस्मि न्नि
रालंबे प्रसीद पुरुषोत्तम ॥ प्रसीद विबुधश्रेष्ठ प्रसीद विबुध प्रि
य ॥ १६ ॥ प्रसीद विबुधा न्नाथ प्रसीद विबुधा श्रय ॥ प्रसी
द सर्व्वलोकेश जगत्कारण कारण ॥ १७ ॥ प्रसीद सर्व्वदेवेश प्र
सीद ममभूधर ॥ प्रसीद कमलावास प्रसीदमधुसूदन ॥ १८ ॥ प्र
सीद कमलाकान्त प्रसीद त्रिदशेश्वर ॥ प्रसीद कंसकेसिघ्न प्रसी

दारिद्र्यनाशन ॥ १९ ॥ प्रसीद कृष्णदैत्यघ्न प्रसीद दनुजान्तक ॥ प्रसीद मथुरावास प्रसीद यदुनन्दन ॥ २० ॥ प्रसीद शक्रावरज प्रसीद वरदाऽव्यय ॥ त्वंमही त्वंजलंदेव त्वमग्निस्त्वंसमीरणः ॥ २१॥ त्वंनभ स्त्वम्मनश्चैव त्वमहंकार एवच ॥ त्वम्बुद्धिः प्रकृति श्चैव सत्वाद्यास्त्वं जगत्पते ॥ २२ ॥ पुरुषस्त्वं जगद्बीजं पुरुषादपि चोत्तमः॥ त्वमिन्द्रियाणि सर्व्वाणि शब्दाद्याविषयाः प्रभो ॥ २३ ॥ त्वंदिक्पालाश्च धर्माश्च वेदायज्ञाः सदक्षिणाः ॥ त्वमिन्द्र स्त्वंशिवो देव स्त्वंहवि स्त्वंहुताशनः ॥ २४ ॥ पितृराट् देवराजस्त्वं राक्षसाधिपतिस्तथा ॥ वरुण स्त्वमपांनाथो वायुस्त्वं धनदेश्वरः ॥ २५ ॥ त्वमीशान स्त्वमनन्त स्त्वंगणेशश्च षण्मुखः ॥ वसवस्त्वं तथारुद्रा स्त्वमादित्यश्च खेचरः ॥ २६ ॥ दानवास्त्वं तथायक्षा स्त्वं दैत्याः समरुद्गणाः ॥ पितरोवालखिल्यास्त्वं प्रजानाम्पतयोव्ययाः ॥ २७॥ मुनय स्त्वमृषिगणा स्त्वमप्सिस्त्वं निशाचराः ॥ अन्या श्च जातय स्त्वंहि यत्किञ्चि ज्जीवसंज्ञकं ॥ २८ ॥ किञ्चैवं बहुनोक्तेन ब्रह्मादि स्तम्बगोचरः ॥ भूतम्भव्यंभविष्यञ्च त्वञ्जगत्सचराचरं॥ २९॥ यत्तेरूपं परन्देव कूटस्थ मचलंध्रुवं ॥ ब्रह्माद्यास्तं नजानन्ति कथमन्येल्पमेधसः ॥ ३० ॥ देवशुद्धस्वभावोसि नित्यस्त्वं प्रकृतेः परः॥ अव्यक्तः शाश्वतोनन्तः सर्व्वव्यापी महेश्वरः ॥ ३१ ॥ त्वमाकाशात्परः शान्तो अजस्त्वं विभुरव्ययः ॥ एवंत्वां निर्गुणंस्तोतुं कःशक्नोति निरञ्जनम् ॥ ३२ ॥ स्तुतोऽसि यन्मया देव विकले नात्म

मेधसा ॥ तत्सर्वं देव देवेश क्षन्तु मर्हसि चाव्यय ॥ ३३ ॥

इतिश्री ब्रह्मपुराणे स्वयम्भुऋषि सम्वादे भगवत्स्तवो नाम द्विपञ्चाशत्तमोऽध्यायः ५२ ॥

—०—

इत्थंस्तुत स्तदादेन मार्कण्डेयेन भोद्विजाः ॥ प्रीतः प्रोवाच भगवान् मेघगम्भीरया गिरा ॥ १ ॥ भगवानुवाच ॥ ब्रूहिकामं मुनिश्रेष्ट यत्तेमनसि वर्त्तते ॥ ददामिसर्वं विप्रर्षे मत्तो यदभिवांछितम् ॥ २ ॥ श्रुत्वातु वचनंविप्रा विष्णोस्तस्य महात्मनः ॥ उवाच परमप्रीतो मुनि स्तद्गतमानसः ॥ ३ ॥ मार्कण्डेय उवाच ॥ ज्ञातुमिच्छामिदेवत्वां मायाञ्चैवविमोचद ॥ आस्येनतेप्रविष्टोहं शरीरंभगवंस्तव ॥ ४ ॥ दृष्टवानुभगवँल्लोकान् समस्तान् जठरेहिते ॥ तवदेवशरीरस्था देवदानवराक्षसाः ॥ ५ ॥ यक्षगन्धर्व्वनागा श्च जगत्स्थावरजङ्गमं ॥ त्वत्प्रसादाच्चमेदेव स्मृतिर्न्नपरिहीयते ॥ ६ ॥ नानामुनिजनाकीर्णं नानाधातुविभूषितं ॥ नानाद्रुमलताकीर्णं नानाप्रश्रवणाकुलं ॥ ७ ॥ नानासत्वसमाकीर्णं नानाश्चर्यसमन्वितं ॥ व्याघ्रैः सिंहैर्वराहैश्च चमरै र्महिषैर्गजैः ॥ ८ ॥ मृगैः शाखा मृगै श्चान्यै र्भूषितन्तु मनोहरं ॥ शक्राद्यै विविधैर्देवैः सिद्धचारणपन्नगैः ॥ ९ ॥ मुनियक्षाप्सरोभिश्च वृतंचान्यैः सुरालयैः ॥ एवं सुमेरुसीमांतं ततः समुनिसत्तमाः ॥ १० ॥ पर्यटन् सतदाविप्राः तस्यवालस्य चोदरे ॥ हिमवन्तं हेमकूटं निषधं गन्धमादनं ॥ ११ ॥ श्वेतञ्च कज्जनीलंच

कैलासं दर्दुरंगिरिं ॥ महेन्द्रं मलयं विन्ध्यं पारियात्रं तथार्वुदं ॥ १२॥ सह्यंच शुक्तिमन्तञ्च मैनाकं चक्रपर्व्वतं ॥ एवं चान्येच वहवो या वन्तः पृथिवीधराः ॥ १३ ॥ तांस्तुतत्र मुनिश्रेष्ठाः सोपश्यद्रत्नभूषितान् ॥ कुरुक्षेत्रं च पांचाल्यं मत्स्यमद्रा न्सकैकयान् ॥ १४ ॥ वाह्लीकाञ्छूरसेनांश्च काश्मीरा न्सगणांश्च तान् ॥ पर्व्वतीयान् किरातांश्च कर्णप्रावरणान् वरान् ॥१५ ॥ एकपादां द्विपादांश्च त्रिपादान् वहुनेत्रकान् ॥ ऐन्द्रप्राग्ज्यातिषां श्चैव काम्बोजां स्तास्रलिप्तकान् ॥ १६ ॥ अङ्गान्वङ्गा न्समुह्मांश्च कलापां श्चोत्कला न्द्विजाः ॥ महोरगान् कलिंगांश्च कौंकणा नर्वुदानिच ॥ १७ ॥ मालवान् द्राविडांश्चापि सौराष्ट्रा न्यवनांस्तथा ॥ एतां श्चान्यांश्च देशांश्च पर्यटन् मुनिसत्तमाः ॥ १८ ॥ ददर्श समुनिश्रेष्ट स्तत्रक्षत्रौ महात्मनः ॥ प्रयागं च कुरुक्षेत्रं पुष्करं नैमिषं गयां ॥ १९ ॥ गंगाद्वारं च कुब्जाम्रं वदरीं सिन्धुसागरं ॥ कोकामुखं शुद्धतीर्थं मह्यावर्त्तं कुशस्थलीं ॥ २० ॥ लोहजंघं त्वश्वतीर्थं सर्व्वपापप्रमोचनं ॥ कर्दमालं चाग्नितीर्थं तथा चामरकंटकं ॥ २१ ॥ लोहार्गलं जम्बुमार्गं सोमतीर्थं पृथूदकं ॥ उत्पलावर्त्तकं तीर्थं तथाश्रीपुरुषोत्तमं ॥ २२ ॥ एकामुखं च केदारं काशींच विरजंद्विजाः ॥ कालंजरं च गोकर्णं श्रीशैलं गन्धमादनं ॥ २३ ॥ एतान्यन्यानि तीर्थाणि क्षेत्राण्यायतनानि च ॥ अपश्य चोदरेतस्य वालस्य मुनिसत्तमः ॥ २४ ॥ गंगां शतद्रूं भीविप्रा यमुनामथकौशिकीं ॥ चर्म्मण्वतीं वेत्रवतीं चन्द्रभागां

सरस्वतीं ॥ २५ ॥ विपाशांच वितस्तांच सिन्धुं गोदावरीं नदीं ॥
वस्वोकसारां नलिनीं पयोष्णीं नर्म्मदां द्विजाः ॥ २६ ॥ अपर्णान्तु
ङ्गभद्रा ञ्च करतोयां महानदीं ॥ सुवेणां कृष्णवेणा ञ्च शिविरा
ञ्च महानदीं ॥ २७ ॥ वैतरणींचैव कावेरीं शोणञ्चैव महानदं ॥
भीमरथीं विशाला ञ्च शिप्रां वेत्रवतीं नदीं ॥ २८ ॥ एता श्चान्या
श्च नद्यश्च पृथिव्यां वैद्विजोत्तमाः ॥ परिभ्रान्त श्च सोपश्य त्तस्यकुक्षौ
महात्मनः ॥ २९ ॥ अपश्य द्गगनञ्चैव चन्द्रसूर्यविराजितं ॥ ज्वा
ज्वल्यमानं तेजोभिः पावकार्कसमप्रभं ॥ ३० ॥ ददर्श च महीं वि
प्राः काननै रुपशोभिताम् ॥ यजन्ते विविधैस्तत्र ब्राह्मणा वहुभिर्म
खैः ॥ ३१ ॥ क्षत्रियाश्च प्रवर्त्तंते सर्व्ववर्णानुरञ्जनैः ॥ वैश्याःकृषिं य
थान्यायं कारयन्ति च भोद्विजाः ॥ ३२ ॥ एवमादीनि सर्व्वाणि दृ
ष्टानि पुरुषोत्तम॥ इच्छामि पुण्डरीकाक्ष ज्ञातुंत्वामहमव्ययं ॥ ३३॥
इहभूत्वा शिशुःसाक्षा त्किम्भवानिह तिष्ठते ॥ पीत्वा जगदिदं स
र्व्व मेतदाख्यातुमर्हसि ॥ ३४ ॥ ज्ञातुमिच्छामि देवेश ब्रूहि सर्व्वम
शेषतः ॥ त्वत्तः कमलपत्राक्ष विस्तरेण यथातथं ॥३५ ॥ महदेतद
चिन्त्यञ्च यदहं दृष्टवान्विभो ॥ इत्युक्तःसतदातेन देवदेवो महेश्व
रः ॥ सांत्वय न्सतदावाक्य मुवाच वदताम्वरः ॥ ३६ ॥ भगवानुवा
च ॥ कामं देवापि मांविप्र नाभिजानन्ति तत्त्वतः ॥ तवप्रीत्या प्रव
क्ष्यामि यथेदं विसृजाम्यहं ॥ ३७ ॥ पितृभक्तोसि विप्रर्षे माञ्चैव
शरणंगतः ॥ ततोदृष्टोस्मिते साक्षा द्ब्रह्मचर्यं च तेमहत् ॥ ३८ ॥

आपोनारा इतिपुरा संज्ञाकर्म्म कृतामया ॥ तेननारायणोस्म्युक्तो म
मतास्त्वयनं सदा ॥ ३९ ॥ अहन्नारायणो नाम प्रभवः शाश्वतोव्य
यः ॥ विधाता सर्व्वभूतानां संहर्त्ता च द्विजोत्तम ॥ ४० ॥ अहंविष्णु
रहंब्रह्मा शक्रश्चाहं द्विजोत्तम ॥ अग्निरास्यं क्षितिःपादौ चन्द्रादित्यौ
च लोचने ॥ ४१ ॥ द्यौर्मूर्द्धा खंदिशः श्रोत्रे तथापः स्वेदसम्भवाः ॥ स
दिशञ्च नभःकायो वायुर्मनसि तत्स्थितः ॥ ४२ ॥ मया क्रतुशतैरिष्टं
बहुभि स्वाप्तदक्षिणैः ॥ यजन्तेमां तथावैश्याः स्वर्गलोकं जिगीष
वः ॥ ४३ ॥ चतुःसमुद्रपर्यन्तां मेरुमन्दरभूषणाम् ॥ शेषोभूत्वा मही
मेको धारयामि वसुन्धराम् ॥ ४४ ॥ वाराहंरूप मास्थाय मयेयं जग
तीपुरा ॥ मज्जमाना जलेविप्र वीर्येणासौ समुद्धृता ॥ ४५ ॥ अ
ग्निश्च वडवावक्त्रोवै भूत्वाहं द्विजसत्तम ॥ पिबन्नापः समाविद्धा स्ता
श्चैव विसृजाम्यहं ॥ ४६ ॥ ऋग्वेदः सामवेदश्च यजुर्वेद स्त्वथर्वणः ॥
मत्तः प्रादुर्भवंत्येते मामेव प्रविशन्ति च ॥ ४७ ॥ यतयः शान्तिपर
मा यतात्मानो वुभुत्सवः ॥ कामक्रोध द्वेषमुक्ता निःसंगा वीतकल्म
षाः ॥ ४८ ॥ सत्वस्था निरहंकारा नित्यमध्यात्मकोविदाः ॥ मामेव
सततंविप्रा श्चिन्तयन्त उपासते ॥ ४९ ॥ अहं संवर्त्तको ज्योति रहं
संवर्त्तकोनलः ॥ अहं सम्बर्त्तकः सूर्यस्त्वहं सम्बर्त्तकोनिलः ॥ ५० ॥
ताराहूपाणि दृश्यन्ते यान्येतानि नभस्तले ॥ ममवै रोमकूपानि
विद्धित्वं द्विजसत्तम ॥ ५१ ॥ रत्नाकराः समुद्राश्च सर्व्वमेव चतुर्द्दि
शं ॥ वसनं शयनंचैव निलयंचैव विद्धिमे ॥ ५२ ॥ कामःक्रोधश्च हर्षश्च

भयंमोहं तथैवच ॥ ममैवविद्धिरूपाणि सर्व्वाण्येतानिसत्तम॥५३॥
प्राप्नुवन्ति नराविप्र यत्कृत्वा कर्म्मशोभनं ॥ सत्यंदानं तपश्चाग्र्य म
हिंसा सर्व्वजन्तुषु ॥ ५४ ॥ मद्विधानेन सहिता ममदेहे विहारि
णः ॥ मयाभिभूतविज्ञाना स्चेष्टयन्ति नकामतः ॥ ५५ ॥ सम्यग्वेद
मधीयाना यजन्तिविविधैर्मखैः ॥ यतात्मानो जितक्रोधाःप्राप्नुवन्ति
द्विजातयः ॥ ५६ ॥ प्राप्तुंशक्यं नमांविद्धि नरै र्दुःकृतकारिभिः ॥
लोभाभिभूतैः कृपणै रनार्यै रकृतात्मभिः ॥ ५७ ॥ एतन्महाफलं
विद्धि नराणां भावितात्मनां ॥ सुदुःप्रापं विमूढानां मायायोगनि
षेवितैः ॥ ५८ ॥ यदायदाहि धर्म्मस्य ग्लानिर्भवति भार्गव ॥ अ
भ्युत्थान मधर्म्मस्य तदात्मानं सृजाम्यहं ॥ ५९ ॥ दैत्या हिंसानुर
ताश्च अवध्याः सुरसत्तमैः ॥ राक्षसा श्चापि लोकेस्मि न्यदोत्पत्स्य
न्ति दारुणाः ॥ ६० ॥ तदाहं संप्रसूयामि गृहेषु शुभकर्मिणां ॥ प्र
विष्टो मानुषंदेहं सर्वं प्रशमयाम्यहं ॥ ६१ ॥ सृष्ट्वा देवमनुष्यां श्च ग
न्धर्वोरग राक्षसान् ॥ स्थावराणि च भूतानि संहराम्यात्म माय
या ॥ ६२ ॥ कर्मकाले पुनर्देह मनुचिन्त्य सृजाम्यहं ॥ एवंप्रणिहि
तःसम्यक् ममात्मा मुनिसत्तम ॥ ६३ ॥ सर्व्वभूतेषु मांभक्ताः पू
जयन्ति च सर्व्वशः ॥ यच्चकिञ्चि त्त्वयाप्राप्तं मयि क्लेशात्मकं द्वि
ज ॥ ६४ ॥ सुखोदयाय तत्सर्वं श्रेयसे च तवानघ ॥ यच्च किञ्चि
त्त्वयालोके दृष्टं स्थावरजङ्गमं ॥ ६५ ॥ विहितः सर्व्वथैवासौ ममा
त्मा भूतभावनः ॥ अहन्नारायणो नाम शंखचक्रगदाधरः ॥ ६६ ॥

चतुर्युगानां विप्रर्षे सहस्रं परिवर्त्तनात् ॥ तावत्स्वपिति विश्वात्मा
सर्व्वविश्वानि मोहयन् ॥ ६७ ॥ एवं सर्व्वमहंकाल मिहास्से मुनि
सत्तम ॥ अशिशुः शिशुरूपेण यावद्ब्रह्मा नवुद्ध्यते ॥ ६८ ॥ मया च
दत्तो विप्रेन्द्र वरस्ते ब्रह्मरूपिणा ॥ असकृत्परितुष्टेन विप्रर्षिगण
पूजित ॥ ६९ ॥ सर्व्वमेकार्णवं कृत्वा नष्टे स्थावरजङ्गमे ॥ निर्गतो
सिमयास्मात्तुं ततस्तेदर्शितं जगत् ॥ ७० ॥ अभ्यन्तरं सहस्रस्य प्रवि
ष्टोसियथामम ॥ दृष्ट्वा लोकंसमस्तञ्च विस्मितो नाववुध्यसे ॥ ७१ ॥
ततोपि वक्त्रा द्विप्रर्षे द्रुतंनिःसारितो मया ॥ आख्यातस्ते मयात्मा
त्मा दुर्गम्योयः सुरासुरैः ॥ ७२ ॥ याव त्सभगवान् ब्रह्मा नवुध्येत
महातपा ॥ तावत्त्वमिह विप्रर्षे विशुद्धेचरवैसुखं ॥ ७३ ॥ ततोवि
वुद्धे तस्मिंस्तु सर्व्वलोकपितामहे ॥ एवंभूतानि सृजामि शरीरा
णि द्विजोत्तम ॥ ७४ ॥ आकाशं पृथिवीं ज्योति र्वायुं सलिल मेव
च ॥ लोकेयच्चद्भवे त्किञ्चि दिह स्थावरजंगमं ॥ ७५ ॥ एव मुक्त्वा
तदाविप्राः पुनस्तंप्राह माधवः ॥ पूर्णे युगसहस्रेतु मेघगम्भीर निः
स्वनः ॥ ७६ ॥ भगवानुवाच ॥ मुनेब्रूहि यदर्थंमां ज्ञातवान् परमा
र्थतः ॥ वरंवृणीष्व यच्चेष्टं ददामि त्वचिरादहं ॥ ७७ ॥ आयुष्मा
नसि देवेभ्यो मद्भक्तोसि दृढव्रतः ॥ देवेन्द्र सर्व्वदैत्येभ्यो दीर्घमायु
रवाप्नुहि ॥ ७८ ॥ श्रुत्वा वाणीं शुभां तस्य विलोक्य सतदा पुनः ॥
मूर्द्धानिपत्य सहसा प्रणम्य पुनरब्रवीत् ॥ ७९ ॥ मार्कंडेयउवाच ॥
दृष्टंशदद्य देवेश तवमोघ्यं सुरोत्तम ॥ मोहोऽयं विगतःसद्य स्त्वयि

द्रष्टुमेहरे ॥८०॥ एवमेव जगन्नाथ द्रष्टव्येयं त्वत्प्रसादतः ॥ लोका
नाञ्च हितार्थाय नानाभावप्रशान्तये ॥ ८१ ॥ अस्मिन्क्षेत्रवरे पुण्ये
निर्मले पुरुषोत्तमे ॥ शिवस्यायतनं देव करोमि परमम्महत् ॥८२॥
प्रतिष्ठेयं यथातत्र तवस्थाने च शंकरं ॥ ततो ज्ञास्यन्ति लोकेस्मिन्ने
कमूर्त्ती हरीश्वरौ ॥ ८३ ॥ प्रत्युवाच जगन्नाथः पुनस्तं समहामु
निम् ॥ भगवानुवाच ॥ यदेतत्परमं देवं कारणं भुवनेश्वरं ॥ लिंग
माराधनार्थाय नानाभाव प्रशान्तये ॥ ८४ ॥ ममादेशेन विपेन्द्र कु
रुशीघ्रं शिवालयं ॥ तत्प्रभावाच्छिवेलोके तिष्ठत्वंच तथाव्ययः ॥ ८५ ॥
शिवेसंस्थापिते विप्र ममसंस्थापनं भवेत् ॥ नावयोरन्तरं किञ्चिदे
कभावौ द्विधाकृतौ ॥ ८६ ॥ योरुद्रः सस्वयंविष्णु र्योविष्णुः समहे
श्वरः ॥ उभयोरन्तरं नास्ति पवनाकाशयो रिव ॥ ८७ ॥ वालाहि
नाभिजानन्ति यदेत द्गरुडध्वजः ॥ वृषध्वजः सएवेति त्रिपुरघ्नस्त्रि
विक्रमः ॥ ८८ ॥ तवनामांकितं यस्मा त्कुरुविप्र शिवालयं ॥ उत्त
रेचैव देवस्य कुरुतीर्थं सुशोभनं ॥ ८९ ॥ मार्कण्डेय हृदोनाम न
रलोकेषु विश्रुतः ॥ भविष्यति द्विजश्रेष्ट सर्व्वपापप्रणाशनः ॥ ९० ॥
इत्युक्त्वा सतदादेव स्तत्रैवान्तरधीयत ॥ मार्कंडेयं मुनिश्रेष्टाः सर्व्व
व्यापी जनार्द्दनः ॥ ९१ ॥

इतिश्री ब्रह्मपुराणे स्वयंभुऋषिसम्वादे मार्कंडेयभगवद्दर्शनो
नाम त्रिपंचाशत्तमोऽध्यायः ५३ ॥

—०—

ब्रह्मोवाच ॥ अतःपरं प्रवक्ष्यामि पंचतीर्थविधिं द्विजाः ॥ यत्फलं स्नानदानेन देवताप्रेक्षणेन च ॥ १ ॥ मार्कंडेयह्रदं गत्वा नरश्चोदङ्मुखःशुचिः ॥ निमज्जेत्तत्र त्रीन्वारा निमंमनुमुदीरयन् ॥ २ संसारसागरे मग्नं पापग्रस्त मचेतनं ॥ त्राहिमां भगनेत्रघ्न त्रिपुरारेनमोस्तुते ॥ ३ ॥ नमः शिवाय शान्ताय सर्व्वपापहराय च ॥ स्नानंकरोमि देवेश नाशमायातु पातकं ॥ ४ ॥ नाभिमात्रे जलेस्नात्वा विधिव द्देवताऋषीन् ॥ तिलोदकेन मतिमान् पितॄन् मातॄश्च तर्प्पयेत् ॥ ५ ॥ स्नात्वैवं च तथासम्यक् ततोगच्छे च्छिवालयम् ॥ प्रविश्य देवतागारं कृत्वाचैव प्रदक्षिणं ॥ ६ ॥ मूलमन्त्रेण संपूज्य मार्कंडेयस्यचेश्वरं ॥ अघोरेणाच भोविप्राः प्रणिपत्य प्रसादयेत् ॥ ७ ॥ त्रिलोचन नमस्तेस्तु नमस्ते शशिभूषण ॥ विरूपाक्ष महादेव उमाकान्त नमोस्तुते ॥ ८ ॥ मार्कंडेयह्रदेप्येवं स्नात्वादृष्ट्वाच शंकरं ॥ दशाना मश्वमेधानां फलंप्राप्नोति मानवः ॥ ९ ॥ पापैःसर्वैं र्विनिर्मुक्तः शिवलोकं च गच्छति ॥ तत्रभुक्त्वा वरान् भोगान् यावदाहूतसंप्लवं ॥ १० ॥ इहलोकं समासाद्य भवेद्विप्रो वऋश्रुतः ॥ शाङ्करंयोगमासाद्य ततोमोक्ष मवाप्नुयात् ॥ ११ ॥ कल्पवृक्षं ततोगत्वा कृत्वा तत्र प्रदक्षिणं ॥ पूजये त्परयाभक्त्या मन्त्रेणानेन तद्वटं ॥ १२ ॥ ओंनमो व्यक्तरूपाय महाप्रलयकारिणे ॥ महद्रसोपविष्टाय न्यग्रोधाय नमोस्तुते ॥ १३ ॥ अमरस्त्वं सदाकल्पे हरेश्चायतनं वट ॥ न्यग्रोध हरमेपापं कल्पवृक्ष नमोस्तुते ॥ १४ ॥ भक्त्या प्रदक्षिणं कृत्वा

नत्वा कल्पवटं नरः ॥ सहसा मुच्यतेपापा ज्जीर्णा त्वचमिवोरगः ॥ १५ ॥ छायांतस्य समाक्रम्य कल्पवृक्षस्य भोद्विजाः ॥ ब्रह्महत्यां नरोजह्यात् पापेष्वन्येषु काकथा ॥ १६ ॥ दृष्ट्वाकृष्णांगसंभूतं ब्रह्मतेजोमयं परं ॥ न्यग्रोधस्याकृतिं विष्णुं प्रणिपत्य च भोद्विजाः ॥ १७ ॥ राजसूयाश्वमेधाभ्यां फलंप्राप्नोति चाधिकं ॥ ततो वंशान्समुद्धृत्य विष्णुलोकं च गच्छति ॥ १८ ॥ वैनतेयं नमस्कृत्वा कृष्णस्य पुरतःस्थितं ॥ सर्व्वपापविनिर्मुक्तो नरोविष्णुपुरं व्रजेत् ॥ १९ ॥ दृष्ट्वावटं वैनतेयं पश्येद्यः पुरुषोत्तमं ॥ संकर्षणं सुभद्राञ्च सयाति परमांगतिम् ॥ २० ॥ प्रविश्यायतनं विष्णोः कृत्वातत्र प्रदक्षिणं ॥ संकर्षणञ्च मन्त्रेण भद्रांपूज्य प्रसादयेत् ॥ २१ ॥ नमस्ते धरणीधार कृष्णसंकर्षणानुज ॥ प्रलम्बारे नमस्तेस्तु त्राहिमां कृष्णपूर्वज ॥ २२ ॥ एवंप्रसाद्य तन्देव मजेयं त्रिदशार्चितं ॥ कैलासशिखराकारं चन्द्रा त्कान्ततराननं ॥ २३ ॥ नीलवस्त्रधरं देवं फणाविकट मस्तकं ॥ महाबलं हलधरं कुण्डलैकविभूषितम् ॥ २४ ॥ रौहिणेयं नरोभक्त्या लभेदभिमतं फलं ॥ सर्व्वपापविनिर्मुक्तो विष्णुलोकञ्च गच्छति ॥ २५ ॥ आहूतसंप्लवं यावत् भुक्त्वातत्र सुखंनरः ॥ पुण्यक्षया दिहायातः प्रवरे योगिनां कुले ॥ २६ ॥ ब्राह्मणप्रवरोभूत्वा सर्व्वशास्त्रार्थपारगः ॥ ज्ञानंतत्र समासाद्य मुक्तिंप्राप्नोति दुर्लभां ॥ २७ ॥ एवमभ्यर्च्य हलिनं तत्र कृष्णं विचक्षणः ॥ द्वादशाक्षरमन्त्रेण पूजयेत्सुसमाहितः ॥ २८ ॥

द्विषट्कवर्णमन्त्रेण भक्त्याये पुरुषोत्तमं ॥ पूजयन्ति सदाधीरा स्ते मोक्षं प्राप्नुवन्तिवै ॥ २९ ॥ नतांगतिं सुरायान्ति योगिनो नैवसा मगाः ॥ यांगतिंयान्तिभोविप्रा द्वादशाक्षरतत्पराः ॥ ३० ॥ तस्मा त्तेनैव मन्त्रेण भक्त्याकृष्णं जगद्गुरुं ॥ संपूज्य पुष्पगन्धाद्यैः प्रणि पत्य प्रसादयेत् ॥ ३१ ॥ जयकृष्ण जगन्नाथ जय सर्वाघनाशन ॥ जयचाणूरकेशिघ्न जयकंसनिषूदन ॥ ३२ ॥ जयपद्मपलाशाक्ष ज यचक्रगदाधर ॥ जयनीलाम्बुदश्याम जयसर्वसुखप्रद ॥ ३३ ॥ दे वदेवजगत्पूज्य जयसंसारनाशन ॥ जयविष्णो लोकपूज्य जयवां छाफलप्रद ॥ ३४ ॥ संसारसागरे घोरे निःसारे फेनिलोपमे ॥ क्रोधग्राहाकुले रौद्रे विषयोदकसंप्लवे ॥ ३५ ॥ नानारागोर्मिक लिले मोहावर्त्ते सुदुस्तरे ॥ निमग्नोहं सुरश्रेष्ठ त्राहिमां पुरुषोत्त म ॥ ३६ ॥ एवंप्रसाद्य देवेशं वरेण्यं भक्तवत्सलं ॥ सर्व्वपापहरं दे वं सर्वकामफलप्रदं ॥ ३७ ॥ योगिध्येयपदं विष्णुं पद्मपत्रायतेक्ष णं ॥ महोरस्कं महाबाहुं पीतवस्त्रं शुभाननं ॥ ३८ ॥ शंखचक्रग दापाणिं मुकुटांगदभूषणं ॥ सर्व्वपापहरं देवं सर्व्वलक्षण संयुत म् ॥ ३९ ॥ कौस्तुभोद्भासितोरस्कं वनमालाविभूषितं ॥ दृष्ट्वा नरों जलिंकृत्वा दण्डवत्प्रणिपत्य च ॥ ४० ॥ अश्वमेधसहस्राणां फलं प्राप्नोति भोद्विजाः ॥ यत्फलं सर्व्वतीर्थेषु स्नानदानेन कीर्त्तित म् ॥ ४१ ॥ नरस्तत्फल माप्नोति दृष्ट्वाकृष्णं प्रणम्य च ॥ यत्फलं स र्ववेदेषु सर्वयज्ञेषुकीर्त्तितं ॥ ४२ ॥ यत्फलंसर्वदानेन व्रतेन नियमेनच ॥

नरस्तत्फलमाप्नोति दृष्ट्वाकृष्णं प्रणम्यच ॥ ४३ ॥ तपोभिर्विविधैर्द
त्तैर्यत्फलं समुदाहृतं ॥ नरस्तत्फलमाप्नोति दृष्ट्वाकृष्णं प्रणम्य
च ॥४४॥ यत्फलं ब्रह्मचर्येण सम्यक्चीर्णेन कीर्त्तितं ॥ नरस्तत्फल
माप्नोति दृष्ट्वाकृष्णं प्रणम्यच ॥ ४५ ॥ यत्फलं सुगृहस्थेन यथोक्तेन
प्रकीर्त्तितं ॥ नरस्तत्फलमाप्नोति दृष्ट्वाकृष्णं प्रणम्य च ॥ ४६ ॥ य
त्फलं वनवासेन वानप्रस्थस्य कीर्त्तितं ॥ नरस्तत्फलमाप्नोति दृष्ट्वा
कृष्णं प्रणम्य च ॥ ४७ ॥ संन्यासेन यथोक्तेन यत्फलं समुदाहृतं ॥
नरस्तत्फलमाप्नोति दुर्लभं मोक्षमाप्नुयात् ॥ ४८ ॥ सर्वपापैर्विनि
र्मुक्तः कल्पकोटिसमुद्भवैः ॥ श्रिया परमया युक्तः सर्वैः समुदितोगु
णैः ॥ ४९ ॥ सर्वकामसमृद्धेन विमानेन सुवर्चसा ॥ त्रिःसप्तकुलमु
द्धृत्य नरोविष्णुपुरं व्रजेत् ॥ ५० ॥ तत्र कल्पशतंयावद्भुक्त्वा भोगा
न्मनोरमान् ॥ गन्धर्वाप्सरसैः सार्द्धं यथाविष्णुश्चतुर्भुजः ॥ ५१ ॥
च्युतस्तस्मा दिहागतो विप्राणां प्रवरेकुले ॥ धर्मज्ञः सत्यवादी च
जायते गतमत्सरः ॥ ५२ ॥ स्वधर्मनिरतः शान्तो दान्तो भूतहिते
रतः ॥ आसाद्य वैष्णवंज्ञानं ततोमोक्षमवाप्नुयात् ॥ ५३ ॥ ततः पू
ज्यस्वमन्त्रेण सुभद्रां भक्तवत्सलां ॥ प्रसादयेच्च भोविप्राः प्रणिपत्य
कृताञ्जलिः ॥ ५४॥ नमस्ते सर्वदेदेवि नमस्ते शुभसौख्यदे ॥ त्राहि
मां पद्मपत्राक्षि कात्यायनि नमोस्तुते ॥ ५५ ॥ एवंप्रसाद्य तांदेवीं
जगद्धात्रीं जगद्धितां ॥ बलदेवस्यभगिनीं सुभद्रांवरदांशिवां ॥ ५६ ॥
कामगेन विमानेन नरो विष्णुपुरं व्रजेत् ॥ आभूतसंप्लवं यावत्क्री

डित्वातत्र देववत् ॥ ५७ ॥ इह मानुष्यतांप्राप्तो ब्राह्मणो वेदविद्भ
वेत् ॥ प्राप्ययोगं हरेस्तत्र मोक्षञ्च लभतेध्रुवम् ॥ ५८ ॥

इतिश्रीब्रह्मपुराणे स्वयम्भुऋषिसम्वादे कृष्णसंदर्शनमाहात्म्यं नाम चतुःपञ्चाशत्तमोऽध्यायः ५४ ॥

---

ब्रह्मोवाच ॥ एवंदृष्ट्वा च तंकृष्णं सुभद्रां प्रणिपत्य च ॥ ध
र्मं चार्थञ्च कामञ्च मोक्षंच लभतेध्रुवं ॥ १ ॥ निःक्रम्य देवताग
रात् कृतकृत्योभवेन्नरः ॥ संप्रणम्य ततःपश्चाद्व्रजेत्तत्रसमाहितः ॥२
इन्द्रनीलमयो विष्णु र्यत्रास्ते वालुकावृतः ॥ अन्तर्द्धानगतं नत्वा
नरोविष्णुपुरं व्रजेत् ॥ ३ ॥ सर्वदेवमयो योसौ हतवा नसुरोत्त
मं ॥ समास्तेतत्र भोविप्राः सिंहार्द्धकृतविग्रहः ॥ ४ ॥ भक्त्या दृ
ष्ट्वाच तन्देवं प्रणम्य नरकेसरीं ॥ मुच्यतेपातकै र्मर्त्यः समस्तै र्नात्र
संशयः ॥ ५ ॥ नरसिंहस्य येभक्ता भवन्ति भुविमानवाः ॥ नतेषां
दुःकृतंकिंचित् फलंतस्य यदीप्सितं ॥ ६ ॥ तस्मा त्सर्वप्रयत्नेन नरसिं
हंसमाश्रयेत् ॥ धर्म्मार्थकाममोक्षाणां फलंयस्मा त्प्रयच्छति ॥ ७
मुनयऊचुः ॥ माहात्म्यं नरसिंपस्य सुखदं भुविदुर्लभं ॥ यथाकथय
सेदेव ततोनो विस्मयोमहान् ॥ ८ ॥ प्रभावंतस्यदेवस्य विस्तरेणजग
त्पते ॥ श्रोतुमिच्छामहे ब्रूहि परंकौतूहलं हिनः ॥ ९ ॥ यथाप्रसीद
तेचासौ नरसिंहो महावलः ॥ भक्तानामुपकाराय ब्रूहिदेव नमो
स्तुते ॥ १० ॥ प्रसादा न्नरसिंहस्य याभवन्त्यत्र सिद्धयः ॥ ब्रूहिताः

कुरु चास्मासु प्रसादं प्रपितामह ॥ ११ ॥ ब्रह्मोवाच ॥ शृणुध्वं त
स्यदेवस्य प्रभावं वदतोमम ॥ अजितस्या प्रमेयस्य भुक्तिमुक्तिप्रदस्य
च ॥ १२ ॥ कःशक्नोति गुणान्वक्तुं समस्तां स्तस्यभोद्विजाः ॥ सिंहा
र्द्धनरदेहस्य प्रवक्ष्यामि समासतः ॥ १३ ॥ याःकाश्चि त्सिद्धय स्वात्र
श्रूयन्ते देवमानुषे ॥ प्रसादा त्तस्य ताःसर्व्वाः सिध्यन्ते नात्रसंश
यः ॥ १४ ॥ स्वर्गेभूमौ च पाताले दिक्षुतोयेम्बरे नगे ॥ प्रसादा त
स्यभक्तानां भवत्यव्याहता गतिः ॥ १५ ॥ असाध्यं तस्यदेवस्य नास्त्य
त्रसचराचरे ॥ नरसिंहस्य भोविप्राः सदाभक्तानुकम्पिनः ॥ १६ ॥
विधानंतस्य वक्ष्यामि भक्ताना मुपकारिणः ॥ येनप्रसीदते चासौ
सिंहार्द्धकृतविग्रहः ॥ १७ ॥ शृणुध्वं मुनिशार्दूलाः कल्पराजं सना
तनं ॥ नरसिंहस्य तत्त्वस्य यन्नज्ञातं सुरासुरैः ॥ १८ ॥ शाकयावक
मूलैश्च पिण्याकयवशक्तुकैः ॥ पयोभक्षेण विप्रेन्द्रा वर्त्तये त्साधको
त्तरः ॥ १९ ॥ शुद्धः कौपीनवासास्च ध्यानयुक्तो जितेन्द्रियः ॥ अर
ण्ये विजनेदेशे पर्व्वते नदसंगमे ॥ २० ॥ ऊषरे सिद्धक्षेत्रे च नर
सिंहाश्रमेतथा ॥ प्रतिष्ठाप्य स्वयञ्चापि पूजांकृत्वा विधानतः ॥ २१ ॥
द्वादश्यां शुक्लपक्षस्य उपोष्य मुनिपुङ्गवाः ॥ जपेल्लक्षाणि वैविंश त्म
नसा संयतेन्द्रियः ॥ २२ ॥ उपपातकयुक्तस्तु महापातकसम्भवैः ॥
मुक्तोभवे त्ततोविप्राः साधको नात्रसंशयः ॥ २३ ॥ कृत्वाप्रदक्षिणंत
त्र नरसिंहं प्रपूजयेत् ॥ पुष्पगन्धादिभि र्धूपैः प्रणम्य शिरसा प्रभु
म् ॥ २४ ॥ कर्पूरचन्दनाक्तानि जातीपुष्पाणि मस्तके ॥ प्रदद्यान्न

रसिंहस्य ततः सिद्धिःप्रजायते ॥ २५ ॥ भगवान्सर्वकार्येषु नक्वचि
त्प्रतिहन्यते ॥ तेजःसोढुं नशक्ताःस्यु र्ब्रह्मरुद्रादयः सुराः ॥ २६ ॥
किंपुन र्दानवालोके सिद्धगन्धर्व्वमानुषाः ॥ विद्याधरा यक्षगणाः स
किन्नरमहोरगाः ॥ २७ ॥ मन्त्रग्रामं समीहन्ते द्विजान्पूज्य च सा
धकाः ॥ येयान्ति दग्धदुष्टेन नरादैत्याग्नि तेजसा ॥ २८ ॥ सकृज्ज
प्तन्तु कवचं सर्व्वसौख्यफलप्रदं ॥ द्विजं तत्कवचं दिव्यं रक्षते देव
दानवात् ॥ २९ ॥ गन्धर्वा त्किन्नरा यक्षात् विद्याधरमहोरगात् ॥
त्रिलोक्यं कवचंदिव्य मभेद्यञ्च सुरासुरैः ॥ ३० ॥ द्वादशाभ्यन्तरेचैव
योजनानां द्विजोत्तमाः ॥ रक्षते भगवान्देवो नरसिंहो महाब
लः ॥ ३१ ॥ ततोगत्वा बिलद्वार मुपोष्य रजनीत्रयं ॥ पलाशकाष्ठैः
प्रज्वाल्य भगवज्जातवेदसं ॥ ३२ ॥ समिधं तत्रजुहुया च्छ्रतंत्रिमधु
रप्लुतं ॥ हेयुते द्विजशार्दूलाः फट्कारान्तेन साधकः ॥ ३३ ॥ ततो
विवरद्वारन्तु प्रकटंजायते क्षणात् ॥ ततोविशेत्तु निःशंकः कवची
विवरं बुधः ॥ ३४ ॥ गच्छतः संकटंतस्य यमलोकं नपश्यति ॥ राज
मार्गस्तु विस्तीर्णो दृश्यते भ्रमवर्जितः ॥ ३५ ॥ नरसिंहं स्मरं स्तत्र
पाताले विशतेद्विजाः॥ गत्वातत्र जपेत्तत्त्वं नरसिंहाख्यमव्ययं ॥३६॥
ततःस्त्रीणां सहस्राणि वीणाप्यमरकर्मणां ॥ निर्गच्छन्ति पुरा वि
प्राः स्वागतं तावदन्तिच ॥ ३७ ॥ प्रवेशयन्ति तंहस्ते गृहीत्वा सा
धकेश्वरं ॥ ततो रसायनंदिव्य मानयन्ति द्विजोत्तमाः ॥ ३८ ॥ पी
तमात्रे दिव्यदेहो जायते सुमहाबलः ॥ क्रीडते सहकन्याभि र्याव

दाहृतसंप्लवं ॥ ३९ ॥ भिन्नदेहो वासुदेवे लीयते नात्रसंशयः ॥ य
दानरोचते वासं तस्मान्निर्गच्छते पुनः ॥ ४० ॥ पट्टसूत्रञ्च खड्गञ्च
रोचनाञ्च मणिंतथा ॥ रसंरसायनंचैव पादुकाञ्जन मेवच ॥४१॥
कृष्णाजिनं द्विजश्रेष्ठा गुटिकाञ्च मनःशिलां ॥ कमण्डलुं चाक्षसू
त्रंयष्टिं संजीवनं तथा ॥ ४२ ॥ सिद्धविद्याञ्च शास्त्राणि गृहीत्वा
साधकेश्वरः ॥ ज्वलद्वह्निस्फुलिङ्गोर्म्मि वेष्टितं चिशिखंहृदि ॥४३॥
सकृन्न्यस्तं दहेत्सर्वं वृजिनं जन्मकोटिजं ॥ विषेन्यस्तं विषंहन्यात्
कष्टंहन्या त्तनौस्थितं ॥ ४४ ॥ स्वदेहे भूषणत्यादि कृत्वा दिव्येनशु
द्ध्यति ॥ महाग्रहगृहीतेषु ज्वलमानं विचिन्तयेत् ॥ ४५ ॥ हदन्तो
वैततःशीघ्रं नश्येयु र्हारुणा ग्रहाः ॥ वालानां कञ्चुकेवद्धं रक्षाभव
तिनित्यशः ॥ ४६ ॥ गण्डपिण्डकलूतानां नाशनं कुरुतेध्रुवं ॥ व्या
धिजाते समिद्भिश्च घृतक्षीरेण होमयेत् ॥ ४७ ॥ त्रिसंध्यं मासमे
कन्तु सर्व्वरोगा न्विनाशयेत् ॥ असाध्यन्तु नपश्यामि किंत्वस्य स
चराचरं ॥ ४८ ॥ यांयां कामयतेसिद्धिं तान्तां प्राप्नुवतेध्रुवम् ॥ अ
ष्टोत्तरशतं त्वेकं पूजयित्वा मृगाधिपं ॥ ४९ ॥ मृत्तिका सप्तवाल्मी
के श्मशानेच चतुष्पथे ॥ रक्तचन्दन संमिश्रा गवांक्षीरेण पेषये
त् ॥ ५० ॥ सिंहस्य प्रतिमांकृत्वा प्रमाणेन षडङ्गुलं ॥ विषेण भू
र्जपत्रेण रोचनायां समालिखेत् ॥ ५१ ॥ नरसिंहस्य कण्ठेतु वद्ध्वा
चैवहि मन्त्रवित् ॥ जपेत्संख्याविहीनस्तु पूजयित्वा जलाशये ॥ ५२
सप्ताहं यावन्मन्त्रन्तु जपते संयतेन्द्रियः ॥ जलाकीर्णामुहूर्त्तेन जा

यते सर्व्वमेदिनी ॥ ५३ ॥ अथवाशुष्कवृक्षाग्रे नरसिंहंतु पूजयेत्॥
जपित्वाष्टशतं तत्त्वं वर्षणंतु निवारयेत्॥ ५४ ॥ तमेव डोरकेवध्वा
भ्रामये त्साधकोत्तमः ॥ महावातो मुहूर्त्तेन आगच्छे न्नात्रसंश
यः ॥ पुनस्त्ववारये त्क्षिप्रं सप्तजप्तेन वारिणा ॥ ५५ ॥ अथतां प्रति
मांद्वारे निखनेद्यस्य साधकः ॥ गोत्रच्छेदो भवेत्तस्य उद्धृतेचैव शा
न्तिदः ॥ ५६ ॥ तस्माद्वै मुनिशार्दूला भक्त्या सम्पूजये त्सदा ॥ मृग
राजं महावीर्यं सर्व्वकामफलप्रदं ॥ ५७ ॥ विमुक्तः सर्व्वपापेभ्यो
विष्णुलोकं च गच्छति ॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रा
न्त्यजातयः ॥ ५८ ॥ संपूज्य तंसुरश्रेष्टं भक्त्या सिंहवपुर्द्धरं ॥ मुच्य
न्तेतेऽशुभै दुःखै र्जन्मकोटिसमुद्भवैः ॥ ५९ ॥ सम्पूज्य तंसुरश्रेष्टं
प्राप्नु वन्त्यभि वाञ्छितं ॥ देवत्व ममरेशत्वं गन्धर्व्वत्व ञ्च भोद्वि
जाः ॥ ६० ॥ यक्षविद्याधरत्व ञ्च तथा यच्चाभिवाञ्छितं ॥ दृष्ट्वा स्तु
त्वा नमस्कृत्वा संपूज्य नरकेसरीं ॥ ६१ ॥ प्राप्नुवन्ति नराराज्यंस्व
र्गलोकञ्च दुर्लभं ॥ नरसिंहं नरोदृष्ट्वा लभेदभिमतं फलं ॥ ६२ ॥
विमुक्तः सर्व्वपापेभ्यो विष्णुलोकञ्च गच्छति ॥ संग्रामे संकटे दुर्गे
चौरव्याघ्रादिपीडिते ॥ ६३ ॥ कान्तारे प्राणसन्देह विषवह्निजले
षुच ॥ राजादिभ्यः समुत्पन्ने ग्रहरोगादिपीडिते ॥ स्मृत्वा तंपुरु
षंसर्वै रापद्भ्यो विमुच्यते॥ ६४ ॥ सूर्योदये यथा नाशं तमोभ्येति
महत्तरं ॥ तथा सन्दर्शनेतस्य विनाशं यांत्युपद्रवाः ॥ ६५ ॥ गुटि
काञ्जनयष्ट्यादि पादुकेचरसायनं ॥ नरसिंहेप्रसन्नेतु प्राप्नोत्यन्यच्च

वाञ्छितं ॥ ६६ ॥ यान्या न्कामा नभिध्यायन् भजते नरकेसरीं ॥ तांस्तान् कामानवाप्नोति नरो नास्त्यत्र संशयः ॥ ६७ ॥ दृष्ट्वा तं देवदेवेशं भक्त्यापूज्य प्रणम्यच ॥ दशानामश्वमेधानां फलं दशगुणं लभेत् ॥ ६८ ॥ पापैःसर्वै र्विनिर्मुक्तो गुणैः सर्वैरलंकृतः॥ सर्व्वकाम समृद्धात्मा जरामरणवर्ज्जितः ॥ ६९ ॥ सौवर्णेन विमानेन किंकिणीजालमालिना ॥ सर्व्वकामसमृद्धेन कामगेन सुवर्च्चसा ॥ ७० ॥ तरुणादित्यवर्णेन मुक्ताहारावलम्बिना ॥ दिव्यस्त्रीशतयुक्तेन दिव्य गन्धर्व्वनादिना ॥ ८ ॥ कुलैकविंश मुद्धृत्य देववन्मुदितः सुखी ॥ स्तूयमानो प्सरोभिश्च विष्णुलोकं व्रजेन्नरः ॥ ७२ ॥ भुक्त्वातत्र वरा नुभोगान् विष्णोर्लोके द्विजोत्तमाः ॥ गन्धर्वै रप्सरैर्युक्तः कृत्वारूपं चतुर्भुजं ॥ ७३ ॥ मनोह्लादकरं सौख्यं यावदाहूतसंप्लवं ॥ पुण्यक्ष यादिहायातः प्रवरे योगिनांकुले ॥ ७४ ॥ चतुर्वेदी भवेद्विप्रो वेद वेदाङ्गपारगः ॥ वैष्णवंयोगमासाद्य ततोमोक्ष मवाप्नुयात् ॥ ७५ ॥

इतिश्री ब्रह्मपुराणे स्वयम्भुऋषिसम्वादे नरसिंहवर्णनो नाम पञ्चपञ्चाशत्तमोऽध्यायः ५५ ॥

—o—

ब्रह्मोवाच ॥ अनन्ताख्यं वासुदेवं दृष्ट्वा भक्त्या प्रणम्यच ॥ सर्व्वपापविनिर्मुक्तो नरोयाति परम्पदं ॥ १ ॥ मया चाराधितश्चासौ शक्रेण तदनन्तरं ॥ विभीषणेन रामेण कस्तंनाराधयेत्पुमान् ॥ २॥ श्वेतगंगां नरःस्नात्वा यःपश्ये च्छ्वेतमाधवं ॥ मत्स्याख्यं माधव ञ्चैव

श्वेतद्वीपञ्च गच्छति ॥ ३ ॥ मुनयऊचुः ॥ श्वेतमाधवमाहात्म्यं व
क्तुमर्हस्यशेषतः ॥ विस्तरेण जगन्नाथ प्रतिष्ठां तस्यवैहरेः ॥ ४ ॥ त
स्मिन्क्षेत्रवरे पुण्ये विख्याते जगतीतले ॥ श्वेताख्यं माधवंदेवं कस्तं
स्थापितवान् पुरा ॥ ५ ॥ ब्रह्मोवाच ॥ आसूत्कृतयुगे विप्राः श्वेतो
नामन्नपोवली ॥ मतिमा न्धर्म्मविच्छूरः सत्यसन्धो दृढव्रतः ॥ ६ ॥
यस्यराज्येतु वर्षाणां सहस्रंदशमानवाः ॥ जीवन्ति रोगरहिता वा
लस्तस्मि न्नसीदति ॥ ७ ॥ वर्त्तमाने तदाराज्ये तस्मिन्कालेगतेद्वि
जाः ॥ कपालगौतमो नाम ऋषिः परमधार्म्मिकः ॥ ८ ॥ सुतोस्य
जातदन्तस्य मृतःकालवशा द्विजाः ॥ तमादाय ऋषिर्द्धीमान् नृप
स्यान्तिक मानयत् ॥ ९ ॥ दृष्ट्वैव नृपतिःसुप्तं कुमारं गतचेतसं ॥
प्रतिज्ञा मकरोद्विप्रा जीवनार्थं शिशोस्तदा ॥ १० ॥ यदि वालम
हंचेमं यमस्य सदनेगतं ॥ नानेयं सप्तरात्रेण चितां दीप्तां समारु
हे ॥ ११ ॥ एवमुक्त्वा सितैःपद्मैः शतैर्दशशताधिकैः ॥ संपूज्यतंम
हादेवं राजविद्यां पुनर्ज्जपेत् ॥ १२ ॥ अतिभक्तिंतु सम्वीक्ष्य नृप
स्यजगदीश्वरः ॥ सान्निध्यमकरोत्तत्र तुष्टस्मास्मि सहोमया ॥१३॥
श्रुत्वैवं परमेशस्य त्रिलोक्य सहसागिरं ॥ भस्मदिग्धं विरूपाक्षं शर
त्कालेंदुवर्च्चसं ॥ १४ ॥ शार्दूलचर्म्म वसनं शशाङ्काङ्कितमूर्द्धजं ॥
महींनिपत्य सहसा प्रणम्यच तमब्रवीत् ॥ १५ ॥ कारुण्यं यदिमे
देव प्रसन्नोसि प्रभोयदि ॥ कालस्य वशमापन्नो वालको द्विजपुत्र
कः ॥ १६ ॥ जीवत्वेष पुनर्वाल इत्येवं व्रत माहितम् ॥

यकस्मान्मरणं बालो नियन्च प्राप्तवान्स्वयं ॥ १७ ॥ यथोक्तमायुषं तो
तं चेमं ब्रूत महेश्वर ॥ श्वेतस्य तद्वचः श्रुत्वा मुदं प्राप्य हरस्तदा ॥ १८॥
कालं समाहूयामास सर्व्वभूतभयंकरं ॥ नियन्यकालं दुर्द्धर्षं यमस्या
ग्राकारं द्विजाः ॥ १९ ॥ बालं संजीवयामास मृत्योर्मुखगतं पुनः ॥
कृत्वा चेमं जगत्सर्वं मुनेः पुत्रञ्च भो द्विजाः ॥ २० ॥ देव्यास्सहोमया
देव तत्रैवान्तरधीयत ॥ एवं संजीवयामास मुनेः पुत्रं द्विजोत्त
माः ॥ २१ ॥ मुनय ऊचुः ॥ देवदेव जगन्नाथ त्रैलोक्यप्रभवाप्य
य ॥ ब्रूहि नः परमं तत्त्वं श्वेताख्यस्य च सांप्रतं ॥ २२ ॥ ब्रह्मोवाच ॥
शृणुध्वं मुनिशार्दूलाः सर्व्वसत्वहितायवै ॥ प्रवक्ष्यामि यथातथ्यं य
त्पृच्छध्वं ममानघाः ॥ २३ ॥ माधवस्य तु माहात्म्यं सर्व्वपापप्रणा
शनं ॥ यच्छ्रुत्वा भिमतान् कामान् ध्रुवं प्राप्नोति मानवः ॥ २४ ॥
श्रुतवान्नृषिभिः पूर्व्वं माधवाख्यस्य भो द्विजाः ॥ शृणुध्वं तां कथां दि
व्यां भयशोकार्त्तिनाशिनीं ॥ २५ ॥ स कृत्वा राज्यमेकाग्रं वर्षाणां
च सहस्रशः ॥ विचार्य्य लौकिकान् धर्म्मान् वैदिका न्विधिव त्त
था ॥ २६ ॥ केशवाराधने यत्तो निश्चितं व्रतमास्थितः ॥ स गत्वा प
रमं चेत्रं सागरं दक्षिणाश्रयं ॥ २७ ॥ स्थाने तस्मिन् शुभे रम्ये देव
कृष्णस्य चान्तिके ॥ मनोज्ञं कारयामास प्रासादं शुभलक्षणं ॥ २८॥
धन्वन्तरशतं चैकं देवदेवस्य दक्षिणे ॥ ततः श्वेतेन विप्रेन्द्राः श्वेत
शैलमयेन च ॥ २९ ॥ कृतः स भगवान् श्वेत माधव श्चन्द्रसन्निभः ॥
प्रतिष्ठां विधिवच्चक्रे यथोद्दिष्टं स्वयम्भुवा ॥ ३० ॥ दानं दत्वा द्विजा

तिभ्यो दीनानाञ्च तपस्विनां ॥ अथानन्तरतो राजा माधवस्यच स
न्निधौ ॥ २१ ॥ मह्यांनिपत्य सहसा सोंकारं द्वादशाक्षरं ॥ जजा
पमौनमास्थाय मासमेकं समाधिना ॥ २२ ॥ निराहारो महाभा
गः सम्यग्विष्णुपदे स्थितः ॥ जपान्ते सतुदेवेशं संस्तोतु मुपचक्र
मे ॥ २३ श्रीपुरुषोत्तमउवाच॥ नमोस्तु वासुदेवाय नमः संकर्षणायच ॥
प्रद्युम्नायानिरुद्धाय नमो नारायणाय च ॥ २४ ॥ नमोस्तु वहुरूपा
य विश्वरूपाय वेधसे ॥ निर्गुणायाप्रतर्क्याय शुचये सर्व्वकर्म्मणे ॥ २५॥
ओंनमः पद्मनाभाय पद्मगर्भोद्भवाय च ॥ नमोस्तु पद्मवर्णाय पद्म
हस्ताय तेनमः ॥ २६ ॥ ओंनमः पुष्कराक्षाय सहस्राक्षाय तेनमः॥
नमः सहस्रपादाय सहस्रभुजमन्यवे ॥ २७ ॥ ओंनमोस्तु वराहा
य वरदाय सुमेधसे ॥ वरिष्ठाय वरेण्याय हिरण्याया च्युताय
च ॥ २८ ॥ ओंनमो वालरूपाय वालपद्मप्रभाय च ॥ वालार्कसो
मनेत्राय मुञ्जकेशाय धीमते ॥ २९ ॥ केशवाय नमोनित्यं नमःसं
कर्षणाय च ॥ माधवाय वरिष्ठाय गोविन्दाय नमोनमः ॥ ४० ॥
ओंनमो विष्णवेतुभ्यं देवाय वसुरेतसे ॥ मधुसूदनाय नमः शुद्धायां
वुधराय च ॥ ४१ ॥ नमोऽनन्ताय सूक्ष्माय नमः श्रीवत्सधारिणे ॥
त्रिविक्रमाय चनमः पीताम्बरधराय च ॥ ४२ ॥ सृष्टिकर्त्रे नम
स्तुभ्यं गोप्त्रे हन्त्रे नमोनमः ॥ नमोस्तु गुणयुक्ताय निर्गुणायनमो
नमः ॥ ४३ ॥ नमो वामनरूपाय नमो वामनकर्मणे ॥ नमो वाम
ननेत्राय नमो वामनवाहिने ॥ ४४ ॥ नमोऽनन्ताय पूज्याय नमो

स्तव्यक्तरूपिणे ॥ अप्रतर्क्याय शुद्धाय नमोभयहराय च ॥ ४५ ॥
संसारार्णवपोताय प्रशान्ताय स्वरूपिणे ॥ शिवाय सौम्यरूपाय घो
रूपधराय च ॥ ४६ ॥ भवभेदकृते चैव भवभोगप्रदाय च ॥ भव
संघांतरूपाय भवसृष्टिकृते नमः ॥ ४७ ॥ ओंनमो दिव्यरूपाय सो
माग्निश्वसिताय च ॥ सोमसूर्यांशुरूपाय गोब्राह्मणहितायच॥४८॥
ओंनमो ऋक्स्वरूपाय पदक्रमस्वरूपिणे ॥ ऋक्स्तुताय नमस्तुभ्यं न
मोऋक्साधनाय च ॥ ४९ ॥ नमो यजुर्विधात्रे च यजुर्वेदधराय
च ॥ यजुःपूज्याय जुष्टाय यजुषांपतये नमः ॥ ५० ॥ ओंनमः श्री
पतेदेव श्रीधराय वराय च ॥ श्रियःकर्त्रे नमस्तुभ्यं सामगीताय वै
नमः ॥ ५१ ॥ ऋक्सामधारिणे तुभ्यं सामगानविदे नमः ॥ नमस्त्व
थर्वशिरसे नमोऽथर्वस्वरूपिणे ॥५२॥ नमोस्त्वथर्वपादाय नमोऽथर्वक
राय च ॥ नमोस्तु वज्रशीर्षाय मधुकैटभघातिने ॥ ५३ ॥ महोद
धिजलस्थाय वेदाहरणकर्तृणे ॥ नमो दीप्तस्वरूपाय हृषीकेशाय वैन
मः ॥ ५४ ॥ नमोभगवते तुभ्यं वासुदेवाय तेनमः ॥ नारायण न
मस्तुभ्यं नमो ममहिताय च ॥ ५५ ॥ ओंनमो मोहनाशाय भव
भंगकराय च ॥ गतिप्रदाय चनमो नमो बन्धहराय च ॥ ५६ ॥
त्रैलोक्यतेजसांकर्त्रे नम स्तेजःस्वरूपिणे ॥ वागीश्वराय वृद्धाय वा
मायोत्तारणाय च ॥ ५७ ॥ सुदेवे वेदवेद्याय उशने दिव्यमौलि
ने ॥ नमो वासनिवासाय वासव्यवहराय च ॥ ५८ ॥ ओंनमो वसु
कर्त्रे च वसुवासप्रदाय च ॥ ओंनमो पशुरूपाय यज्ञेशाय सुयोगि

ने ॥ ५८ ॥ यतियोगकरेशाय नमोयज्ञाङ्गधारिणे ॥ ओंनमः संक
र्षणाय प्रलम्बमथनाय च ॥ ६० ॥ मेघघोषस्वनोत्तीर्ण देवलाङ्गल
धारिणे ॥ नमोस्तु ज्ञानिनां ज्ञान नारायण परायण ॥ ६१ ॥ नमे
स्तित्वाहते बन्धुर्नरकोत्तारणे प्रभो ॥ अतस्त्वां सर्व्वभावेन प्रणतो
भक्तवत्सल ॥ ६२ ॥ मलकर्मादिसंसर्गा न्ममभीतिः प्रजायते ॥ नत
स्यान्योस्ति देवेश पालक स्त्वामृतेऽच्युत ॥ ६३ ॥ संसर्गाणि सम
स्तानि विहाय त्वामुपाश्रितः ॥ योगोस्तुमे त्वयासार्द्ध मात्मलाभाय
चाच्युत ॥ ६४ ॥ कष्टमापन्न दुःपारं संसारं वेद्मिकेशव ॥ तापत्रय
परिक्लिष्ट स्तेनत्वां शरणंगतः ॥ ६५ ॥ एषणाभिश्च संनष्टं मोहितं
माययातव ॥ आकर्षितञ्च लोभाद्यै रतस्त्वामहमाश्रितः ॥ ६६ ॥
नास्ति किञ्चित्सुखं विष्णो संसारस्यस्य देहिनः ॥ यथायथाहि य
ज्ञेश त्वयिचेतः प्रवर्त्तते ॥ ६७ ॥ उद्धर्त्ता पुण्डरीकाक्ष त्वामृतेऽन्यो
नदृश्यते ॥ ब्रह्मोवाच ॥ इत्थंस्तुत स्तदातेन राज्ञा प्रयतेन भोद्वि
जाः ॥ तस्मिन्क्षेत्रे वरेपुण्ये विख्याते पुरुषोत्तमे ॥ ६८ ॥ भक्तिं त
स्यानुसंचिंत्य देवदेवो जगद्गुरुः ॥ आजगाम न्टपस्यार्थे सर्व्वदेवै र्वृ
तोहरिः ॥ ६९ ॥ नीलजीमूतसंकाशः पद्मपत्रायतेक्षणः ॥ दधत्सु
दर्शनं श्रीमान् कराग्रादित्यमण्डलं ॥ ७० ॥ क्षीरोदजल संकाशो
विमल श्चन्द्रसन्निभः ॥ रराज वामहस्तेतु पाञ्चजन्यो महाद्यु
तिः ॥ ७१ ॥ पक्षिराजध्वजः श्रीमान् गदाशार्ङ्गासि चक्रधृक्॥
उवाच माधवो राजन् यस्यते मतिरुत्तमा ॥ ७२॥ यदिष्टंवरभद्रन्ते

प्रसन्नोस्मि तवानघ ॥ श्रुत्वैवं देवदेवस्य वाक्यं तत्परमाद्भुतं ॥ ७३ ॥
प्रणम्य शिरसा भक्त्या मुदा तद्गतमानसः ॥ यद्यहं भगवद्भक्तः प्र
सच्छ वरमुत्तमं ॥ ७४ ॥ आब्रह्मभवना दूर्द्ध्वं वैष्णवं पदमव्ययं ॥
विमलं विरजंशुभ्रं संसारासंगवर्ज्जितं ॥ तत्पदं गन्तुमिच्छामि त्व
त्प्रसादा ज्जगत्पते॥ ७६॥ भगवानुवाच ॥ यत्पदं विबुधाःसर्वे मुनयः
सिद्धयोगिनः ॥ नाभिगच्छन्ति मार्गंन्त परंपद मनामयं ॥ ७७ ॥
सर्व्वलोक मतिक्रम्य ममलोकं गमिष्यसि ॥ कीर्त्तिस्तवात्र राजेन्द्र
त्रींल्लोकांश्च गमिष्यति ॥ ७८ ॥ सांनिध्यं ममचैवात्र सर्व्वदैव भवि
ष्यति ॥ श्वेतगंगेतिमंस्यन्ति सर्वेते नरदेवताः ॥ ७९ ॥ कुशाग्रेणा
पिराजेन्द्र श्वेतगांगेय मम्बुच ॥ स्पृष्ट्वा स्वर्गं गमिष्यन्ति मद्भक्ता ये
समाहिताः ॥ ८० ॥ यस्त्विमां प्रतिमांगच्छे न्माधवाख्यां शशिप्रभां॥
शंखगोक्षीरसंकाशा मशेषाघविनाशिनीं ॥ ८१ ॥ तांप्रणम्य सकृद्भ
क्त्या पुण्डरीकनिभेक्षणां ॥ विहाय सर्व्वलोकान्वै ममलोके महीय
ते ॥ ८२ ॥ मन्वन्तराणि तत्रैव देवकन्याभिरावृतः ॥ गीयमान श्च
माधुर्य सिद्धगन्धर्वसेवितः ॥ ८३ ॥ भुनक्ति विपुलान् भोगान् यथे
ष्टान्कामकैःसह॥च्युतस्तस्मा दिहागत्य मानुषेब्राह्मणोभवेत् ॥ ८४॥
वेदवेदांगवि च्छ्रीमान् भोगवां श्चिरजीवितः ॥ गजाश्वरथयाना
ढ्यो धनधान्ययुतः शुचिः ॥ रूपवा न्बहुभार्यश्च पुत्रपौत्रसमन्वि
तः ॥ ८५ ॥ पुरुषोत्तमं पुनःप्राप्य वटमूलेथ सागरे ॥ त्यक्त्वादेहं ह
रिंस्मृत्वा ततःशान्तपदं व्रजेत् ॥ ८६ ॥

इत्यादि ब्राह्मे पुराणे स्वयम्भुऋषिसम्वादे पुरुषोत्तममाधववर्णनो
नाम षट्पञ्चाशत्तमोऽध्यायः ५६ ॥

—:—

ब्रह्मोवाच ॥ पुरुषोत्तममाधव मालोक्य समीपे मत्स्यमाधवं ॥ ए
कार्णवजलेतूर्णं रोहितं रूपमास्थितं ॥ १ ॥ वेदानां हरणार्थाय
रसातलतले स्थितः ॥ चिन्तयित्वा चितिंसम्य क्तस्मिंस्थाने प्रतिष्ठि
तं ॥ २ ॥ आद्यावतरणं रूपंमाधवं मत्स्यरूपिणं ॥ प्रणम्य प्रयतो
भूत्वा सर्व्वान् दुःखा न्विमुञ्चति ॥ ३ ॥ प्रयाति परमंस्थानं यत्रदे
वोहरिःस्वयम् ॥ काले पुनरिहायातो राजाथ्या त्पृथिवीतले ॥ ४ ॥
मत्स्यमाधव मासाद्य दुराधर्षो भवे न्नरः ॥ दाता भोक्ता भवेद्यज्वा
वैष्णवः सत्यसंगरः ॥ ५ ॥ योगंप्राप्य हरेःपश्चा त्ततोमोक्ष मवाप्नु
यात् ॥ मत्स्यमाधव माहात्म्यं मया संपरिकीर्त्तितं ॥ ६ ॥ यंदृष्ट्वा
मुनिशार्दूलाः सर्व्वान्कामा नवाप्नुयात् ॥ मुनयऊचुः ॥ भगवन् श्रो
तुमिच्छामि मार्जनं वरुणालये ॥ क्रियते स्नानदानानि तस्याशेषं
फलंवद ॥ ७ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूला मार्जनस्य यथा
विधिं ॥ भक्त्यातु तन्मनाभूत्वा पुराणं पुण्यमुत्तमं ॥ ८ ॥ मार्कंडे
यहृदे स्नानं पूर्व्वकालं प्रशस्यते ॥ चतुर्द्दश्यां विशेषेण सर्व्वपापप्र
णाशनं ॥ ९ ॥ तद्वत्स्नानं समुद्रस्य सर्व्वकालं प्रशस्यते ॥ पौर्णमा
स्यां विशेषेण हयमेधफलं लभेत् ॥ १० ॥ मार्कंडेयं वटंकृष्णं रौहि
णेयं महोदधिं ॥ इन्द्रद्युम्नसर स्चैव पञ्चतीर्थीविधिः स्मृता ॥ ११ ॥

पूर्णिमां ज्येष्ठमासस्य ज्येष्ठाऋक्षं यदाभवेत् ॥ तदागच्छे द्विशेषेण तीर्थराजं परंशुभं ॥ १२ ॥ कायवाङ्मनसा शुद्ध स्तद्भावोऽनन्यमानसः ॥ सर्व्वद्वंद्वविनिर्मुक्तो वीतरागो विमत्सरः ॥ १३ ॥ कल्पवृक्षंव टंरम्यं यत्र साक्षाज्जनार्द्दनः ॥ प्रदक्षिणां प्रकुर्वीत त्रयोवारा न्समाहितः ॥ १४॥ यंदृष्ट्वा मुच्यतेपापं सप्तजन्मसमुद्भवम् ॥ पुण्यञ्चाप्नोति विपुलं गतिमिष्टाञ्च भोद्विजाः ॥ १५ ॥ तस्यनामानि वक्ष्यामि प्रमाणञ्च युगेयुगे॥ यथासंख्यञ्च भोविप्राः कृतादिषु यथाक्रमं ॥ १६ वटंवटेश्वरं पूर्वं पुराणं पुरुषं द्विजाः ॥ वटस्यैतानि नामानि कीर्त्तितानि कृतादिषु ॥ १७ ॥ योजनं पादहीनञ्च योजनार्द्धं तदर्द्धकं ॥ प्रमाणं कल्पवृक्षस्य कृतादौ परिकीर्त्तितं ॥ १८ ॥ पूर्वोक्तेनतु मन्त्रेण नमस्कृत्वातु तंवटं ॥ दक्षिणाभिमुखो गच्छे द्धन्वन्तरशतत्रयम् ॥ १९ ॥ तत्रासौ दृश्यते विष्णुं स्वर्गद्वारं मनोरमं ॥ सागरांभः समाकृष्ट कार्यंसर्व्वगुणान्वितं ॥ २० ॥ प्रणिपत्य ततःस्तम्भोऽपरिपूज्यततःपुनः ॥ मुच्यते दुष्टरोगैस्तु तथापापै र्ग्रहादिभिः ॥ २० ॥ उग्रसेनं पुराहृष्ट्वा स्वर्गद्वारेण सागरं ॥ गत्वाचम्य शुचिस्तत्र ध्यात्वानारायणं परम् ॥ २२ ॥ न्यसेदष्टाक्षरं मन्त्रं पश्चादथ शरीरणोः ॥ ओंनमो नारायणायेति यंवदन्ति मनीषिणः ॥ २३ ॥ किंकार्यंबहुभिर्मन्त्रै र्मनोविभ्रमकारकैः ॥ ओंनमो नारायणायेति मन्त्रःसर्वार्थसाधकः ॥ २४ ॥ आपोनरस्य सूनत्वा न्नारा इतिह कीर्त्तिताः॥ विष्णोस्त्वायतनं पूर्वं तेन नारायणः स्मृतः ॥ २५ ॥ ना

रायणपरा लोका नारायणपराः सुराः ॥ नारायणपरं सत्यं ना
रायण परंपदं ॥ २६ ॥ नारायण पराएथ्वी नारायण परंजलं ॥
नारायण परोवह्नि नारायण परंनभः ॥ २७ ॥ नारायण परोवा
यु नारायण परंमनः ॥ अहंकारश्च बुद्धिश्च उभे नारायणात्मि
के ॥ २८ ॥ भूतंभव्यं भविष्यच्च यत्किञ्चि ज्जीवसंज्ञकं ॥ स्थूलंसू
क्ष्मं परञ्चैव सर्वं नारायणात्मकं॥ २९ ॥ शब्दाद्याः विषयाःसर्वे श्रो
त्रादीनीन्द्रियाणि च ॥ किञ्चात्र बहुनोक्तेन जगदेत चराचर
म् ॥ ३० ॥ ब्रह्मादि स्तम्बपर्यंतं सर्वं नारायणात्मकं ॥ नारायणा
त्परं किञ्चिन्नेहपश्यामि भोद्विजाः ॥ ३१ ॥ तेन व्याप्तमिदंसर्वं दृ
श्यादृश्यं चराचरं ॥ आपोह्यायतनंविष्णोः सचएवनसंशयः॥ ३२॥
तस्मादप्सुस्मरेन्नित्यं नारायण मघापहं ॥ स्नानकाले विशेषेण वेद
स्यातनं शुचिः ॥ ३३ ॥ स्मरेन्नारायणं ध्याये द्धस्ते कायेच विन्यसे
त् ॥ ओंकारं च नकारं च अंगुष्ठे हस्तयो र्न्यसेत् ॥ ३४ ॥ शेषै र्ह
स्ततलंयाव त्तर्ज्जन्यादि तथान्यसेत् ॥ ओंकारं वामपादेतु नकारंद
क्षिणे न्यसेत् ॥ ३५ ॥ मोकारं वामकट्यान्तु नाकारं दक्षिणे न्यसे
त् ॥ राकारं नाभिदेशेतु यकारं वामबाहुषु ॥ ३६ ॥ णाकारंदक्षि
णेन्यस्य यकारं मूर्द्धि विन्यसेत् ॥ अधश्चोर्द्ध्वं च हृदये पार्श्वतः पृष्ठ
तोग्रतः ॥ ३६ ॥ ध्यात्वा नारायणं पश्चा दारभेत्कवचंबुधः ॥ पूर्वेमा
म्पातु गोविन्दो दक्षिणे मधुसूदनः ॥ ३७ ॥ पश्चिमे श्रीधरोदेवः
केशवस्तु तथोत्तरे॥ पातुविष्णु स्तथाग्नेये नैऋतेमाधवोव्ययः॥ ३८॥

वायव्येतु हृषीकेश स्तथैशाने च माधवः ॥ सुतलेपातु वाराह स्त
थोर्ध्वं च त्रिविक्रमः ॥ ३९ ॥ कृत्वैवं कवचंपश्चा दात्मानं चिन्तये
त्ततः ॥ अहं नारायणोदेवः शंखचक्रगदाधरः ॥ ४० ॥ एवंध्या
त्वातदात्मान मिमम्मन्त्र मुदीरयेत् ॥ त्वमग्नि र्द्विपदांनाथ रेतो
धाःकामदीपनः ॥ प्रधानः सर्व्वभूतानां जीवानांप्रभुरव्ययः ॥४०॥
अमृतस्यारणी स्त्वंहि देवयोनि रपाम्पते ॥ वृजिनंहरमेपापं तीर्थ
राज नमोस्तुते ॥ ४२ ॥ एवमुच्चार्य्य विधिव त्ततःस्नानं समाचरे
त् ॥ अन्यथा भोमुनिश्रेष्ठाः स्नानंतच्च नशश्यते ॥ ४३ ॥ कृत्वाचा
च्दैवतै र्मन्त्रै रभिषेकं च मार्ज्जनं ॥ अन्तर्जले जपेत्पश्चा त्त्रिराष्ट
त्याघमर्षणं ॥ ४४ ॥ हयमेधो यथाविप्राः सर्व्वपापहरः क्रतुः ॥ त
थाघमर्षणं चात्र सूक्तं सर्वाघनाशनं ॥ ४५ ॥ उत्तार्य्य वाससीधौ
ते निर्मले परिधायवै ॥ प्राणानायम्य चाचम्य संध्याम्चोपास्य भा
स्करम् ॥ ४६ ॥ उपतिष्ठे त्ततश्चोर्द्ध्वं चिप्त्वा पुष्पजलाञ्जलिं ॥ उ
पस्थायोर्द्ध्वं बाहुश्च तल्लिङ्गै र्भास्करं ततः ॥ ४७ ॥ गायत्रीं पावनीं
देवीं जपे दष्टोत्तरंशतं ॥ अन्यांश्च सौरमन्त्रांश्च जप्त्वा तिष्ठेत्समाहि
तः ॥ ४८ ॥ कृत्वाप्रदक्षिणं सूर्यं नमस्कृत्योपविश्य च ॥ स्वाध्यायं
प्राङ्मुखः कृत्वा तर्पये द्देवता न्षृषीन् ॥ ४९ ॥ मनुष्यांश्च पितॄं
श्चात्या न्नामगोत्रेण मन्त्रवित् ॥ तोयेन तिलमिश्रेण विधिव त्सुस
माहितः ॥ ५० ॥ तर्प्पणं देवताना ञ्च पूर्वंकृत्वा समाहितः ॥ अ
धिकारीभवे त्पश्चा त्पितॄणां तर्प्पणे द्विजः ॥ ५१ ॥ श्राद्धकाले न

कालेच पाणिनैकेन निर्वपेत् ॥ तर्पणो द्वितयंकुर्यां देषएवविधिः स दा ॥ ५२ ॥ अन्वारब्धेन सव्येन पाणिना दक्षिणेनतु ॥ तृप्यतामि तिवक्तव्यं नाम्ना गोत्रेण वाग्यतः ॥ ५३ ॥ कायस्थे यस्तिले मोहा त्करोति पितृतर्पणं ॥ रुधिरं तद्भवेत्तोयं प्रदाना त्किल्बिषी भ वेत् ॥ ५४ ॥ भूम्यां यद्दीयतेतोयं दाताचैव जलेस्थितः ॥ वृथातन्नु निश्चाद्भूला नोपतिष्ठति कस्यचित् ॥ ५५ ॥ स्थलेस्थित्वा जलेयस्तु प्रयच्छेदुदकंनरः ॥ पितॄणां नोपतिष्ठेत सलिलन्तु निरर्थकं ॥ ५६ ॥ उदकेनोदकं कुर्या त्पितृभ्यश्च कदाचन ॥ उत्तीर्य्य तु शुचौदेशे कु र्य्यादुदकतर्पणं ॥ ५७ ॥ नोदकेषु नपात्रेषु नक्रुद्धो नैकपाणिना ॥ नोपतिष्ठति तत्तोयं यद्भूम्यां नप्रदीयते ॥ ५८ ॥ पितॄणामक्षयं स म्यक् मचीदत्ता अपीद्विजाः ॥ तस्मात्तत्रैव दातव्यं पितॄणां प्रीति मिच्छता ॥ ५९ ॥ भूमिपृष्ठे समुत्पन्ना भूम्याञ्चैव च संस्थिताः ॥ भूम्याञ्चैव लयंयाता भूमौदद्या त्ततोजलं ॥ ६० ॥ आस्तीर्य्य च कु शान्माग्यां स्नानावाह्य स्वमन्त्रतः ॥ प्राचीनाग्रेषु वैदेवा न्याम्याग्रेषु तथा पितॄन् ॥ ६१ ॥

इत्यादि ब्राह्मे पुराणे स्वयम्भुऋषिसम्वादे समुद्रस्नानविधि नाम सप्तपञ्चाशत्तमोऽध्यायः ५७ ॥

—॰—

ब्रह्मोवाच ॥ देवान्पितॄन् स्तथाचान्या न्सन्तर्प्याचम्य वाग्य तः ॥ हस्तमात्रं चतुष्कोणं चतुर्द्वारं सुशोभनं ॥ १ ॥ पुरंविलिख्य

भोविप्रा क्षीरेतस्य महोदधेः ॥ पुरमध्ये लिखेत्पद्म मष्टपत्रं सका र्णिकं ॥२॥ एवंमण्डल मालिख्य पूजयेत्तत्र भोद्विजाः ॥ अष्टाक्षर विधानेन नारायणमजंविभुम् ॥ ३ ॥ अतःपरं प्रवक्ष्यामि कायशोधन मुत्तमं ॥ अकारंहृदयेचिन्त्य चक्ररेफसमन्वितं ॥ ४ ॥ ज्वलन्तंत्रिशि खंचैव दहन्तंपापनाशनं ॥ चतुर्मण्डलमध्यस्थं चकारं मूर्द्ध्नि चिन्त येत् ॥ ५ ॥ शुक्लवर्णं प्रवर्षन्त मम्रतं प्लावयन्महीं ॥ एवं निर्द्धूतपा पस्तु दिव्यदेह स्ततोभवेत् ॥ ६ ॥ अष्टाक्षरं ततोमन्त्रं न्यसे द्देहात्म नोबुधः ॥ वामपादं समारभ्य क्रमशश्चैव विन्यसेत् ॥ ७ ॥ पञ्चांगं वैष्णवं चैव चतुर्व्यूहं तथैव च ॥ करशुद्धिं प्रकुर्वीत मूलमन्त्रेण सा धकः ॥ ८ ॥ एकैकञ्चैव वर्णन्तु अङ्गुलीषु पृथक् पृथक् ॥ ओंकारं पृथिवींशुक्लं वामपादेतु विन्यसेत् ॥ ९ ॥ नकारः शाम्भवः श्यामो दक्षिणेतु व्यवस्थितः ॥ मोकारं कालमेवाङ्गं वामकट्यां निधापये त् ॥ १० ॥ नाकारः सर्व्वबीजस्तु दक्षिणायां व्यवस्थितः ॥ यकारो यंशिरस्थस्य यत्रलोकाः प्रतिष्ठिताः ॥ ११ ॥ ओंविष्णवेनमः शिरः० ओंजनाय नमः शिखा० ओंविष्णवे नमोनमः कवचं० ओंविष्णवे स्फुरत्स्फारयंदेशोवन्धाय ओंहूं फट् अस्त्रं० ओंशिरसि शुक्लोवासु देवइति० ओललाटे रक्तःसंकर्षणोवह्नि स्तेजआदित्यइति० अग्रीवां यांपीतः प्रद्युम्नोवायुर्मेघाभ इति० ओंआं हृदये कृष्णोनिरुद्धः स र्व्वशक्तिसमन्वित इति० एवंचतुर्व्यूहं आत्मानं कृत्वा कवच मा रभेत्० ममाग्रेऽवस्थितो विष्णुः पृष्टतश्चापि केशवः ॥ गोविन्दो

दक्षिणेपार्श्वे वासेत्तुमधुसूदनः ॥१२॥ उपरिष्टात्तुवैकुण्ठो वाराहः पृथिवीतले ॥ अवान्तरदिशोयास्तु तासुसर्व्वासुमाधवः ॥१३॥ गच्छतस्तिष्ठतो वापि जाग्रतःस्वपतोपिवा ॥ नरसिंहकृतागुप्ति र्वासुदेवमयोह्यहं ॥१४॥ एवं विष्णुमयो भूत्वा ततः कर्म्म समारभेत् ॥ यथादेहे तथादेवे सर्वं तत्त्वानि योजयेत् ॥ १५॥ ततश्चैव प्रकुर्वीत प्रोक्षणं प्रणवंमुने ॥ फट्कारान्तं समुद्दिष्टं सर्वारिष्टहरं शुभं ॥१६ तत्रार्कचन्द्रवह्नीनां मण्डलानि विचिन्तयेत् ॥ पद्ममध्ये न्यसेद्दिव्यं पवनस्याम्बरस्य च ॥१७॥ ततोविचिन्त्य हृदये ओंकारं ज्योतिरूपिणं ॥ कर्णिकायां समासीनं ज्योतीरूपं सनातनं ॥ १८ ॥ अष्टाक्षरं ततोमन्त्रं विन्यसेच्च यथाक्रमं ॥ तेन व्यस्तसमस्तेन पूजनं परमं स्मृतम् ॥ १९ ॥ द्वादशाक्षरमन्त्रेण यजेद्देवं सनातनं ॥ ततोऽवधार्य्य हृदये कर्णिकायां हरिंन्यसेत् ॥२०॥ चतुर्भुजं महासत्वं सूर्यकोटिसमप्रभं ॥ चिन्तयित्वा महायोगं ज्योतीरूपं सनातनम् ॥ २१ ॥ ततश्चावाहयेन्मन्त्री क्रमशो चिंत्य मानसः ॥ मीनश्च पीवराहश्च नरसिंहोथ वामनः ॥ २२ ॥ आयातु देवोवरदो ममनारायणोग्रतः ॥ ओंनमोनारायणाय आवाहनमन्त्रः कर्णिकायां ॥२३॥ ओंसुमेरुपादपीठन्ते पद्मकल्पितमासने ॥ सर्व्वसत्वहितार्थाय तिष्ठस्व मधुसूदन ॥ २४॥ ओंनमोनारायणायनमः स्थापनमन्त्रः० ओं त्रैलोक्यपतीनां पतये देवदेवायहृषीकेशाय विष्णवेनमः अर्घ्यमन्त्रः० स्वपाद्यं पादयोर्देव पद्मनाभसनातन ॥ विष्णोकमलपत्राक्ष गृहाण

मधुसूदन ॥ २५ ॥ ओंनमो नारायणाय नमः पाद्यमन्त्रः० मधु
पर्कं महादेव ब्रह्माद्यैः कल्पितंतव ॥ मयानिवेदितं भक्त्या गृहाण
पुरुषोत्तम ॥ २६ ॥ मधुपर्कमन्त्रः० ओंनमोनारायणाय० आचमन
मन्त्रः० त्वमापः पृथिवीचैव ज्योतिस्त्वं वायुरेवच ॥ लोकेश वृत्तिमा
त्रेण वारिणा स्नापयाम्यहं ॥ २७ ॥ ओंनमो नारायणाय नमः०
स्नानमन्त्रः० ओंदेव त्वयासमायुक्तो यज्ञवर्णसमन्विते ॥ सुवर्णवर्ण
भेदेव वाससी तवकेशव ॥ २८ ॥ ओंनमोनारायणायनमः० वस्त्र
मन्त्रः० शरीरंते नजानामि चेष्टांते नैवकेशव ॥ मयानिवेदितान्
गन्धान् प्रतिगृह्य विलिप्यतां ॥ २९ ॥ नमोनारायणाय नमः०
विलेपनमन्त्रः० ऋग्यजुःसाममन्त्रेण त्रिवृतं पद्मयोनिना ॥ सावि
त्रीग्रन्थिसंयुक्त सुपवीतं तवाच्युत ॥ ३० ॥ ओंनमो नारायणाय
नमः० उपवीतमन्त्रः० दिव्यरत्नसमायुक्तो वह्निभानुसमन्वितः ॥
गात्राणि तवशोभन्तु सालंकाराणि माधव ॥ ३१ ॥ ओंनमोनारा
यणाय नमः० अलंकारमन्त्रः० ओंनमः० ओंननमः० ओंमोनमः०
ओंनानमः० ओंरानमः० ओंयनमः० ओंणानमः० ओंयनमः० ओं
नमोनारायणाय नमः० व्यस्तसमस्तेन मूलमन्त्रेण पूजयेत्० ओंन
मःपुरुषोत्तमाय नमः० वनस्पतिरसो दिव्यो गन्धाढ्यः सुरभिस्तते ॥
मयानिवेदितो भक्त्या धूपोयं प्रतिगृह्यतां ॥ ३२ ॥ ओंनमोनारा
यणाय नमः० धूपमन्त्रः० सूर्याचन्द्रमसो देव विद्युदग्नि स्तथैवच ॥
त्वमेव ज्योतिषो देव दीपोयं प्रतिगृह्यतां ॥ ३३ ॥ ओंनमोनारा

यणाय नमः॰ दीपमन्त्रः॰ अन्नंचतुर्विधं चैव रसैःषड्भिः समन्वि
तं ॥ मयानिवेदितं भक्त्या नैवेद्यं तवकेशव ॥ ३४ ॥ ओंनमोना
रायणाय नमः॰ नैवेद्यमन्त्रः॰ पूर्वेदले वासुदेवं याम्ये संकर्षणं न्य
सेत् ॥ प्रद्युम्नं पश्चिमेकुर्या दनिरुद्धं तथोत्तरे ॥ ३५ ॥ वाराहं च
तथाग्नेये नरसिंहं च नैरृते ॥ वायव्ये माधवं चैव तथैशाने त्रिवि
क्रमं ॥ ३६ ॥ वाहनञ्चैव देवस्य गरुडं पुरतो न्यसेत् ॥ तथापद्मं
गदाञ्चैव न्यसे द्देवस्य दक्षिणे ॥ ३७ ॥ ततः शार्ङ्गंधनु र्विद्वान्न्यसे
द्देवस्य वामतः ॥ दक्षिणे इषुधी देवा शंखं वामेच विन्यसेत् ॥ ३८ ॥
श्रियं दक्षिणतः स्थाप्य पुष्टिमुत्तरतो न्यसेत् ॥ वनमालाञ्च पुरतः
श्रीवत्सकौस्तुभौ न्यसेत् ॥ ३९ ॥ विन्यसे द्धृदयादीनि पूर्वादिषु च
तुर्दिशं ॥ ततोस्त्रं देवदेवस्य कोणेचैवतु विन्यसेत् ॥ ४० ॥ इन्द्रम
ग्निंयमं चैव नैरृतं वरुणंतथा ॥ वायुं धनदमीशान मनन्तं ब्रह्मणा
सह ॥ पूजये त्तांन्निकैर्मंत्रै रधश्चोर्द्ध्वं तथैवच ॥ ४१ ॥ एवंसंपूज्य
देवेशं मण्डलस्थं जनार्द्दनं ॥ लभेदभिमतान् कामा न्नरोनास्त्यत्र
संशयः ॥४२॥ अनेनैव विधानेन मण्डलस्थं जनार्द्दनं ॥ पूजितंय
स्तुपश्येत सयाया द्विष्णुमव्ययं ॥ ४३ ॥ सकृदभ्यर्चितो येन विधि
नानेनकेशवः ॥ जन्ममृत्युजरांतीर्त्वा सविष्णोः पदमाप्नुयात् ॥ ४४ ॥
यःस्मरे त्सततंभक्त्या नारायण मतन्द्रितः ॥ अन्वहं तस्य वासाय
श्वेतद्वीपः प्रकल्पितः ॥ ४५ ॥ ओंकारादि समायुक्तं नमस्कारान्त
दीपितं ॥ त्वंनाम सर्व्वतत्वानां मन्त्र मित्यभिधीयते ॥ ४६ ॥ अने

नैव विधानेन गन्धपुष्पं निवेदयेत् ॥ एकैकस्य प्रकुर्वीत यथोद्दिष्टं क्रमेणतु ॥ ४७॥ मुद्रास्ततो निवध्नीयात् क्रमाच्चैव विधानतः ॥ जपं चैव प्रकुर्वीत मूलमन्त्रेण मन्त्रवित् ॥ ४८ ॥ अष्टाविंशति मष्टौवा शतमष्टोत्तरंतथा ॥ कामेषुच तथाप्येवं यथा शक्तिसमाहितः ॥४९॥ पद्मं शंखश्च श्रीवत्सं गदागरुड एवच ॥ चक्रं खड्गञ्च शार्ङ्गञ्चेत्य ष्टौमुद्राः प्रकीर्त्तिताः ॥ ५० ॥ गच्छगच्छ परंस्थानं पुराणपुरुषोत्तम ॥ यत्रब्रह्मादयोदेवा विन्दन्ति परमम्पदं ॥५१॥ विसर्ज्जनमन्त्रः० अर्चनं येनजानन्ति हरेर्मन्त्रं यथोदितं ॥ तेतत्र मूलमन्त्रेण पूजय न्त्यच्युतंतथा ॥ ५२ ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषिसम्वादे पूजाविधानो नामा ष्टपञ्चाशत्तमोऽध्यायः ५८ ॥

—०—

ब्रह्मोवाच ॥ एवंसंपूज्य विधिव द्भक्त्या तंपुरुषोत्तमं ॥ प्रण म्यशिरसा पश्चात्सागरञ्च प्रसादयेत् ॥ १ ॥ प्राणस्त्वं सर्व्वभूतानां योनिश्च सरिताम्पते ॥ तीर्थराज नमस्तेस्तु त्राहिमा मच्युतप्रिय ॥ २ ॥ स्नात्वैवं सागरे सम्यक् तस्मिन्क्षेत्रवरे द्विजाः ॥ तीरेचा भ्यर्च्च विधिव न्नारायण मनामयं ॥ ३ ॥ रामंकृष्णं सुभद्राञ्च प्र णिपत्य च सागरं ॥ शतानां मश्वमेधानां फलंप्राप्नोति मानवः॥४॥ सर्व्वपापविनिर्मुक्तः सर्व्वदुःखविवर्जितः ॥ वृन्दारकइव श्रीमान् रू पयौवनगर्वितः ॥ ५ ॥ विमानेनार्कवर्णेन दिव्यगन्धर्व्वनादिना ॥

कुलैकविंश मुद्धृत्य विष्णुलोकं सगच्छति ॥ ६ ॥ भुक्त्वा तत्र वरान्
भोगान् क्रीडित्वा चाप्सरैः सह ॥ मन्वन्तरशतं साग्रं जरामृत्युवि
वर्ज्जितः ॥ ७ ॥ पुण्यक्षया दिहायातः कुले सर्व्वगुणान्विते ॥ रूप
वान् सुभगःशान्तः सत्यवादी जितेन्द्रियः ॥ ८ ॥ वेदशास्त्रार्थवि द्वि
प्रो भवेयज्वातु वैष्णवः ॥ योगञ्च वैष्णवं प्राप्य ततोमोक्ष मवाप्नुया
त् ॥ ९ ॥ ग्रहोपरागे संक्रांत्यामयने विषुवेतथा ॥ युगादिषु षडशी
त्यां व्यतीपाते दिनक्षये ॥ १० ॥ आषाढ्यां चैत्र कार्त्तिक्यां माघ्यां
चान्य शुभेतिथौ ॥ येतत्रदानं विप्रेभ्यः प्रयच्छन्ति सुमेधसः ॥ ११ ॥
फलं सहस्रगुणित मन्यतीर्था ल्लभन्तिते ॥ पितॄणांयेप्रयच्छन्ति पि
ण्डंतत्र विधानतः ॥ १२ ॥ अक्षयापितर स्तेषां तृप्तिञ्च प्राप्नुवन्ति
वै ॥ एवंस्नानफलं सम्यक् सागरस्य मयोदितं ॥ १३ ॥ दानस्यच फ
लंविप्रा पिण्डदानस्य चैवहि ॥ धर्म्मार्थकामफलद मायुःकीर्त्तियश
स्करं ॥ १४ ॥ भुक्तिमुक्तिफलं नृणां धन्यं दुःस्वप्ननाशनं ॥ सर्व्वपा
पहरं पुण्यं सर्व्वकामफलप्रदं ॥ नास्तिकाय नवक्तव्यं पुराणञ्चद्वि
जोत्तमाः ॥१५॥ तावद्गर्ज्जन्ति तीर्थानि स्वमाहात्म्यैः पृथक्पृथक् ॥
यावन्न तीर्थराजस्य माहात्म्यं वर्ण्यते द्विजाः ॥ १६ ॥ पुष्करादीनि
तीर्थानि प्रयच्छन्तिस्वकंफलं ॥ तीर्थराजस्तु सपुनःसर्व्वतीर्थफलप्र
दः ॥१७॥ भूतले यानितीर्थानि सरितश्च सरांसिच ॥ विशन्तिसर्वं
तीर्थानि तेनासौ श्रेष्टतांगतः ॥ १८ ॥ राजासमस्ततीर्थानांसागरः
सरिताम्पतिः ॥ तस्मा त्समस्ततीर्थेभ्यः श्रेष्टोसौ सर्व्वकामदः ॥१९ ॥

तमोनाशं यथाभ्येति भास्करेऽभ्युदिते द्विजाः ॥ स्नानेन तीर्थराजस्य
तथा सर्व्वाघसञ्चयः ॥ २० ॥ तीर्थराजसमं तीर्थं नभूतं नभविष्य
ति ॥ अधिष्ठानं यदातत्र प्रभो नारायणस्यवै ॥२१ ॥ कःशक्नोतिगु
णान्वक्तुं तीर्थराजस्य भोद्विजाः ॥ कोट्यो नवनवत्यश्च यत्रतीर्थाणि
सन्तिवै ॥ २२ ॥ तस्मात्स्नान ञ्च दानञ्च होमं जप्यं सुरार्चनं ॥
यत्किञ्चि त्क्रियतेतत्र चाक्षयं भवतिद्विजाः ॥ २३ ॥

इत्यादि ब्रह्मपुराणे समुद्रस्नानमाहात्म्यवर्णनो नामैकोन
षष्टितमोऽध्यायः ५९॥

—०—

ब्रह्मोवाच ॥ ततोगच्छेद् द्विजश्रेष्टा स्तीर्थं यज्ञांगसम्भवं ॥ इ
न्द्रद्युम्न सरोनाम यत्रास्ते पावनंशुभं ॥१ ॥ गत्वा तत्र शुचिर्द्धीमा
नाचम्य मनसाहरिं ॥ ध्यात्वोपस्थाय च जल मिमंमन्त्र मुदीरये
त् ॥ २ ॥ अश्वमेधाङ्गसम्भूत तीर्थसर्वाघनाशन ॥ स्नानंत्वयि करो
म्यद्य पापंहर नमोस्तुते ॥ ३ ॥ एवमुच्चार्य्य विधिव त्स्नात्वादेवान्त्
षीन् पितृन् ॥ तिलोदकेन चान्यांश्च सन्तर्प्याचम्य वाग्यतः ॥ ४ ॥
दत्वा पितृणां पिण्डांश्च सम्पूज्य पुरुषोत्तमं ॥ दशाश्वमेधिकं प
ल्वफल माप्नोति मानवः ॥ ५ ॥ सप्तावरान् सप्तपरान् वंशानुद्धृत्य
देववत् ॥ कामगेन विमानेन विष्णुलोकं च गच्छति ॥ ६ ॥ भुक्त्वा
तत्र सुखान् भोगान् यावच्चन्द्रार्कतारकं ॥ च्युतस्तस्मा दिहायातो
मोक्षञ्च लभतेध्रुवं ॥ ७ ॥ एवंकृत्वा पञ्चतीर्थी मेकादश्या मुपो

षित: ॥ ज्येष्ठशुक्लपञ्चदश्यां यःपश्ये त्पुरुषोत्तमं ॥ ८ ॥ सपूर्वोक्तंफ
लंप्राप्य क्रीडित्वा चाच्युतालये ॥ प्रयाति परमंस्थानं यस्मा न्नाव
र्त्ततेपुनः ॥ ९ ॥ मुनयऊचुः ॥ मासानन्यान् परित्यज्य माघादीन्
प्रपितामह ॥ प्रशंससि कथंज्येष्ठं ब्रूहि तत्कारणं प्रभो ॥ १० ॥ ब्रह्मो
वाच ॥ शृणुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः ॥ ज्येष्ठमासंय
थान्येभ्यः प्रशंसामि पुनःपुनः ॥ ११ ॥ पृथिव्यां यानितीर्थानि सरि
तश्च सरांसिच ॥ पुष्करिण्य स्तडागानि वाप्यः कूपा स्तथाह्रदाः ॥ १२
धारानद्यः समुद्राश्च सप्ताहं पुरुषोत्तमे ॥ ज्येष्ठे शुक्लदशम्यादि प्र
त्यक्षंयान्ति सर्वदा ॥ १३ ॥ तस्मात्स्नानादिकंकर्म देवताप्रेक्षणं द्वि
जाः ॥ यत्किञ्चि त्क्रियतेतत्र तस्मिन्कालेऽक्षयं भवेत् ॥ १४ ॥ शुक्ल
पक्षस्य दशमी ज्येष्ठेमासि द्विजोत्तमाः ॥ हरते दशपापानि तस्मा
द्दशहरा स्मृता ॥ १५ ॥ यस्तस्यां हलिनं कृष्णं पश्येद्भद्रां समाहि
तः ॥ सर्व्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥ १६ ॥ उत्तरे द
क्षिणे विप्रा स्त्वयने पुरुषोत्तमं ॥ दृष्ट्वा रामं सुभद्राञ्च विष्णुलो
कंव्रजेन्नरः ॥ १७ ॥ नरोदोलागतं दृष्ट्वा गोविन्दं त्रिदशोत्तमं ॥
फाल्गुण्यां संयतोभूत्वा गोविन्दस्य पुरंव्रजेत् ॥ १८ ॥ विष्णोर्वा
दिवसेप्राप्ते पञ्चतीर्थी म्विधानतः ॥ कृत्वा संकर्षणं कृष्णं दृष्ट्वाभ
द्राञ्च भोद्विजाः ॥ १९ ॥ नरः समस्तयज्ञानां फलंप्राप्नोति दुर्ल
भम् ॥ विमुक्तः सर्व्वपापेभ्यो विष्णुलोकं सगच्छति ॥ २० ॥
यःपश्यति तृतीयायां कृष्णं चन्दनभूषितं ॥ वैशाखस्य सितेपक्षे

सयात्यच्युतमन्दिरं ॥ २१ ॥ ज्येष्ठायां ज्येष्ठयुक्तायां यःपश्येत्पुरुषो त्तमं ॥ कुलैकविंश मुद्धृत्य विष्णुलोकं च गच्छति ॥ २२ ॥

इत्यादि ब्रह्मपुराणे पञ्चतीर्थीमाहात्म्यकीर्त्तनं नाम षष्ठितमोऽध्यायः ६० ॥

—०—

ब्रह्मोवाच ॥ यदाभवेन्महाज्येष्ठी राशिनक्षत्रयोगतः ॥ प्रय त्नेन तदामर्त्यै र्गन्तव्यंपुरुषोत्तमं ॥ १ ॥ कृष्णं दृष्ट्वा महाज्येष्ठ्यां रामं भद्रांच भोद्विजाः ॥ नरो द्वादशयात्रायाः फलंप्राप्नोति चा धिकं ॥ २ ॥ प्रयागे च कुरुक्षेत्रे नैमिषे पुष्करे गये ॥ गंगाद्वारे च कुब्जाम्रे गंगासागर संगमे ॥ ३ ॥ कोकामुखे शूकरे च मथुरायां मरुस्थले ॥ शालग्रामे वायुतीर्थे मन्दरे सिन्धु सागरे ॥ ४ ॥ पि ण्डारके चित्रकूटे प्रभासे कनखले तथा ॥ शंखोद्धारे द्वारकायां तथाबदरिकाश्रमे ॥ ५ ॥ लोहदण्डे वाश्वतीर्थे सर्व्वपापप्रमोचने ॥ कामालये कोटितीर्थे तथा चामरकण्टके ॥ ६ ॥ लोहार्गले जम्बु मार्गे सोमतीर्थे पृथूदके ॥ उत्पलावर्त्तके चैव पृथुतुङ्गे सुकुब्ज के ॥ ७ ॥ एकाम्रके च केदारे काश्यां च विरजे द्विजाः ॥ कालंज रे च गोकर्णे श्रीशैले गन्धमादने ॥ ८ ॥ महेन्द्रे मलये विंध्ये पा रियात्रे हिमालये ॥ सह्येच शुक्तिमन्तेच गोमन्ते चार्बुदे तथा ॥ ९ ॥ गंगायां सर्व्वतीर्थेषु यामुनेषुच भोद्विजाः ॥ सारस्वतेषु गोमत्यां ब्र ह्मपुत्रेषु सप्तसु ॥ १० ॥ गोदावरी भीमरथी तुङ्गभद्रा च नर्मदा ॥

तापी पयोष्णी कावेरी शिप्रा चर्मण्वती द्विजाः ॥ ११ ॥ वितस्ता चन्द्रभागा च शतद्रु र्बाहुदा तथा ॥ ऋषिकुल्या कुमारी च विपाशा च दृषद्वती ॥ १२ ॥ शरयूश्चैव गंगा च गण्डकी च महानदी॥ कौशिकी करतोया च त्रिस्रोता मधुवाहिनी १३ ॥ महानदी वैतरणी याश्चान्या नात्रकीर्त्तिताः ॥ अथकिं बहुनोक्तेन भाषितेन द्विजोत्तमाः ॥ १४ ॥ पृथिव्यां सर्व्वतीर्थेषु सर्वेष्वायतनेषु च ॥ सागरेषु च शैलेषु नगेषु च सरःसु च ॥ १५ ॥ यत्फलं स्नानदानेन राहुग्रस्ते दिवाकरे ॥ तत्फलं कृष्णमालोक्य महाज्येष्ठ्यां लभे न्नरः ॥ १६ ॥ तस्मा त्सर्वप्रयत्नेन गन्तव्यं पुरुषोत्तमं ॥ महाज्येष्ठ्यां मुनिश्रेष्ठाः सर्व्वकामफलेप्सुभिः ॥ १७ ॥ दृष्ट्वारामं महाज्येष्ठ्यां कृष्णं सुभद्रयासह ॥ विष्णो र्लोकं नरोयाति समुद्धृत्य कुलं शतम् ॥ १८ ॥ भुक्त्वातत्र वरान् भोगान् यावदाहूतसंप्लवं ॥ पुण्यक्षयादिहागत्य चतुर्वेदी द्विजोभवेत् ॥ १९ ॥ स्वधर्मनिरतः शान्तः कृष्णभक्तो जितेन्द्रियः ॥ वैष्णवं योगमास्थाय ततो मोक्ष मवाप्नुयात् ॥ २० ॥

इत्यादि ब्रह्मपुराणे स्वयम्भुऋषिसम्वादे महाज्येष्ठीप्रशंसा नामैकषष्टितमोऽध्यायः ६१ ॥



मुनय ऊचुः ॥ कस्मिन्काले भवेत्स्नानं कृष्णस्य कमलोद्भव॥ केच तत्कारयन्तीह ब्रूहितत्र विधि ञ्चनः ॥ १ ॥ ब्रह्मोवाच ॥

शृणुध्वं मुनयः स्नानं कृष्णस्य वदतोमम ॥ रामस्यच सुभद्रायाः
पुण्यंसर्वाघनाशनं ॥ २ ॥ मासेज्यैष्ठेच संप्राप्ते नक्षत्रे चैन्द्रदैवते॥
पौर्णमास्यां तदास्नानं सर्वकालं हरेर्द्विजाः ॥ ३ ॥ सर्वतीर्थमयः
कूप तत्रास्ति निर्मलः शुचिः ॥ तदाभोगवतीतत्र प्रत्यक्षाभवति द्वि
जाः ॥ ४ ॥ तस्मा ज्ज्येष्ठ्यां समुद्धृत्य हैमाद्यैः कलशैर्जलं ॥ कृष्ण
रामाभिषेकार्थं सुभद्रायाश्च भोद्विजाः ॥ ५ ॥ कृत्वा सुशोभनंमञ्चं
पताकाभि रलंकृतं ॥ सुदृढं सुखसंचारं वस्त्रैः पुष्पैः सुशोभित
म् ॥ ६ ॥ विस्तीर्णं धूपितंधूपैः स्नानार्थं रामकृष्णयोः ॥ सितवस्त्रैः
परिच्छन्नं मुक्ताहारावलम्बितं ॥७॥ तत्र नानाविधै र्वाद्यैः कृष्णंनी
त्वावनं द्विजाः ॥ स्थाप्य मञ्चे सुभद्राञ्च जयमङ्गलनिःस्वनैः ॥ ८॥
ब्राह्मणैः क्षत्रियै र्वैश्यैः शूद्रैश्चान्यैश्च जातिभिः ॥ अनेकशत साहस्रै
र्वृतं स्त्रीपुरुषै र्द्विजाः ॥ ९ ॥ गृहस्थाः स्नातका श्चैव यतयो ब्रह्मचा
रिणः ॥ स्नापयन्ति तदाकृष्णं मञ्चस्थं सहलायुधं ॥ १० ॥ तथा स
मस्ततीर्थानि पूर्वोक्तानि द्विजोत्तमाः ॥ स्वोदकैः पुष्पमिश्रैश्च स्नाप
यन्ति पृथक् पृथक् ॥ ११ ॥ पश्चात् पटहशंखाद्यै र्भेरीमुरजनिःस्व
नैः ॥ काहलै स्तालशब्दैश्च मृदङ्गै र्झर्झरै स्तथा ॥ १२ ॥ अन्यै श्च
विविधै र्वाद्य र्घंटास्वनविभूषितैः ॥ जयशब्दै स्तथास्तोत्रै र्वीणा
वेणुमृदङ्गकैः ॥ १३ ॥ स्त्रीणां मङ्गलशब्दैश्च मुनिसंघै र्मनोहरैः॥
श्रूयतेच महाशब्दः सागरस्येव गर्जतः ॥ १४ ॥ मुनीनां वेदशब्देन
मन्त्रशब्दै स्तथापरैः ॥ नानास्तोत्रवरैः पुण्यैः सामशब्दोपबृंहि

तैः ॥ १५ ॥ यतिभिः स्नातकैश्चैव गृहस्थै र्ब्रह्मचारिभिः ॥ स्नान
काले सुरश्रेष्ठं स्तुवन्ति परयामुदा ॥ १६ ॥ श्यामावदातंवेश्याभिः
कुचभारावनामिभिः ॥ पीतरक्ताम्बराभि श्च माल्यदामावलम्बि
भिः ॥ १७ ॥ सरत्नैः कुण्डलैर्दिव्यैः सुवर्णस्तवकाञ्चितैः ॥ चाम
रैरुक्मदण्डैश्च वीजन्त्यो रामकेशवं ॥ १८ ॥ यक्षविद्याधरैः सिद्धैः
किन्नरै रप्सरोगणैः ॥ परिचर्य्यासुरगणै र्देवगन्धर्वचारणैः ॥ १९॥
आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः ॥ लोकपाला स्त
थाचान्ये स्तुवन्ति पुरुषोत्तमं ॥ २० ॥ नमस्ते देवदेवेश पुराण पु
रुषोत्तम ॥ सर्गस्थित्यन्तकृ द्देव लोकनाथ जगत्पते ॥ २१ ॥ त्रै
लोक्यधारणं देवं ब्रह्मण्यं मोक्षकारणं ॥ तन्नमस्यामहे भक्त्या सर्व
कामफलप्रदं ॥ २२ ॥ स्तुत्वैवं विबुधाः कृष्णं राम ञ्चैव महाबल
म् ॥ सुभद्राञ्च मुनिश्रेष्ठा स्तदाकाशे व्यवस्थिताः ॥ २३ ॥ गाय
न्ति देवगन्धर्वा नृत्यन्त्यप्सरस स्तथा ॥ देवतूर्य्याणि वाद्यन्ते वाता
वान्ति सुशीतलाः ॥ २४ ॥ पुष्पमिश्रं तदामेघा वर्षन्त्याकाशगोच
राः ॥ जयशब्दञ्च कुर्वन्ति मुनयः सिद्धचारणाः ॥ २५ ॥ शक्रा
द्याविबुधाः सर्वे ऋषयः पितरोऽव्ययाः ॥ प्रजानां पतयो नागा येचा
न्ये स्वर्गवासिनः ॥ २६ ॥ ततो मङ्गलसम्भारै र्विधिमन्त्रपुरस्कृतं ॥
आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ २७ ॥ इन्द्रो विष्णु
र्महावीर्य्यः सूर्य्य चन्द्रमसौ तथा ॥ धाता चैव विधाता च तथा
चैवानलानिलौ ॥ २८ ॥ पूषा भगोर्य्यमा त्वष्टा अंशुनैवं विवस्वतः ॥

रुद्रश्च सहितो धीमान् मित्रेण वरुणेन च ॥ २९ ॥ रुद्रै वसुभि
रादित्यै रश्विभ्यांञ्च वृतःप्रभुः ॥ विश्वेदेवै र्मरुद्भिश्च साध्यैश्च पितृ
भिःसह ॥३०॥ गन्धर्वै रप्सरोभिश्च यक्षराक्षसपन्नगैः ॥ देवर्षिभि
रसंख्येयै स्तथा ब्रह्मर्षिभि र्वरैः ॥ ३१ ॥ वैखानसै र्वालखिल्यै र्वा
य्वाहारै र्मरीचिपैः ॥ भृगुभि श्चांगिरोभि श्च यतिभि श्च महात्म
भिः ॥ ३२ ॥ तथा विद्याधरैः पुण्यै र्योगसिद्धिभिरा वृतः ॥ पिता
महः पुलस्त्यश्च पुलहश्च महातपाः ॥ ३३ ॥ अङ्गिरा कश्यपो ऽत्रि
श्चमरीचि र्भृगुरेवच ॥ क्रतुर्हारः प्रचेताश्च मनु र्दक्षस्तथैवच ॥ ३४॥
ऋतवश्च ग्रहाश्चैव ज्योतींषि च द्विजोत्तमाः ॥ मूर्त्तिमत्यश्च सरितो
वेदाश्चैव सनातनाः ॥ ३५ ॥ समुद्राश्च ह्रदाश्चैव तीर्थानि विविधा
नि च ॥ पृथिवी द्यौर्दिशश्चैव पादपा श्च द्विजोत्तमाः ॥ ३६ ॥ अदि
ति र्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती ॥ उमा शची सिनीवा
ली तथा चानुमती कुहूः ॥ ३७ ॥ राकाच धिषणा चैव पत्न्यश्चा
न्यदिवौकसः ॥ हिमवां श्चैव विन्ध्यश्च मेरु श्चानेकशृङ्गवान् ॥ ३८॥
रैवतः सानुचरः कलाकाष्ठा स्तथैवच ॥ मासार्द्धमास ऋतव स्तथा
रात्र्यहनी द्विजाः ॥ ३९ ॥ उच्चैश्रवाहयः श्रेष्ठो नागराजश्च वाम
नः ॥ अरुणो गरुडश्चैव वृक्षा श्चौषधिभिःसह ॥ ४० ॥ धर्मश्च भग
वान्देवः समाजग्मुर्हि संगताः ॥ कालोयमश्च मृत्युश्च यमश्चानुचरा
श्चये ॥ ४१ ॥ बहुलत्वाच्च नोक्तायेविविधा देवतागणाः ॥ तेदेवस्या
भिषेकार्थं समायान्ति ततस्ततः ॥ ४२ ॥ गृहीत्वाते तदाविप्राः स

र्वैएव दिवौकसः ॥ अभिषेचनिकं भाण्डं मंगलानि च सर्वशः॥४३॥
दिव्यसम्भार संयुक्तैः कलशैः काञ्चनै र्द्विजाः ॥ सारस्वतीभिः प
द्माभि र्दिव्यतोयाभिरेवच ॥ ४४ ॥ तोयान्याकाश गंगायाः कृष्णं
रामेण संगतं ॥ सपुष्पैः काञ्चनैः कुम्भैः स्नापयंत्यम्बरे स्थिताः॥४५
सञ्चरन्ति विमानानि देवानामम्बरेतदा ॥ उच्चावचानि दिव्यानि
कामगानि स्थिराणि च ॥ ४८ ॥ दिव्यरत्न विचित्राणि सेवितान्य
प्सरोगणैः ॥ गीतै र्वाद्यैः पताकैश्च शोभितानि समन्ततः ॥ ४७ ॥
एवंतदा मुनिश्रेष्ठाः कृष्णं रामेण संगतं ॥ स्नापयित्वा सुभद्राञ्च
स्तुवन्ति च मुदान्विताः ॥ ४८ ॥ जयजय लोकपाल जयजय करु
णाकर ॥ जयजय पद्मनाभ जयजय भूधरण ॥ ४९ ॥ जयजयश्रा
दिदेव जयजय बहुकारण ॥ जयजय वासुदेव जयजय भववार
ण ॥ ५० ॥ जयजय दिव्यगीत जयजय त्रिदशेश्वर ॥ जयजय
जलधिशयन जयजय योगिवर ॥५१॥ जयजय सूर्य्यनेत्र जयजय
देववर ॥ जयजय पद्मनाभ जयजय कैटभारे ॥ ५२ ॥ जयजय
वैद्यवर जयजय कूर्मरूपधर ॥ जयजय कमलनाभ जयजय शैल
धर ॥५३॥ जयजय योगशायिन् जयजय यज्ञचर ॥ जयजय त्रि
श्वमूर्त्ते जयजय वेगधर ॥ जयजय भूतनाथ जयजयचक्रधर॥५४
जयजय शेषशायिन् जयजय धरणीधर॥ जयजय सोमकान्त जय
जय पीतवास ॥ ५५ ॥ जयजय दहनचक्र जयजय योगवास ॥
जयजय गुणनिधान जयजयधर्मवास ॥५६॥ जयजय गरुडगमन

जय जय श्रीनिवास ॥ जय जय धर्मकेतु जय जय मुनिनिवा
स ॥ ५७ ॥ जय जय भवगहन जय जय भवाधिवास ॥ जयजय
योगिगम्य जय जय मखनिवास ॥ ५८ ॥ जय जय वेदवेद्य जय
जय शान्तिकर ॥ जय जय योगिचिन्त्य जयजय पुष्टिकर ॥ ५९ ॥
जय जय ज्ञानमूर्त्ते जय जय कमलाकर ॥ जय जय भाववेद्य ज
यजय मुक्तिकर ॥ ६० ॥ जयजय विमलदेह जयजय प्रीतिकर ॥
जय जय सत्वनिलय जय जय सृष्टिकर ॥ ६१ ॥ जय जय गुण
समुद्र जय जय यज्ञकर ॥ जय जय गुणविहीन जय जय मोक्ष
कर ॥ ६२ ॥ जयजय भूशरण्य जय जय कान्तियुत ॥ जयजय
लोकशरण जय जय लक्ष्मीयुत ॥ ६३ ॥ जय जय पङ्कजाक्ष ज
यजय भोगयुत ॥ जय जय नीलवर्ण जयं जय योगियुत ॥ ६४ ॥
जय जय अतसीकुसुमश्याम जय जय सप्तसमुद्रनिविष्टदेह ॥ जय
जय लक्ष्मीकरपङ्कज जय जय भक्तिमता मवलोकगेह ॥ ६५ ॥
जय जय लोककान्त जय जय परमशान्त ॥ जय जय परमसार
जय जय चक्रधर ॥ ६६ ॥ जय जय शान्तिकर जय जय कृष्ण
जगन्नाथ ॥ जय जय संकर्षणात्म जय पाञ्चजन्यप्रिय ॥ ६७ ॥
जय जय पद्मपलाशाक्ष जय वाञ्छाफलप्रद ॥ जय जय मालाढ्य
तोरस्क जय जय चक्रगदाधर ॥ जय जय पद्मालयाकान्त जय
विष्णो नमोस्तुते ॥ ६८ ॥ ब्रह्मोवाच ॥ एवं स्तुत्वा तदा देवाः प्र
णाया हृष्टमानसाः ॥ सिद्धचारणसंघा स्च दैचान्ये स्वर्गवासि

नः ॥ ६९ ॥ मुनयो वालखिल्याश्च कृष्णं रामेण सङ्गतं ॥ सुभद्रा
ञ्च मुनिश्रेष्ठाः प्रणमंत्यम्बरेस्थिताः ॥ ७० ॥ दृष्ट्वा स्तुत्वा नमस्कृ
त्वा तदा तेत्रिदिवौकसः ॥ कृष्णं रामं सुभद्राञ्च चान्तिकं स्वंनि
वेशनं ॥ ७१ ॥ सञ्चरन्ति विमानानि देवाना मम्बरेस्थिताः ॥
उच्चावचानि दिव्यानि कामगानि स्थिराणि च ॥ ७२ ॥ दिव्यर
त्नविचित्राणि सेवितान्यप्सरोगणैः ॥ गीतै र्वाद्यैः पताकैश्च शोभि
तानि समन्ततः ॥ ७३ ॥ तस्मिन्कालेतु येमर्त्याः पश्यन्ति पुरुषोत्त
मं ॥ वलभद्रं सुभद्राञ्च तेयान्ति पदमव्ययम् ॥ ७४ ॥ सुभद्रा
रामसहितं मञ्चस्थं पुरुषोत्तमं ॥ दृष्ट्वा नरोऽव्ययस्थानं याति
नास्त्यत्र संशयः ॥ ७५ ॥ कपिला शतदानेन यत्फलं पुष्करेस्मृ
तम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभतेनरः ॥ ७६ ॥ कन्या
शतप्रदानेन यत्फलं समुदाहृतं ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं
लभते नरः ॥ ७७ ॥ सुवर्णशत निष्काणां दानेन यत्फलं स्मृतं ॥
तत्फलं.कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ७८ ॥ गोसहस्रप्र
दानेन यत्फलं परिकीर्त्तितं ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभ
तेनरः ॥ ७९ ॥ भूमिदानेन विधिवद्यत्फलं समुदाहृतं ॥ तत्फ
लंकृष्णमालोक्य मञ्चस्थं लभतेनरः ॥ ८० ॥ स्वर्णश्टङ्गीच दानेन
यत्फलं समुदाहृतं ॥ तत्फलं कृष्ण मालोक्य मञ्चस्थं लभते न
रः ॥ ८१ ॥ शतधेनुप्रदानेन यत्फलं परिकीर्त्तितं ॥ तत्फलं कृष्ण
मालोक्य मञ्चस्थं लभते नरः ॥ ८२ ॥ यत्फलं चान्नदानेन

सर्वतीर्थेषु कीर्त्तितं ॥ तत्फलं कृष्ण मालोक्य मञ्चस्थं लभतेन
रः ॥ ८३ ॥ वृषोत्सर्गेण विधिवद्यत्फलं समुदाहृतं ॥ तत्फलं कृ
ष्णमालोक्य मञ्चस्थं लभते नरः ॥ ८४ ॥ यत्फलं तोयदानेन ग्री
ष्मे चानुप्रकीर्त्तितं ॥ तत्फलं कृष्ण मालोक्य मञ्चस्थं लभतेन
रः ॥ ८५ ॥ तिलधेनुप्रदानेन यत्फलं परिकीर्त्तितं ॥ तत्फलं कृ
ष्णमालोक्य मञ्चस्थं लभते नरः ॥ ८६ ॥ गजाश्वरथदानेन यत्फ
लंसमुदाहृतं ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभतेनरः ॥ ८७ ॥
दानेन घृतधेन्वाश्च यत्फलं समुदाहृतं ॥ तत्फलं कृष्ण मालोक्य
मञ्चस्थं लभते नरः ॥ ८८ ॥ चान्द्रायणेन चीर्णेन विधिवद्यत्फ
लंस्मृतं ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ८९ ॥ फ
लंमासोपवासेन विधिवद्यदुदाहृतं ॥ तत्फलं कृष्णमालोक्य मञ्च
स्थं लभते नरः ॥ ९० ॥ अथकिं वहुनोक्तेन भाषितेन पुनःपुनः ॥
तस्य देवस्य माहात्म्यं मञ्चस्थस्य द्विजोत्तमाः ॥ ९१ ॥ यत्फलं स
र्वतीर्थेषु व्रतैर्दानैश्च कीर्त्तितं ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं स
हलायुधं ॥ ९२ ॥ सुभद्रांच मुनिश्रेष्ठाः प्राप्नोति शुभकृन्नरः ॥ त
स्मान्नरोथ वानारी पश्येत्तंपुरुषोत्तमं ॥ ९३ ॥ नरः समस्ततीर्था
णां लभेत् स्नानाधिकं फलं ॥ स्नानशेषेण कृष्णस्य तोयेनात्माभि
षिच्यते ॥ ९४ ॥ वंध्या सुतंप्रजायेत दुर्भगा ग्रहपीडिता ॥ राक्ष
साद्यैर्गृहीतावा तथारोगैः सुसंयुता ॥ ९५ ॥ सद्यस्ताः स्नानशे
षेण उदकेनाभिषिंचिताः ॥ प्राप्नुवन्तीप्सितान् कामान् यान् यान्

वाञ्छन्ति चेप्सितान् ॥ ९६ ॥ पुत्रार्थिनो लभेत् पुत्रान् सौभाग्यंच
सुखार्थिनो ॥ रोगार्त्तो मुच्यते रोगा द्धनंच धनकांचिणी॥ ९९॥
पुण्यानि यानि तोयानि तिष्ठन्ति धरणीतले ॥ तानि स्नानावशेष
स्य कलां नार्हन्ति षोडशीं ॥ ९८ ॥ तस्मात् स्नानावशेषं यत् कृष्ण
स्य सलिलं द्विजाः ॥ अभ्युनत्यथ गात्राणि सर्वकामप्रदं हितत्॥९९
स्नातं पश्यन्तिये कृष्णं व्रजन्तं दचिणामुखं ॥ ब्रह्महत्यादिभिः
पापै र्मुच्यते नात्रसंशयः ॥ १०० ॥ शास्त्रेषु यत्फलं प्रोक्तं पृथिव्या
स्त्रिप्रदचिणैः॥ दृष्ट्वा नरो लभेत् कृष्णं व्रजन्तं दचिणामुखं॥१०१॥
तीर्थयात्राफलं यत्तु पृथिव्यां समुदाहृतं ॥ दृष्ट्वा नरो लभेत् कृष्णं
तत्फलं दचिणामुखं ॥ १०२ ॥ वदर्य्यां यत्फलं प्रोक्तं दृष्ट्वा ना
रायणंनरं ॥ दृष्ट्वा नरो लभेत् कृष्णं तत्फलं दचिणामुखं ॥ १०३॥
गंगायाः सर्वतीर्थेषु यामुनेषुच भो द्विजाः ॥ सारस्वतेषु तीर्थेषु तथा
न्येषु सरःसुच ॥ १०४ ॥ यत्फलं स्नानदानेन विधिव त्समुदाहृतं॥
दृष्ट्वा नरो लभेत् कृष्णं तत्फलं दचिणामुखं ॥ १०५ ॥ पुस्करे चा
र्वतीर्थे च गये चामरकण्टके ॥ नैमिषादिषु तीर्थेषु चेत्रेष्वायतनेषु
च ॥ १०६ ॥ यत्फलं स्नानदानेन राहुग्रस्ते दिवाकरे ॥ दृष्ट्वानरो
लभेत् कृष्णं तत्फलं दचिणामुखं ॥ १०७ ॥ अथकिं पुनरुक्तेन
भाषितेन पुनः पुनः ॥ यत्किञ्चि त्कथितं चात्र फलं पुण्यस्य कर्म
णः ॥ १०८ ॥ वेदे शास्त्रे पुराणे च भारते च द्विजोत्तमाः ॥ धर्म
शास्त्रेषु सर्वेषु तथान्यत्र मनीषिभिः ॥ १०९ ॥ दृष्ट्वा नरो लभेत् कृष्णं

नारीवासहलायुधं ॥ तत्फलंभद्रयासार्द्धंव्रजन्तंदक्षिणामुखं ॥ ११० ॥

इत्यादि ब्रह्मपुराणे कृष्णस्य स्नानमाहात्म्यवर्णन न्नाम

द्विषष्टितमोऽध्यायः ६२ ॥

—⊂0⊃—

ब्रह्मोवाच ॥ गुण्डिकामण्डपं यान्तं येपश्यन्ति रथेस्थितम् ॥ कृष्णं बलं सुभद्रां च तेयान्ति भवनं हरेः ॥ १ ॥ येपश्यन्ति तदा कृष्णं सप्ताहं मण्डपे स्थितं ॥ कृष्णं रामं सुभद्राञ्च विष्णुलोकं व्रजन्तिते ॥ २ ॥ मुनयऊचुः ॥ केनसा निर्मितायात्रा गुण्डिकाख्या जगत्पतेः ॥ यात्राफलं च किंतत्र प्राप्यते ब्रूहि मानवैः ॥ ३ ॥ किमर्थं सरस्तीरे राज्ञस्तस्य जगत्पते ॥ पवित्रे विजनेदेशे गत्वात त्रच मण्डपे ॥ ४ ॥ कृष्णः संकर्षणश्चैव सुभद्रावा रथेनते ॥ स्वं स्थानं संपरित्यज्य सप्तरात्रं वसन्ति च ॥ ५ ॥ ब्रह्मोवाच ॥ इन्द्रद्युम्नेन भोविप्राः ॥ पूर्वोक्तः प्रार्थितो हरिः ॥ सप्ताहं चरसस्तीरे मम यात्रा भवत्विति ॥ ६ ॥ गुण्डिकानाम देवेश भुक्तिमुक्तिफलप्रदा ॥ तस्मै किलवरं चासौ ददौ सपुरुषोत्तमः ॥ ७ ॥ भगवानुवाच ॥ सप्ताहं सरसस्तीरे तवराजन् भविष्यति ॥ गुण्डिका नाम यात्रामे सर्वकामफलप्रदा ॥ ८ ॥ येमां तत्रार्चयिष्यन्ति श्रद्धया मण्डपेस्थितम् ॥ संकर्षणं सुभद्राञ्च विधिवत्सुसमाहिताः ॥ ९ ॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्राश्च वैन्नृप ॥ पुष्पै र्गन्धै स्तथा धूपै र्दीपै र्नैवेद्यकै र्वरैः ॥ १० ॥ उपहारै र्बहुविधैः प्रणिपातैः प्रदक्षिणैः ॥

जयशब्दै स्तथास्तोत्रै र्गीतवाद्यैर्मनोहरैः ॥ ११ ॥ नतेषां दुर्लभंकि
ञ्चित् फलंयच्च यदीप्सितं ॥ भविष्यति नृपश्रेष्ठ मत्प्रसादा दसंश
यः ॥ १२ ॥ एवमुक्त्वातु तन्देव स्तत्रैवान्तरधीयत ॥ सतु राजवरः
श्रीमान् कृतकृत्योभव त्तदा ॥ १३ ॥ तस्मा त्सर्वप्रयत्नेन गुण्डिकायां
द्विजोत्तमाः ॥ सर्व्वकामप्रदं देवं पश्ये त्तंपुरुषोत्तमं ॥ १४॥ अपुत्रो
लभते पुत्रा न्निर्धनो लभतेधनं ॥ रोगाच्च मुच्यते रोगी कन्या प्रा
प्नोति सत्पतिम् ॥ १५ ॥ आयुः कीर्त्तिं यशो मेधां वलं विद्यां धृतिं
पशून् ॥ नरः सन्नति माप्नोति रूपयौवनसम्पदाम् ॥ १६ ॥ यान्या
न्समीहते भोगान् दृष्ट्वा तंपुरुषोत्तमं ॥ नरो वाप्यथ वानारी तान्
संप्राप्नोत्यसंशयं ॥ १७ ॥ यात्रां कृत्वा गुण्डिकाख्यां विधिव त्सुसमा
हितः ॥ आषाढस्य सितेपक्षे नरो योषिदथापिवा ॥ १८ ॥ दृष्ट्वा कृ
ष्णञ्च रामञ्च सुभद्रांच द्विजोत्तमाः ॥ दशपञ्चाश्वमेधानां फलं
प्राप्नोति चाधिकं ॥ १९ ॥ सप्तावरान् सप्तपरान् वंशानुद्धृत्य चात्म
नः ॥ कामगेन विमानेन सर्व्वरत्नै रलंकृतः ॥ २० ॥ गन्धर्वै रप्सरो
भिश्च सेव्यमानो यथामरः ॥ रूपवान् सुभगः शूरो नरो विष्णुपु
रंब्रजेत् ॥ २१ ॥ तत्रभुक्त्वा वरान् भोगान् यावदाहूतसंप्लवं ॥ सर्व्व
कामसमृद्धात्मा जरामरणवर्जितः ॥ २२ ॥ पुण्यक्षया दिहायात
श्चतुर्वेदो द्विजोभवेत् ॥ वैष्णवंयोगमास्थायततोमोक्षमवाप्नुयात् ॥ २३॥

इत्यादि ब्रह्मपुराणे गुण्डिकायात्रामाहात्म्यं नाम
त्रिषष्टितमोऽध्यायः ६३ ॥

मुनयऊचुः ॥ एकैकस्यास्तु यात्रायाः फलंब्रूहि पृथक्प्रभो ॥
यत्प्राप्नोति नरःकृत्वा नारीवात्रसंयता ॥ १ ॥ ब्रह्मोवाच ॥ प्रतियात्रा
फलं विप्राः शृणुध्वं गदतोमम ॥ यत्प्राप्नोति नरः कृत्वा तस्मिन्क्षेत्रे
सुसंयतः ॥ २ ॥ गुण्डिकायांतथोत्थाने फाल्गुण्यांविषुवे तथा ॥ या
त्रांकृत्वा विधानेन दृष्ट्वा कृष्णं प्रणम्य च ॥ ३ ॥ संकर्षणं सुभद्रांच
लभेत्सर्वत्र वैफलं ॥ नरःपृथक् विष्णुलोके यावदिन्द्राश्चतुर्दश ॥ ४ ॥
यात्रयात्रां ज्येष्ठमासे करोति विधिवन्नरः ॥ तावत्कल्पं विष्णुलो
के सुखंभुंक्ते नसंशयः ॥ ५ ॥ तस्मिन्क्षेत्रे वरे विप्राः पुण्येश्रीपुरु
षोत्तमे ॥ भुक्तिमुक्तिप्रदे नृणां सर्वसत्वसुखावहे ॥ ६ ॥ ज्येष्ठेया
त्रां नरः कृत्वा नारीवा संयतेन्द्रिया ॥ यथोक्तेन विधानेन दशद्वेच
समाहितः ॥ ७ ॥ प्रतिष्ठां कुरुते यस्तु शाठ्यदम्भविवर्जितः ॥ सभु
क्त्वा विविधान् भोगान् मोक्षं चान्ते लभेन्नरः ॥ ८ ॥ मुनयऊचुः ॥
श्रोतुमिच्छामहे देव प्रतिष्ठां वदतस्तव ॥ विधानं चार्चनं दानं फ
लंतत्रजगत्पते ॥ ९ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूलाः प्रतिष्ठां
विधि चोदितां ॥ यांकृत्वातु नरोभक्त्या नारीवा लभतेफलं ॥ १० ॥
यात्रा द्वादशसंपूर्णा यदास्यात्तु द्विजोत्तमाः ॥ तदा प्रतिष्ठां कुर्वीत
विधिवत्पापनाशिनीं ॥ ११ ॥ ज्येष्ठमासि सितेपक्षे त्वेकादश्यां स
माहितः ॥ गत्वा जलाशयं पुण्य माचान्तः प्रयतःशुचिः ॥ १२ ॥
आवाह्य सर्वतीर्थानि ध्यात्वा नारायणं तथा ॥ ततः स्नानंप्रकुर्वीत
विधिवत्सुसमाहितः ॥ १३ ॥ यस्य योविधि रुद्दिष्ट ऋषिभिः स्नान

कर्मणि तेनैवतु विधानेन स्नानन्तस्य विधीयते ॥ १४ ॥ स्नात्वा स
म्यक् विधानेन ततो देवान्ऋषीन् पितॄन् ॥ सन्तर्पयेत्तथान्यांश्च
नामगोत्रविधानवित् ॥ १५ ॥ उत्तार्य्य वाससी धौते निर्मले परि
धापयेत् ॥ उपस्पृश्य विधानेन भास्कराभिमुखे स्थितः ॥ १६ ॥ गाय
त्रीं पावनीं देवीं मनसा वेदमातरं ॥ सर्वपापहरां पुण्यां जप्त्वा चा
ष्टोत्तरंशतं ॥ १७ ॥ अन्यांश्च सौरमन्त्रांश्च श्रद्धया सुसमाहितः ॥
त्रिःप्रदक्षिणमावृत्य मनसा वेदमातरं ॥ १८ ॥ सर्व्वपापहरांपुण्यां
भास्करं प्रणमेत्ततः ॥ वेदोक्तंत्रिषु वर्णेषु स्नानं जप्यमुदाहृतं ॥१९॥
स्त्रीशूद्राभ्यां स्नानमेव वेदोक्तविधिवर्जितं ॥ ततो गच्छेत् गृहंमौनी
पूजयेत्पुरुषोत्तमं ॥ २० ॥ प्रक्षाल्य हस्तौ पादौच उपस्पृश्य यथा
विधि ॥ घृतेन स्नापयेद्देवं क्षीरेण तदनन्तरं ॥ २१ ॥ मधुगन्धोद
केनैव तीर्थचन्दनवारिणा ॥ ततो वस्त्रयुगं श्रेष्ठं भक्त्या तस्परिधा
पयेत् ॥ २२ ॥ चन्दनागुरुकर्पूरैः कुंकुमेन विलेपयेत् ॥ पूजयेत्पर
याभक्त्या पद्मैश्च पुरुषोत्तमं ॥ २३ ॥ अन्यैश्च वैष्णवैः पुष्पैरर्चयेन्म
ल्लिकादिभिः ॥ सम्पूज्यैवं जगन्नाथं भुक्तिमुक्तिप्रदं हरिं ॥ २४ ॥
धूपं चागुरुसंयुक्तं दहेद्देवस्यचाग्रतः ॥ गुग्गुलं वामुनिश्रेष्ठा दहेत
घृतसमन्वितं ॥ २५ ॥ दीपं प्रज्वालयेद्भक्त्या यथा शक्त्या घृतेन
गोः ॥ अन्यांश्च दीपकान् दद्यात् द्वादशैव समाहितः ॥ २६ ॥ घृते
नच सुनिश्रेष्ठा स्तिलतैलेन वापुनः ॥ नैवेद्यं पायसापूप शष्कुली व
टकांस्तथा ॥२७॥ मोदकंफाणितं चान्यत् फलानिच निवेदयेत् ॥

एवं पंचोपचारेण सम्पूज्य पुरुषोत्तमं ॥ २८ ॥ ओं नमः पुरुषोत्त
मायेति जपे दष्टोत्तरंशतं ॥ ततः प्रसादयेद्देवं भक्त्या तंपुरुषोत्त
मं ॥ २९ नमस्ते सर्व्वलोकेश भक्तानामभयप्रद ॥ संसारसागरे मग्नं
त्राहिमां पुरुषोत्तम ॥ ३० ॥ याते मया कृतायात्रा द्वादश्यैव जग
त्पते ॥ प्रसादात्तव गोविन्द सम्पूर्णा स्ताभवन्तुमे ॥ ३१ ॥ एवंप्रसा
द्य तन्देवं दण्डवत्प्रणिपत्य च ॥ ततोर्च्चयेत् गुरुं भक्त्या पुष्पवस्त्रानु
लेपनैः ॥ ३२ ॥ नानयोरन्तरं यस्मा द्दियते मुनिसत्तमाः ॥ देवस्यो
परिकुर्वीत श्रद्धया सुसमाहितः ॥ ३३ ॥ नानापुष्पै र्मुनिश्रेष्ठा वि
चित्रंपुष्पमण्डपं ॥ कृत्वावधारणंपश्चा ज्जागरं कारयेन्निशि ॥ ३४ ॥
कथांच वासुदेवस्य गीतिकां चापि कारयेत् ॥ ध्यायन् पठन् स्तुवन्
देवं प्रेरयेद्रजनीं बुधः ॥ ३५ ॥ ततः प्रभाते विमले द्वादश्यां द्वाद
शैवतु ॥ निमन्त्रये द्व्रतस्नातान् ब्राह्मणान् वेदपारगान् ॥ ३६ ॥ इ
तिहासपुराणज्ञान् श्रोत्रियान् संयतेन्द्रियान् ॥ स्नात्वा सम्यग्विधा
नेन धौतवासा जितेन्द्रियः ॥ ३७ ॥ स्नापयेत् पूर्व्ववद्भक्त्या तत
स्तंपुरुषोत्तमं ॥ गन्धैः पुष्पै स्तथाधूपै र्दीपै र्नैवेद्यकै स्तथा ॥ ३८ ॥
उपहारै र्बहुविधैः प्रणिपातैः प्रदक्षिणैः ॥ जाप्यस्तुति नमस्कारै
र्गीतवाद्यै र्मनोहरैः ॥ ३९ ॥ सम्पूज्यैवं जगन्नाथं ब्राह्मणान् पूज
येत्ततः ॥ द्वादशैव पदान्तेभ्यो दद्या त्कनकमेवच ॥ ४० ॥ छत्रोपा
नयुगंचैव श्रद्धाभक्तिपुरःसरः ॥ भक्त्यातु निधनस्तेभ्यो दद्या द्वस्त्रा
दिकंद्विजाः ॥ ४१ ॥ सद्भावेनतुगोविन्द स्तुष्यतेपूजितोयतः ॥ ४२ ॥

आचार्य्याय ततोदद्या च्छ्रीवस्त्रंकनकं तथा ॥ छत्रोपानद्युगं धान्यं कांस्यपात्रं च भक्तितः ॥ ४३ ॥ ततस्तान् भोजये द्विप्रान् भोज्यं पायसपूर्वकं ॥ पक्वान्नं भक्ष्यभोज्यं च गुडशर्करयान्वितं ॥ ४४ ॥ तत स्तानर्चयेत्तृप्तान् ब्राह्मणान् सुखमानसान् ॥ द्वादशैवोदकुम्भां श्च दद्यात्तेभ्यः समोदकान् ॥ ४५ ॥ दक्षिणां च यथाशक्त्या दद्यात्ते भ्यो विमत्सरः ॥ कुम्भंच दक्षिणां चैव आचार्य्याय निवेदयेत् ॥ ४६ ॥ एवंसंपूज्य तान् विप्रान् गुरुं ज्ञानप्रदायकं ॥ पूजये त्परयाभक्त्या विष्णुतुल्यं द्विजोत्तमाः ॥ ४७ ॥ सुवर्णवस्त्रगन्धाद्यै र्द्रव्यै र्वस्त्रवरै र्बुधः ॥ संपूज्यतं नमस्कृत्वा इमं मन्त्रमुदीरयेत् ॥ ४८ ॥ सर्व्वव्यापी जगन्नाथः शंखचक्रगदाधरः ॥ अनादिनिधनो देवः प्रीयतां पुरु षोत्तमः ॥ ४९ ॥ इत्युच्चार्य्य ततोविप्रां स्त्रिःकृत्वा च प्रदक्षिणम् ॥ प्रणम्य शिरसा भक्त्या त्ववधार्य्य क्षमापयेत् ॥ ५० ॥ तत स्तान् ब्रा ह्मणान् भक्त्या आसीमान्तमनुब्रजेत् ॥ अनुब्रज्यतु तान्सर्वान् नम स्कृत्वा विसर्ज्जयेत् ॥ ५१ ॥ बान्धवैः स्वजनैर्युक्त स्ततोभुञ्जीत वाग्य तः ॥ अन्यैश्चोपोषितै र्दीनै र्भिक्षुकै श्चान्नकांक्षिभिः ॥ ५२ ॥ एवंकृ तेनरः सम्यक् नारीवा लभतेफलं ॥ अश्वमेध सहस्राणां राजसूय शतस्य च ॥ ५३ ॥ अतीतं शतमादाय पुरुषाणां नरोत्तमः ॥ भवि ष्यंच शतंविप्राः स्वकुलं दिव्यरूपधृक् ॥ ५४ ॥ सर्व्वलक्षणसम्पन्नः सर्वालंकारभूषितः ॥ सर्व्वकामसमृद्धात्मा देववद्विगतज्वरः ॥ ५५ ॥ रूपयौवन सम्पन्नो गुणैः सर्वै रलंकृतः ॥ स्तूयमानो प्सरोभि श्च

गन्धर्वैः समलंकृतः ॥ ५६ ॥ विमानेनार्कवर्णेन कामगेन स्थिरेणच ॥
पताकाध्वजयुक्तेन सर्वरत्नै रलंकृतः ॥ ५७ ॥ उद्योतय न्दिशः स
र्वा आकाशे विगतक्लमः ॥ युवामहाबलो धीमान् विष्णुलोकं सग
च्छति ॥ ५८ ॥ तत्र कल्पशतंयाव द्भोगानूभुंक्ते मनोगतान् ॥ गन्ध
र्वाप्सरसैः सिद्धैः सुरविद्याधरोरगैः ॥ ५९ ॥ स्तूयमानो मुनिवरै
स्तिष्ठते विगतज्वरः ॥ यथादेवो जगन्नाथः शंखचक्रगदाधरः ॥ ६०॥
तथासौ मुदितो विप्राः कृत्वारूपं चतुर्भुजं ॥ भुक्त्वातत्र वरानूभोगा
नूक्रीडित्वा चाप्सरैःसह ॥ ६१ ॥ तदन्ते ब्रह्मभवन मायाति सर्व्व
कामदं ॥ सिद्धविद्याधरै र्यक्षैः सेवितः सुरकिन्नरैः ॥ ६२ ॥ कामं
नवतिकल्पन्तु तत्रभुक्त्वा सुखंनरः ॥ तस्मादायाति विप्रेन्द्राः सर्वका
मफलप्रदं ॥ ६३ ॥ रुद्रलोकं सुरगणैः सेवितं सुखमोक्षदं ॥ अनेक
शतसाहस्रै र्विमानैः समलंकृतं ॥ ६४ ॥ सिद्धविद्याधरै र्यक्षै र्भूषितं
दैत्यदानवैः ॥ अशीतिकल्प कालन्तु तत्रभुक्त्वा सुखंनरः ॥ ६५ ॥
तदन्ते यातिगोलोकं सर्व्वभोगसमन्वितं ॥ सुरसिद्धाप्सरोभि स्सं भू
षितं सुमनोहरं ॥ ६६ ॥ तत्र सप्ततिकल्पन्तु भुक्त्वा भोगमनुत्तमं ॥
दुर्लभं त्रिषुलोकेषु सुख्यचित्तो यथामरः ॥ ६७ ॥ तस्मा दागच्छते
लोकं प्राजापत्य मनुत्तमं ॥ गन्धर्वाप्सरसैः सिद्धै र्मुनिविद्याधरैर्वृत
म् ॥ ६८ ॥ षष्टिकल्पं सुखंतत्र भुक्त्वा नानाविधं मुदा ॥ तदन्ते श
क्रभवनं नानास्वर्य्यसमन्वितं ॥ ६९ ॥ गन्धर्वैः किन्नरैः सिद्धैः सुर
विद्याधरोरगैः ॥ गुह्यकाप्सरसैःसार्द्धं वृतस्थान्यै र्दिवौकसैः ॥ ७० ॥

आगत्यतत्र पञ्चाश त्कल्पंभुक्त्वा सुखंबुधः॥ सुरलोकंततोगत्वा वि
मानैः समलंकृतं॥ ७१॥ दुर्लभंपावनं धीमान् देवैःसर्वैरलंकृतं॥
चत्वारिंश त्तत्रकल्पं भुक्त्वा भोगान् सुदुर्लभान्॥ ७२॥ आगच्छ
तेततो लोका न्नक्षत्राख्यान् सुदुर्लभान्॥ तत्र भोगा न्वरान् भुंक्ते
त्रिंशत्कल्पं यथेप्सितान्॥ ७३॥ तस्मा दागच्छते लोकं शशाङ्कस्य
द्विजोत्तमाः॥ यत्रासौ तिष्ठतेसोमः सर्वैर्देवै रलंकृतः॥ ७४॥ तत्र
विंशतिकल्पन्तु भुक्त्वाभोगं सुदुर्लभं॥ आदित्यस्य ततोलोक माया
तिसुरपूजितं॥ ७५॥ नानाश्चर्य्यमयं दिव्यं गन्धर्वाप्सरसै र्वृतं॥
तत्रभुंक्ते सुखान् भोगान् दशकल्पं द्विजोत्तमाः॥ ७६॥ तस्मा दा
याति भवनं गन्धर्वाणां सुदुर्लभं॥ तत्रभोगान् समस्तांश्च कल्पमेकं
यथासुखं॥ ७७॥ भुक्त्वाचायाति मेदिन्यां राजाभवति धार्मिकः॥
चक्रवर्त्ती महावीर्य्यो गुणैः सर्वैरलंकृतः॥ ७८॥ कृत्वाराज्यं स्वध
र्मेण यज्ञैरिष्ट्वाप्तदक्षिणैः॥ तदन्ते योगिनांलोकं गत्वा मोक्षप्रदंशिव
म्॥ ७९॥ तत्रभुक्त्वा वरान्भोगान् यावदाहूतसंप्लवं॥ तस्मादाग
च्छते चात्र जायते योगिनांकुले॥ ८०॥ प्रवरेवैष्णवे विप्रा दुर्लभे
साधुसम्मते॥ चतुर्वेदी विप्रवरो यज्ञैरिष्ट्वाप्तदक्षिणैः॥ वैष्णवंयोग
मासाद्य ततोमोक्षमवाप्नुयात्॥ ८०॥ एवं यात्राफलंविप्रा मयासम्य
गुदाहृतं॥ भुक्तिमुक्तिप्रदं नृणां किमन्य च्छ्रोतुमिच्छत॥ ८२॥

इत्यादि ब्रह्मपुराणे द्वादशयात्राफलवर्णनो नाम
चतुःषष्टितमोऽध्यायः ६४॥

मुनयऊचुः ॥ श्रोतु मिच्छामहे देव विष्णुलोक मनामयं ॥ लोकानन्दकरं कान्तं सर्वाश्चर्य्यसमन्वितं ॥ १ ॥ प्रमाणं तस्यलोकस्य भोगं कान्तिं वलं प्रभो ॥ कर्म्मणाकेन गच्छन्ति तत्र धर्म्मपरा नराः ॥ २ ॥ दर्शनात् स्पर्शनाद्वापि स्नानतीर्थाटनादपि ॥ विस्तराद्ब्रूहि तत्वेन परं कौतूहलं हिनः ॥ ३ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनयः सर्वे यत्परं परमम्पदम् ॥ भक्ताना मीप्सितं धन्यं पुण्यं संसारनाशनं ॥ ४ ॥ प्रवरं सर्वलोकानां विष्णवाख्यं वदतो मम ॥ सर्वाश्चर्य्यमयं पुण्यं स्थानं त्रैलोक्यपूजितं ॥ ५ ॥ अशोकैः पारिजातैश्च मन्दारैश्चम्पकद्रुमैः ॥ मालती मल्लिकाकुन्दैर्वकुलैर्नागकेशरैः ॥ ६ ॥ पुन्नागैरतिमुक्तैश्च प्रियंगुतगरार्ज्जुनैः ॥ पालाशचूतखदिरैः कर्णिकारवनोद्भवैः ॥ ७ ॥ नीपकैः पनसैर्लोध्रैर्निम्बदाडिमसर्जकैः ॥ द्राक्षालकुचखर्ज्जूरैः मधूकेन्दुफल द्रुमैः ॥ ८ ॥ कपित्थैर्नारिकेलैश्च तालैः श्रीफलसम्भवैः ॥ कल्पवृक्षैरसंख्यैश्च वन्यैरन्यैः सुशोभनैः ॥ ९ ॥ सरलैश्चन्दनैर्नीपैर्देवदारुसुभाञ्जनैः ॥ जातीलवङ्गकाकोलैः खर्ज्जूरामोदवासिभिः ॥ १० ॥ ताम्बूलपत्रनिचयैस्तथापूगफलद्रुमैः ॥ अन्यैश्च विविधैर्वृक्षैः सर्वर्त्तुफलशोभितैः ॥ ११ ॥ पुष्पैर्नानाविधैर्मध्ये लतागुल्मसमुद्भवैः ॥ नानाजलाशयैः पुण्यर्नानापक्षिरुतैर्वरैः ॥ १२ ॥ दीर्घिकाभिः सगंगाभि स्तोयपूर्णैर्मनोहरैः ॥ कुमुदैः शतपत्रैश्च पुष्पैः कोकनदैर्वरैः ॥ १३ ॥ रक्तनीलोत्पलैः कान्तैः कह्लारैश्च सुगन्धिभिः ॥ अन्यैश्च जलजैः पुष्पैर्नाना

वर्णैः सुशोभनैः ॥ १४ ॥ हंसकारण्डवसंकीर्णैश्चक्रवाकोपशोभितैः ॥
पुष्पैर्नानाविधैर्दिव्यैर्लतागुल्मसमुद्भवैः ॥ १५ ॥ कोयष्टिवकदात्यू
हकारण्डवरवाकुलैः ॥ चातकैः प्रियपुत्रैश्च जीवजीवकजाति
भिः ॥ १६ ॥ अन्यैर्दिव्यैर्जलचरैः खगैश्च मधुरस्वरैः ॥ एवं नाना
विधैर्दिव्यैर्नानाश्चर्यसमन्वितैः ॥ वृतैर्जलाशयैः पुण्यैर्भूषितंसु
मनोहरैः ॥ १७ ॥ तत्रदिव्यैर्विमानैश्च नानारत्नविभूषितैः ॥ काम
गैः काञ्चनैः शुभ्रैर्दिव्यगन्धर्वनादितैः ॥ १८ ॥ तरुणादित्यसंका
शैरप्सरोभिरलंकृतैः ॥ हेमसव्यासनयुतैर्नानाभोगसमन्वि
तैः ॥ १९ ॥ खेचरैःसपताकैश्च मुक्ताहारावलम्बिभिः ॥ नानावर्णै
रसंख्येयैर्जातरूपपरिच्छदैः ॥ २० ॥ नानाकुसुमगन्धाढ्यैश्चन्द
नागुरुभूषितैः ॥ सुखप्रवाहवकुलैर्नानावादित्रनिःस्वनैः ॥ २१ ॥
मनोमारुततुल्यैश्च किंकिणीकरवाकुलैः ॥ विहरन्ति पुरेतस्मिन्वैष्णा
वे लोकपूजिते ॥ २२ ॥ सुरांगनाभिःसततं गन्धर्वाप्सरसादिभिः॥
चन्द्राननाभिःकान्ताभिर्योषिद्भिश्च मनोहरैः ॥ २३ ॥ पीनोन्नत
कुचाग्राभिः सुमध्याभिः समन्ततः ॥ श्यामावदातवर्णाभिर्मत्तमा
तङ्गगामिभिः ॥ २४ ॥ परिवार्य्यनरश्रेष्ठं वीजयन्तिस्म ताःस्त्रियः॥
चामरै रुक्मदण्डैश्च नानारत्नविभूषितैः ॥ २५ ॥ गीतनृत्यैस्तथा
वाद्यैर्मंदभारसदालसैः ॥ यक्षविद्याधरैः सिद्धैर्गन्धर्वैरप्सरोग
णैः ॥ २६ ॥ सुरसंघैश्च ऋषिभिः शुशुभे भुवनोत्तमे ॥ तत्रप्राप्य म
हाभोगान् प्राप्नुवन्तिमनीषिणः ॥ २७ ॥ वटराजसमीपेतु दक्षिण

द्योदधेस्तटे ॥ दृष्टोयै र्भगवान्कृष्णः पुष्कराक्षोजगत्पतिः ॥ २८ ॥
क्रीडंत्य प्सरसैः सार्द्धं यावत् सूर्य्येन्दुतारकं ॥ प्रतप्तहेमसंकाशाजरा
मरणवर्जिताः ॥ २९ ॥ सर्वदुःख विहीना स्च क्षुत्तृष्णाभ्यां विवर्जि
ताः ॥ चतुर्भुजा महावीर्य्या वनमालाविभूषिताः ॥ ३० ॥ श्रीवत्सो
रसिसंयुक्ताः शंखचक्रगदाधराः ॥ केचिन्नीलोत्पलश्यामाः केचि
त्काञ्चनसन्निभाः ॥ ३१ ॥ केचि न्मरकतप्रख्याः केचि द्वैडूर्य्य सन्नि
भाः ॥ श्यामवर्णाः कुण्डलिन स्तत्रान्ये वज्रसन्निभाः ॥ ३२ ॥ नता
दृक् सर्वदेवानां भातिलोका द्विजोत्तमाः ॥ यादृक्भाति हरेर्लोकः
सर्वाश्चर्य्यसमन्वितः ॥ ३३ ॥ नतत्र पुनरावृत्ति र्गमना ज्जायते द्वि
जाः ॥ प्रभावा त्तस्यदेवस्य यावदाहूतसंप्लवं ॥ ३४ ॥ विचरन्ति पुरे
दिव्ये रूपयौवन गर्विताः ॥ कृष्णं रामं सुभद्राञ्च येदृष्ट्वा पुरुषो
त्तमं ॥ प्रतप्तहेमसंकाशं तरुणादित्यसन्निभं ॥ ३५ ॥ पुरमध्ये हरे
र्भाति मन्दिरं रत्नभूषितं ॥ अनेकशतसाहस्रैः पताकैः समलंकृत
म् ॥ ३६ ॥ योजनायुतविस्तीर्णं हेमप्राकारवेष्टितं ॥ नानावर्णै र्ध्व
जैश्चित्रैः कल्पितैः सुमनोहरैः ॥ ३७ ॥ विभाति शारदीयोहि न
भस्तै रिवचन्द्रमाः ॥ चतुर्द्वारं सुविस्तीर्णं रक्षकैःपरिरक्षितं ॥ ३८॥
पुरसप्तकसंयुक्तं महोत्सेधं मनोहरं ॥ प्रथमं काञ्चनंतत्र द्वितीयं म
रकतप्रभं ॥ ३९ ॥ इन्द्रनीलं तृतीयंतु महानीलं चतुर्थकं ॥ परतः
पञ्चमं दीप्तं पद्मरागमयं परं ॥ ४० ॥ षष्ठंवज्रमयं विप्रा वैडूर्य्यं स
प्तमंपरं ॥ नानारत्नमयै र्हैमैः प्रवालांकुरशोभितैः ॥ स्तम्भै रद्भुतसं

काशे भांतितद्भवनं महत् ॥ ४१ ॥ दृश्यन्ते तत्र सिद्धाश्च मध्ये सर्व
दिशोदश ॥ पौर्णमास्यां सनक्षत्रां यथाभाति निशाकरः ॥ ४२॥
आरूढस्तत्र भगवान् सलक्ष्मीको जनार्द्दनः ॥ पीताम्बरधरः श्या
मः श्रीवत्सोरसिसंयुतः ॥ ४३ ॥ ज्वलत्सुदर्शनं चक्रं घोरं सर्वास्त्र
नाशनं ॥ दधार दक्षिणेहस्ते सर्वतेजोमयं हरिः ॥ ४४ ॥ कुन्देन्दु
रजतप्रख्यं हारगोक्षीरसन्निभं ॥ आदायतं मुनिश्रेष्ठाः सव्यहस्तेन
केशवः ॥ ४५ ॥ यस्यशब्देन सकलं विक्षोभं जायते जगत् ॥ विश्रुतं
पाञ्चजन्येति सहस्रावर्त्तभूषितं ॥ ४६ ॥ कृतान्तकारणीं रौद्रां दैत्य
दानवनाशिनीं ॥ ज्वलदग्निशिखाकारां दुःसहां त्रिदशैरपि ॥ ४७
कौमोदाख्यां गदाञ्चासौ धृतवान् दक्षिणेकरे ॥ वामे विस्फुरते चा
स्य शाङ्गं सूर्य्यसमप्रभं ॥ ४८ ॥ शरै रादित्यसंकाशै र्ज्वालामाला
कुलैर्वरैः ॥ योसौ संहरतेदैव स्त्रैलोक्यं सचराचरं ॥ ४९ ॥ सर्वा
नन्दकरः श्रीमान् सर्व्वशस्त्रविभूषितः ॥ सर्व्वलोकगुरु र्देवः सर्वै
र्देवै र्नमस्कृतः ॥ ५० ॥ सहस्रशिरसं देवं सहस्रचरणेक्षणम् ॥ सह
स्राक्षं सहस्राङ्गं सहस्रभुजमव्ययम् ॥ ५१ ॥ सिंहासनगतं देवंपद्म
पत्रायतेक्षणं ॥ विद्युद्विस्पष्टसंकाशं जगन्नाथं जगद्गुरुं ॥ परीतंसुर
सिद्धैश्च गन्धर्वाप्सरसांगणैः ॥ ५२ ॥ यक्षविद्याधरै र्नागै र्मुनिसंघैः
सचारणैः ॥ सुपर्णै र्दानवै र्दैत्यैराक्षसैर्गुह्यकैर्वरैः ॥ ५३॥ अन्यैर्देवा
लयै र्दिव्यैः स्तूयमानो विराजते ॥ तत्रश्रीः सन्नतिःकीर्त्तिःप्रज्ञामेधा
सरस्वती ॥ ५४ ॥ बुद्धि र्मतिस्तथा क्षांतिः सिद्धिःकान्तिस्तथाद्युतिः॥

गायत्री चैव सावित्री मङ्गला सर्व्वमङ्गला ॥ ५५ ॥ प्रभा मति स्त
थाकान्ति स्तत्रनारायणी स्थिता ॥ श्रद्धा च कौशिकी देवी विद्युत्सौ
दामिनी तथा ॥ ५६ ॥ निद्रारात्रि स्तथा माया तथान्या वरयोषि
तः ॥ वासुदेवस्य सर्वास्ता भुवने संप्रतिष्ठिताः ॥ ५७ ॥ अथकिं वक्त
नोक्तेन सर्वं तत्रप्रतिष्ठितं ॥ घृताची मेनका रम्भा सहजन्या तिलो
त्तमाः ॥ ५८ ॥ उर्वशी शुचिसेना च तथान्या वासनापराः ॥ म
न्दोदरी च शुभगा विश्वाची विपुलानना ॥ ५९ ॥ भद्राङ्गी चित्र
सेना च प्रम्लोचा सुमनोहरा ॥ मुनिसम्मोहनी रामा चन्द्रमत्या
शुभानना ॥ ६० ॥ सुकेशी नीलकेशी च तथा मन्मथदीपनी ॥ अ
लम्बुसा मिश्रकेशी तथान्या पुञ्जिकस्थला ॥ ६१ ॥ क्रतुस्थला वरा
गी च पूर्वचित्ति स्तथापरा ॥ परावत्या महारूपा शशिलेखा शुभा
नना ॥ ६२ ॥ हंसलीलानुगामिन्या मत्तवारणगामिनी ॥ विम्बोष्ठी
नवगर्भा च विख्याताः सुरयोषितः ॥ ६३ ॥ एता श्चान्या श्चाप्सरसो
रूपयौवनगर्विताः ॥ सुमध्याश्चारुवदनाः सर्वालंकारभूषिताः ॥ ६४ ॥
गीतमाधुर्य्यसंयुक्ताः शीललक्षणसम्मताः ॥ गीते वाद्ये विलासे श्च
सुरगन्धर्व्वयोषितः ॥ ६५ ॥ नृत्यन्त्यनुदिनं तत्र यत्रासौ पुरुषोत्त
मः ॥ नतत्ररोगा ग्लानिर्वा नमृत्यु र्नहिमातपौ ॥ ६६ ॥ नक्षुत्पिपा
सा नजरा नवैरूप्यन्तु नासुखं ॥ परमानन्दजननं सर्व्वकामफल
प्रदम् ॥ ६७ ॥ विष्णुलोका त्परंलोकं नात्रपश्यामि भोद्विजाः ॥
येलोकाः स्वर्गलोकेतु श्रूयन्ते पुण्यकर्म्मणां ॥ ६८ ॥ विष्णुलोकस्य

तेविप्राः कल्पांन्तं हंति षोडशीं ॥ एवंहरेः परंस्थानं सर्व्वभोगगुणा न्वितं ॥ ६९ ॥ सर्व्वसौख्यप्रदं पुण्यं सर्वाश्चर्य्यमयं द्विजाः ॥ नतत्र नास्तिका यान्ति पुरुषा विषयात्मकाः ॥ ७० ॥ नकृतघ्ना नपिशुना नस्तेना नाजितेन्द्रियाः ॥ येऽर्च्चयन्ति सदाभक्त्या वासुदेवं जगद्गुरु न् ॥ ७१ ॥ तेतत्रवैष्णवा यान्ति विष्णुलोकं नसंशयः ॥ दक्षिणस्यो दधेस्तीरे क्षेत्रे परमदुर्ल्लभे ॥ ७२ ॥ दृष्ट्वा कृष्णञ्च रामञ्च सुभ द्राञ्च जितेन्द्रियाः ॥ कल्पवृक्षसमीपेतु येत्यजन्ति कलेवरं ॥ ७३॥ तेतत्र मनुजा यान्ति येमृताः पुरुषोत्तमे ॥ वटसागरयो र्मध्ये येस्म रन्पुरुषोत्तमं ॥ ७४ ॥ तेपितत्र नरा यान्ति येमृताः पुरुषोत्तमे ॥ तेपितत्र परंस्थानं यान्ति नास्त्यत्र संशयः ॥ ७५ ॥ एवंमया मुनि श्रेष्टा विष्णुलोकः सनातनः ॥ सर्वानन्दकरः प्रोक्तो भुक्तिमुक्तिफ लप्रदः ॥ ७६ ॥

इत्यादि ब्राह्मे पुराणे स्वयम्भुऋषिसम्वादे विष्णुलोकानुकी र्त्तनं नाम पञ्चषष्टितमोऽध्यायः ६५ ॥

—०—

मुनयऊचुः ॥ बह्वाश्चर्य्यं त्वयाप्रोक्तो विष्णुलोको जगत्पते॥ नित्यानन्दकरः श्रीमान् भुक्तिमुक्तिफलप्रदः ॥ १ ॥ क्षेत्रञ्च दुर्ल्लभं लोके कीर्त्तितं पुरुषोत्तमं ॥ त्यक्त्वा यत्र नरोयाति देहं सालोक्यतां हरेः ॥ २ ॥ सम्यक् क्षेत्रस्य माहात्म्यं त्वया सम्यक् प्रकीर्त्तितं ॥ य त्रस्वदेहसंत्यागा द्विष्णुलोके व्रजेन्नरः ॥ ३ ॥ अहोमोक्षस्य मार्गोयं

देहत्याग स्त्वयोदितः ॥ नराणा मुपकाराय पुरुषाख्यो नसंशयः ॥४॥
अनायासेन देवेश देहंत्यक्त्वा नरोत्तमाः ॥ तस्मिन्क्षेत्रे परं विष्णोः
पदंयान्ति निरामयं ॥ ५ ॥ श्रुत्वा क्षेत्रस्य माहात्म्यं विस्मयो नोम
हानभूत् ॥ रोमहर्षश्च देवेश सन्तोषश्च पुनःपुनः ॥ ६ ॥ प्रयागपुष्क
रादीनि क्षेत्राख्यायतनानि च ॥ पृथिव्यां सन्ति तीर्थानि सरितश्च
सरांसि च ॥ ७ ॥ नतथा तानि सर्वाणि प्रशंससि सुरेश्वर ॥ यथा
प्रशंसितं क्षेत्रं पुरुषाख्यं पुनः पुनः ॥ ८ ॥ ज्ञातोऽस्माभि रभिप्राय
स्तवेदानीं पितामह ॥ येन प्रसंशसि क्षेत्रं मुक्तिदं पुरुषोत्तमं॥ ९ ॥
पुरुषाख्यसमं नूनं क्षेत्रं नास्ति महीतले ॥ तेनत्वं विबुधश्रेष्ठ प्रसंश
सि पुनःपुनः ॥ १० ॥ ब्रह्मोवाच ॥ सत्यंसत्यं मुनिश्रेष्ठा भवद्भिः समु
दाहृतं ॥ पुरुषाख्यसमं नूनं क्षेत्रंनास्ति महीतले ॥ ११ ॥ यानिया
नीह तीर्थानि क्षेत्राख्यायतनानि च ॥ तानि श्रीपुरुषाख्यस्य कलां
नार्हन्ति षोडशीं ॥ १२ ॥ यथा सर्वेश्वरो विष्णुः सर्व्वलोकोत्तमो
त्तमः ॥ तथा समस्ततीर्थाना मुत्तमः पुरुषोत्तमः ॥ १३ ॥ आदित्या
नां यथा विष्णुः श्रेष्ठत्वे परिकीर्त्तितः ॥ तथा समस्ततीर्थानां वरि
ष्ठःपुरुषोत्तमः ॥ १४ ॥ नक्षत्राणां यथासोमः सरसां सागरोयथा ॥
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमं ॥ १५ ॥ शिखरिणा ञ्च य
थामेरुः पर्वतानां हिमाद्रयः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषो
त्तमं ॥ १६ ॥ वसूनां पावकोयद्व द्रुद्राणां शंकरो यथा ॥ तथा सम
स्ततीर्थानां वरिष्ठं पुरुषोत्तमं ॥ १७ ॥ वर्णानां ब्राह्मणोयद्व द्वैनते

यस्य पश्चिमां ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमं ॥ १८ ॥ प्रमदानां यथालक्ष्मीः सरितां जाह्नवी यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमं ॥ १९ ॥ इन्द्रियाणां मनोयद्व द्भूतानामवनी यथा ॥ तथा समस्ततीर्थाना मुत्तमं पुरुषोत्तमम् ॥ २० ॥ सेनानाञ्च यथास्कन्दः सिद्धानां कपिलो यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २१ ॥ अकारः सर्व्ववर्णानां गायत्री छन्दसां यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २२ ॥ उच्चैःश्रवा यथा श्वानां कवीना मुशनायथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २३ ॥ मुनीनान्तु यथा व्यासः कुवेरो यक्षरक्षसां ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २४ ॥ अश्वत्थः सर्व्ववृक्षाणां पवनः पततांयथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमं॥२५॥ गन्धर्वाणां चित्ररथः शस्त्राणां कुलिशो यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २६ ॥ भूषणानाञ्च सर्वेषां यथा चूडामणिर्वरः ॥ तथा समस्ततीर्थाना मुत्तमं पुरुषोत्तमम् ॥ २७ ॥ सुवर्णंसर्व्वरत्नानां सर्पाणां वासुकि र्यथा ॥ तथा समस्ततीर्थानां वरिष्ठंपुरुषोत्तमम् ॥ २८ ॥ प्रह्लादः सर्व्वदैत्यानां रामः शस्त्रभृतांयथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २९ ॥ रुद्राणां शंकरो यद्व न्मृगाणां मृगराड् यथा ॥ तथा समस्ततीर्थानां प्रकृष्टं पुरुषोत्तमम् ॥ ३० ॥ वरुणो यादसां यद्वद्यमः संयमिनां यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३१ ॥ औषधीनां यथा धान्यं

तृणेषु तृणराड् यथा ॥ तथा समस्ततीर्थानामुत्तमं पुरुषोत्तमम् ॥ ३२ ॥ देवर्षीणां यथाश्रेष्ठो नारदो द्विजसत्तमाः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३३ ॥ पुरोधसां यथाजीवः कालःकलयतां यथा ॥ तथासमस्ततीर्थानां वरिष्ठंपुरुषोत्तमम् ॥ ३४ ॥ ग्रहाणां भास्करोयद्वन्मन्त्राणां प्रणवो यथा ॥ तथा समस्त तीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३५ ॥ धातूनां काञ्चनंयद्वत्पवित्राणां च दक्षिणा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३६ ॥ अश्वमेधस्तु यज्ञानां यथाश्रेष्ठः प्रकीर्त्तितः ॥ तथा समस्ततीर्थानां वरिष्ठंपुरुषोत्तमम् ॥ ३७ ॥ यथा समस्तभूतानां धर्मः संसारतारकः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३८ ॥

इत्यादि ब्राह्मे पुराणे स्वयंभुऋषिसम्वादे क्षेत्रवर्णनं नाम षट्षष्टितमोऽध्यायः ६६ ॥

—०—

ब्रह्मोवाच ॥ सर्वेषामेव तीर्थानां क्षेत्राणान्तु द्विजोत्तमाः ॥ जपहोमव्रताना ञ्च तपोदानफलानि च ॥ १ ॥ नतं पश्यामि भोविप्रा यस्तेनसदृशो भुवि ॥ किञ्चात्र बहुनोक्तेन भाषितेन पुनःपुनः ॥ २ ॥ सत्यंसत्यं पुनःसत्यं क्षेत्रमेतत्परंमहत् ॥ पुरुषाख्यं सकृद्दृष्ट्वा सागरांभः सकृत्स्पृशन् ॥ ३ ॥ ब्रह्मविद्यां सकृत् ज्ञात्वा गर्भवासो नविद्यते ॥ हरेः सन्निहिते स्थाने उत्तमे पुरुषोत्तमे ॥ ४ ॥ सम्वत्सर मुपासित्वा मासमात्र मथापिवा ॥ तेनजप्तं कृतं तेन तप्तं

तेन तपोमहत् ॥ ५ ॥ सयाति परमं स्थानं यत्र योगेश्वरोहरिः ॥ भुक्त्वा भोगान् विचित्रांश्च देवयोषि त्समन्वितान् ॥ ६ ॥ कल्पान्ते पुनरागत्य मर्त्यलोके कुलोत्तमे ॥ जायते योगिनांविप्रा ज्ञानज्ञेयो व्रतोगृही ॥ ७ ॥ संप्राप्य वैष्णवं योगं हरेः स्वच्छन्दतां व्रजेत् ॥ कल्पवृक्षस्य रामस्य कृष्णां सौभद्रयासह ॥ ८ ॥ मार्कण्डेय मिन्द्रद्यु म्नं मत्स्यमाधव सेवच ॥ स्वर्गद्वारस्य माहात्म्यं सागरस्य विधिः क्रमात् ॥ ९ ॥ मार्ज्जनस्य यथाकाले भागीरथ्याः समागमं ॥ सर्व्व मेतत्समाख्यातं यत्परं श्रोतुमिच्छत ॥ १० ॥ इन्द्रद्युम्नस्य माहात्म्यं सर्वंतद्गदितंमया ॥ सर्वाश्चर्य्यं मयाख्यातं रहस्यंपुण्यमुत्तमं ॥ पुरा णां परमंगुह्यं धन्यं संसारमोचनं ॥ ११ ॥ मुनयऊचुः ॥ नहितृप्ता स्मिरस्तीह शृणुतां भगवत्कथां ॥ पुनरेव परंगुह्यं वक्तुमर्हस्य शेष तः ॥ १२ ॥ अनन्तवासुदेवेति नसम्यक् विदितं चनः ॥ श्रोतुमि च्छामहे देव विस्तरेण वदस्वनः ॥ १३ ॥ ब्रह्मोवाच ॥ प्रवक्ष्यामि मुनिश्रेष्ठाः सारा त्सारतरं परं ॥ अनन्तवासुदेवस्य माहात्म्यं त्रिषु दुर्लभम् ॥ १४ ॥ आदिकल्पे पुराविप्रा मया चाव्यक्तजन्मना ॥ वि श्वकर्माण माहूय साधनं प्रोक्तवानहं ॥ १५ ॥ वरिष्ठं देवशिल्पेषु विश्वकर्मोग्रकर्मिणां ॥ प्रतिमांवासुदेवस्य कुरुशैलमयींविभोः ॥ १६ ॥ यत्प्रेक्ष्य विधिवद्भक्त्या देवा इन्द्रमुखादयः ॥ तेन दानवरक्षोभ्यो विहाय सुमहद्भयम् ॥ १७ ॥ त्रिदिवं समनुप्राप्य सुमेरुशिखरे चिरं ॥ वासुदेवं समासाद्य निरातङ्का वसन्तुते ॥ १८ ॥ समत

इचनं श्रुत्वा विश्वकर्मातु तत्त्वणात् ॥ चकार प्रतिमां शुभ्रां शंख
चक्रगदाधराम् ॥ १९ ॥ लक्षणैः सर्वसंयुक्तां पुण्डरीकायतेक्षणां॥
श्रीवत्सोरसि संयुक्ता मत्युग्रां प्रतिमोत्तमाम् ॥ २० ॥ वनमालावृ
तोरस्कां सुकुटां गदधारिणीं ॥ पीतवस्त्रसुवीताङ्गां कुण्डलाभ्याम
लंकृताम् ॥ २१ ॥ तामेव प्रतिमां चाहं गुह्यमन्त्रै स्तदाचरैः ॥ प्र
तिष्ठामण्डल मासाद्य मयासौ निर्मिता स्वयम् ॥ २२ ॥ तस्मिन्का
लेतदा शक्रो देवराट् खेचरैर्वृतः ॥ जगाम ब्रह्मसदन मारुह्य ग
जमुत्तमम् ॥ २३ ॥ प्रसाद्य प्रतिमां शक्र स्तदाचाहं पुनः पुनः ॥
प्रतिमान्तां समादाय स्वपुरं पुनरागमत् ॥ २४ ॥ तांसमाराध्य सु
चिरं यतवा क्कायमानसः ॥ इन्द्राद्यानसुरान् क्रूरा न्नमुचिप्रमुखां
स्तथा ॥ २५ ॥ निहत्य दानवान् सर्वान् भुक्तवान् भूर्भुवादिकं ॥
द्वितीयेच युगेप्राप्ते त्रेतायां राक्षसाधिपः ॥ २६ ॥ वभूव सुमहावी
र्यो दशग्रीवः प्रतापवान् ॥ दशसाहस्रवर्षाणि निराहारो जिते
न्द्रियः ॥ २७ ॥ चचार व्रतमत्युग्रं तपः परमदुस्वरं ॥ तपसा तेन
तुष्टोहं वरंतस्मै प्रदत्तवान् ॥ २८ ॥ अवध्यः सर्वदेवानां सदैत्यासुर
रक्षसां ॥ शापप्रहरणैरुग्रै रवध्यो यमकिंकरैः ॥ २९ ॥ वरंप्राप्य त
दारक्षः, सर्व्वयक्षगणान्वितम् ॥ धनाध्यक्षं विनिर्जित्य शक्रंजेतुं
समुद्यतः ॥ ३० ॥ संग्रामं सुमहद्घोरं कृत्वा देवैः सराक्षसः ॥ देव
राजं विनिर्जित्य तदा इन्द्रजितेतिवै ॥ ३१ ॥ राक्षसस्तु ततोनाम
मेघनादः प्रलब्धवान् ॥ अमरावतींततःप्राप्य देवराजगृहेशुभे॥३२

ददर्शाद्भुतसंकाशां रावणस्तु बलान्वितः ॥ प्रतिमां वासुदेवस्य सर्व्व लक्षणसंयुताम् ॥ ३३ ॥ श्रीवत्सोरसिसंयुक्तां पद्मपत्रायतेक्षणाम् ॥ वनमालावृतोरस्कां मुकुटांगदभूषिताम् ॥ ३४ ॥ शंखचक्रगदाह स्ता म्पीतवस्त्रा ञ्चतुर्भुजाम् ॥ सर्वाभरणसंयुक्तां सर्वकामफलप्रदा म् ॥ ३५ ॥ विहाय रत्नसंघांश्च प्रतिमां शुभलक्षणाम् ॥ पुष्पकेन विमानेन लंकां प्रस्थापयद्द्रुतं ॥ ३६ ॥ पुराध्यक्षः स्थितः श्रीमान् धर्मात्मा सविभीषणः ॥ रावणस्यानुजो मन्त्री नारायणपराय णः ॥ ३७ ॥ दृष्ट्वा ताम्प्रतिमां दिव्या न्देवेन्द्रभुवनच्युताम् ॥ रोमा ञ्चिततनुर्भूत्वा विस्मयं समपद्यत ॥ ३८ ॥ प्रणम्य शिरसा देवं प्रहृ ष्टेनान्तरात्मना ॥ अद्यमे सफलं जन्म अद्यमे सफलं तपः ॥ ३९ ॥ इत्युक्त्वा सतुधर्मात्मा प्रणिपत्य मुहुर्मुहुः ॥ भ्रातृश्रेष्टं समागम्य कृ ताञ्जलिरभाषत ॥ ४० ॥ हेराजन् प्रतिमेयम्मे प्रसादंकर्त्तुमर्हसि ॥ यामाराध्य जगन्नाथं निस्तरेयं भवार्णवात् ॥ ४१ ॥ भ्रातुर्वचनमा कर्ण्य रावणस्तु तदाब्रवीत् ॥ गृहाण प्रतिमाम्वीर किमनेन करो म्यहं ॥ ४२ ॥ स्वयन्तमेक माराध्य त्रैलोक्यं विजयाम्यहं ॥ नाना स्यव्यं महादेवं सर्वभूतोद्भवं विभुम् ॥ ४३ ॥ विभीषणो महावाज स्तदा ताम्प्रतिमां शुभाम् ॥ शतमष्टोत्तरं चाब्दं समाराध्य जना र्दनं ॥ ४४ ॥ अजरामरपदं प्राप्त मणिमादिगुणैर्युतं ॥ राज्यं लं काधिपत्य ञ्च भुक्त्वा भोगान् यथेप्सितान् ॥ ४५ ॥ मुनयऊचुः ॥ अहो नो विस्मयो जातः श्रुत्वेदं परमाद्भुतम् ॥ अनन्तवासुदेवस्य

सम्भवं भुविदुर्लभम् ॥ ४६ ॥ श्रोतुमिच्छामहे देव विस्तरेण यथात
थम् ॥ तस्यदेवस्य माहात्म्यं वक्तुमर्हस्यशेषतः ॥ ४७ ॥ ब्रह्मोवाच ॥
यदा सराक्षसः क्रूरो देवगन्धर्वकिन्नरान् ॥ लोकपालान् समनुजा
न्मुनिसिद्धान् स्वापकृत् ॥ ४८ ॥ विजित्य समरे सर्वा नाजहार
वराङ्गनाः ॥ संस्थाप्य नगरीं लंकां पुनः सीतार्थं सुव्रतः ॥ ४९ ॥
छलित्वा मृगरूपेण मोवर्णेन च राघवम् ॥ ततः क्रुद्धेन रामेण र
णेसौ निचिणासह ॥ ५० ॥ रावणस्य वधार्थाय हत्वा वालिंसजीज
वम् ॥ अभिषिक्तस्य सुग्रीवो युवराज्येंगद स्तथा ॥ ५१ ॥ हनुमा
न्नलनीलोच जांववान्पनस स्तथा ॥ गवयश्च गवाचस्य पावनाःपरमौ
जसः ॥ ५२ ॥ एते रन्यैश्च वहुभि र्वानरैश्च महावलैः ॥ समावृतो
महात्मावै रामो राजीवलोचनः ॥ ५३ ॥ अतश्चः सानुसंघातैः से
तुंवध्वा महोदधौ ॥ वलेनमहता रामः समुत्तीर्य्य महोदधिं ॥ ५४ ॥
संग्राम मतुलंचक्रे रक्षोगणसमन्वितैः ॥ यमहस्तं प्रहस्त ञ्च निकुं
म्भं कुम्भमेव च ॥ ५५ ॥ नरान्तकं महावीर्य्यं तथाचैव यमान्तकं ॥
मानादं मानिकाद्य ञ्च हत्वा रामश्च वीर्य्यवान् ॥ ५६ ॥ पुनरिन्द्र
जितं हत्वा कुम्भकर्णं सरावणं ॥ वैदेहीं चाग्निना शोध्य दत्वा रा
ज्यं विभीषणे ॥ ५७ ॥ वासुदेवं समादाय यानं पुष्पक मारुहत् ॥
लीलया समनुप्राप्तो अयोध्यां रामपालिताम् ॥ ५८ ॥ कनिष्टं भर
तंस्नेहात् शत्रुघ्नं भक्तवत्सलं ॥ अभिषिच्य तदारामः सर्व्वराज्येऽधि
राजनत् ॥ ५९ ॥ पुरातनीं स्वमूर्त्तिं ञ्च समाराध्य ततो हरिः ॥

दशवर्षसहस्राणि दशवर्षशतानि च ॥ ६० ॥ भुक्त्वा सागरपर्य्यन्तां मेदिनीं सतु राघवः ॥ राज्य मासाद्य स्वगतिं वैष्णव म्पद मा विशत् ॥ ६१ ॥ ताञ्चापि प्रतिमां रामः समुद्रेशाय दत्तवान् ॥ धन्योसि रचितासित्वं तोयेषाच सुसंस्थितः ॥ ६२ ॥ द्वापरं युगमासाद्य यदा देवो जगद्गुरुः ॥ धरण्या श्चानुरोधेन भावग्रेयिल्यकारणात् ॥ ६३ ॥ अवतीर्णः सभगवान् वसुदेवगृहे प्रभुः ॥ कंसादीनां वधार्थाय संकर्षणसहायवान् ॥ ६४ ॥ तदातांप्रतिमांविप्राः सर्व्ववाञ्छाफलप्रदां ॥ सर्व्वलोकहितार्थाय कस्यचि त्कारणान्तरे ॥ ६५ ॥ तस्मि न्क्षेत्रवरे पुण्ये दुर्ल्लभे पुरुषोत्तमे ॥ उज्जहार स्वयन्तोया त्समुद्रः सरितां पतिः ॥ ६६ ॥ तदाप्रभृति तत्रैव क्षेत्रे मुक्तिप्रदे द्विजाः ॥ आस्ते स देवो देवाना मार्त्तिहा सर्व्वकामदः ॥ ६७ ॥ येसंश्रयन्ति चानन्तं भक्त्या सर्वेश्वरेश्वरम् ॥ वाङ्मनःकर्म्मभि र्नित्यं तेयान्ति परमम्पदम् ॥ ६८ ॥ दृष्ट्वानन्तं सकृद्भक्त्या सम्पूज्य प्रणिपत्यच ॥ राजसूया श्वमेधाभ्यां फलं दशगुणं लभेत् ॥ ६९ ॥ सर्व्वकामसमृद्धेन कामगेन सुवर्च्चसा ॥ विमानेनार्कवर्णेन किंकिणीजालमालिना ॥ ७० ॥ त्रिसप्तकुल मुद्धृत्य दिव्यस्त्रीगणसेवितः ॥ उपगीयमानो गन्धर्वै र्नरोविष्णुपरं व्रजेत् ॥ ७१ ॥ तत्रभुक्त्वा वरान् भोगान् जरामरणवर्ज्जितः ॥ दिव्यरूपधरः श्रीमान् यावदाहूतसंप्लवम् ॥ ७६ ॥ पुण्यक्षयादिहायात श्चतुर्वेदी द्विजोभवेत् ॥ वैष्णवं योगमासाद्य ततोमोक्षमवाप्नुयात् ॥ ७७ ॥ एवंमया त्वनन्तोसौ कीर्त्तितो मुनिसत्तमाः ॥

कः शक्नोति गुणान्वक्तुं सर्वान् वर्षशतैरपि ॥ ७४ ॥

इत्यादि ब्राह्मे पुराणे अनन्तवासुदेवमाहात्म्यवर्णनन्नाम सप्तषष्टितमोऽध्यायः ६७ ॥

—०—

ब्रह्मोवाच ॥ एवञ्चानन्तमाहात्म्यं क्षेत्रञ्च पुरुषोत्तमम् ॥ भुक्तिमुक्तिप्रदं नृणां मया प्रोक्तं सुदुर्लभम् ॥ १ ॥ यत्रास्ते पुण्डरीकाक्षः शंखचक्रगदाधरः ॥ पीताम्बरधरः श्रीमान् कंसकेशिनिषूदनः ॥ येतत्र कृष्णं पश्यन्ति सुरासुरनमस्कृतम् ॥ संकर्षणं सुभद्राञ्च धन्यास्ते नात्रसंशयः ॥ ३ ॥ त्रैलोक्याधिपतिं देवं सर्वकामफलप्रदं ॥ येध्यायन्ति सदा कृष्णं मुक्तास्ते नात्रसंशयः ॥ ४ ॥ कृष्णेरताः कृष्णमनुस्मरन्ति रात्रौ च कृष्णं पुनरुत्थितायेः ॥ तेभिन्नदेहाः प्रविशन्ति कृष्णं हविर्यथा मन्त्रहुतं हुताशं ॥ ५ ॥ तस्मात्सदा मुनिश्रेष्ठाः कृष्णः कमललोचनः ॥ तस्मिन्क्षेत्रे प्रयत्नेन द्रष्टव्यो मोक्षकांक्षिभिः ॥ ६ ॥ शयनोत्थापने कृष्णं येपश्यन्ति मनीषिणः ॥ हलायुधं सुभद्राञ्च हरेःस्थानं व्रजन्तिते ॥ ७ ॥ सर्व्वकालेपि येभक्त्या पश्यन्ति पुरुषोत्तमं ॥ रौहिणेयं सुभद्राञ्च विष्णुलोकं व्रजन्तिते ॥ ८ ॥ आस्ते यश्चतुरोमासान् वार्षिकान् पुरुषोत्तमे ॥ पृथिव्यास्तीर्थयात्रायाः फलंप्राप्नोति चाधिकम् ॥ ९ ॥ येसर्व्वकालं तत्रैव निवसन्ति मनीषिणः ॥ जितेन्द्रिया जितक्रोधा लभन्तेतपसः फलम् ॥ १० ॥ तपस्तप्त्वान्यतीर्थेषु वर्षाणामयुतं नरः ॥ यदा प्राप्नो

त्तदाप्नोति मासेन पुरुषोत्तमे ॥ ११ ॥ तपसा ब्रह्मचर्य्येण संगत्या
गेन यत्फलं ॥ तत्फलं सततन्तत्र प्राप्नुवन्ति मनीषिणः ॥ १२ ॥
सम्यक्चीर्णेन यत्प्रोक्तं व्रतेन नियमेन च ॥ तत्फलं लभतेतत्र प्रत्य
हंपुरुषः शुचिः ॥ १३ ॥ यष्ट्वा नानाविधै र्यज्ञै र्यत्फलं लभतेनरः ॥
तत्फलं लभतेतत्र प्रत्यहं संयतेन्द्रियः ॥ १४ ॥ दत्वा नानाविधंदानं
यत्फलं लभते नरः ॥ तत्फलं लभतेतत्र प्रत्यहं संयतेन्द्रियः ॥ १५ ॥
स्वाध्यायाभ्यसने सम्यक् यत्फलं समुदाहृतं ॥ तत्फलं लभतेतत्र प्र
त्यहं संयतेन्द्रियः ॥ १६ ॥ देहं त्यजन्ति मनुजा स्तत्रये पुरुषोत्तमे ॥
कल्पवृक्षं समासाद्य मुक्तास्तेनात्रसंशयः ॥ १७ ॥ वटसागरयोर्मध्ये
येत्यजन्ति कलेवरं ॥ तेदुर्लभं परंमोक्षं प्राप्नुवन्ति नसंशयः ॥ १८ ॥
अनिच्छन्नपि यस्तत्र प्राणांस्त्यजति मानवः ॥ सोपि दुःखविनिर्मु
क्तो मुक्तिमाप्नोति दुर्लभाम् ॥ १९ ॥ कृमिकीटपतंगाद्या स्तिर्य्य
ग्योनिगतास्चये ॥ तत्रदेहंपरित्यज्य तेपि यान्ति परांगतिं ॥ २० ॥
भ्रान्तिं लोकस्य पश्यध्व मन्यतीर्थं प्रतिद्विजाः ॥ पुरुषाख्येन यत्प्रो
क्तं सर्व्वतीर्थफलाधिकम् ॥ २१ ॥ सकृत्पश्यति योमर्त्यः श्रद्धया पु
रुषोत्तमम् ॥ पुरुषाणां सहस्रेषु सभवे दुत्तमः पुमान् ॥ २२ ॥ प्र
कृतेः सपरो यस्मात् पुरुषादपि चोत्तमः ॥ तस्माद्वेदे पुराणे च लो
केस्मिन् पुरुषोत्तमः ॥ २३ ॥ योसौ पुराणे वेदान्ते परमात्मेत्युदाहृ
तः ॥ आस्ते विश्वोपकाराय प्रदेशे पुरुषोत्तमः ॥ २४ ॥ पथि श्म
शाने गृहमण्डपेवा रथ्याप्रदेशेऽपि यत्रकुत्र ॥ इच्छ न्ननिच्छन्नपि

तत्रदेहं संत्यज्य मोक्षं लभते मनुष्यः ॥२५॥ तस्मात्सर्व्वप्रयत्नेन तस्मिन्क्षेत्रे द्विजोत्तमाः ॥ देहत्यागो नरैः कार्य्यः सम्यङ् मोक्षाभिकांक्षिभिः ॥ २६ ॥ पुरुषाख्यस्य माहात्म्यं वक्तुंशक्नोति कःपुमान् ॥ नरोयत्र वटंदृष्ट्वा ब्रह्महत्यां व्यपोहति ॥ २७ ॥ सन्ति चान्यानि तीर्थानि क्षेत्राण्यायतनानि च ॥ पुरुषाख्यस्य सदृशं नेह पश्यामि भोद्विजाः ॥ २८ ॥ पुरुषाख्यसमं तीर्थं नभूतं नभविष्यति ॥ त्यक्त्वा यत्र नरोदेहं मुक्तिं प्राप्नोति दुर्लभाम् ॥ २९ ॥ गुणानामेकदेशो यन्मया क्षेत्रस्य कीर्त्तितः ॥ कःसमस्तान् गुणान्वक्तुं शक्तो वर्षशतैरपि ॥ ३० ॥ यदियूयं मुनिश्रेष्ठा मोक्षमिच्छत शाश्वतं ॥ तस्मिन्क्षेत्रवरे पुण्ये निवसध्व मतन्द्रिताः ॥ ३१ ॥ व्यासउवाच ॥ तेतस्य वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः ॥ निवासं चक्रिरे तत्र अवापु स्च परम्पदम् ॥ ३२ ॥ तस्माद्यूयं प्रयत्नेन निवसध्वं द्विजोत्तमाः ॥ पुरुषाख्ये वरेक्षेत्रे यदि मुक्तिमभीप्सथ ॥ ३३ ॥

इत्यादि ब्रह्मपुराणे स्वयंभुऋषि सम्वादे क्षेत्रवर्णनं नामाष्टषष्टितमोऽध्यायः ६८ ॥

—०—

व्यासउवाच ॥ तस्मिन्क्षेत्रे मुनिश्रेष्ठाः सर्व्वरुत्वसुखावहे ॥ धर्मार्थकाममोक्षाणां फलदे पुरुषोत्तमे ॥ १ ॥ कण्डुर्नाम महातेजाऋषिः परमधार्म्मिकः ॥ सत्यवादी शुचि दान्तः सर्व्वभूतहितेरतः ॥ २ ॥ जितेन्द्रियो जितक्रोधो वेदवेदाङ्गपारगः ॥ अवापपर

मांसिद्धि माराध्य पुरुषोत्तमम् ॥ ३ ॥ अन्येपि तत्र संसिद्धा मुन
यःसंयतेन्द्रियाः ॥ सर्व्वभूतहितादान्ता जितक्रोधा विमत्सराः ॥४॥
मुनयऊचुः ॥ कोसौ कण्डुः कथंनाम जगाम यदिमांगतिम् ॥ श्रो
तुमिच्छामहे ब्रूहि चरितंतस्य सत्तम ॥ ५ ॥ व्यासउवाच ॥ शृणु
ध्वं मुनिशार्दूलाः कथांतस्य मनोहरां ॥ प्रवक्ष्यामि समासेन मुने
स्तस्य विचेष्टितं ॥ ६ ॥ पवित्रे गोमतीतीरे विजने सुमनोहरे ॥
कन्दमूलफलैः पूर्णे समित्पुष्पजलैः कुशैः ॥ ७ ॥ नानाद्रुमलता
कीर्णे नानापुष्पोपशोभिते ॥ नानापचिरुतेरम्ये नानामृगगणान्वि
ते ॥ ८ ॥ तत्राश्रमपदं कण्डो र्बभूव मुनिसत्तमाः ॥ सर्व्वर्त्तुफल
पुष्पाढ्यं कदलीखण्डमण्डितम् ॥ ९ ॥ तपस्तेपे सनियमैःस्नानमौ
नसुसंयमैः ॥ ग्रीष्मे पञ्चतपा भूत्वा वर्षासु स्थण्डिलेशयः ॥१०॥
आकण्ठमग्नोहेमन्ते सतेपे सुमहत्तपः ॥ दृष्ट्वा तत्तपसोवीर्य्यं मुने
स्तस्य सुविस्मिताः ॥ बभूवु र्देवगन्धर्वाः सिद्धविद्याधरास्तथा ॥११॥
भूमिं तथान्तरिक्षञ्च दिवञ्च सुरसत्तमाः ॥ कण्डुः सन्तापयामास
त्रैलोक्यं तपसोबलात् ॥ १२ ॥ अहोस्य परमंधैर्य्यं महोस्य परमं
तपः ॥ इत्यब्रुवं स्तदादेवा दृष्ट्वातं तपसिस्थितम् ॥ १३ ॥ मन्त्रया
मासु रव्यग्राः शक्रेण सहितास्तदा ॥ भयात्तस्य समुद्विग्ना स्तपोवि
घ्नमभीप्सवः ॥ १४ ॥ ज्ञात्वा तेषामभिप्रायं शक्रस्त्रिभुवनेश्वरः ॥
प्रम्लोचाख्यां वरारोहां रूपयौवनगर्विताम् ॥ १५ ॥ सुमध्यां चारु
दशनां पीनश्रोणिपयोधरां ॥ सर्व्वलक्षणसम्पन्नां प्रोवाच बलसूद

नः ॥ १६ ॥ शक्रउवाच ॥ प्रम्लोचे गच्छशीघ्रंत्वं यत्रासौ तप्यते मुनिः ॥ विघ्नार्थं तपसस्तस्य चोभयस्व ततःशुभे ॥ १७ ॥ प्रम्लोचोवाच ॥ तववाक्यं सुरश्रेष्ठ करोमिसततंप्रभो ॥ किन्तुशंका ममैवात्र जीवितस्य च संशयः ॥ १८ ॥ बिभेमि तंमुनिवरं ब्रह्मचर्य्यव्रते स्थितं ॥ अत्युग्रदीप्ततपसं ज्वलनार्कसमप्रभम् ॥ १९ ॥ ज्ञात्वामां समुनिः क्रोधो विघातार्थ मुपागतां ॥ कण्डुः परमतेजस्वी शापं दास्यति दुःसहं ॥ २० ॥ उर्वशी मेनका रम्भा घृताची पुञ्जिकस्थला ॥ विश्वाची सहजन्या च पूर्व्वचित्ति स्तिलोत्तमा ॥ २१ ॥ अलम्बुषा मिश्रकेशी शशिलेखाचवामना ॥ अन्याश्चाप्सरसःसन्ति रूपयौवनगर्विताः ॥ २२ ॥ सुमध्या श्चारुदशनाः पीनोन्नतपयोधराः ॥ कामप्रचारकुशला स्तास्तत्र विनियोजय ॥ २३ ॥ तस्या स्तद्वचनं श्रुत्वा पुनःप्राह शचीपतिः ॥ तिष्ठन्ति नाम चान्यास्ता! स्त्वंचात्र कुशलाशुभे ॥ २४ ॥ कामंवसन्तं वायुञ्च सहायार्थं ददामि ते ॥ तैःसार्द्धंगच्छसुश्रोणि यत्रास्ते समहामुनिः ॥ २५ ॥ शक्रस्य वचनंश्रुत्वा तदा साचारुलोचना ॥ जगामाकाशमार्गेण तैःसार्द्धं वराङ्गना ॥ २६ ॥ गत्वा सातत्र रुचिरं ददर्शवनमुत्तमं ॥ मुनिञ्च दीप्ततपस माश्रमस्थ मकल्मषम् ॥ २७ ॥ अपश्य त्सा वनंरम्यं तैःसार्द्धं नन्दनोपमं ॥ सर्वर्त्तुतरुपुष्पाढ्यं शाखामृगगणाकुलं॥ २८ पुण्यपद्मवनोपेतं सपल्लवमहावनं॥ संश्रृण्वन् प्रीतिजननान् वल्गुमंदकलान् शुभान् ॥ २९ ॥ श्रोत्ररम्या न्सुमधुरान् शब्दान् खगमुखे

रितान् ॥ सर्वर्त्तुफलभाराढ्यान् सर्वर्त्तुकुसुमोज्वलान् ॥ ३० ॥ अप श्यत् पादपानेव विहङ्गै रनुनादितान् ॥ आम्रा नाम्रातकान् भव्या न्नारिकेलान् सतिन्दुकान् ॥ ३१ ॥ अविनस्तु तथा विल्वान् दाडि मान् वीजपूरकान् ॥ पनसान् लकुचा न्नीपान् शिंशपा न्सुमनोह रान् ॥ ३२ ॥ पारावता न्तथाकोलान् निम्बा नन्यांश्च वेतसान् ॥ भल्लातका न्नामनगान् तिंदुकांश्च महाफलान् ॥ ३३ ॥ इङ्गुदानू क रमर्दांश्च हरीतक्यो विभीतकान् ॥ एतां श्चान्यांश्च साद्यचान् ददर्श पृथुलोचना ॥ ३४ ॥ तथैवाशोकपुन्नाग केतकी वकुलां स्तथा ॥ च म्पका न्सप्तपर्णांश्च कर्णिकारान् वनस्पतीन् ॥ ३५ ॥ पावितान् को विदारांश्च मनुरेन्द्रीवरां स्तथा ॥ पाटलान् पुष्पितांश्चैव देवदारुक्र मांस्तथा ॥ ३६ ॥ शालां स्तालां स्तमालांश्च निचुलां ल्लोमकां स्त था ॥ अन्यांश्च पादपान् श्रेष्टान् प्रपश्य न्फलपुष्पितान् ॥ ३७ ॥ चकोरैः शतपत्रै श्च भृङ्गराजै स्तथाशुकैः ॥ कोकिलैः कलविंकैश्च हारीतै र्जीवजीवकैः ॥ ३८ ॥ प्रियपुत्रैः शुकैश्चैव तथान्यै र्विविधैः खगैः ॥ श्रोत्ररम्यं सुमधुरं कूजद्भिश्च विचेष्टितं ॥ ३९ ॥ सर्वांश्चि मनोज्ञानि मालती वकुलानि च ॥ कुमुदैः पुण्डरीकैश्च तथानीलो त्पलैः शुभैः ॥ ४० ॥ कह्लारैः कमलै श्चापि अर्च्चितानि समन्ततः ॥ कदम्बै श्चक्रवाकै श्च तथैव जलकुक्कुटैः ॥ ४१ ॥ कारण्डवैः प्लवैर्हंसैः कूर्ममद्गुभि रेवच ॥ एतै श्चान्यै श्च कीर्णानि समन्ता ज्जलचारि भिः ॥ ४२ ॥ एवं दृष्ट्वा वनं रम्यं तैःसार्द्धं परमाद्भुतम् ॥

विस्मयोत्फुल्लनयना साबभूव वरांगना ॥ ४३ ॥ प्रोवाच वायुं काम
ञ्च वसन्त ञ्च द्विजोत्तमाः ॥ कुरुध्वं ममसाहाय्यं सज्जाः सर्वं पृथ
क् पृथक् ॥ ४४ ॥ एवमुक्त्वा तदा सा तु शक्तिक्षोभेन गर्विता ॥ प्रत्यु
वाचाय पश्यामि यत्रासौ संस्थितो मुनिः ॥ ४५ ॥ अद्यत इहयन्ता
रं प्रमत्तेन्द्रियवाजिनं ॥ शरशस्त्रगलद्रश्मिं करिष्यामि कुसारथि
म् ॥ ४६ ॥ ब्रह्मा जनार्द्दनो वापि यद्विवा नीललोहितः ॥ तथाप्यद्य
करिष्यामि कामबाणक्षतान्तरम् ॥ ४७ ॥ इत्युक्त्वा प्रजगामाथ य
त्रासौ तिष्ठते मुनिः ॥ मुनेस्तपः प्रभावेन प्रशान्तश्वापदाश्रमं ॥ ४८ ॥
सापुंस्कोकिलमाधुर्य्ये नदीतीरे व्यवस्थिता ॥ स्तोममन्त्रास्थिता त
सा द्गायत वराप्सराः ॥ ४९ ॥ ततो वसन्तः सहसा वसन्तमकरो
त्तदा ॥ कोकिलालापमधुर मकालिक मनोहरं ॥ ५० ॥ ववौ गन्ध
वहश्चैव मलयाद्रि निकेतनः ॥ पुष्पानुच्चावचान् सेध्यान् पातयंश्च
शनैः शनैः ॥ ५१ ॥ पुष्पबाणधर श्चैव गत्वा तस्य समीपतः ॥ मुनिं
संक्षोभयामास काम स्तदात्ममानसं ॥ ५२ ॥ ततो गीतध्वनिं श्रुत्वा
मुनि र्विस्मितमानसः ॥ जगाम यत्र सासुभ्रूः कामबाणप्रपीडि
तः ॥ ५३ ॥ दृष्ट्वा तामथ संहृष्टो विस्मयो त्फुल्ललोचनः ॥ भ्रष्टोत्त
रीयो विकलः पुलकाञ्चितविग्रहः ॥ ५४ ॥ कासिकस्यासि सुश्रोणि
सुभगे चारुहासिनि ॥ मनोहरसिमेसुभ्रु सत्यंब्रूहि सुमध्यमे ॥ ५५ ॥
प्रम्लोचोवाच ॥ तवकर्मकरी चाहं पुष्पार्थं महमागता ॥ आदेशं दे
हिमे क्षिप्रं किं करोमि तवाज्ञया ॥ ५६ ॥ श्रुत्वैव वचनं तस्या स्त्य

क्याधैर्यं विमोहितः ॥ आदाय हस्ते तांबालां प्रविवेश स्वमाश्रम
म् ॥ ५७ ॥ व्यासउवाच ॥ ततः कामश्च वायु श्च वसन्तश्च द्विजोत्त
माः ॥ जग्मु र्यथागताः सर्वे कृतकृत्या स्त्रिविष्टपं ॥ ५८ ॥ शशंसु
श्च हरिं गत्वा तथा स्तस्य विचेष्टितं ॥ श्रुत्वा शक्र स्तदा देवाः प्री
ताः सुमनसोऽभवन् ॥ ५९ ॥ सचकण्डु स्तयासार्द्धं प्रविशन्नेव सा
श्रमं ॥ आत्मनः परमंरूपं चकार मन्मथाकृतिं ॥ ६० ॥ रूपयौवन
सम्पन्नमतीव सुमनोहरं॥ दिव्यालंकारसंयुक्तं द्विरष्टवर्षाकृतिं ॥ ६१
दिव्यवस्त्रधरं कान्तं दिव्यस्र गन्धभूषितं ॥ सर्वोपभोगसम्पन्न मस
माप्तपोवलात् ॥ ६२ ॥ दृष्ट्वासा तस्य तद्वीर्य्यं परं विस्मयमागता ॥
अहोस्य तपसोवीर्य्य मित्युक्त्वा मुदिता वभौ ॥ ६३ ॥ स्नानं संध्यां
जपं होमं स्वाध्यायं देवतार्च्चनं ॥ व्रतोपवासं नियमं ध्यान ञ्च द्वि
जसत्तमाः ॥ ६४ ॥ त्यक्त्वा सरेमे मुदित स्तयासार्द्धं महर्निशं ॥ म
न्मथाकृष्ट हृदयो नवुवोध तपःक्षयं ॥ ६५ ॥ संध्या रात्रि र्दिवापक्षं
मासं चायनहायनं ॥ नवुवोध गतंकालं विषयाशक्तमानसः ॥ ६६ ॥
साच तंकामजै र्भावै र्विदग्धा रहसि द्विजाः ॥ रमयामास सुश्रो
णी प्रचारकुशला तदा ॥ ६७ ॥ एवं कण्डु स्तयासार्द्धं वर्षाणामधि
कंशतं ॥ अतिष्ठन् मन्दरद्रोण्यां ग्राम्यधर्मरतो मुनिः ॥ ६८ ॥ सा
तंप्राह महाभागं गन्तुमिच्छाम्यहं दिवं ॥ प्रसादसुमुखो ब्रह्मन्ननु
ज्ञां दातुमर्हसि ॥ ६९ ॥ तयैवमुक्तः सस्मुनि स्तस्या मासक्तमानसः ॥
दिनानि कतिचि द्भद्रे स्थीयता मित्यभाषत ॥ ७० ॥ एवमुक्ता तत

स्तेन सार्द्धं वर्षशतं पुनः ॥ बुभुजे विषयां स्तन्वी तेनसार्द्धं महात्म
ना ॥ ७१ ॥ अनुज्ञांदेहि भगवन् ब्रजामि त्रिदिवालयं ॥ उक्त स्त
येति सपुनः स्थीयता मित्यभाषत ॥ ७२ ॥ पुनर्गते वर्षशते साधिके
साशुभानना ॥ यामीत्याहदिवं ब्रह्मन् प्रणयात्स्मितशोभना ॥ ७३ ॥
उक्त स्तयैवं समुनि रुपगुह्यायतेक्षणां ॥ इहास्यतांक्षणं सुभ्रु चिर
कालंगमिष्यसि ॥ ७४ ॥ तच्छापभीता सुश्रोणी सहतेनर्षिणापुनः ॥
शतद्वयं किञ्चिदूनं वर्षाणा मन्वतिष्ठत ॥ ७५ ॥ गमनाय महाभा
गा देवराजनिवेशनं ॥ प्रोक्ताप्रोक्त स्तयासोपि स्थीयता मित्यभाष
त ॥ ७६ ॥ तंसाशाप भयाद्भीता दाक्षिण्येन च दक्षिणा ॥ प्रोक्ता
प्रणयभंगार्त्ति वेदिनी नजहौ मुनिं ॥ ७७ ॥ तया च रमत स्तस्य
परमर्षे रहर्निशं ॥ नवं नवमभू त्प्रेम मन्मथासक्तचेतसः ॥ ७८ ॥
एकदातु त्वरायुक्तो निश्चक्रामोटजा न्मुनिः ॥ निष्क्रामन्त ञ्च कुत्रे
ति गम्यते प्राह साशुभा ॥ ७९ ॥ इत्युक्तः सतथा प्राह परिब्रजम
हाशुभे ॥ संध्योपास्त्यं करिष्यामि क्रियालोपोऽन्यथा भवेत् ॥ ८० ॥
ततः प्रहस्य मुदिता तंसाप्राह महामुनिं ॥ किमद्य सर्व्वधर्म्मज्ञ प
रिवृत्यमहस्तव ॥ ८१ ॥ गतमेनन्तु कुरुते विस्मयं कथ्यते मया ॥
मुनिरुवाच ॥ प्रात स्त्वमागता भद्रे नदीतीर मिदंशुभं ॥ मया दृ
ष्टासि सुश्रोणि प्रविष्टा वनमाश्रमं ॥ ८२ ॥ इय ञ्च वर्त्तते संध्या
परिणाम महोगतं ॥ अवहासः किमर्थोयं सद्भावः कथ्यतांमम ॥ ८३ ॥
प्रम्लोचोवाच ॥ प्रत्यूषेस्म्यागता ब्रह्मन् सत्य मेतन्न तेमृषा ॥ नन्व

यतस्य कामस्य गतान्यब्दशतानि च ॥ ८४ ॥ ततः ससाध्वसो विद्वां स्तां पप्रच्छायतेक्षणां ॥ कथ्यतां भीरुकः काम स्त्वमेव सम्मतः स दा ॥ ८५ ॥ प्रम्लोचोवाच ॥ सप्तोत्तराण्यतीतानि नववर्षशतानिवै॥ षण्मासाश्च तथैवात्र समतीतं दिनत्रयम् ॥ ८६ ॥ ऋषिरुवाच ॥ स त्यंभीरु वदस्येतत् परिहासोथ वाशुभे ॥ दिन मेक महम्मन्ये त्वया सार्द्धं मिहोषितम् ॥ ८७ ॥ प्रम्लोचोवाच ॥ वदिष्याम्यनृतं ब्रह्मन् कथमत्र तवान्तिके ॥ विशेषादद्य भवता पूर्व्वमार्गानुवर्त्तिना ॥ ८८॥ व्यासउवाच ॥ निशम्य तद्वच स्तस्याः समुनि र्द्विजसत्तमाः ॥ धि ग्धिक्ता मित्यथोवाच विनिन्द्यात्मान मात्मना ॥ ८९ ॥ मुनिरुवा च ॥ तपांसिमम नष्टानि ब्रह्मन् वेदविदाम्बर ॥ हृतो विवेकः के नापि योषि न्मोहाय निर्मिता ॥ ९० ॥ उर्मिषट्कातिगं ब्रह्म न्ज्ञे यमात्मजयेनमे ॥ मतिरेषा हृतायेन धिक्तं कामं महाग्रहं ॥९१॥ व्रतानि ममवेदाप्तिः कारणा न्यखिलानि च ॥ नरकग्राममार्गेण कामेनाद्य हृतानिमे ॥ ९२ ॥ विनिंद्येत्थं सधर्म्मज्ञः स्वय मात्मान मात्मना ॥ तामप्सरस मासीना मिदंवचन मब्रवीत् ॥ ९३ ॥ ग च्छपापे यथाकामं यत्कार्य्यं तत्त्वयाकृतं ॥ देवराजस्य मत्क्षोभं कुर्व त्या भावचेष्टितैः ॥ ९४ ॥ नत्वां करोम्यहं भस्म क्रोधतीव्रेण वह्नि ना ॥ सतां सप्तपदंमैत्र मुषितोहं त्वयासह ॥ ९५ ॥ अथवा तव दोषःकः किम्वा कुर्य्याम्यहं तव ॥ ममैव दोषो नितरां येनाह मजि तेन्द्रियः ॥ ९६ ॥ यया शक्रप्रियार्थिन्या कृतो मत्तपसो व्ययः ॥

त्वयाधिक्त्वां महामोह मज्जयातु जुगुप्सितां ॥९७॥ व्यास उवाच ॥
यावदित्यं सविप्रर्षि स्तांब्रवीति सुमध्यमां ॥ तावचल त्स्वेदजला
सावभूवाति वेपथुः ॥ ९८ ॥ प्रवेपमानां सततं खिन्नगात्रलतां स
तीं ॥ गच्छ गच्छेति सक्रोध मुवाच मुनिसत्तमः ॥ ९९ सातु निर्भ
र्त्सिना तेन निष्क्रम्य च तदाश्रमात्॥ आकाशगामिनी स्वेदं सम्मा
र्जस्तरुपल्लवैः ॥ १०० ॥ वृत्ता वृत्तं ययौवाला तदग्रारुणपल्लवैः ॥
निर्ममार्ज च गात्राणि गलत्स्वेदजलानिवै ॥ १०१ ॥ ऋषिणा यस्त
दागर्भ स्तस्यदेहे समाहितः॥ निर्जगाम सरोमाञ्च स्वेदरूपी तदंग
तः ॥ १०२ ॥ तंवृक्षाजगृहुर्गर्भ मेकं चन्द्रश्च मारुतः ॥ मांसमाप्या
यितो गोभिः सतदा ववृधे शनैः ॥ १०३ ॥ मारिषा नाम कन्याभू
द्वृक्षाणां चारुलोचना ॥ प्राचेतसां साभार्य्याभू द्दक्षस्य जननी द्वि
जाः ॥ १०४ ॥ सचापि भगवान् कण्डुः क्षीणेतपसि सत्तमः ॥ पु
रुषोत्तमाख्यं भोविप्रा विष्णोरायतनं ययौ ॥ १०५ ॥ ददर्श परमं
क्षेत्रं मुक्तिदं भुविदुर्लभं ॥ दक्षिणस्योदधे स्तीरे सर्व्वकामफलप्र
दम् ॥ १०६ ॥ सुरम्यं वालुकाकीर्णं केतकीवनशोभितं ॥ नानात्र
नलताकीर्णं नानापक्षिरुतं शिवं ॥ १७ ॥ सर्व्वत्रसुखसंचारं सर्व्व
र्त्तुकुसुमान्वितम् ॥ सर्व्वमोक्षप्रदं नृणां धन्यंसर्व्वगुणाकरं॥१०८॥
भृग्वाद्यैः सेवितंपूर्वं मुनिसिद्धवरै स्तथा ॥ गन्धर्वैः किन्नरै र्यक्षै स्त
थान्यै र्मोक्षकांक्षिभिः ॥ १०९ ॥ ददर्श च हरिं तत्र देवैः सर्वै र
लंकृतं ॥ ब्राह्मणाद्यै स्तथावर्णै राश्रमस्थै र्निषेवितं ॥११० ॥ दृष्ट्वै

वं सतदा चेत्रं देवञ्च पुरुषोत्तमं ॥ कृतकृत्य मिवात्मानं मेने स मु
निसत्तमः ॥ १११ ॥ तत्रैकाग्रमति र्भूत्वा चकारा राधनं हरेः ॥
ब्रह्मपारमयं कुर्वन् जपमेकाग्रमानसः ॥ ११२ ॥ ऊर्द्ध्ववाहु र्महा
योगी स्थित्वासौ द्विजसत्तमाः ॥ ११३ ॥ मुनयऊचुः ॥ ब्रह्मपारंमु
नेश्रोतु मिच्छामः परमंस्तवं ॥ जपताकण्डुना देवो येनाराध्यत
केशवः ॥ ११४ ॥ व्यासउवाच ॥ पारंपरं विष्णुरपारपारः परःपरे
भ्यः परमात्मरूपी ॥ सब्रह्मपारः परपारभूतः परः पराणा मपि
पारपारः ॥ ११५ ॥ सकारणं कारण माश्रितोपि तस्यापि हेतुः पर
पारहेतुः ॥ कार्य्येषुचैवं सहकर्मकर्त्तृ रूपैरशेषै रवतीहसर्वं ॥ ११६ ॥
ब्रह्मप्रभु र्ब्रह्मससर्वभूतो ब्रह्माप्रजानां पतिरच्युतोसौ ॥ ब्रह्माव्ययो
नित्यमजः सविष्णु र्क्षयाद्यै रखिलै रसंगः ॥ ११७ ॥ ब्रह्माक्ष
रमजं नित्यं यथासौ पुरुषोत्तमः ॥ तथा रागादयो दोषाः प्रयान्तु
प्रशमं मम ॥ ११८ ॥ व्यासउवाच ॥ श्रुत्वा तस्यमुने र्जाप्यं ब्रह्मपा
रं द्विजोत्तमाः ॥ भक्तिञ्च परमां ज्ञात्वा सुदृढां पुरुषोत्तमः ॥ ११९ ॥
प्रीत्या सपरया देव स्तदासौ भक्तवत्सलः ॥ गत्वा तस्य समीपन्तु
प्रोवाच मधुसूदनः ॥ १२० ॥ मेघगम्भीरया वाचा दिशः सन्नादय
न्निव ॥ आरुह्य गरुडं विप्रा विनताकुलनन्दनं ॥ १२० ॥ श्रीभग
वानुवाच ॥ मुनेब्रूहि परंकार्यं यत्तेमनसि वर्त्तते ॥ वरदोह मनुप्रा
प्तो वरंवरय सुव्रत ॥ १२२ ॥ श्रुत्वैतद्वचनंतस्य देवदेवस्य चक्रिणः ॥
चक्षुरुन्मील्य सहसा ददर्श पुरतोहरिं ॥ १२३ ॥ शंखचक्र गदा

पाणिं मुकुटांगदधारिणं॥ अतसीपुष्पसंकाशं पद्मपत्रायतेक्षणं॥१२४
चतुर्भुजमुदारांगं पीतवस्त्रधरं प्रभुं ॥ श्रीवत्सोरसि संयुक्तं वनमाला
विभूषितं ॥ १२५ ॥ सर्व्वलक्षणसंयुक्तं सर्व्वरत्नविभूषितं ॥ दिव्यच
न्दन लिप्तांगं दिव्यमाल्यविभूषितं ॥ १२६ ॥ ततः सविस्मया विष्टो
रोमाञ्चिततनूरुहः ॥ दण्डव त्प्रणिपत्योर्व्वां प्रणाम मकरोत्त
दा ॥ १२७ ॥ अद्यमे सफलं जन्म अद्यमे सफलं तपः ॥ इत्युक्त्वा
मुनिशार्दूलाः संस्तोतु मुपचक्रमे ॥ १२८ ॥ कण्डुरुवाच ॥ नाराय
णहरे कृष्ण श्रीवत्साङ्क जगत्पते ॥ जगद्बीज जगद्धाम जगत्साक्षि
न्नमोस्तुते ॥ १२९ ॥ अव्यक्तविष्णोप्रभव प्रधानपुरुषोत्तम ॥ पुण्ड
रीकाक्ष गोविन्द लोकनाथ नमोस्तुते ॥ १३० ॥ हिरण्यगर्भ श्री
धाम पद्मनाभ सनातन ॥ भूगर्भ ध्रुव ईशान हृषीकेश नमोस्तु
ते ॥ १३१ ॥ अनाद्यजाम्हताज्येय जयन्ते जयताम्बर ॥ अजिताख
ण्डल कृष्ण श्रीनिवास नमोस्तुते ॥ १३२ ॥ योगात्म न्नप्रमेयात्मन्
लोकात्मन् सनातन ॥ कूटस्थाचलदुर्ज्ञेय कुशेशाय नमोस्तुते॥१३३॥
वरेण्य वरदानन्त ब्रह्मयोने गुणाकर ॥ प्रलयोत्पत्तियोगेश वासुदे
व नमोस्तुते ॥ १३४ ॥ पर्जन्य धर्मकर्त्ता च दुष्पार दुरधिष्ठित ॥
दुःखार्त्तिनाशन हरे जलशायि न्नमोस्तुते ॥ १३५ ॥ विश्वात्मन् प
रमात्मन् हेसोमसूर्य्याग्निलोचन॥ शुचिश्रवः शुचिवर शुचिकाय न
मोस्तुते ॥ १३६ ॥ यज्ञच्छिन्न यज्ञवर यज्ञधातोऽभयप्रद ॥ यज्ञगर्भ
हिरण्यांग पृथ्वीगर्भ नमोस्तुते ॥ १३७ ॥ भूतपाव्यक्त भूतेश भूत

तत्त्वैरनाकुल ॥ भूताधिवास भूतात्मन् भूतगर्भ नमोस्तुते ॥ १३८॥
सूक्ष्म स्थूल हृष्टद्रष्ट जीवशुद्धाभयंकर ॥ शंकर त्रिपुपर्यांच सोम
सौम्य नमोस्तुते ॥ १३९ ॥ क्षेत्रज्ञः क्षेत्रभृत् क्षेत्री क्षेत्रहा क्षेत्रकृ
द्वशी ॥ क्षेत्रात्मन् क्षेत्ररहित क्षेत्रसृष्ट नमोस्तुते ॥ १४० ॥ गुणा
लय गुणावास गुणाश्रय गुणावह ॥ गुणभोक्तृ गुणाराम गुणत्या
गि न्नमोस्तुते ॥ १४१ ॥ त्वम्विष्णु स्त्वंहरि श्चक्री त्वंजिष्णुस्त्वंज
नार्द्दनः ॥ त्वम्भूत स्त्वम्वषट्कार स्त्वम्भव्य स्त्वम्भवत्प्रभुः ॥ १४२॥
त्वम्भूतकृ त्त्वमव्यक्त स्त्वम्भावो भूतभृ द्भवान् ॥ त्वंभूतभावनो देव
त्वामाहु रजमीश्वरं ॥ १४३ ॥ त्वमनन्तः कृतज्ञस्त्वं त्वंकृतिस्त्वंवृ
षाकपिः ॥ त्वंरुद्र स्त्वंदुराधर्ष स्त्वममोघ स्त्वमीश्वरः ॥ १४४ ॥
त्वम्विश्वकर्म्मा त्वञ्जिष्णु स्त्वं शंभु स्त्वं वृषाकृतिः ॥ त्वं शंकरस्त्व
मुशना स्त्वं सत्य स्त्वं तपोधनः ॥ १४५ ॥ त्वम्विश्वरेता त्वं शर्म्म
त्वं शरण्य स्त्वमक्षरः ॥ त्वं शम्भु स्त्वं स्वयम्भूश्च त्वं ज्येष्ट स्त्वं परा
यणः ॥ १४६ ॥ त्वमादित्य स्त्वमोंकार स्त्वंप्राण स्त्वंतमिस्रहा ॥
त्वम्पर्ज्जन्य स्त्वं प्रथित स्त्वम्मेधा त्वं सुरेश्वरः ॥ १४७ ॥ त्वं ऋक्
सामवेदीश स्त्वमात्मासंयतो भवान् ॥ त्वमग्निस्त्वञ्च पवनः कुवेर
स्त्वंहवि स्तथा ॥ १४८ ॥ त्वंस्रष्टा त्वंतथा भोक्ता त्वंहोता त्वंह
विःक्रमः ॥ त्वंकवि स्त्वंहरिःश्रेष्ठ स्त्वंलोकपति रच्युतः ॥ १४९ ॥
त्वंसर्वदर्शी श्रीमानूस्त्वं त्वंसर्वदमनोऽरिहा ॥ त्वमह स्त्वंतथारा
त्रि स्त्वामाहु र्वत्सरं वुधाः ॥ ॥ १५० ॥ त्वंकाल स्त्वंकलाकाष्ठा

त्वंमुहूर्त्तः क्षणालवाः ॥ त्वंबाल स्त्वंतथा वृद्ध स्त्वंपुमान् स्त्रीनपुंस
कः ॥ १५१ ॥ त्वंविश्वयोनि स्त्वंचक्षु स्त्वंस्थाणु स्त्वंशुचिश्रवाः ॥
त्वंशाश्वत स्त्वमजित स्त्वमुपेन्द्र स्त्वमुत्तमः ॥ १५२ ॥ त्वंसर्वविस्त्वं
सुखद स्त्वंवेदांगः त्वमव्ययः ॥ त्वंवेदवेद्य स्त्वंधाता विधातात्वं
समाहितः ॥ १५३ ॥ जगद्योनि स्त्वमूलस्त्वं त्रिधामात्वं पुनर्वसुः ॥
त्वंवैद्य स्त्वंधृतात्मा च त्वमतीन्द्रियगोचरः ॥ १५४ ॥ त्वमग्रणी
ग्रामणीस्त्वं त्वंसुपर्णा स्त्वमादिमान् ॥ त्वंसंग्रह स्त्वंसुमहस्त्वं
धृतात्मा त्वमच्युतः ॥ १५५ ॥ त्वंयम स्त्वञ्च नियम स्त्वंपांशु स्त्व
ञ्चतुर्भुजः ॥ हिरण्यनाभ स्त्वन्देव स्त्वंशशी त्वंशचीपतिः ॥ १५६
त्वममेय श्चतुर्भाग श्चतुरात्मा त्वमव्ययः ॥ त्वञ्चतुर्वदनः शम्भुः शङ्कु
निस्त्वं त्वमग्रजः ॥ १५७ ॥ त्वंगुरुस्त्वंगुरुतम स्त्वंराम स्त्वञ्च
दक्षिणः ॥ त्वंपिप्पल स्त्वमगम स्त्वंव्यक्त स्त्वंप्रजापतिः ॥ १५८ ॥
त्वमनिर्देश्य वपुधृक् त्वमंशुश्च सुरारिहा ॥ सहस्रपाद स्त्वन्देव त्व
विराट् त्वंसुराट् हरे ॥ १५९ ॥ त्वमत्यतिष्ठः संभूय देवदेव दशां
गुलं ॥ यद्भूतं तत्त्वमेवोक्तः पुरुषः शुक्लउत्तमः ॥ १६० ॥ यच्चाव्यं त
त्त्वमीशान त्वंहुत स्त्वं तथाहुतः ॥ त्वत्तो रोहत्ययं लोको महि
मा त्वमनुत्तमः ॥ १६१ ॥ त्वंज्यायान् पुरुषस्त्वञ्च त्वन्देव दशधा
स्थितः ॥ विश्वभूत श्चतुर्भागो नवभागो श्चतोदिवि ॥ १६२ ॥ नव
भागांतरिक्षस्था पौरुषेयाः सनातनाः ॥ भागद्वय ञ्च भूसंस्थं चतु
र्भागोऽप्य भूदिह ॥ १६३ ॥ त्वत्तो यज्ञाः सम्भवति जगतोवृष्टिकार

यां ॥ त्वत्तो विराट् समुत्पन्नो जगतो हृदिकः पुमान् ॥ १६४ ॥ सो
तिरिच्यत भूतेभ्य स्तेजसा यशसा श्रिया ॥ त्वत्तो सुराणां चर्य्या
पि एषद्राज्य मजायत ॥ १६५ ॥ ग्राम्यारण्या स्त्रौषधय स्त्वत्तः प
शुस्तृणादयः ॥ ध्येय ध्यानपर स्त्वञ्च कृतवानसि चौषधीः ॥ १६६॥
त्वन्देवदेव सप्ताश्वः कालाख्यो दीप्तविग्रहः ॥ जङ्गमाजङ्गमं सर्वं
जगद्देत चराचरम् ॥ १६७ ॥ त्वत्तः सर्व्वमिदं जातं त्वयि सर्वं प्र
तिष्ठितं ॥ अनिरुद्ध स्त्वमाधार स्त्वंप्रद्युम्नः सुरारिहा ॥ १६८ ॥
त्वञ्च संकर्षणो देवस्त्वंकर्त्ता त्वंसनातनः ॥ त्वंवासुदेवोऽमेयात्मा
त्वमेव गुणवर्जितः ॥ १६९ ॥ त्वंज्येष्ट स्त्वंवरिष्टस्त्व मरिष्ट स्त्व
ञ्चमाधव ॥ सहस्रशीर्षा स्त्वन्देव स्त्वमव्यक्तः सहस्रदृक् ॥ १७० ॥
देवसर्वसुरश्रेष्ट सर्वलोकपरायण ॥ त्राहिमामरविन्दाक्ष नारायण
नमोस्तुते ॥ १७१ ॥ नमस्ते भगवन् विष्णो नमस्ते पुरुषोत्तम ॥
नमस्ते सर्वलोकेश नमस्ते कमलाधर ॥ १७२ ॥ नमस्ते गुणरूपाय
नमस्ते गुणवर्जित ॥ गुणालय नमस्तेस्तु नमस्ते पुष्करेक्ष
ण ॥ १७३ ॥ वासुदेव नमस्तेस्तु नमस्ते सुरसत्तम ॥ नमस्ते सु
नमस्तेस्तु नमस्तेस्तु सनातन ॥ १७४॥ नमस्ते योगिनांगम्य यो
गवास नमोस्तुते॥ मापते श्रीपते नित्यं नमस्तेस्तु जगत्पते॥ १७५
कैटभघ्न नमस्तेस्तु सुब्रह्मण्य नमोस्तुते ॥ नमोस्तुते महामीन श्रु
तिपूज्य धराच्युत ॥ १७६ ॥ समुद्रसलिलक्षोभ पद्म जाह्लादधारि
णे ॥ अश्वशीर्ष महाघोण महापुरुष विग्रह ॥ १७७ ॥ मधुकैटभ

हन्ता च नमस्ते तुरगानन ॥ महाकमठ भोगाय पृथिव्युद्धरणाय
च ॥ १७८ ॥ विधृ[illegible]स्थितिरूपाय महाकूर्माय तेनमः ॥ नमोमहा
वराहाय पृथिव्युद्धारकारिणे ॥ १७९ ॥ नम आदिवराहाय विश्व
रूपाय वेधसे ॥ नमोऽनन्ताय सूक्ष्माय मुख्याय प्रवराय च ॥ १८० ॥
परात्परस्वरूपाय योगिगम्यायतेनमः ॥१८१॥ तस्मैनमःपरमकारण
कारणाय योगीन्द्रचित्तनिलयाय सुदुर्विदाय ॥ चीरार्णवाश्रितम
हाहिसुतल्पशायि न्तुभ्यंनमः कनकरत्नसुकुण्डलाय ॥ १८२ ॥ व्या
सउवाच ॥ इत्थंस्तुत स्ततस्तेन प्रीतः प्रोवाच माधवः ॥ चिप्रं ब्रूहि
मुनिश्रेष्ठ मत्तो यदभिवांछसि ॥ १८३ ॥ कण्डुरुवाच ॥ संसारे स्मि
न् जगन्नाथ दुस्तरे लोमहर्षणे ॥ अनित्ये दुःखवहुले कदलीदल
सन्निभे ॥ १८४ ॥ निराश्रये निरालम्बे जलवुद्बुदचञ्चले ॥ सर्वोप
द्रवसंयुक्ते दुस्तरे चातिभैरवे ॥ १८५ ॥ भ्रमामिसुचिरंकालं माय
यामोहितस्तव ॥ नचान्तमधिगच्छामि विषयासक्तमानसः ॥ १८६॥
त्वामहंचाद्य देवेश संसारभयपीडितः ॥ गतोस्मि शरणं कृष्ण मा
मुद्धर भवार्णवात् ॥ १८७ ॥ गन्तुमिच्छामि परमं पदं यत्ते सनात
नं ॥ दैत्यदानवदेवेश पुनरावृत्तिदुर्लभम् ॥ १८८ ॥ भगवानुवाच ॥
भक्तोसिमे मुनिश्रेष्ठ चेत्तेस्मिन् मामराधयन् ॥ मत्प्रसादाद् ध्रुवंमो
चं प्राप्स्यसे यत्समीहितं ॥ १८९ ॥ मद्भक्ताः चत्रिया वैश्याः स्त्रि
यः शूद्रा स्तथांत्यजाः ॥ प्राप्नुवन्ति परांसिद्धिं किंपुनस्त्वं द्विजोत्त
मः ॥ १९० ॥ स्वपाक श्वापि मद्भक्तः सम्यक् श्रद्धासमन्वितः ॥ प्रा

ह्मोत्वमभिमतांसिद्धिं मत्प्रेसादान्न कांक्षया ॥ १९१ ॥ व्यासउवाच ॥ एवमुक्त्वातु तंविप्राः सदेवो भक्तवत्सलः ॥ दुर्विज्ञेयगति र्विष्णुस्त त्रैवान्तरधीयत ॥ १९२ ॥ गतेतस्मिन्मुनिश्रेष्ठाः कण्डुः संहृष्टमान सः ॥ सर्वान्कामान्परित्यज्य सुस्थचित्तो जितेन्द्रियः ॥ १९३ ॥ सर्वेन्द्रियाणि संयम्य निर्ममो निरहंकृतः ॥ एकाग्रमानसः सम्यक् ध्यात्वा तंपुरुषोत्तमं ॥ १९४ ॥ निर्लेपं निर्गुणं शान्तं सत्तामात्रंव्य वस्थितं ॥ अवाप परमं मोक्षं सुराणामपि दुर्लभम् ॥ १९५ ॥ यः पठेच्छृणुया द्वापि कथां कण्डो र्मनोहरां ॥ विमुक्तः सर्वपापेभ्यः स्वर्गलोकं सगच्छति ॥ १९६ ॥ एवंमया मुनिश्रेष्ठाः कर्मभूमि रुदा हृता ॥ मोक्षक्षेत्रञ्च परमं देवञ्च पुरुषोत्तमं ॥ १९७ ॥ येपश्यन्ति विभुं स्तुवन्ति वरदं ध्यायन्ति मुक्तिप्रदं भक्त्या श्रीपुरुषोत्तमाख्यम जरं संसारदुःखापहं ॥ तेभुक्त्वा मनुजेन्द्रभोगशयनाः स्वर्गेषु दिव्यं सुखं पश्चाद्यान्ति समस्तदोषरहिताः स्थानं हरे रव्ययं ॥ १९८ ॥

इत्यादि ब्राह्मेपुराणे व्यासर्षिसम्वादे भूखण्डवर्णने कण्डो रुपाख्यानं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

—०—

लोमहर्षणउवाच ॥ व्यासस्य वचनं श्रुत्वा मुनयः संयतेन्द्रियाः ॥ प्रीताबभूवुः संहृष्टा विस्मिताश्च पुनःपुनः ॥ १ ॥ मुनयऊचुः ॥ अहो भारतवर्षस्य त्वया संकीर्त्तिता गुणाः ॥ तद्वच्छ्री पुरुषाख्यस्य क्षेत्रस्य पुरुषोत्तम ॥ २ ॥ विस्मयो नाभवत्कस्य श्रुत्वा माहात्म्य मु

त्तमं ॥ पुराणाख्यस्य चैतस्य प्रीतिश्च वदतांवर ॥ ३ ॥ चिरात्प्रभृति
चास्माकं संशयो हृदि वर्त्तते ॥ त्वद्दृते संशयस्यास्य छेत्ता नान्योऽस्ति
भूतले ॥ ४ ॥ उत्पत्तिं बलदेवस्य कृष्णस्य च महीतले ॥ सुभद्रायाश्च
कात्स्न्येन प्रच्छामस्त्वां महामुने ॥ ५ ॥ किमर्थं तौ समुत्पन्नौ कृ
ष्णसंकर्षणावुभौ ॥ वसुदेवगृहे वीरौ सा च तत्रगृहे मुने ॥ ६ ॥
निःसारे मर्त्यलोकेऽस्मिन् दुःखप्राये ऽतिचञ्चले ॥ जलवुद्‌बुदसंकाशे
भैरवे लोमहर्षणे ॥ ७ ॥ विण्मूत्रपिच्छलं कष्टं संकटं दुःखदायकं ॥
कथं घोरतरं तेषां गर्भवास मरोचत ॥ ८ ॥ यानि कर्म्माणि च
कृत्ते समुत्पन्ना महीतले ॥ विस्तरेण मुने तानि ब्रूहिनो वदतां
वर ॥ ९ ॥ वदस्व चरितं तेषा मद्भुतं चातिमानुषं ॥ सकथं भग
वान्विष्णुः सुरेशः सुरसत्तमः ॥ १० ॥ वसुदेवगृहे धीमान् वासु
देव त्वमागतः ॥ अमरैरावृतं पुण्यं पुण्यकृद्भि रलंकृतं ॥ देवलोकं
समुत्सृज्य मर्त्यलोक मिहागतः ॥ ११ ॥ देव मानुषयो र्नेता
द्यौर्भुवः प्रभवो विभुः ॥ किमर्थं दिव्यमात्मानं मानुषे संनियोजय
त् ॥ १२ ॥ यश्चक्रं वर्त्तयत्येको मानुषाणा मनामयः ॥ मानुष्ये स
कथंबुद्धिं चक्रे चक्रगदाधरः ॥ १३ ॥ गोपायनं यः कुरुते जगतः
सार्व्वलौकिकं ॥ सकथं गांगतो विष्णु र्गोपत्व मकरोत्प्रभुः ॥ १४ ॥
महाभूतानि भूतात्मा योदधार चकार च ॥ श्रीगर्भः सकथं गर्भे
स्त्रियाभूचरयाधृतः ॥ १५ ॥ येन लोकान् क्रमैर्जित्वा त्रिभिर्वै त्रि
दशेसमा ॥ स्थापिता जगतोमार्गा स्त्रिवर्गप्रवरा स्त्रयः ॥ १६ ॥

योन्तकाले जगत्पीत्वा कृत्वा तोयमयं वपुः ॥ लोकमेकार्णवं चक्रे
दृश्यते नच वर्त्मना ॥ १७ ॥ यःपुराणे पुराणात्मा वाराहं रूपमा
स्थितः ॥ विषाणाग्रेण वसुधा मुज्जहारा रिसूदनः ॥ १८ ॥ यःपु
रा पुरुहूतार्थे त्रैलोक्यमिद मव्ययं ॥ ददौ जित्वा वसुमतीं सुरा
णां सुरसत्तमः ॥ १९ ॥ येन सिंहवपुः कृत्वा द्विधाकृत्वा ततःपुनः ॥
पूर्व्वदैत्यो महावीर्य्यो हिरण्यकशिपु र्हतः ॥ २० ॥ यःपुरा ज्वल
नोभूत्वा और्व्वः सम्वर्त्तको विभुः ॥ पातालस्थोऽर्णवगतं पपौ तो
यमयं हविः ॥ २१ ॥ सहस्रचरणं ब्रह्म सहस्रांशुं सहस्रदं ॥ सह
स्रशिरसं देवं यमाहुर्वै युगेयुगे ॥ २२ नाभ्यारण्यां समुत्पन्नं यस्य
पैतामहं गृहं ॥ एकार्णवगते लोके तत्पकाञ्चनपङ्कजं ॥ २३ ॥ ये
नते निहता दैत्याः संग्रामे तारकामये ॥ सर्व्वदेवमयं कृत्वा सर्वा
युधधरंवपुः ॥ गरुडस्थेन चोत्सिक्तः कालनेमि र्निपातितः ॥ २४ ॥
उत्तरान्ते समुद्रस्य चीरोदस्या म्रतोदधेः ॥ यःशेते शाश्वतंयोग
मास्थाय तिमिरं महत् ॥ २५ ॥ सुरारणीगर्भ मधत्त दिव्यं तपः
प्रकर्षा ददिनिःपुराणां ॥ शक्र ञ्च योदैत्यगणावरुद्धं गर्भावधानेन
कृतं चकार ॥ २६ ॥ पदानियो योगमयानि कृत्वा चकार दैत्यान्
सलिलाशयस्थान् ॥ कृत्वाच देवं त्रिदिवस्य देवं चक्रे सुरेशंपुरुहू
तमेनं ॥ २७ ॥ गार्हपत्येन विधिना अन्वाहार्य्येण कर्म्मणा ॥ अ
ग्निमाहवनीय ञ्च वेदीं दीक्षां समित्स्रुवम् ॥ २८ ॥ प्रोक्षणीयं
क्रतु ञ्चैव आवभृथ्यं तथैव च ॥ पुराणिन्नीणि यश्चक्रे हव्यभागं द

दातिवै ॥ २९ ॥ हव्यादांश्च सुरां श्चक्रे क्रव्यादांश्च पितृृन पि ॥ भागार्थं यज्ञविधिना योजये यज्ञकर्म्मणि ॥ ३० ॥ पात्राणि दक्षि णां दीक्षां चरूं श्चोलूखलानि च ॥ यूपान् समित्स्रुवंसोमं पवि त्रान् परिधीनपि ॥ ३१ ॥ यज्ञियानि च द्रव्याणि यज्ञांश्च सचया नलान् ॥ सदस्यान् यजमानांश्च मेधादीं श्च क्रतूत्तमान् ॥ ३२ ॥ विवभाज पुरायस्तु पारमेष्ट्येन कर्मणा ॥ युगानुरूपं यःकृत्वा लो कानुपरिक्रमात् ॥ ३३ ॥ क्षणा निमेषा काष्टाश्च कलास्त्रैकाल्यमे व च ॥ मुहूर्त्ता स्तिथयो मासा दिनं सम्वत्सरं तथा ॥ ३४ ॥ ऋत वः कालयोगाश्च प्रमाणं विविधं न्टषु ॥ आयुः क्षेत्राण्युपचया लक्ष णं रूपसौष्टवः ॥ ३५ ॥ त्रयोलोका स्त्रयोदेवा स्त्रैविध्यं पावका स्त्र यः ॥ त्रैकाल्यं त्रीणिकर्माणि त्रयोवर्णा स्त्रयोगुणाः ॥ ३६ ॥ सृष्टा लोकाः पुरासर्वे येनानन्तेन कर्मणा ॥ सर्वभूतगुणाः सृष्टाः सर्वभूत गुणात्मना ॥ ३७ ॥ न्टणा मिन्द्रियपूर्वेण योगेन रमते चयः ॥ ग तागताभ्यां योनेता सएव विधिरीश्वरः ॥ ३८ ॥ योगति र्धर्मयुक्ता ना मगतिः पापकर्मणां ॥ चातुर्वर्ण्यस्य प्रभव श्चातुर्वर्ण्यस्य रक्षि ता ॥ ३९ ॥ चातुर्वेदस्य योवेत्ता चातुराश्रम्यसंश्रयः ॥ दिगन्तर नभो भूमि र्वायु र्वाथ विभावसुः ॥ ४० ॥ चन्द्रसूर्य्यमयं ज्योति र्युगेशः क्षणदाचरः ॥ यःपरं श्रूयते ज्योति र्यःपरं श्रूयते त पः ॥ ४१ ॥ यस्परं प्राज्ञ रपरं यःपरं परमात्मवान् ॥ आदित्या नान्तु योदेवो यश्च दैत्यान्तको विभुः ॥ ४२ ॥ युगान्ते ष्वन्त कोयश्च

यच्च लोकान्तकान्तकः ॥ सेतुर्यो लोकसेतूनां मेध्योयो मेध्यकर्म्मणाम् ॥ ४३ ॥ वेद्योयो वेदविदुषां प्रभुर्यः प्रभवात्मनां ॥ सोमभूतस्तु सौम्याना मग्निभूतोग्निवर्चसां ॥ ४४ ॥ यःशक्राणा मीशभूत स्तपो भूत स्तपस्विनां ॥ विनयोनयवृत्तानां तेज स्तेजस्विनामपि ॥ ४५ ॥ विग्रहो विग्रहाणांयो गतिर्गतिमतामपि ॥ आकाशप्रभवो वायुर्वायुप्राणो हुताशनः ॥ देवाहुताशनप्राणाः प्राणोग्नेर्मधुसूदनः ॥ ४६ ॥ रसात्तुशोणितं भवति शोणिता न्मांसउच्यते ॥ मांसात्तु मेदसांजन्म मेदसोस्थि निरुच्यते ॥ ४७ ॥ अस्थ्ना मज्जासंभवति मज्जातः शुक्रसम्भवः ॥ शुक्रा द्गर्भःसमभव द्रसमूलेन कर्मणा ॥ ४८ ॥ तत्र यःप्रथमो भागः ससौम्यो राशिरुच्यते ॥ गर्भो ष्मसम्भवो ज्ञेयो द्वितीयो राशि रुच्यते ॥ ४९ ॥ शुक्रं सोमात्मकं विद्या दार्त्तवं पावकात्मकं ॥ भागोरसान्वग स्त्वेषां वीर्य्यं च शशिपावकौ ॥ ५० ॥ कफवर्गे भवेच्छुक्रं पित्तवर्गे च शोणितं ॥ कफस्य हृदयं स्थानं नाभ्यांपित्तं प्रतिष्ठितम् ॥ ५१ ॥ देहस्यमध्ये हृदयं स्थानं तन्मनसः स्मृतं ॥ नाभिकोष्ठान्तरं स्थानं तत्रदेवो हुताशनः ॥ ५२ ॥ मनः प्रजापतिर्ज्ञेयः कफः सोमो विभाव्यते ॥ पित्तमग्निः स्मृतं त्वेव मग्नीषोमात्मकं जगत् ॥ ५३ ॥ एवंप्रवर्त्तिते गर्भे वर्द्धितेम्बुदसन्निभे ॥ वायुः प्रवेशनं चक्रे संगतः परमात्मना ॥ ५४ ॥ सपञ्चधा शरीरस्थो भिद्यते वर्द्धते पुनः ॥ प्राणापानौ समानश्च उदानोव्यान एवच ॥ ५५ ॥ प्राणोस्य परमात्मानं वर्द्धयन् परिवर्त्तते ॥ अपानः पश्चिमांकाय

मुदानोद्धं शरीरजः ॥ ५६ ॥ व्यानो व्यायम्यते येन समानः सन्नि
वर्त्तते ॥ भूतावाप्ति स्ततस्तस्य जायतेन्द्रियगोचरे ॥ ५७ पृथिवी
वायुराकाश मापो ज्योतिश्च पञ्चमं ॥ तस्येन्द्रियनिविष्टानि स्वयं
योगं प्रचक्रिरे ॥ ५८ ॥ पार्थिवं देहमाहुस्तु प्राणात्मान ञ्च मा
रुतं ॥ छिद्राख्याकाशयोनीनि जलात् स्रावः प्रवर्त्तते ॥ ५९ ॥
ज्योति श्चक्षूंषि तेजश्च यन्ता तेषां मनः स्मृतम् ॥ ग्रामाश्च विषया
श्चैव यस्यवीर्य्यात् प्रवर्त्तिताः ॥ ६० ॥ इत्येतान् पुरुषः सर्व्वान् सृजँ
ल्लोकान् सनातनान् ॥ निधने स्मिन् कथंलोके नरत्वं विष्णुराग
तः ॥ ६१ ॥ एषनः संशयो ब्रह्म न्नेषनो विस्मयो महान् ॥ कथं ग
तिर्गतिमता मापन्नो मानुषींतनुं ॥ ६२ ॥ आश्चर्य्यं परमं विष्णु र्देव
दैत्यैश्च कथ्यते ॥ विष्णोरुत्पत्ति माश्चर्य्यं कथयस्व महामुने ॥ ६३ ॥
एतत्सर्वं मुनिश्रेष्ठ कथयस्व सुखावहं ॥ प्रख्यातबलवीर्य्यस्य विष्णो
रतुलतेजसः ॥ ६४ ॥ कर्मणा श्चर्य्यभूतस्य विष्णो स्तथ्य मिहोच्य
तां ॥ कथंसदेव देवाना मार्त्तिहा पुरुषोत्तमः ॥ ६५ ॥ सर्व्वव्यापी
जगन्नाथः सर्व्वलोकमहेश्वरः ॥ सर्गस्थित्यन्तकृ द्देवः सर्व्वलोकसु
खावहः ॥ ६६ ॥ अकर्त्ता शाश्वतोऽनन्तः क्षयवृद्धिविवर्जितः ॥ नि
र्लेपो निर्गुणः सूक्ष्मो निर्विकारो निरञ्जनः ॥ ६७ ॥ सर्वोपाधिवि
निर्मुक्तः सत्तामात्रव्यवस्थितः ॥ अविकारी विभुर्नित्यः परमात्मास
नातनः ॥ ६८ ॥ अचलो निर्मलो व्यापी नित्यतृप्तो निराश्रयः ॥
विष्णुत्वं श्रूयते यस्य हरित्व ञ्च कृतेयुगे ॥ वैकुण्ठत्व ञ्च देवेषु

कृष्णत्वं मानुषेषु च ॥ ६९ ॥ ईश्वरस्य सदैवास्य गहना कर्मयोगतिः ॥ संप्रत्यतीतं भाव्यञ्च श्रोतुमिच्छा प्रवर्त्तते ॥ ७० ॥ अव्यक्ताव्यक्तलिङ्गस्थो यएव भगवान् प्रभुः ॥ नारायणो ह्यनन्तात्मा प्रभवोऽव्यय एवच ॥ ७१ ॥ एष नारायणो भूत्वा हरिरात्मा सनातनः ॥ ब्रह्मा शक्रश्च रुद्रश्च धर्म्मः शुक्रो वृहस्पतिः ॥ ७२ ॥ प्रधानात्मा पुराह्येष ब्रह्माण मसृज त्प्रभुः ॥ सोऽसृज त्सर्व्वपुरुषान् पुराकल्पे प्रजापतीन् ॥ ७३ ॥ एवं सभगवान् विष्णुः सर्व्वलोकेश्वरेश्वरः ॥ किमर्थं मर्त्यलोके स्मिन् जातो यदुकुले हरिः ॥ ७४ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे प्रश्नाध्यायो नाम सप्ततितमः ॥ ७० ॥

—०—

व्यास उवाच ॥ नमस्कृत्वा सुरेशाय विभवे प्रभविष्णवे ॥ पुरुषाय पुराणाय शाश्वतायाव्ययाय च ॥ १ ॥ चतुर्व्यूहात्मने तस्मै निर्गुणाय गुणायच ॥ वरिष्ठाय गरिष्ठाय वरेण्यायामृतायच ॥ २ ॥ यस्माणायाखिलाङ्गाय वेदाद्यै रीरितायच ॥ यस्मादण्वतरं नास्ति यस्मान्नास्ति वृहत्तरं ॥ ३ ॥ येन विश्वमिदं व्याप्त मजेन येन संचयम् ॥ आविर्भाव तिरोभाव दृष्टादृष्टविलक्षणं ॥ ४ ॥ विदन्ति यत्सृष्टमिति तथैवाप्युपसंहृतं ॥ ब्रह्मणे चाधिदेवाय नमस्कृत्य समाधिना ॥ ५ ॥ अविकाराय शुद्धाय नित्याय परमात्मने ॥ सदैकरूपरूपाय विष्णवे सर्व्वजिष्णवे ॥ ६ ॥ नमो हिरण्यगर्भाय हरये

शंकराय च ॥ वासुदेवाय साराय सर्गस्थित्यन्तकर्मिणे ॥ ७ ॥ ए
कानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ॥ अव्यक्तव्यक्तरूपाय विष्णा
वे मुक्तिहेतवे ॥ ८ ॥ सर्गस्थितिविनाशानां जगतोस्य जगन्मयः ॥
मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥ ६ ॥ आधारभूतं विश्वस्या
प्यणीयांस मणीयसां ॥ प्रणम्य सर्व्वभूतस्य मच्युतं पुरुषोत्तमं ॥ १०॥
ज्ञानस्वरूप मत्यन्तं निर्मलं परमार्थतः ॥ तमेवार्थस्वरूपेण भ्रान्ति
दर्शनतः स्थितं ॥ ११ ॥ विष्णुं ग्रसिष्णुं विश्वस्य स्थितिसर्गे तथाप्र
भुम् ॥ अनादि जगतामीश मजमक्षय मव्ययं ॥ १२ ॥ कथयामि
यथापूर्वं दक्षाद्यै र्मुनिसत्तमैः ॥ पृष्टः प्रोवाच भगवा नब्जयोनिः पि
तामहः ॥ १३ ॥ ऋक्सामा न्युद्गिरन् वक्त्रै र्यःपुनाति जगत्त्रयम् ॥
प्रणिपत्य तथेशान मेकार्णवविनिर्गतः ॥ १४ ॥ यस्यासुरगणै र्मत्यैः
पाल्यते शासनं ध्रुवं ॥ प्रवक्ष्यामि मतंकृत्स्नं ब्रह्मणोऽव्यक्तजन्मनः ॥
येनसृष्टं समुद्दिश्य धर्माद्याः प्रकटीकृताः ॥ १५ ॥ आपोनारा इति
ख्याता मुनिभि स्तत्त्वदर्शिभिः ॥ अयनंतस्य ताःपूर्वं तेन नारायणः
स्मृतः ॥ १६ ॥ सदेवो भगवान् सर्वं व्याप्य नारायणो विभुः ॥ चतु
र्द्धावस्थितो ब्रह्मा सगुणो निर्गुण स्तथा ॥ ११ ॥ एका मूर्त्ति मनि
र्देश्यां शुक्लां पश्यन्ति तांबुधाः ॥ ज्वालामालावनद्धाङ्गीं निष्ठासा
योगिनांपरा ॥ १८॥ दूरस्था चान्तिकस्था च विज्ञेया सगुणागुणा॥
वासुदेवाभिधानोसौ निर्ममत्वेन दृश्यते ॥ १९ ॥ रूपवर्णादयस्तस्य
नभावाः कल्पिता मया ॥ आस्ते तस्य सदा शुद्धा प्रतिष्ठैव स्वरूपि

णी ॥ २० ॥ द्वितीया पृथिवीं मूर्द्ध्ना शेषाख्या धारयत्यधः ॥ ताम
सीसा समाख्याता तिर्य्यक्त्वं समुपागता ॥ २१ ॥ तृतीया कर्मकुरुते
प्रजापालन तत्परा ॥ सत्वोद्रिक्तातु साज्ञेया धर्मसंस्थानकारि
णी ॥ २२ ॥ चतुर्थी जलमध्यस्था शेते पन्नगमध्यगा ॥ रंज स्तस्य
गुणःसर्गं साकरोति सदैवहि ॥ २३ ॥ या तृतीया हरेर्मूर्त्तिः प्रजा
पालनतत्परा ॥ सातु धर्मव्यवस्थानं करोति नियता भुवि ॥ २४ ॥
प्रोद्धतानसुरान् हन्ति धर्मव्युच्छित्तिकारिणः ॥ पातिदेवा न्सतस्था
न्यान् धर्म्मरक्षापरायणान् ॥ २५ ॥ यदायदा च धर्म्मस्य ग्लानिः
समुपजायते ॥ अभ्युत्थान मधर्मस्य तदात्मानं सृजत्यसौ ॥ २६ ॥
भूत्वा पुरा वराहेण तुण्डेनापो निरस्यच ॥ एकया दंष्ट्रयोत्खाता न
लिनीव वसुन्धरा ॥ २७ ॥ कृत्वा नृसिंहरूप ञ्च हिरण्यकशिपु
र्हतः ॥ विप्रचित्तिमुखा श्चान्ये दानवा विनिपातिताः ॥ २८ ॥ वा
मनं रूपमास्थाय वलिंसंयम्य मायया ॥ त्रैलोक्यं क्रान्तवानेव विनि
र्जित्य दितेः सुतान् ॥ २९ ॥ भृगोर्वंशे समुत्पन्नो जामदग्न्यः प्रता
पवान् ॥ जघान क्षत्रियान् रामः पितुर्वधमनुस्मरन् ॥ ३० ॥ तथा
त्रितनयो भूत्वा दत्तात्रेयः प्रतापवान् ॥ जघान दानवान् पूर्वं सुरा
णां कार्य्यसिद्धये ॥ ३१ ॥ रामो दाशरथि र्भूत्वा सतु देवः प्रताप
वान् ॥ जघान रावणं संख्ये त्रैलोक्यस्य भयङ्करं ॥ ३२ ॥ यदा चै
कार्णवे सुप्तो देवदेवो जगत्पतिः ॥ सहस्रयुगपर्य्यन्तं नागपर्य्यङ्क
गोविभुः ॥ ३३ ॥ योगनिद्रां समास्थाय स्वेमहिम्नि व्यवस्थितः ॥

त्रैलोक्य मुदरे कृत्वा जगत्स्थावरजंगमं ॥ ३४ ॥ जनलोकगतैः सि
द्धैः स्तूयमानो महर्षिभिः ॥ तस्य नाभौ समुत्पन्नं पद्मं दिक्पत्रम
ण्डितम् ॥ ३५ ॥ ज्वलनार्कप्रतीकाशं शैलकेशरमण्डितं ॥ मेरुकि
ञ्जल्कसंयुक्तं गृहं पैतामहं वरं ॥ ३६ ॥ यत्र ब्रह्मा समुत्पन्नो देवदे
वश्चतुर्मुखः ॥ तदा कर्णमलोद्भूतौ दानवौ मधुकैटभौ ॥ ३७ ॥ महा
बलौ महावीर्य्यौ ब्रह्माणं हन्तुमुद्यतौ ॥ जघान तौदुराधर्षा वुत्था
य शयनाद्धरिः ॥ ३८ ॥ एवमादीं स्तथाषान्या नसंख्यातु मिहोत्स
हे ॥ अवतारो ह्यनस्येह माथुरं सांप्रतस्त्वयं ॥ ३९ ॥ इतिसा सा
त्विकी मूर्त्ति रवतारं करोतिवै ॥ प्रद्युम्नेति समाख्याता रक्षाकर्म
व्यवस्थिता ॥ ४० ॥ देवत्वे च मनुष्यत्वे तिर्य्यग्योनौ च संस्थिता ॥
गृह्णाति तत्स्वभाव ञ्च वासुदेवेच्छया सदा ॥ ददात्यभिमतान्
कामान् पूजितासा द्विजोत्तमाः ॥ ४१ ॥ एवंमया समाख्यातः कृ
तकृत्योऽपि यःप्रभुः ॥ मानुषत्वंगतोविष्णुः शृणुध्वं चोत्तरंमम ॥४२॥

इत्यादिब्राह्मे पुराणे व्यासर्षिसम्वादे चतुर्व्यूहवर्णनं नामैक सप्ततिमोऽध्यायः ॥ ७१ ॥

—०—

व्यासउवाच ॥ शृणुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः ॥
अवतारं करोत्यत्र द्विधाकृत्वात्मनस्तनुं ॥ १ ॥ साधूनां रक्षणार्थाय
धर्मसंस्थापनाय च ॥ दुष्टानां निग्रहार्थाय अन्येषाञ्च सुरद्विषां ॥
प्रजानां रक्षणार्थाय जायतेसौ युगेयुगे ॥ २ ॥ पुरा किलमही वि

प्रा भूरिभारावपीडिता ॥ जगाम धरणी मेरौ समाजे त्रिदिवौक
सां ॥ ३ ॥ सब्रह्मकान् सुरान्सर्वान् प्रणिपत्याथ मेदिनी ॥ कथया
मास तत्सर्वं खेदात्करुणभाषिणी ॥ ४ ॥ अग्निः सुवर्णस्यगुरु र्गवां
सूर्य्यः परोगुरुः ॥ ममाप्यखिललोकानां वंद्योनारायणोगुरुः ॥ ५ ॥
तत्सांप्रत मिमेदैत्याः कालनेमिपुरोगमाः ॥ मर्त्यलोकं समागम्य वा
धन्तेऽहर्न्निशं प्रजाः ॥ ६ ॥ कालनेमि र्हतो योसौ विष्णुना प्रभवि
ष्णुना ॥ उग्रसेनसुतः कंसः सम्भूतः समहासुरः ॥ ७ ॥ अरिष्टो
धेनुकः केशी प्रलम्बो नरकस्तथा ॥ सुन्दोसुर स्तथात्युग्रो वाणश्चा
पि वलेःसुतः ॥ ८ तथान्येष महावीर्य्या नृपाणां भवनेषुये ॥ समु
त्पन्ना दुरात्मान स्तान्नसंख्यातुमुत्सहे ॥ ९ ॥ अक्षौहिण्योहि वह्
ला दिव्यमूर्त्तिधृतासुराः ॥ महावलानां दृप्तानां दैत्येन्द्राणां ममो
परि ॥ १० ॥ तद्भूरिभारपीडार्त्ता नशक्नोम्यमरेश्वराः ॥ विभर्त्तुमा
त्मानमह मिति विज्ञापयामिवः ॥ ११ ॥ क्रियतां तन्महाभागा मम
भारावतारणं ॥ यथा रसातलं नाहं गच्छेय मतिविह्वला ॥ १२ ॥
व्यासउवाच ॥ इत्याकर्ण्य धरावाक्य मशेषैस्त्रिदशैःस्तृतः ॥ भुवोभा
रावतारार्थं ब्रह्मा प्राह प्रचोदितः ॥ १३ ॥ ब्रह्मोवाच ॥ यदाह वसु
धासर्वं सत्यमेत द्दिवौकसः ॥ अहं भवो भवन्तश्च सर्वं नारायणात्म
कं ॥ १४ ॥ विभूतयस्तु यास्तस्य तासामेव परस्परं ॥ आधिक्यं न्यून
ता चाद्य वाधकत्वेन वर्त्तते ॥ १५ ॥ तदागच्छत गच्छामः क्षीराब्धे
स्तटमुत्तमं ॥ तत्राराध्य हरिं तस्मै सर्वं विज्ञापयामवै ॥ १६ ॥

सर्व्वदेवैर्जगत्यर्थं ससर्वात्मा जगन्मय: ॥ स्वल्पांशेनावतीर्य्योर्व्यां धर्मं
स्य कुरुतेस्थितिं ॥ १७ ॥ व्यासउवाच ॥ इत्युक्त्वा प्रययौ तत्र सहदे
वै:पितामह: ॥ समाहितमति स्चैनं तुष्टाव गरुडध्वजं ॥ १८ ॥
ब्रह्मोवाच ॥ नमो नमस्तेस्तु सहस्रमूर्त्ते सहस्रबाहो बहुवक्त्रपाद ॥
नमो नमस्ते जगत:प्रवृत्ति विनाशसंस्थानपराप्रमेय ॥ १९ ॥ सूक्ष्मा
तिसूक्ष्मं च वृहत्प्रमाणं गरीयसा मप्यतिगौरवात्मन् ॥ प्रधानवुद्धी
न्द्रियवान् प्रधान लोकात्मकात्मन् भगवन्प्रसीद ॥ २० ॥ एषाम
हीदेवमही प्रसूतै र्महासुरै: पीडितशैलबन्धा ॥ परायणंत्वां जग
तामुपैति भारावताराथं मपारपार ॥ २१ ॥ एतेवयं वृत्ररिपु स्त
थायं नासत्यदस्रौ वरुण स्तथैष: ॥ इमेच रुद्रा वसव: ससूर्य्या स
मीरणाग्निप्रमुखा स्तथान्ये ॥ २२ ॥ सुरा: समस्ता: सुरनाथ का
र्य्यमेभिर्मया यच्च तदीश सर्व्वं ॥ आज्ञापयाज्ञां प्रतिपालयन्त स्तवैव
तिष्ठाम सदास्तदोषा: ॥ २३ ॥ व्यासउवाच ॥ एवंसंस्तूयमानस्तु
भगवान् परमेश्वर: ॥ उज्जहारात्मन: केशौ सितकृष्णौ द्विजोत्त
मा: ॥ २४ ॥ उवाच च सुरानेतौ मत्केशौ वसुधातले ॥ अवती
र्य्य भुवोभारं क्लेशहानिं करिष्यत: ॥ २५ ॥ सुराश्च सकला स्वां
शै रवतीर्य्य महीतले ॥ कुर्व्वन्तु युद्ध मुन्मत्तै: पूर्व्वोत्पन्नै र्महासु
रै: ॥ २६ ॥ तत: क्षयमशेषास्ते दैतेया धरणीतले ॥ प्रयास्यन्ति न
सन्देहो मुदक्षोभविघूर्णिता: ॥ २७ ॥ वसुदेवस्य यापत्नी देवकी
देवतोपमा ॥ तस्याय मष्टमोगर्भो मत्केशो भवितामरा: ॥ २८ ॥

अवतीर्य्य च तत्रायं कंसंघातयिता भुवि ॥ कालनेमिसमुद्भूत मि
त्युक्त्वान्तर्दधे हरिः ॥ २९ ॥ अदृश्याय ततस्तेपि प्रणिपत्य महात्मने ॥
मेरुपृष्ठं सुराजग्मु रवतेरुश्च भूतले ॥ ३० ॥ कंसाय चाष्टमो गर्भो
देवक्याधरणीधरः ॥ भविष्यतीत्याचचक्षे भगवान्नारदोमुनिः ॥ ३१ ॥
कंसोपि तदुपश्रुत्य नारदा त्कुपितोऽसुरः ॥ देवकीं वसुदेवञ्च गृहे
गुप्तावधारयत् ॥ ३२ ॥ जातंजातं च कंसाय तेनैवोक्तं यथापुरा ॥
तथैव वसुदेवोपि पुत्रमर्पितवान् द्विजाः ॥ ३३ ॥ हिरण्यकशिपोः
पुत्राः षड्गर्भाइति विश्रुताः ॥ विष्णुप्रयुक्ता सानिद्रा क्रमा द्गर्भे न्य
योजयत् ॥ ३४ ॥ योगनिद्रा महामाया वैष्णवी मोहितंयया ॥ अ
विद्यया जगत्सर्वं तामाह भगवान् हरिः ॥ विष्णुरुवाच ॥ गच्छनि
द्रे ममादेशात् पातालतलसंश्रयान् ॥ एकैकस्त्वेन षड्गर्भान् देवकीज
ठरंनय ॥ ३६ ॥ हतेषुतेषु कंसेन शेषाख्यांश स्ततोऽनघे ॥ अंशांशे
नोदरे तस्याः सप्तमः संभविष्यति ॥ ३७ ॥ गोकुले वसुदेवस्य भा
र्य्यान्यारोहिणी स्थिता ॥ तस्याः सम्भूतिसमये देविनेय स्त्वयोद
रम् ॥ ३८ ॥ सप्तमो भोजराजस्य भयाद्रोधोपरोधतः ॥ देवक्याः
पतितोगर्भ इतिलोको वदिष्यति ॥ ३९ ॥ गर्भसंकर्षणा त्सोथ लो
केसंकर्षणेतिवै ॥ संज्ञामवाप्स्यते वीरः श्वेताद्रिशिखरोपमः ॥ ४० ॥
ततोऽहंसंभविष्यामि देवकीजठरे शुभे ॥ गर्भं त्वया यशोदाया गन्त
व्यमविलम्बितम् ॥ ४१ ॥ प्रावृट्काले च नभसि कृष्णाष्टम्यां महा
निशि ॥ उत्पत्स्यामि नवम्या च्च प्रसूतिं त्वमवाप्स्यसि ॥ ४२ ॥

यशोदाशयने मान्तु देवक्या स्त्वामनिन्द्रिते ॥ मच्छक्तिप्रेरित मति वसुदेवो नयिष्यति ॥ ४३ ॥ कंसश्च त्वामुपादाय देवि शैलशिला तले ॥ प्रक्षेप्स्यत्यन्तरिक्षंत्वं स्थानञ्च समवाप्स्यसि ॥ ४४ ॥ तत स्त्वां शतक्रतुश्शक्रः प्रणम्य ममगौरवात् ॥ प्रणिपाते नतशिरा भगि नीत्वे ग्रहीष्यति ॥ ४५ ॥ ततः शुंभनिशुंभादीन् हत्वा दैत्यान् स हस्रशः ॥ स्थाने रनेकैः पृथिवी मशेषां मण्डयिष्यसि ॥ ४६ ॥ त्वं भूतिः सन्नतिः कीर्त्तिः कान्तिर्वै पृथिवी धृतिः ॥ लज्जापुष्टि रुमा याच काचिदन्या त्वमेवसा ॥ ४७ ॥ येत्वा मार्य्येति दुर्गेति वेदग र्भाम्बिकेति च ॥ भद्रेति भद्रकालीति क्षेम्या क्षेमकरीतिच ॥ ४८ ॥ प्रात श्चैवापराह्णे च स्तोष्यन्त्या नम्रमूर्त्तयः ॥ तेषांहि प्रार्थितं सर्वं मत्प्रसादा द्भविष्यति ॥ ४९ ॥ सुरामांसोपहारै श्च भक्ष्यभोज्यै श्च पूजिता ॥ नृणा मशेषकामांस्त्वं प्रसन्ना पूरयिष्यसि ॥ ५० ॥ ते सर्वे सर्वदा भद्रे मत्प्रसादादसंशयः ॥ असंदिग्धा भविष्यन्ति गच्छ देवि यथोदितं ॥ ५१ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे अंशावतारवर्णनं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

—०—

व्यासउवाच ॥ यथोक्तं साजगद्धात्री देवदेवेनवैपुरा ॥ षड्ग र्भं गर्भसंन्यासं चक्रे चान्यस्य कर्षणं ॥ १ ॥ सप्तमे रोहिणीं प्राप्ते ग र्भे ततोहरिः ॥ लोकत्रयोपकाराय देवक्यां प्रविवेशवै ॥ २ ॥

योगनिद्रा यशोदायां तस्मिन्नेव ततोदिने ॥ संभूता जठरे तद्व य
थोक्तं परमेष्टिना ॥ ३ ॥ ततो ग्रहगणः सम्यक् प्रचचार दिवि दि
शः ॥ विष्णोरंशे महीं याते ऋतवोप्यभवन् शुभाः ॥ ४ ॥ नसेहे
देवकीं द्रष्टुं कश्चिदप्यति तेजसा ॥ जाज्वल्यमानां तां दृष्ट्वा मनांसि
क्षोभ माययुः ॥ ५ ॥ अदृष्टां पुरुषैः स्त्रीभि र्देवकीं देवतागणाः॥
बिभ्राणां वपुषा विष्णुं तुष्टुवु स्तामहर्न्निशं ॥ ६ ॥ त्वंस्वाहा त्वंस्व
धा विद्या त्वंसुधा ज्योति रेवच ॥ त्वन्सर्व्वलोकरक्षार्थं मवतीर्णा
महीतले ॥ ७ ॥ प्रसीद देवि सर्व्वस्य जगतस्तु शुभंकुरु ॥ प्रीत्य
र्थं धारयेशानं धृतं येनाखिलं जगत् ॥ ८ ॥ व्यासउवाच ॥ एवं
संस्तूयमानासा देवदेव मधारयत् ॥ गर्भेण पुण्डरीकाक्षं जगतां
त्राणकारकं ॥ ९ ॥ तत्राखिलजगत्पद्म वोधयाच्युतभानुना ॥ देव
कीपूर्वसंध्याया माविर्भूता महात्मना ॥ १० ॥ मध्यरात्रे ऽखिलाधा
रे जायमाने जनार्द्दने ॥ मन्दं जगर्ज्जु र्जलदा पुष्पवृष्टिमुचो दि
शः ॥ ११ ॥ फुल्लेन्दीवरपत्राभं चतुर्बाहुं समुदीक्ष्यतं ॥ श्रीवत्सवक्ष
संजातं तुष्टावानकदुंदुभिः ॥ १२ ॥ अभीष्टपर्वतं वाग्भिः प्रसन्ना
भिर्महामतिः ॥ विज्ञापयामासतदा कंसाद्भीतो द्विजोत्तमाः॥ १३॥
वसुदेव उवाच ॥ ज्ञातोसि देवदेवेश शंखचक्रगदाधर ॥ दिव्यंरूप
मिदन्देव प्रसादेनोपसंहर ॥ १४ ॥ अद्यैव देव कंसोयं कुरुते मम
यातनां ॥ अवतीर्णइति ज्ञात्वा त्वामस्मि न्ममन्दिरे ॥ १५ ॥
देवक्युवाच ॥ योऽनन्तरूपो ऽखिलविश्वरूपो गर्भेपि लोकान् वपुषा

विभर्त्ति॥प्रसीदतामेष सदेवदेवः स्वमायया विष्कृतवालरूपः॥१६॥
उपसंहर सर्वात्मन् रूपमेत च्चतुर्भुजं ॥ जानातु मावतारन्ते कंसो
यंदितिजान्तक ॥ १७ ॥ भगवानुवाच ॥ स्तुतोहं यत्त्वयापूर्वं पुत्रा
र्थिन्या तदद्यते ॥ सफलं देवि संयातं जातोहं यत्तवोदरात्॥१८॥
व्यास उवाच ॥ इत्युक्त्वा भगवांस्तूष्णीं वभूव मुनिसत्तमाः ॥ वसु
देवोपि तंरात्रावादाय प्रययौवहिः ॥ १९ ॥ मोहिता श्चाभवं स्तत्र
रक्षिणो योगनिद्रया ॥ मथुराद्वारपालाश्च व्रजत्यानकदुंदुभौ॥२०
वर्षतां जलदाना ञ्च तत्तोयमुल्वणं निशि ॥ संछाद्य तंययौ शेषः
फणै रानकदुंदुभिं ॥ २१ ॥ यमुना चातिगम्भीरा नानावर्त्तशता
कुला ॥ वसुदेवो वहन्विष्णुं जानुमात्रवहो ययौ ॥ २२ ॥ कंसस्य
करमादाय तत्रैवाभ्यागतां स्तटे ॥ नन्दादीन् गोपवृद्धांस्तु यमुना
यां ददर्शसः ॥ २३ ॥ तस्मिन्काले यशोदापि मोहिता योगनिद्र
या ॥ तामेव कन्यां मुनयः प्रसूता मोहितेजने ॥ २४ ॥ वसुदेवो
पिविन्यस्य वालमादाय दारिकां ॥ यशोदाशयने तूर्णं माजगामा
मितद्युतिः ॥ २५ ॥ ददृशे चाविवुद्धा च यशोदा जातमात्मजं ॥
नीलोत्पलदलश्यामं ततोत्यर्थं मुदंययौ ॥ २६ ॥ आदाय वसुदेवो
पि दारिकां निजमन्दिरं ॥ देवकीशयने न्यस्य यथा पूर्व्वमतिष्ठ
त ॥ २७ ॥ ततोवालध्वनिं श्रुत्वा रक्षिणः सहसोत्थिताः ॥ कंसा
यावेदयामासु र्देवकीप्रसवं द्विजाः ॥ २८ ॥ कंसस्तूर्णमुपेत्यैनां ततो
जग्राह वालिकां ॥ मुञ्चमुञ्चेति देवक्या सन्नकण्ठ्या निवारि

तः॥ २९॥ चिक्षेप च शिलापृष्ठे सा क्षिप्ता वियतिस्थिता॥ अवाप रूपञ्च महत् सायुधाष्टमहाभुजं॥ ३०॥ प्रजहास तथा चोच्चैः कंसञ्च रुषिता ब्रवीत्॥ किम्मया क्षिप्तया कंस जातोऽन्यस्त्वां वधिष्यति॥ ३१॥ सर्व्वस्वभूतो देवाना मासीन्मृत्युः पुरा सते॥ तदेतत्संप्रधार्य्याशु क्रियतां हितमात्मनः॥ ३२॥ इत्युक्त्वा प्रययौ देवी दिव्यस्रग्गन्धभूषणा॥ पश्यतो भोजराजस्य स्तुता सिद्धै र्विहायसा॥ ३३॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे कृष्णोत्पत्तिर्नाम त्रिसप्ततितमोऽध्यायः॥ ७३॥



व्यास उवाच॥ कंस स्तथोद्विग्नमनाः प्राह सर्व्वा न्महासुरान्॥ प्रलम्बकेशिप्रमुखा नाहूया सुरपुङ्गवान्॥ १॥ कंसउवाच॥ हेप्रलम्ब महाबाहो केशिधेनुकपूतने॥ अरिष्टाद्यै स्तथाचान्यैः श्रूयतां वचनं मम॥ २॥ धरावाक्येन देवैश्च प्रेषितोवा सवानुजः॥ मद्वीर्य्यतापितो वीरा नत्वेता न्गणयाम्यहं॥ ३॥ मांहन्तु ममरैर्यत्नःकृतः किल दुरात्मभिः॥ मद्वीर्य्यतापितै र्वीरान् नत्वेतान् गणयाम्यहं॥ ४॥ अमरेषु ममावज्ञा जायते दैत्यपुङ्गवाः॥ हास्यम्मे जायते वीरा स्तेषुयत्नपरेष्वपि॥ ५॥ तथापि खलु दुष्टानां तेषामत्यधिकं मया॥ अपकाराय दैत्येन्द्रा यतनीयं दुरात्मनां॥ ६॥ उत्पन्न श्चापि मृत्युर्मे भूतपूर्व्वस्य तत्किल॥ इत्येत द्बालिका प्राह

देवकीगर्भसम्भवा ॥ ७ ॥ तस्मा द्बालेषु परमो यत्नः कार्य्यो महीत
ले ॥ यत्रोद्रिक्तं वलंवाले सहन्तव्यः प्रयत्नतः ॥ ८ ॥ इत्याज्ञाप्यासु
रान् कंसः प्रविश्यात्मगृहं तदा ॥ मुमोच वसुदेवञ्च देवकीं च नि
रोधतः ॥ ९ ॥ कंस उवाच ॥ युवयोः पातिता गर्भा वृथैवैते मयाधु
ना ॥ कोप्यन्य एव नाशाय वालो ममसमुद्गतः ॥ १० ॥ तदलं परि
तापेन नूनं तद्भाविलोपिते ॥ अर्भका युवयोः कोपा दायुषान्ते वि
नाशिताः ॥ ११ ॥ इत्याश्वास्य विमुच्यैव कंस स्तौपरितोष्य च ॥
अन्तर्गृहं द्विजश्रेष्टाः प्रविवेश पुनः स्वकम् ॥ १२ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे श्रीकृष्णवालचरिते
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

—०—

व्यास उवाच ॥ विमुक्तो वसुदेवोपि नन्दस्य शकटंगतः ॥ प्र
हृष्टं दृष्टवान्नन्दं पुत्रोजातो ममेतिवै ॥ १ ॥ वसुदेवोपि तंप्राह दि
ष्ट्यादिष्ट्येतिसादरं ॥ वार्द्धकेपि समुत्पन्न स्तनयो यत्तवाधुना ॥ २ ॥
दत्तोहि वार्षिकः सर्वो भवद्भि र्नृपतेः करः ॥ यदर्थमागत स्तस्मा
न्नात्रस्थेयं महात्मना ॥ ३ ॥ यदर्थमागताः कार्य्यं तन्निष्पन्नं कि
मास्यते ॥ भवद्भि र्गम्यताञ्चैव तच्छीघ्रं निजगोकुलं ॥ ४ ॥ ममापि
वालक स्तत्र रोहिणी प्रसवो हिसः ॥ संरक्षणीयो भवता यथायंत
नयो द्विजाः ॥ ५ ॥ इत्युक्ताः प्रययु र्गोपा नन्दगोपपुरोगमाः ॥ श
कटारोपितै र्भांडैः करंदत्वा महावलाः ॥ ६ ॥ वसतां गोकुले तेषां

पूतना वालघातिनी ॥ सुप्तं कृष्णमुपादाय रात्रौच प्रददौस्तनं ॥७॥
यस्मै यस्मै तदारात्रौ पूतना संप्रयच्छति ॥ तस्य तस्य चणेनांगं वा
लकस्योपहन्यते ॥ ८ ॥ कृष्णस्तस्याः स्तनंगाढं कराभ्या मतिपीडि
तं ॥ गृहीत्वा प्राणसहितं पपौ क्रोधसमन्वितः ॥ ९ ॥ साविमुक्त
महारावा विच्छिन्नस्नायुवन्धना ॥ पपात पूतना भूमौ म्रियमाणा
तिभीषणा ॥ १० ॥ तन्नादं श्रुतिसंत्रास विवुद्धास्ते ब्रजौकसः ॥ द
दृशुः पूतनोत्संगे कृष्णं तांश्च निपातितां ॥ ११ ॥ आदाय कृष्णं
संत्रस्ता यशोदाच ततोद्विजाः ॥ गोपुच्छंभ्रामणानाथा वालदोष म
पाकरोत् ॥ १२ ॥ गोपुरीष मुपादाय नन्दगोपोपि मस्तके ॥ कृ
ष्णस्य प्रददौ रक्षां कुर्व न्निद मुदीरयत् ॥ १३ ॥ नन्द उवाच ॥
रचतु त्वामशेषाणां भूतानां प्रभवो हरिः ॥ यस्य नाभिसमुद्भूतात्
पङ्कजा दभव ज्जगत् ॥ १४ ॥ येन दंष्ट्राग्रनिर्धूता धारयत्यवनी ज
गत् ॥ वराहरूपधृ ग्देवः सत्वां रक्षतु केशवः ॥ १५ ॥ नखांकुरवि
निर्भिन्नवैरिवक्षःस्थलो विभुः ॥ नृसिंहरूपी सर्व्वत्र सत्वां रक्षतु के
शवः ॥ १६ ॥ वामनो रक्षतुसदा भवन्तं यःक्षणादभूत् ॥ त्रिविक्रमः
क्रमाक्रान्त त्रैलोक्यः स्फुरदायुधः ॥ १७ ॥ शिरस्ते पातु गोविन्दः
कण्ठंतेऽवतु केशवः ॥ गुह्यन्तेजठरं विष्णुर्जंघापादौ जनार्द्दनः ॥१८॥
मुखंवाहू प्रवाहू तो मनःसर्वेन्द्रियाणि च ॥ रक्षत्वव्याहतैश्वर्यं स्त
वनारायणोऽव्ययः ॥ १९ ॥ त्वांदिक्षु पातु गोविन्दो विदिक्षु मधु
सूदनः ॥ हृषीकेश स्त्वद्गुदरं रक्षतुत्वां महीधरः ॥ २० ॥ एवं कृत

स्वस्त्ययनो नन्दगोपेन बालकः ॥ शायितः शकटस्याधो बालः पर्य्यङ्किकातले ॥ २१ ॥ तेच गोपा महद्दृष्ट्वा पूतनायाःकलेवरं ॥ मृतायाः परमं त्रासं विस्मयञ्च परं ययुः ॥ २२ ॥ व्यास उवाच ॥ कदाचि च्छकटस्याधः शयानो मधुसूदनः ॥ चिक्षेप चरणावूर्द्ध्वं स्तन्यार्थी प्ररुरोद च ॥ २३ ॥ तस्य पादप्रहारेण शकटं परिवर्त्तितं ॥ विध्वस्त भाण्डकुम्भं तद्विपरीतं पपातवै ॥ २४ ॥ ततो हाहाकृतः सर्वं गोपगोपीजनो द्विजाः ॥ आजगामाथ ददृशे बाल मुत्तान शायिनं ॥ २५ ॥ गोपाः केनेति केनेदं शकटं परिवर्त्तितं ॥ तत्रैवं बालकाः प्रोचु र्बालेनानेन पातितं ॥ २६ ॥ रुदता दृष्ट मस्माभिः पादविक्षेपताडितं ॥ शकटं परिवृत्तस्वै नैतदन्यस्य चेष्टितं ॥ २७ ॥ ततः पुनरतीवासन् गोपा विस्मितचेतसः ॥ नन्दगोपोपि जग्राह बालमत्यन्तविस्मितः ॥ २८ ॥ यशोदा शकटारूढभग्नभाण्डकपालिकं ॥ शकटं चार्च्चयामास दधिपुष्पफलाक्षतैः ॥ २९ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे पूतनाशकटवधोनाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

—०—

व्यास उवाच ॥ गर्ग श्च गोकुले तत्र वसुदेवप्रचोदितः ॥ प्रच्छन्नएव गोपानां संस्कार मकरो त्तयोः ॥ १ ॥ ज्येष्ठञ्च राम मित्याह कृष्ण ञ्चैव तथापरं ॥ गर्गो मतिमतां श्रेष्ठो नामकुर्व न्महामतिः ॥ २ ॥ अल्पेनैवहि कालेन निर्यातौतौ महाव्रजे ॥ घृष्टजानु

करौ विप्रा वभूव तुरभावपि ॥ ३ ॥ करीषभस्मादिग्धांगौ भ्रममा
णावित स्ततः ॥ ननिवारयितु मुत्सेहे यशोदातौ नरोहिणी ॥ ४ ॥
गोवाटमध्ये क्रीडन्तौ वत्सवाटगतौपुनः ॥ तदहं जीतगोवत्स पुच्छा
कर्षणतत्परौ ॥ ५ ॥ यदा यशोदा तौवाला वेकस्थानचरा वुभौ ॥
शशाकनो वारयितुं क्रीडन्ता वतिचञ्चलौ ॥ ६ ॥ दाम्नावध्वा तदा
मध्ये तिर्य्यंग्गतउलूखले ॥ कृष्णमक्लिष्टकर्म्माणं माह चेद ममर्षि
ता ॥ ७ ॥ यदिशक्नोषि गच्छत्व मतिचञ्चलचेष्टित ॥ इत्युक्त्वा च
निजंकर्म्म साचकार कुटुंविनी ॥ ८ ॥ व्यग्रायाय मथतस्यांस कर्षमा
णउलूखलं ॥ जमलार्जुनमध्येन जगाम कमलेक्षणः ॥ ९ ॥ कर्षता
वृक्षयोर्मध्ये तिर्य्यग्गतमुलूखलं ॥ भग्नो विटपशाखाग्रौ तेन तौ
जमलार्जुनौ ॥ १० ॥ ततः कटकटाशब्दसमाकर्णनकातरः ॥ आज
गाम व्रजजनो ददृशे च महाद्रुमौ ॥ ११ ॥ भग्नौ वृक्षौ निपतितौ
भग्नशाखौ महीतले ॥ तदोद्गताल्पदंतांशु स्मितहासं च वालक
म् ॥ १२ ॥ तयोर्मध्यगतं वद्धं दाम्नागाढं तथोदरे ॥ ततश्च दामो
दरता माययौ दामवन्धनात् ॥ १३ ॥ गोपवृद्धा स्ततः सर्वे नन्दगो
पपुरोगमाः ॥ मन्त्रयामासु रुद्विग्ना महोत्पाताय भीरवः ॥ १४ ॥
स्थानेनेह ततःकार्य्यं व्रजामोन्य न्महावनं ॥ उत्पाता वहवो ह्यत्र
दृश्यन्ते नाशहेतवः ॥ १५ ॥ पूतनाया विनाशश्च शकटस्य विपर्य्य
यः ॥ विना वातादिदोषेण द्रुमयोः पतनं तथा ॥ १६ ॥ वृन्दावन
मितःस्थाना त्तस्मा द्गच्छाम माचिरं ॥ यावद्भौमो महोत्पात दोषो

नाभिभवे द्रुजे ॥ १७ ॥ इतिकृत्वा मतिं सर्वे गमने तेव्रजौकसः ॥
ततःचणेन ययुः शकटै र्गोधनै स्तथा ॥ यूथशो वत्सपाला स्च का
लयन्तो व्रजौकसः ॥ १८ ॥ द्रव्यावयवनिर्धूतं चणमात्रेण तत्तदा ॥
काककाकीसमाकीर्णं व्रजस्थानमभू द्दिजाः ॥ १९ ॥ वृन्दावनं भग
वता कृष्णेनाक्लिष्टकर्म्मणा ॥ शुभेन मनसा ध्यातं गवांवृद्धि मभीप्स
ता ॥ २० ॥ ततस्तत्रातिरुचेपि घर्मकाले द्विजोत्तमाः ॥ प्रावृट्का
लइवाभूच्च नवसस्यं समन्ततः ॥ २१ ॥ मथपाश्वासितः सर्वो व्रजो वृ
न्दावनेगतः ॥ शकटावाटपर्य्यन्त चन्द्रार्द्धाकारसंस्थितः ॥ २२ ॥ व
त्सपालौ च संवृत्तौ रामदामोदरौ तदा ॥ तत्रस्थानस्थिते गोष्ठे चे
रतु र्बाललीलया ॥ २३ ॥ वर्हिपुच्छकृतापीडौ वन्यपुष्पावतंसकौ ॥
गोपवेणुकृतावाद्यौ पत्र वाद्यकृतस्वरौ ॥ २४ ॥ काकपक्षधरौ वालौ
कुमाराविव पावकौ ॥ हसन्तौच रमन्तौच चेरतु स्तन्महद्वनं ॥ २५ ॥
क्वचिद्धसन्तावन्योन्यं क्रीडमानौ तथापरैः ॥ गोपपुत्रैः समं वत्सां
श्चारयन्तौ विचेरतुः ॥ २६ ॥ कालेन गच्छता तौतु सप्तवर्षौ वभूवतुः॥
सर्वस्य जगतः पालौ वत्सपालौ महाव्रजे ॥ २७ ॥ प्रावृट्काल
स्ततोतीव मेघौघस्थगितांवरः ॥ बभूव वारिधाराभि रैक्यंकुर्वन्दि
शामिव ॥ २८ ॥ प्ररूढनवसस्याढ्या शक्रगोपस्तृता मही ॥ पृथ्वी
मारकतेवासी त्पद्मरागविभूषिता ॥ २९ ॥ नद्य उन्मार्गगामि
न्योनिम्नगांभांसि सर्वशः ॥ मनांसि दुर्विनीतानां प्राप्य लक्ष्मीं
नवामिव ॥ ३० ॥ विकाले च तथा घोषं व्रजमेत्य महावलौ ॥

गोपैः समानैः सहितौ चिक्रीडाते ऽमराविव ॥ ३१ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे श्रीकृष्णबालचरिते षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

—०—

व्यास उवाच ॥ एकदातु विनारामं कृष्णो वृन्दावनं ययौ ॥ विचचार वृतोगोपै र्वन्यपुष्पसमोज्ज्वलः ॥ १ ॥ स जगामाथ कालिन्दीं लोलकल्लोलमालिनीं ॥ तीरसंलग्नफेनौघै र्हसन्तीमिव सर्व्वतः ॥ २ ॥ तस्यां चातिमहाभीमं विषाग्निसृतवारिणं ॥ हृदंकालियनागस्य ददृशे ऽतिविभीषणं ॥ ३ ॥ विषाग्निना विसरता दग्धतीरमहातरुं ॥ वाताहताम्बुविक्षेप स्पर्शदग्धविहङ्गमं ॥ ४ ॥ भवतीवमहारौद्रं मृत्युवक्त्रमिवापरं ॥ विलोक्य चिन्तयामास भगवान् मधुसूदनः ॥ ५ ॥ अस्मिन्वसति दुष्टात्मा कालियोसौ विषायुधः ॥ यो मया निर्जित स्त्यक्त्वा दुष्टस्तिष्ठ त्यपोनिधौ ॥ ६ ॥ तेनेयं दूषिता सर्वा यमुनासागराङ्गना ॥ नानारोगै र्धनैर्वापि तृष्णार्तै रुपभुज्यते ॥ ७ ॥ तदस्य सर्पराजस्य कर्त्तव्यो निग्रहोमया ॥ नित्यात्रस्ताः सुखंयेन चरेयु र्व्रजवासिनः ॥ ८ ॥ एतदर्थं न्तृलोकेस्मि न्नवतारो मयाकृतः ॥ यदेषा मुत्पथस्थानां कार्य्या शान्ति र्दुरात्मनां ॥ ९ ॥ अधिरुह्योत्पतिष्यामि ह्रदेस्मि न्ननिलाशिनः ॥ व्यासउवाच ॥ इत्थंविचिन्त्य बध्वाच गाढं परिकरं ततः ॥ निपपात ह्रदेतत्र सर्पराजस्य वेगितः ॥ १० ॥ तेनातिपतता तत्र क्षोभितः समहाह्रदः ॥

अत्युष्णां तीरजातांस्तु तान्निषिञ्च महीरुहान् ॥ ११ ॥ तेहिदुष्ट
विषज्वाला तप्ताम्बुपतनोन्मिताः ॥ जज्वलुः पादपाः सद्यो ज्वाला
व्याप्तदिगन्तराः ॥ १२ ॥ आस्फोटयामास तदा कृष्णो नागह्रदे
भुजं ॥ तच्छब्दश्रवणा च्चाथ नागराजो ह्युपागमत् ॥ १३ ॥ आ
ताम्रनयनः कोपा द्विषज्वालाकुलैः फणैः ॥ हतो महाविषै श्चान्यै र
रगै रनिलाशिनः ॥ १४ ॥ नागपत्न्य श्च शतशो हारभारोपशो
भिताः ॥ प्रकम्पिततनुक्षेप चलत्कुण्डलकान्तयः ॥ १५ ॥ ततः प्र
वेष्टितः सर्पैः सकृष्णो भोगबन्धनं ॥ ददंशु श्चापि तेकृष्णं विषज्वा
लाविलै र्मुखैः ॥ १६ ॥ तेतत्र पतितं दृष्ट्वा नागभोगनिपीडितं ॥
गोपा स्तटमुपागम्य चुक्रुशुः शोकलालसाः ॥ १७ ॥ एषकृष्णो ग
तोमोहं मग्नोवै कालियेह्रदे ॥ भक्ष्यते सर्पराजेन तदा गच्छतमा
चिरं ॥ १८ ॥ एतच्छ्रुत्वा ततोगोपा वज्रपातोपमं वचः ॥ गोप्यश्च
त्वरिताजग्मु र्यशोदाप्रमुखा ह्रदं ॥ १९ ॥ हाहाक्वासाविति जनो
गोपीना मतिविह्वलः ॥ यशोदयासमं भ्रान्तो द्रुतं प्रस्खलितं य
यौ ॥ २० ॥ नन्दगोप श्च गोपाश्च राम श्चाद्भुतविक्रमः ॥ त्वरितं
यमुनां जग्मुः कृष्णदर्शनलालसाः ॥ २१ ॥ ददृशु श्चापि तेतत्र स
र्पराजवशंगतं ॥ निष्प्रयत्नं गतं कृष्णं सर्पभोगेन वेष्टितं ॥ २२ ॥
नन्दगोप श्च निश्चेष्टो न्यस्य पुत्रमुखे दृशं ॥ यशोदा च महाभागा
बभूव मुनिसत्तमाः ॥ २३ ॥ गोप्य श्चान्या रुरुदुत्यश्च ददृशुः शोक
कातराः ॥ प्राचुश्च केशवं प्रीत्या भयकातरमानसाः ॥ २४ ॥ स

वां यशोदयासार्द्धं विशामोऽत्र महाह्रदे ॥ नागराजस्य नोगन्तु म
साकं युज्यते ब्रज: ॥ २५ ॥ दिवस: कोविना सूर्य्यं विना चन्द्रेण
कानिशा ॥ विना वृषेण कागावो विना कृष्णेन कोव्रज: ॥ २६ ॥
विना कृतानया यामः कृष्णेनानेन गोकुलं ॥ इतिगोपीवचः श्रुत्वा
रौहिणेयो महाबलः ॥ २७ ॥ गोपांश्च त्रासविधुरान् विलोक्यस्ति
मितेक्षण: ॥ नन्दञ्च दीनमत्यर्थं न्यस्तदृष्टिं सुताननै ॥ २८ ॥ मू
र्च्छाकुलां यशोदाञ्च कृष्णमाहात्मसंज्ञया ॥ किमयं देवदेवेश भा
वोयं मानुष स्त्वया ॥ २९ ॥ व्यज्यते ऽत्यन्तमात्मानं स्वकीयं त्व
न्नवेत्सि किम् ॥ त्वमस्य जगतो नाभि रमराणा मिवाश्रय: ॥ ३० ॥
कर्त्ता हर्त्ता च पातात्वं त्रैलोक्यस्य त्रयीमय: ॥ अत्रावतीर्णयो: कृ
ष्ण गोपाएवहि बान्धवा: ॥ ३१ ॥ गोप्य श्च सीदत: कस्मा त्त्वद्बन्धूं
स्त्वमुपेक्षसे ॥ दर्शितो मानुषो भावो दर्शितं बालचापलं ॥ तदय
न्दम्यतां कृष्ण दुरात्मा दशनायुध: ॥ ३२ ॥ व्यास उवाच ॥ इति
संस्मारित: कृष्ण: स्मितभिन्नोष्ठसम्पुट: ॥ आस्फोट्य मोचयामास
स्वदेहं भोगबन्धनात् ॥ ३३ ॥ आनम्य चापि हस्ताभ्यां मुभाभ्यां
मध्यमंफणां ॥ आरुह्य भग्नशिरसः प्रणनर्त्तोरुविक्रमः ॥ ३४ ॥ व्र
णा: फणेऽभव न्तस्य कृष्णस्यांघ्रिनिकुट्टनै: ॥ यत्रोन्नतिं च कुरुते
ननामास्यतत: शिर: ॥ ३५ ॥ मूर्च्छामुपाययौ भ्रान्त्या नाग: कृ
ष्णस्य रेचकै: ॥ दण्डपात निपातेन ववाम रुधिरं बहु ॥ ३६ ॥
तन्निभग्नशिरोग्रीव मास्येभ्य: स्रुतशोणितं ॥ विलोक्य शरणं जग्मु

स्तत्पत्न्यो मधुसूदनं ॥ ३७ ॥ नागपत्न्य ऊचुः ॥ ज्ञातोसि देव
देवेश सर्वेश स्त्वमनुत्तमः ॥ परंज्योति रचिंत्यंय त्वदंशः परमेश्व
र ॥ ३८ ॥ नसमर्थाः सुराः स्तोतुं यमनन्यभवं प्रभुं ॥ स्वरूप व
र्णनं तस्य कथं योषि त्करिष्यति ॥ ३९ ॥ यस्याखिलं महीव्योमज
लाग्निपवनात्मकं ॥ ब्रह्माण्डमल्प माकाशं स्तोष्यामस्तं कथंवयं ॥ ४० ॥
ततः कुरु जगत्स्वामिन् प्रसाद मवनीं गतः ॥ प्राणां स्त्यजति ना
गोयं भर्तृभिक्षा प्रदीयतां ॥ ४१ ॥ व्यास उवाच ॥ इत्युक्ते कातरा
ङ्गश्च क्लान्तदेहोपि पन्नगः ॥ प्रसीद देवदेवेति प्राह वाक्यं शनैः श
नैः ॥ ४२ ॥ तवाष्टगुणा मैश्वर्यं नाथ स्वाभाविकं परं ॥ निरस्ता
तिशयं यस्य तस्य स्तोष्यामि किंत्वहं ॥ ४३ ॥ त्वंपरं परमस्याद्यः पर
स्त्वं तत्परात्मकं ॥ परस्मा त्परमो यस्त्वं तस्य स्तोष्यामि किंत्वह
म् ॥ ४४ ॥ यथाहं भवता सृष्टो जात्यारूपेण चेश्वर ॥ स्वभावेन च
संयुक्त स्तथेदं चेष्टितं मया ॥ ४५ ॥ यद्यन्यथा प्रवर्त्तेयं देवदेव ततो
मयि ॥ न्याय्यो दण्डनिपातस्ते तवैव वचनं यथा ॥ ४७ ॥ तथापि
च जगत्स्वामि न्दण्डं पातितवा न्मयि ॥ ससोढोयं परोदण्ड स्त्व
त्तो नान्य स्त्वमेव च ॥ ४८ ॥ हतवीर्यो हतविषो दमितोहं त्वया
च्युत ॥ जीवनं दीयतामेक माज्ञापय करोमिकिं ॥ ४९ ॥ भगवा
नुवाच ॥ नात्रस्थेयं त्वयासर्प कदाचि द्यमुनाजले ॥ सपुत्रपरिवार
स्त्वं समुद्रसलिलं व्रज ॥ ५० ॥ मत्पदानि च तेसर्प दृष्ट्वा मूर्द्धनि
सागरे ॥ गरुडः पन्नगारिपु स्त्वयिन प्रहरिष्यति ॥ ५१ ॥ व्यासउ

वाच ॥ इत्युक्त्वा सर्पराजानं मुमोच भगवान् हरिः ॥ प्रणम्य सोपि कृष्णाय जगाम पयसां निधिं ॥ ५२ ॥ पश्यतां सर्व्वभूतानां सभृत्यापत्यवान्धवः ॥ समस्तभार्य्यासहितः परित्यज्य स्वकंह्रदं ॥ ५३ ॥ गतेसर्पे परिष्वज्य मृतं पुनरिवागतं ॥ गोपा मूर्द्धनि गोविन्द मसिञ्च न्नेत्रजै र्जलैः ॥ ५४ ॥ कृष्ण मक्लिष्टकर्म्माण मन्ये विस्मितचेतसः ॥ तुष्टुवु र्मुदिता गोपा दृष्ट्वा शिवजलां नदीं ॥ ५५ ॥ गीयमानोऽथ गोपीभि श्चरितै श्चारुचेष्टितैः ॥ संस्तूयमानो गोपालैः कृष्णो व्रजमुपागमत् ॥ ५६ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे श्रीकृष्णवालचरिते कालियदमनंनाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

—०—

व्यास उवाच ॥ गाः पालयन्तौच पुनः सहितौ वलकेशवौ ॥ भ्रममाणौ वनेतत्र रम्यं तालवनं गतौ ॥ १ ॥ तत्र तालवने नित्यं धेनुको नाम दानवः ॥ नृगोमांसकृताहारः सदाध्यास्ते खराकृतिः ॥ २ ॥ तत्र तालवने पक्वं फलं सम्पत्समन्वितं ॥ दृष्ट्वा स्पृहान्विता गोपाः फलादानेऽब्रुवन् वचः ॥ ३ ॥ हेराम हेकृष्ण सदा धेनुके नैषरक्ष्यते ॥ भूप्रदेशो यतस्तस्मा त्पक्वानीमानि सन्तिवै ॥ ४ ॥ फलानि रसजातानां गन्धामोदितदिङ्मुखः ॥ वयमेता नभीप्सामः पात्यतां यदि रोचते ॥ ५ ॥ इति गोपकुमाराणां श्रुत्वा संकर्षणोवचः ॥ कृष्णस्तुपातयामास भुवि तालफलानिवै ॥ ६ ॥ तालानां

पततांशब्द माकर्ण्य सदुरासदः ॥ आजगाम सदुष्टात्मा कोपाद्दैते
यगर्द्दभः ॥ ७ ॥ पद्भ्यां सुभाभ्यां सतदा पश्चिमाभ्यां वली वलात् ॥
जघानोरसि ताभ्याञ्च सच तेनाप्यगृह्यत ॥ ८ ॥ गृहीत्वा भ्रामयै
नैव सोंवरे गतजीवितं ॥ तस्मिन्नेव सचिक्षेप वेगेन तृणराज
नि ॥ ९ ॥ ततः फलान्यनेकानि तालाग्रा न्निःपतन् खरः ॥ पृथि
व्यां पातयामास महावातोद्धतानिव ॥ १० ॥ अन्यानप्यस्य वैज्ञाती
नागता न्दैत्यगर्द्दभान् ॥ कृष्ण श्चिक्षेप तालाग्रे वलभद्र श्च लील
या ॥ ११ ॥ क्षणेनालंकृता पृथ्वी पक्कैस्तालफलै स्तदा ॥ दैत्यगर्द्दभ
देहैश्च मुनयः शुशुभेधिकं ॥ १२ ॥ ततोगावो निरावाधा स्तस्मिंस्ता
लवने द्विजाः ॥ नवंसस्यं सुखं चैव यंन्नभुक्त मभू त्पुरा ॥ १३ ॥
व्यासउवाच ॥ तस्मिन् रासभदैतेये सानुगे विनिपातिते ॥ सेव्यं गो
गोपगोपीनां रम्यं तालवनं वभौ ॥ १४ ॥ ततस्तौ जातहर्षौतु वसु
देवसुतावुभौ ॥ हत्वा धेनुकदैतेयं भाण्डीरं वनमागतौ ॥ १५ ॥
क्ष्वेलमानौ प्रगायन्तौ विचिन्वन्तौ च पादपान् ॥ चारयन्तौ च गा
दूरे व्याहरन्तौ च नामभिः ॥ १६ ॥ नियोगपाशस्कन्धौतौ वनमा
लाविभूषितौ ॥ शुशुभाते महात्मानौ वालशृंगाविवर्षभौ ॥ १७ ॥
सुवर्णाञ्जनवर्णाभ्यां तौतदा भूषिताम्बरौ ॥ महेन्द्रायुधसंकाशौ
श्वेतकृष्णाविवाम्बुदौ ॥ १८ ॥ चेरतु र्लोकसिद्धाभिः क्रीडाभि रि
तरेतरं ॥ समस्तलोकनाथानां नाथभूतौ भुवङ्गतौ ॥ १९ ॥ मनुष्य
धर्माभिरतौ मानयन्तौ मनुष्यतां ॥ तज्जातिगुणयुक्ताभिः क्रीडाभि

श्चेरतु र्वनं ॥ २० ॥ ततः श्चान्दोलिकाभि श्च नियुद्धैश्च महाबलौ ॥
व्यायामं चक्रतु स्तत्र क्षेपणीयै स्तथाश्मभिः ॥ २१ ॥ तल्लिप्सुरसुर
स्तत्र उभयो रममाणयोः ॥ आजगाम प्रलम्बाख्यो गोपवेषतिरोहि
तः ॥ २२ ॥ सोवगाहतनिःशंक स्तेषां मध्यममानुषः ॥ मानुषं वपु
रास्थाय प्रलम्बो दानवोत्तमः ॥ २३ ॥ तयोश्छिद्रान्तरं प्रेप्सु रति
शीघ्र ममन्यत ॥ कृष्णं ततो रौहिणेयं हन्तुञ्चक्रे मनोरथं ॥ २४॥
हरिणा क्रीडनं नाम बालक्रीडनकंततः ॥ प्रक्रीडित्वातु तेसर्वे द्वौ
द्वौ युगपदुत्पतन् ॥ २५ ॥ श्रीदाम्नासहगोविन्दः प्रलम्बेन तथा ब
लः ॥ गोपालै रपरै श्चान्ये गोपालाः सहपुप्लुवुः ॥ २६ ॥ श्रीदामा
च ततः कृष्णं प्रलम्बं रौहिणीसुतः ॥ जितवान् कृष्णपक्षीयै र्गो
पैरन्यैः पराजिताः ॥ २७ ॥ तेवाहयं स्तथान्योन्यं भाण्डीरस्कन्ध
मेत्यवै ॥ पुनर्निवृत्य तेसर्वे येयेतत्र पराजिताः ॥ २८ ॥ संकर्षण
न्तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः ॥ वनन्तस्थौ जगामैव सचन्द्रइव
वारिदः ॥ २९ ॥ असहन् रौहिणेयस्य स्वभावं दानवोत्तमः ॥ वव्र
धे समहाकायः प्रावृषीव वलाहकः ॥ ३० ॥ संकर्षणस्तु तंदृष्ट्वा द
ग्धशैलोपमाकृतिं ॥ स्रग्दामलम्बाभरणं मुकुटाटोपमस्तकं ॥ ३१ ॥
रौद्रं शकटचक्राक्षं पादन्यासचलत्क्षितिं ॥ ह्रियमाण स्ततः कृष्ण
मिदंवचनमब्रवीत् ॥ ३२ ॥ कृष्णकृष्ण ह्रियाम्येष पर्वतोदग्रमूर्त्तिना ॥
केनापिपश्यदैत्येन गोपालच्छद्मरूपिणा ॥ ३३ ॥ यदत्रसांप्रतंकार्य्यं म
यामधुनिषूदन ॥ तत्कथ्यतां प्रयात्येष दुरात्मातित्वरान्वितः ॥ ३४ ॥

व्यास उवाच ॥ तमाह रामं गोविन्दः स्मितभिन्नौष्ठसंपुटः ॥ माहा
त्म्यं रौहिणेयस्य बलवीर्य्यप्रमाणवित् ॥ ३५ ॥ किमयं मानुषो भा
वो व्यक्तमेवावलंब्यते ॥ सर्वात्मन् सर्वगुह्यानां गुह्याद्गुह्यार्थक स्त्व
या ॥ ३६ ॥ स्मराशेष जगद्बीज कारणं कारणाग्रजं ॥ आत्मानमे
कं तद्वयं जगत्येकार्णवे चयः ॥ ३७ ॥ भवानहञ्च विश्वात्मन् एक
मेवहि कारणं ॥ जगतोस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥ ३८ ॥
तत्स्मर्य्यतां महेयात्म न्त्वयात्माजहि दानवं ॥ मनुष्यभाव मालंब्य
जन्तूनां क्रियतां हितं ॥ ३९ ॥ व्यास उवाच ॥ इतिसंस्मारितो वि
प्रा: कृष्णेन सुमहात्मना ॥ विहस्य पीडयामास प्रलम्बं बलवा न्व
लः ॥ ४० ॥ मुष्टिना चाहनन्मूर्द्धि क्रोधसंरक्तलोचनः ॥ तेन चा
स्यप्रहारेण वहिर्यातौ विलोचने ॥ ४१ ॥ सनिष्कासित मस्तिष्को
मुखा च्छोणित मुद्वमन् ॥ निपपात महीपृष्ठे दैत्यवर्य्यो ममार
च ॥ ४२ ॥ प्रलम्बं निहतं दृष्ट्वा बलेनाद्भुतकर्मणा ॥ प्रहृष्टा स्तुष्टुवु
र्गोपाः साधुसाध्विति चाब्रुवन् ॥ ४३ ॥ संस्तूयमानो रामस्तु गोपै
र्दैत्ये निपातिते ॥ बलोपि सहकृष्णेन पुनर्गोकुल माययौ ॥ ४४ ॥
व्यास उवाच ॥ तयो र्विहरतो रेवं रामकेशवयोर्ब्रजे ॥ प्रावृट्व्यती
ता विकसत् सरोजान्ताभव च्छरत् ॥ ४५ ॥ विमलाम्बरयुक् चेन्ना
कालेचाभ्यागतो ब्रजं ॥ ददर्श च महारम्भान् कुर्वन्तो ब्रजवासि
नः ॥ ४६ ॥ कृष्ण स्तानुत्सुकान् दृष्ट्वा गोपा नुत्सवलालसान् ॥ कौ
तूहला दिदंवाक्यं प्राह वृद्धा न्महामतिः ॥ ४७ ॥ कोयं शक्र महो

नाम येन वोहर्षमागतः ॥ प्राहतं नन्दगोपश्च पृच्छन्त मतिसादर
म् ॥ ४८ ॥ मेघानां पयसामीशो देवराजः शतक्रतुः ॥ तेन संचो
दिता मेघा वर्षन्त्यंबुमयं रसं ॥ ४९ ॥ तद्वृष्टिजनितं शस्यं वय मन्येच
देहिनः ॥ वर्त्तमानोपयुञ्जाना स्तर्पयाम च देवताः ॥ ५० ॥ क्षीर
वंत्य इमागावो वत्सवंत्यश्च निर्वृताः ॥ तेन संवर्द्धितैः सस्यैः पुष्टास्तु
ष्टा भवन्तिवै ॥ ५१ ॥ नासस्या नातृणाभूमि र्नबुभुक्षार्दितो जनः॥
दृश्यते यत्र दृश्यन्ते वृष्टिमन्तो बलाहकाः ॥ ५२ ॥ भौम मेत त्पयो
दुग्धं गोभिः सूर्य्यस्य वारिदः ॥ पर्जन्यः सर्व्वलोकस्य भवाय भुवि
वर्षति ॥ ५३ ॥ तस्मा त्प्रावृषिराजानः सर्वे शक्रं मुदान्विताः ॥ म
खैस्सुरं समर्चाम वय मन्येच देहिनः ॥ ५४ ॥ व्यास उवाच ॥ नंद
गोपस्य वचनं श्रुत्वेत च्छक्रपूजने ॥ गोपाय चिदशेन्द्रस्य प्राह दा
मोदर स्तदा ॥ ५५ ॥ नवयं कृषिकर्त्तारो वाणिज्याजीवितेन च॥
गावोस्म द्दैवतं तात वयं वनचरा मताः ॥ ५६ ॥ आन्वीक्षिकी त्रयी
वार्त्ता दण्डनीति स्तथापरा ॥ विद्याचतुष्टयं त्वेत द्वार्त्तामत्र शृणुष्व
मे ॥ ५७ ॥ कृषिवाणिज्यतद्वृति स्तृतीयं पशुपालनं ॥ विद्या ह्येका
महाभागा वार्त्तावृत्तित्रयाश्रया ॥ ५८ ॥ कर्षकाणां कृषिर्वृत्तिः प
ण्यं पण्योपजीविनां ॥ अस्माकं गाःपरावृत्ति र्वार्त्ताभेदै रियंत्रि
भिः ॥ ५९ ॥ विद्यया योत्र युक्तस्तु तस्य सादैवतं महत् ॥ सैव पू
ज्यार्च्चनीया च सैव तस्योपकारिका ॥ ६० ॥ योन्यस्याः फलमश्न
त्वा पूजयत्यपरा न्नरः ॥ इहच प्रेत्य चैवासौ तात नाप्नोति शोभ

नं ॥ ६१ ॥ कृष्यंताः प्रथिताः सीमाः सीमान्तञ्च पुनर्वनं ॥ वना न्तागिरयः सर्वे सचास्माकं परागतिः ॥ ६२ ॥ गिरियज्ञस्तु यस्त स्मा द्गोयज्ञश्च प्रवर्त्ततां ॥ किमस्माकं महेन्द्रेण गावः शैलाश्च देव ताः ॥ ६३ ॥ मन्त्रयज्ञपरा विप्राः सीरयज्ञाश्च कर्षकाः ॥ गिरिगो यज्ञशीला श्च वयमद्रिवनाश्रयाः ॥ ६४ ॥ तस्मा द्गोवर्द्धनः शैलो भवद्भि र्विविधार्हणैः ॥ अर्च्यतां पूज्यतां मेध्यं पशुं हत्वा विधान तः ॥६५॥ सर्व्वघोषस्य सन्दोहो गृह्यतां माविचार्य्यतां ॥ भोज्यं तां तेनवै विप्रा स्तथा येचापि वान्धवाः ॥ ६६ ॥ तमर्च्चितं कृतेहो मे भोजितेषु द्विजातिषु ॥ शरत्पुष्पकृतापीडाः परिगच्छन्तु गोग णाः ॥ ६७ ॥ एतन्ममतं गोपाः संप्रीत्या क्रियते यदि ॥ ततःकृ ताभवे त्प्रीति र्गवामद्रे स्तथामम ॥ ६८ ॥ इतितस्य वचःश्रुत्वा न न्दाद्या स्तेव्रजौकसः ॥ प्रीत्युत्फुल्लमुखा विप्राः साधुसाध्वि त्यथा ब्रुवन् ॥ ६९ ॥ शोभन न्तेमतंवत्स यदेत द्भ वतोदितं ॥ तत्करिष्या महे सर्वे गिरियज्ञः प्रवर्त्ततां ॥ ७० ॥ तथा च कृतवन्तस्ते गिरि यज्ञं व्रजौकसः ॥ दधिपायसमांसाद्यै र्दत्वा शैलवलिं ततः ॥ द्विजांश्च भोजयामासुः शतशोथ सहस्रशः ॥ ७१ ॥ गावः शैलं त तश्चक्रुः स्वर्च्चितास्ताः प्रदक्षिणं ॥ वृषभा श्चापि नर्दंतः सतोया ज लदाइव ॥ ७२ ॥ गिरिमूर्द्धनि कृष्णोपि शैलोहमिति मूर्त्तिमान्॥ वुभुजेऽन्नं वहुविधं गोपवर्य्याहृतं द्विजाः ॥ ७३ ॥ कृष्ण स्तेनैव रूपेण गोपैः सह गिरेःशिरः ॥ अधिरुह्यार्च्चयामास द्वितीया मा

त्मनस्तनुं ॥ ७४ ॥ अन्तर्द्धानं गतेतस्मिन् गोपालंब्ध्वा ततोवरान् ॥
कृत्वा गिरिमहं गोष्ठं निजमत्या ययुःपुनः ॥ ७५ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे गिरियज्ञप्रवर्त्तनं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

—०—

व्यास उवाच ॥ महे प्रतिहते शक्रो भृशं कोपसमन्वितः ॥
सम्वर्त्तकं नामगणं तोयदाना मथाब्रवीत् ॥ १ ॥ भोभो मेघा नि
शम्यैत द्वदतो वचनं मम ॥ आज्ञापरं ममैवाशु क्रियतां माविचा
रितं ॥ २ ॥ नन्दगोपः सुदुर्बुद्धि र्गोपैरन्यैः सहायवान् ॥ कृष्णा
श्रयवलोन्मत्तो मखभङ्ग मचीकरत् ॥ ३ ॥ अजागावः परस्तेषां
गोपत्वस्य च कारणं ॥ तागावो वृष्टिवातेन पीड्यन्तां वचना न्म
म ॥ ४ ॥ अह मप्यागमिष्यामि तुङ्गमारुह्यवारणं ॥ साहाय्यंवः
करिष्यामि वायुसुत्सर्गयोजितं ॥ ५ ॥ व्यास उवाच ॥ इत्याज्ञप्ताः
सुरेन्द्रेण मुमुचु स्तेवलाहकाः ॥ वातवर्षमहाभीम मभवाय गवां
द्विजाः ॥ ६ ॥ ततः क्षणेन धरणी ककुभोम्बर मेवच ॥ एकधारा
महासार पूरणेनाभवन् द्विजाः ॥ ७ ॥ गावस्तु तेनपतता वर्षवाते
नवेपिताः ॥ धृताः प्राणान् जहुस्तत्र तिर्य्यङ्मुखशिरोधराः ॥ ८ ॥
क्रोडेन वत्सानाक्रम्य तस्थुरन्या द्विजोत्तमाः ॥ गावो विवत्साश्च कृ
तावारिपूरेण चापराः ॥ ९ ॥ वत्साश्च दीनवदनाः प्रव्रजन् कंपि
कन्धराः ॥ त्राहि त्राहीत्यल्पशब्दान् कृष्णमूचु रिवार्त्तकाः ॥ १० ॥

ततस्तु गोकुलं सर्वं गोपीगोपसमाकुलं ॥ अतिचार्त्तं हरिर्दृष्ट्वा चा
पायाचिन्तय त्तदा ॥ ११ ॥ एतत्कृतं महेन्द्रेण महभङ्गविरोधि
ना ॥ तदेतदखिलं गोष्ठं चातव्य मधुना मया ॥ १२ ॥ इदमेव म
हंवीर्य्या द्रुत्पाद्योरुशिलातलं ॥ धारयिष्यामि गोष्ठस्य पृथुच्छत्र मि
वोपरि ॥ १३ ॥ व्यास उवाच ॥ इतिकृत्वा मतिं कृष्णो गोवर्द्धन
महीधरं ॥ उत्पाट्यैककरेणैव धारयामास लीलया ॥ १४ ॥ गोपा
नाह जगन्नाथः समुत्पाटितभूधरः ॥ विशध्वमत्र सहिताः कृतं व
र्षनिवारणं ॥ १५ ॥ सनिवातेषु देशेषु यथायोग्य मिहास्यतां ॥ प्र
विश्य नात्र भेतव्यं गिरिपातस्य निर्भयैः ॥ १६ ॥ इत्युक्ता स्तेन ते
गोपा विविशु र्गोधनैःसह ॥ शकटारोपितै र्भाण्डै र्गोपा श्चासार
पीडिताः ॥ १७ ॥ कृष्णोपि तंदधारैव शैल मत्यन्तनिर्मलं ॥ व्र
जौको वासिभिर्हर्षविस्मिताक्षै र्निरीक्षितः ॥ १८ ॥ गोपगोपीज
नैर्हृष्टैः प्रीतिविस्तारितेक्षणैः ॥ संस्तूयमानचरितः कृष्णः शैलमधा
रयत् ॥ १९ ॥ सप्तरात्रं महामेघा ववर्षु र्नन्दगोकुले ॥ इन्द्रेण
चोदिता विप्रा गोपानां नाशकारिणा ॥ २० ॥ ततोधृते महाशैले
परित्राते च गोकुले ॥ मिथ्या प्रतिज्ञो ह्यभव द्वारयामास तान्घ
नान् ॥ २१ ॥ व्यभ्रे नभसि देवेन्द्रो वितथोत्सव मत्यगात् ॥ नि
ष्क्राम्य गोकुलं कृष्णः स्वस्थानं पुनराविशत् ॥ २२ ॥ मुमोच कृ
ष्णोपि तदा गोवर्द्धनमहाचलं ॥ स्वस्थाने विस्मितमुखै दृष्ट स्तैर्व्र
जवासिभिः ॥ २३ ॥ व्यास उवाच ॥ धृते गोवर्द्धने शैले परित्राते

च गोकुले ॥ रोचयामास कृष्णस्य दर्शनं पाकशासनः ॥ २४ ॥
सोधिरुह्य महानाग मैरावत ममित्रजित् ॥ गोवर्द्धनगिरौ कृष्णं
ददर्श त्रिदशाधिपः ॥ २५ ॥ धारयन्तं महावीर्य्यं गाश्च गोपवपु
र्द्धरं ॥ कृत्स्नस्य जगतो गोपं वृतं गोपकुमारकैः ॥ २६ ॥ गरुडञ्च
ददर्शोच्चै रन्तर्द्धानगतं द्विजाः ॥ कृतच्छायां हरेर्मूर्द्ध्नि पक्षाभ्यां प
क्षिपुङ्गवं ॥ २७ ॥ अवरुह्य सनागेन्द्रा देकान्ते मधुसूदनं ॥ शक्रः
सस्मितमाहेदं प्रीतिविस्फारितेक्षणः ॥ २८ ॥ कृष्ण कृष्ण शृणुष्वेदं
यदर्थमहमागतः ॥ त्वत्समीपं महाभाग नैतच्चिन्त्यं त्वयान्यथा ॥ २९
भारावतारणार्थाय पृथिव्याः पृथिवीतलं ॥ अवतीर्णो ऽखिलाधार
स्त्वमेव परमेश्वरः ॥ ३० ॥ महभङ्गविरुद्धेन मया गोकुलनाशक ॥
समादिष्टा महामेघा स्तैश्चैत त्कदनंकृतं ॥ ३१ ॥ त्रात स्त्वय त्वया
गावः समुत्पाट्य महागिरिं ॥ तेनाहं तोषितो वीर कर्मणात्यद्भुतेन
ते ॥ ३२ ॥ साधितं कृष्ण देवाना मद्यमन्येप्रयोजनं ॥ त्वयायमद्रि
प्रवरो करेणैकेन यद्धृतः ॥ ३३ ॥ गोभिश्च चोदितः कृष्ण त्वत्सका
शमिहागतः ॥ त्वया त्रातारमित्यर्थं युष्मत्कारणकारणात् ॥ ३४ ॥
सत्वां कृष्णाभिषेक्ष्यामि धरावाक्यप्रचोदितः ॥ उपेन्द्रत्वे गवामि
न्द्रो गोविन्द स्त्वंभविष्यसि ॥ ३५ ॥ अथावरुह्यैवादाय घण्टामैरा
वताद्गजात् ॥ अभिषेकं तयाचक्रे पवित्रजलपूर्णया ॥ ३६ ॥ क्रिय
माणेऽभिषेकेतु गावः कृष्णस्य तत्क्षणात् ॥ प्रस्नवोद्भूतदेहार्द्रां सद्य
श्चक्रुर्वसुन्धरां ॥ ३७ ॥ अभिषिच्यगवांवाक्या द्देवेन्द्रोवै जनार्द्दनं ॥

प्रीत्या सप्रश्रयः कृष्णं पुनराह शचीपतिः ॥ ३८ ॥ गत्वा मेत त्कृतं वाक्यं तथान्यदपि मे शृणु ॥ यद्ब्रवीमि महाभाग भारावतरणेच्छया ॥ ३९ ॥ ममांशः पुरुषव्याघ्र पृथिव्यां पृथिवीश्वरः ॥ अवतीर्णोऽर्जुनो नाम सरक्ष्यो भवता सदा ॥ ४० ॥ भारावतरणे सह्यं सते वीरः करिष्यति ॥ संरक्षणीयो भवता यथात्मा मधुसूदन ॥ ४१ ॥ भगवानुवाच ॥ जानामि भारते वर्षे जातं पार्थं तवांशतः ॥ तमहं पालयिष्यामि यावदस्मि महीतले ॥ ४२ ॥ यावन्महीतले शक्र स्थास्याम्यहमरिन्दम ॥ नतावदर्जुनं कश्चिद्देवेन्द्र युधिजेष्यति ॥ ४३ ॥ कंसोनाम महाबाहु र्दैत्योऽरिष्ट स्तथापरः ॥ केशी कुवलयापीडो नरकाद्या स्तथापरे ॥ ४४ ॥ हतेष्वेतेषु देवेन्द्र भविष्यति महाहवः ॥ तत्र विद्धिसहस्राक्ष भारावतरणं कृतं ॥ ४५ ॥ सत्वं गच्छ नसंतापं पुत्रार्थंकर्त्तुमर्हसि ॥ नार्जुनस्य रिपुः कश्चि न्ममाग्रे प्रभविष्यति ॥ ४६ ॥ अर्जुनार्थं त्वहं सर्वान् युधिष्ठिरपुरोगमान् ॥ निवृत्ते भारतेयुद्धे कुन्त्यादास्याम्यविक्षतान् ॥ ४७ ॥ व्यासउवाच ॥ इत्युक्त स्तम्परिष्वज्य देवराजो जनार्द्दनं ॥ आरुह्यैरावतंनागं पुनरेव दिवंययौ ॥ ४८ ॥ कृष्णोपि सहितै र्गोपै र्गोपालैश्च पुनर्व्रजं ॥ आजगामाथ गोपीनां दृष्टिपूतेन वर्त्मना ॥ ४९ ॥

इत्यादि ब्राह्मे पुराणे कृष्णबालचरिते गोवर्द्धनधारणे गोविन्दाभिषेको नामैकोनाशीतितमोऽध्यायः ७९ ॥

—०—

व्यास उवाच ॥ गतेशक्रेतु गोपालाः कृष्ण मक्लिष्टकारिणं ॥
ऊचुः प्रीत्याधृतं दृष्ट्वा तेन गोवर्द्धनाचलं ॥ १ ॥ गावश्च भवताचा
ता गिरिधारणकर्मणा ॥ वालक्रीडनता तत्र गोपालत्वं जुगुप्सित
म् ॥ २ ॥ दिव्यञ्च कर्मभवतः किमेतत्तात कथ्यतां ॥ कालियोदमि
तस्तोये प्रलम्बो विनिपातितः ॥ धृतो गोवर्द्धनश्चायं शंकितानि म
नांसिनः ॥ ३ ॥ सत्यंसत्यं हरेपादौ शपामोदितविक्रम ॥ तथा त्व
द्वीर्य्य मालोक्य नत्वां मन्यामहे नरं ॥ ४ ॥ प्रीतिः सस्त्रीकुमारस्य
व्रजस्य तवकेशव ॥ कर्मचेदमशक्यंय त्समस्तै स्त्रिदशैरपि ॥ ५ ॥
वालत्वे चातिवीर्य्यं च जन्मना चास्मशोभनं ॥ चिन्त्यमान ममेया
त्मन् शङ्का कृष्णप्रयच्छसि ॥ ६ ॥ देवोवा दानवो वात्वं यक्षो गन्धर्व
एववा ॥ किम्वा स्माकं विचारेण वान्धवोपि नमोस्तुते ॥ ७ ॥ च
णंभूत्वा त्वसौतूष्णीं किञ्चि त्प्रणयकोपवान् ॥ इत्येवमुक्त स्तैर्गोपै
राहकृष्णो द्विजोत्तमाः ॥ ८ ॥ सर्वधेनुचरो गोपा यदि लज्जा न
जायते ॥ श्लाघ्य श्चाहं ततःकिम्वो विचारेण प्रयोजनं ॥ ९ ॥ यदि
वोस्तिमयि प्रीतिः श्लाघ्योहं भवतायदि ॥ तदावो वन्धुसदृशी वान्ध
वाक्रियतामिति ॥ १० ॥ नाहं देवो नगन्धर्वो नयक्षो नचदानवः ॥
अहं वोवान्धवो जातो नान्यच्चिन्त्य मतोन्यथा ॥ ११ ॥ इतिश्रुत्वा ह
रेर्वाक्यं रत्नमौला स्ततोवनं ॥ ययुर्गोपा महाभागा स्तस्मि न्प्रणय
कोपिनि ॥ १२ ॥ कृष्णस्तु विमलंव्योम शरच्चन्द्रस्य चन्द्रिकां ॥
तथाकुमुदिनीं फुल्ला मामोदितदिगन्तरां ॥ १३ ॥ वनराजीं तथा

कूजदलिमालामनोरमां ॥ विलोक्य सह गोपीभि र्मनश्चक्रे रतिंप्र
ति ॥ १४ ॥ सहरामेण मधुर मतीवचरतीं प्रियां ॥ जगौ कलप
दंशौरि र्नामतत्त्रकृतव्रतः ॥ १५ ॥ रम्यंगीतध्वनिं श्रुत्वा सर्वागोप
कुमारिकाः ॥ आजग्मु स्त्वरितागोप्यो यत्रास्ते मधुसूदनः ॥ १६ ॥
शनैःशनै र्जगौ गोपी काचित्तस्य लयानुगा ॥ दत्तावधाना काचि
च्च तमेव मनसा स्मरन् ॥ १७ ॥ काचि त्कृष्णेति संजल्पन् प्री
तालज्जा मुपाययौ ॥ ययौ काचिच्च प्रेमान्धा तत्पार्श्वं मविलज्जि
ता ॥ १८ ॥ काचि दावसथस्यान्ते स्थिता दृष्ट्वा वहिर्गुरून् ॥ तन्म
यत्वेन गोविन्दं दध्यौ मीलितलोचना ॥ १९ ॥ गोपैः परिवृतोरा
त्रिं शरच्चन्द्रमनोरमां ॥ मानयामास गोविन्दो रासारम्भरसोत्सु
कः ॥ २० ॥ गोप्यश्च वृन्दशः कृष्ण चेष्टास्वायातमूर्त्तयः ॥ अन्यदे
शगतेकृष्णे चेरु र्वृन्दावनान्तरं ॥ २१ ॥ वभ्रमु स्तास्ततोगोप्यः कृ
ष्णदर्शनलालसाः ॥ कृष्णस्यचरणांशचौ दृष्ट्वा वृन्दावनेद्विजाः ॥ २२
एवं नानाप्रकारासु कृष्णचेष्टासु तास्तदा ॥ गोप्यो व्यग्राःसमं चेरु
रम्यंवृन्दावनंवनं ॥ २३ ॥ निवृत्तास्तास्ततोगोप्यो निराशाः कृष्ण
दर्शने ॥ यमुनातीर मागम्य जगु स्तच्चरितं तदा ॥ २४ ॥ ततो
ददृशु रायान्तं विकाशिमुखपङ्कजं ॥ गोप्य स्त्रैलोक्यगोप्तारं कृष्ण
मक्लिष्टकारिणं ॥ २५ ॥ काचिदालोक्य गोविन्द मायान्त मतिह
र्षिता ॥ कृष्ण कृष्णेति कृष्णेति प्राह नान्य मुदीरयत् ॥ २६ ॥
काचित् भ्रूभंगुरं कृत्वा ललाटफलकं हरेः ॥ विलोक्य नेत्रभंगा

ग्यां पपौ तन्मुखपङ्कजं ॥ २७ ॥ काचि दालोक्य गोविन्दं निमी
लितविलोचना ॥ तद्रूपं ध्यायन्ती योगारूढेव चाबभौ ॥२८॥
ततःकाचि त्प्रियालापैः काचिद्भ्रूभंगवीक्षितैः ॥ निन्येहृदय मन्या
स्व करस्पर्शेन माधवं ॥ २९ ॥ ताभिः प्रसन्नचित्ताभि र्गोपीभिः
सहसादरं ॥ रराम रासगोष्ठीभि रुदारचरितोहरिः ॥ ३० ॥ त
तःप्रवृत्ते रन्ये चलद्वलयनिःस्वनैः ॥ अनुजातशरत्काव्य गोपगीति
रनुक्रमात् ॥ ३१ ॥ कृष्णः शरच्चन्द्रसमं कौमुदीं कुमुदाकरं ॥ ज
गौ गोपीजन स्त्वेकं कृष्णारामं पुनःपुनः ॥ ३२ ॥ परिवर्त्तश्रमेणैव
काचिदालसवादिनी ॥ ददौ बाहुलतां स्कन्धे गोपी मधुनिपाति
नः ॥ ३३ ॥ काचि त्प्रविलसद्बाहुं परिरभ्यचुचुम्बतं ॥ गोपीगीत
स्तुतिव्याजनिपुणा मधुसूदनं ॥ ३४ ॥ गोपीकपोलसंश्लेष मभिप्रे
त्यहरे र्भुजौ ॥ पुलकोद्गमसंस्पर्शस्वेदाम्बुघनतां गतौ ॥ ३५ ॥ रा
सगेयं जगौ कृष्णो यावत्तारतरध्वनिः ॥ साधुकृष्णेति कृष्णेति ता
वत्ता द्विगुणंजगुः ॥ ३६ ॥ गतेन गमनंचक्रु स्वलने सन्मुखंययुः ॥
प्रतिलोमानुलोमेन भेजु र्गोपांगना हरिं ॥ ३७ ॥ सतथा सहगो
पीभी रराम मधुसूदनः ॥ तथाब्दकोटिप्रतिमः क्षणस्तेनविनाभव
त् ॥ ३८ ॥ तावार्य्यमाणापितृभिः पतिभिः भ्रातृभिस्तथा ॥ कृष्णं
गोप्य स्तथारात्रौ रमयन्ति रतिप्रियाः ॥ ३९ ॥ सोपि कैशोरकव
यो मानय न्मधुसूदनः ॥ रेमे ताभि रमेयात्मा क्षपासु क्षपिताहि
तः ॥ ४० ॥ तद्भर्तृषु तथातासु सर्व्वभूतेषु चेश्वरः ॥ आत्मस्वरूप

रूपोसौ व्याप्य वायुरिवस्थितः ॥४१॥ तथासमस्तभूतेषु नभोग्निपृथि
वीजलं॥ वायुस्वात्मातथाचासौ व्याप्य सर्व्वमवस्थितः ॥ ४२॥व्यासउ०
प्रदोषार्द्धेकदाचित्तु रासासक्तेजनार्द्दने ॥ त्रासयन्समदोगोष्ठा नरि
ष्टःसमुपागतः ॥ ४३ ॥ यतोयतो पदच्चाम स्तौहूाश्रृंगविलोचनः॥
खुराग्रपातैरत्यर्थं दारय न्धरणीतलम् ॥४४॥ लेलिहानःसनिष्पेषं
जिह्वयौष्टौपुनःपुनः॥ संरम्भाद्विद्धलांगूलः कठिनस्कन्धबन्धनः ॥ ४५
उदग्रककुदाभोगः प्रमाणांदुरतिक्रमः ॥ विष्मूत्रलिप्तपृष्टाङ्गो गवामु
द्वेगकारकः ॥४६॥ प्रलम्ब कण्ठाभिमुख स्तरुघातांकिताननः ॥ पा
तय न्सगवां गर्भान्दैत्यो वृषभरूपधृक् ॥४७॥ सूदयन्स्तापसानुग्रा
न्वनान्यटतियःसदा॥ ततस्तमतिघोराक्ष मवेक्ष्याभिभयातुरः ॥४८॥
प्रग्रन्यस्तविषाणाग्रः कृष्णाकृतिकृतेक्षणः॥ अभ्यधावतदुष्टात्मा दैत्यो
वृषभरूपधृक् ॥४९॥ आयान्तं दैत्यवृषभं दृष्ट्वाकृष्णोमहाबलं ॥ नच
चाल ततःस्थाना दवज्ञास्मितलीलया॥५०॥ आसन्नएव जग्राहग्रा
हव न्मधुसूदनः॥ जघानजानुनाकुक्षौ विषाणग्रहणाचलम् ॥ ५१ ॥
तस्य दर्पबलं हत्वा गृहीतस्य विषाणयोः ॥ अपीडय दरिष्टस्य कण्ठं
क्लिन्नमिवाम्बरं ॥५२॥ उत्पाट्यश्रृंगमेकञ्च तेनैवाताडयत्ततः ॥ ममा
रसमहादैत्यो मुखा च्छोणितमुद्वमन् ॥ ५३ ॥ तुष्टुवु र्निहते तस्मिन्
गोपादैत्ये जनार्द्दनं ॥ वृत्रेहते सहस्राक्षं पुरादेवगणायथा ॥ ५४ ॥

इत्यादिब्राह्मे पुराणे बालचरितेगोपीसंक्रीडनेअरिष्टवधो
नामाशीतितमोऽध्यायः ॥ ८० ॥

व्यासउवाच ॥ एवं विनिहतेऽरिष्टे धेनुकेच निपातिते ॥ प्रल
म्बे निधनंनीते धृते गोवर्द्धनाचले ॥ १ ॥ दमिते कालिये नागे भ
ग्ने तुङ्गद्रुमद्वये॥ हतायांपूतनायान्तु शकटे परिवर्त्तिते ॥२॥ कंसाय
नारदः प्राह यथावृत्त मनुक्रमात् ॥ यशोदा देवकीगर्भ परिवर्त्ता
द्यशेषतः ॥ ३ ॥ श्रुत्वा तत्सकलं कंसो नारदा द्देवदर्शनात् ॥ वसु
देवंप्रति तदा कोपंचक्रे सुदुर्मतिः ॥ ४ ॥ सोतिकोपादुपालभ्य सर्व
यादवसंसदि ॥ जगर्ह यादवांश्चापि कार्य्यं चैत दचिन्तयत् ॥ ५ ॥
यावन्न बलमारूढौ बलकृष्णौ सुबालकौ ॥ तावदेव मया वध्यावसा
ध्यौ रूढयौवनौ ॥ ६ ॥ चाणूरस्य महावीर्य्यो मुष्टिकस्य महाबलः ॥
एताभ्यां मल्लयुद्धेन घातयिष्यामि दुर्मदौ ॥ ७ ॥ धनुर्मखमहायाग
व्याजेनानीय तौव्रजात् ॥ तथा तथा यतिष्यामि यास्येते संक्षयं य
था ॥ ८ ॥ व्यास उवाच ॥ इत्यालोच्य सदुष्टात्मा कंसो रामजना
र्दनौ ॥ हन्तुंकृतमति र्वीर मक्रूरं वाक्यमब्रवीत् ॥ ९ ॥ भोभो दान
पते वाक्यं क्रियतां प्रीतयेमम ॥ ततः स्यन्दन मारुह्य गम्यतां गोप
गोकुलं ॥ १० ॥ वसुदेवसुतौतत्र विष्णोरंशसमुद्भवौ ॥ नाशाय कि
लसंभूतौ ममदुष्टौ प्रवर्द्धतः ॥ ११ ॥ धनुर्महो ममाप्यत्र चतुर्दश्यां
भविष्यति ॥ आनेयौ भवताता च मल्लयुद्धाय तत्रवै ॥ १२ ॥ चाणू
रमुष्टिकौ मल्लौ नियुद्धकुशलौ मम ॥ ताभ्यांसह तयोर्युद्धं सर्व्व
लोकोत्र पश्यतु ॥ १३ ॥ नागः कुवलयापीडो महामात्रप्रचोदितः॥
सतौ हनिष्यते पापौ वसुदेवात्मजौ शिशू ॥ १४ ॥ तौहत्वा वसुदेव

श्च नन्दगोप श्च दुर्मतिं ॥ ततः समस्तगोपानां गोधनान्यखिला
न्यहं ॥ १५ ॥ वित्त श्चापि हरिष्यामि दुष्टानां ममद्वेषिणां ॥ त्वा
मृते यादवा श्चेमे दुष्टा दानपते मम ॥ १६ ॥ एतेषां च वधायाहं
प्रयतिष्याम्यनुक्रमात् ॥ ततो निष्कण्टकं सर्वं राज्यमेतदयादवं ॥ १७ ॥
प्रसादयिष्ये त्वांतस्मा न्मत्प्रीत्या वीरगम्यतां ॥ यथाच माहिषं सर्पि
र्दधिचाप्युपहार्य्यं वै ॥ गोपाः समानयंत्याशु त्वया वाच्य स्तथा त
था ॥ १८ ॥ व्यास उवाच ॥ इत्याज्ञप्त स्तदा क्रूरो महाभागवतो
द्विजाः ॥ प्रीतिमानभवत् कृष्णं श्वोद्रक्ष्यामीति सत्वरः ॥ १९ ॥
तथेत्युक्त्वा तु राजानं रथमारुह्य सत्वरं ॥ निश्चक्राम तथापुर्य्या म
थुराया मधुप्रियः ॥ २० ॥ व्यास उवाच ॥ केशी चापि बलोदग्रः
कंसदूतःप्रचोदितः ॥ कृष्णस्य निधनाकांक्षी वृन्दावनमुपागमत् ॥ २१
सखुरक्षतभूपृष्टः सटाक्षेपधुताम्बुदः ॥ द्रुतविक्रान्तचन्द्रार्क मार्गो
गोपानुपागमत् ॥ २२ ॥ तस्य ह्रेषितशब्देन गोपाला दैत्यवाजि
नः ॥ गोप्यश्च भयसंविग्ना गोविन्दं शरणंययुः ॥ २३ ॥ त्राहित्राही
तिगोविन्द स्तेषांश्रुत्वा तदावचः ॥ सतोयजलदध्वानं गम्भीरमिद
मुक्तवान् ॥ २४ ॥ अलंत्रासेन गोपालाः केशिनः किंभयातुरैः ॥
भवद्भि र्गोपजातीयै र्वीरवीर्य्यं विलुप्यते ॥ २५ ॥ किमनेनाल्पसा
रेण ह्रेषिताटोपकारिणा ॥ दैतेयबलवातेन वदता दुष्टवाजि
ना ॥ २६ ॥ एह्येहि दुष्टकृष्णोहं कृष्णएव पिनाकधृक् ॥ पातयि
ष्यामि दशनान् वदना दखिलांस्तव ॥ २७ ॥ इत्युक्त्वास्फोट्य गोवि

न्दः केशिनः सन्मुखं ययौ ॥ विवृत्तास्यश्च सोप्येनं दैतेयः समुपा
द्रवत् ॥ २८ ॥ बाहुमाभोगिनं कृत्वा मुखेतस्य जनार्द्दनः ॥ प्रवेश
यामास तदा केशिनो दुष्टवाजिनः ॥ २९ ॥ केशिनो वदनन्तेन वि
शता कृष्णबाहुना ॥ शातिता दशनास्तस्य शिताभ्रावयवाइव ॥ ३० ॥
कृष्णस्य ववृधे बाहुः केशिदेहगतो द्विजाः ॥ विनाशाय यथाव्याधी
रोगभूतै रुपेक्षितः ॥ ३१ ॥ विपाटितौष्ठो बहुलं सफेनं रुधिरं वम
न् ॥ सोक्षिणी विवृतेचक्रे विश्लिष्ट मुक्तबन्धनः ॥ ३२ ॥ जगाम ध
रणीं पादौ सकृन्मूत्रं समुत्सृजन् ॥ स्वेदार्द्रगात्रः श्रांतश्च भीषणः
सोभवत्ततः ॥ ३३ ॥ व्यादितास्यो महारौद्रः सोसुरः कृष्णबाहुना॥
निपपात द्विधाभूत्वा वातेनैव यथाद्रुमः ॥ ३४ ॥ विपादपृष्टयुक्तार्द्धे
श्रवणैकाक्षिनाशिकः ॥ केशिनस्ते द्विधाभूते शकले च विरेज
तुः ॥ ३५ ॥ हत्वातु केशिनं कृष्णो गोपालैर्मुदितैर्वृतः ॥ अनाय
स्ततनुः स्वस्थो हसंस्तत्रैव तस्थिवान् ॥ ३६ ॥ ततोगोपाश्च गोप्यश्च
हतेकेशिनि विस्मिताः ॥ तुष्टुवुः पुण्डरीकाक्षं प्रीतिरागमनोरम
म् ॥ ३७ ॥ आगम्यात्त्वरितो विप्रो नारदो जलदे स्थितः ॥ केशि
नंनिहतं दृष्ट्वा हर्षनिर्भरमानसः ॥ ३८ ॥ साधुसाधु जगन्नाथ सा
धुभक्तप्रियाच्युत॥ निहतोऽयं त्वयाकेशी क्लेशदस्त्रिदिवौकसां ॥ ३९
समुत्सुकोहि यन्मत्युं नरवाजिनआहवे ॥ आहतः सत्वया चात्र
दुष्टः स्वर्गमुपागतः ॥ ४० ॥ सुकर्माण्यवतारेतु कृतानि मधुसूदन॥
यानितै विस्मितंचेत स्तोषमेतेन मेगतं ॥ ४१ ॥ तुरगस्यास्य शक्रोपि

कृष्णादेवाद्यविग्ध्यति ॥ धुनकेसरजालस्य हृषितांश्वावलोकिनः ॥४२॥
यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्द्दन ॥ तस्मा त्केशवनाम्नात्वं
लोके गेयोभविष्यसि ॥ ४३ ॥ स्वस्त्यस्तुते गमिष्यामि कंसयुद्धेऽधुना
पुनः ॥ परश्वोहं समेष्यामि त्वया केशिनिषूदन ॥ ४४ ॥ उग्रसेन
सुतेकंसे सानुगे विनिपातिते ॥ भारावतारकर्त्तात्वं पृथिव्याः पृथि
वीश्वर ॥ ४५ ॥ तत्रानेकप्रकाराणि युद्धानि पृथिवीक्षितां ॥ द्रष्टव्या
नि मयायुष्म त्प्रणीतानि जनार्द्दन ॥ ४६ ॥ सोऽहं यास्यामि गोवि
न्द देवकार्यं महत्कृतं ॥ त्वया सभाजित श्चाहं स्वस्तितेस्तु ब्रजा
म्यहं ॥ ४७ ॥ व्यास उवाच ॥ नारदेतु गते कृष्णः सहगोपै रवि
स्मितः ॥ विवेश गोकुलं गोपी नेत्रपानैकभाजनं ॥ ४८ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे केशिवधो नामैका
शीतितमोऽध्यायः ॥ ८१ ॥

—०—

व्यास उवाच ॥ अक्रूरोपि विनिष्क्रम्य स्यन्दनेनाशुगामिना ॥
कृष्णसंदर्शनायोक्तः प्रययौ नन्दगोकुलं ॥ १ ॥ चिन्तयामास चाक्रू
रो नास्ति धन्यतरो मया ॥ योऽहं मंशावतीर्णस्य मुखं द्रक्ष्यामि च
क्रिणः ॥ २ ॥ अद्यमे सफलं जन्म सुप्रभाता च सानिशा ॥ यथा
चोन्निद्रपद्माक्षं विष्णो द्रक्ष्याम्यहं मुखं ॥ ३ ॥ पापं हरति यत्पु
न्सां स्मृतं संकल्पनामयं ॥ तत्पुण्डरीकनयनं विष्णो द्रक्ष्याम्यहं मु
खं ॥ ४ ॥ निर्जग्मु श्च यतोवेदा वेदाङ्गान्यखिलानिच ॥ द्रक्ष्यामि

तत्परं नाम देवानां भगवन्मुखं ॥ ५ ॥ यज्ञेषु यज्ञपुरुषः पुरुषैःपु
रुषोत्तमः ॥ इज्यते ह्यखिलाधार स्तंद्रक्ष्यामि जगत्पतिं ॥ ६ ॥
इष्ट्वायमिन्द्रो यज्ञानां शतेनामरराजतां ॥ अवाप तमनन्तादि मद्य
द्रक्ष्यामि केशवं ॥ ७ ॥ नब्रह्मा नेन्द्ररुद्राश्विवस्वादित्यमरुद्गणाः॥
यस्यस्वरूपं जानन्ति तन्द्रक्ष्यामि जगत्पतिं ॥ ८ ॥ सर्वात्मा सर्वतः
सर्व्वः सर्व्वभूतेषु संस्थितः ॥ योवितत्याव्ययो ऽव्याधिः सत्तामात्रःस्व
यंप्रभुः ॥ ९ ॥ मत्स्यकूर्म्मवराहैश्चसिंहरूपादिभिः स्थितिं ॥ चकार
जगतोयोग मेव मालापयिष्यति ॥ १० ॥ सांप्रत ञ्च जगत्स्वामी
कार्य्यग्रामं धृतिंस्थितिं ॥ कर्त्तु म्मनुष्यतां प्राप्तः ॥ स्वेच्छादेहो जग
न्मयः ॥ ११ ॥ योऽधस्तः पृथिवीं धत्ते शेषाख्यः स्थितिसंस्थितः॥
सोऽवतीर्णो जगत्यर्थं मामक्रूरेति वक्ष्यति ॥ १२ ॥ पितृवन्धुसुहृ
द्भ्रातृमातृबन्धुमयामिमां ॥ यन्मायां नाल मुत्तर्त्तुं जगत्तस्मै नमोन
मः ॥ १३ ॥ तरत्यविद्यां विततां हृदियस्मि न्निवेशिते ॥ योगमाया
ममाया ञ्च तस्मै विद्यात्मने नमः ॥ १४ ॥ यज्वभि र्यज्ञपुरुषो वासु
देवस्तु शाश्वतैः ॥ वेदान्तवेदिभि र्विष्णुः प्रोच्यते योनतोस्मितं ॥ १५
यथातत्र जगद्धापि धार्य्यतेऽत्र प्रतिष्ठितं ॥ नसदत्तंनसत्तेन यत्रोमा
च यमोयतः ॥ १६ ॥ स्मृते सकलकल्याण भाजनं तत्रजायते ॥ पु
रुषस्तमज न्नित्यं व्रजामि शरणंहरिं ॥ १७ ॥ व्यासउवाच ॥
इत्यं संचिन्तय द्विष्णुं भक्तिनम्रात्ममानसः ॥ अक्रूरो गोकुलं प्राप्तः
किञ्चि त्सूर्य्ये विराजति ॥ १८ ॥ सददर्श समायान्तं कृष्ण

मादोऽस्ने गतां॥ वक्षमध्यगतंफुल्ल नीलोत्पलदलच्छविं ॥ १९ ॥
उत्फुल्लपद्मपत्राक्षं श्रीवत्सांकितवक्षसं ॥ प्रलम्बवाहु मापीनमुरःस्थ
लमनुत्तमं॥ २० ॥ सुविलासवताधारं विभ्राणं सुखपङ्कजं॥ तदुन्न
तनखंपद्मं धरण्यां सुप्रतिष्ठितं ॥ २१ ॥ विभ्राणं वाससीपीते वन्य
पिच्छविभूषितं ॥ सान्द्रनीललताहस्तं सिताम्भोजावतंसकं॥२२॥
हंसयुक्तेंदुधवलं नीलाम्बरधरं द्विजाः॥ तस्यानु वलभद्रञ्च ददर्श
यदुनन्दनः॥ २३ ॥ प्रांशुमुत्तुङ्गवाहुं तं विकासिसुखपङ्कजं॥ मे
घमालापरिवृतं कैलासाद्रि मिवापरं॥ २४ ॥ तं दृष्ट्वा विकसद्वक्त्र
सरोजः समहाद्युतिः॥ पुलकाञ्चितरोमाञ्च स्तदा क्रूरोऽनमद् द्वि
जाः॥ २५ ॥ एतत्परतमं धाम एत त्परतमं पदं॥ भव द्वासुदे
वांशो द्विधा योयं व्यवस्थितः॥ २६ ॥ अथ स्वपृष्टे समहस्तपद्मं क
रिष्यति श्रीमदनीयमूर्त्तिः॥ यस्याङ्गुलिस्पर्शहताखिलाघै रवाप्यते
सिद्धिरपास्तदोषैः॥ २७ ॥ सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां वृह
द्भ्यां परिरप्स्यतेऽथमां॥ आत्माहि तीर्थीक्रियते तदैवमे वन्धस्य क
र्मात्मकउच्छ्वसित्यतः ॥ २८ ॥ लब्धाङ्गसङ्गं प्रणतं कृताञ्जलिं
मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ॥ तदावयं जन्मभृतो महीयसा
नैवादृतोयोधिगस्तुध्यजन्म तत् ॥ २९ ॥ नतस्य कश्चि द्दयितः
सुहृत्तमो नचाप्रियो द्वेष्यउपेक्ष्य एववा ॥ तथापि भक्तान्
भजते यथा तथा सुरद्रुमो यद्व दुपाश्रितोऽर्थदः ॥ ३० ॥
तस्मादहं भक्तिविनिश्चितेन व्रजामि सर्वेश्वर मीश्वराणां ॥

अंशावतीर्णस्य पुरुषोत्तमस्य अनादिमध्यान्तम यस्य विष्णोः ॥ ३१ ॥
इति ब्राह्मे पुराणे व्यासर्षिसम्वादे ऽक्रूरागमनं नाम
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

—०—

व्यास उवाच ॥ चिन्तयन् पथि गोविन्द मुपागम्य सयादवः॥
अक्रूरोस्मीति चरणौ ववन्दे शिरसा हरेः ॥ १ ॥ सोप्येनं ध्वजव
ज्राब्जकृतचिह्नेन पाणिना ॥ संस्पृश्याकृष्य तंप्रीत्या सगाढं परि
षस्वजे ॥ २ ॥ कृतसंवन्दनौ तेन यथाव द्बलकेशवौ ॥ ततः प्रविष्टौ
संहृष्टौ तमादायतु मन्दिरं ॥ ३ ॥ सच ताभ्यां तदाक्रूरः सर्वं हत्त
मवर्णयत् ॥ यथा निर्भर्त्सितं तेन कंसेनानकदुंदुभिः ॥४ ॥ यथाच
देवकी देवी दानवेन दुरात्मना ॥ उग्रसेने यथा कंसः सदुरात्माच
वर्त्तते ॥ ५ ॥ यदर्थं च्च समुद्दिश्य कंसेन सविसर्जितः ॥ तत्सर्वं वि
स्तराच्छ्रुत्वा भगवान् केशिसूदनः ॥ ६ ॥ उवाचाखिल मेतत्तु ज्ञा
तंदानपते मया ॥ करिष्ये च महाभाग यदत्रौपयिकं मतं ॥ ७॥
विचिंत्य नान्यथैतत्ते द्विद्धिकंसं हतंमया ॥ अहंरामश्च मथुरां श्वो
यास्यामः समंत्वया ॥ ८ ॥ गोपवृद्धा स्च यास्यन्ति आदायोपायनं
वहु ॥ निशेयं नीयतां वीर नचिन्तां कर्त्तुमर्हसि ॥ ९ ॥ त्रिरात्रा
भ्यन्तरे कंसं हनिष्यामि सहानुगं ॥ व्यास उवाच ॥ समादिश्यत
तोगोपा नक्रूरोपि सकेशवः ॥ सुष्वाप वलभद्रश्च नन्दगोपगृहे त
तः ॥ १० ॥ ततः प्रभाते विमले कृष्णरामौ महावलौ ॥ अक्रूरेण

समंगन्तु मुद्यतौ मथुरां पुरीं ॥ ११ ॥ दृष्ट्वा गोपीजनः प्रपुत्त्
स्रय हलयवाङ्कः ॥ निःश्वस न्नभिदुःखार्त्तः प्राह चेदं परस्पर
म् ॥ १२ ॥ मथुरां प्राप्य गोविन्दः कथं गोकुल मेष्यति ॥ नगर
स्त्री कलंवाक्य मधुस्रोत्रेण पास्यति ॥ १३ ॥ विलासवाक्यजालेषु
नागरीणांकृतंपदं ॥ चित्तमस्य कथं भूयो ग्राम्यगोपीषु यास्यति ॥ १४
सारं समस्तगोष्ठस्य विधिनाहरताहरिं ॥ प्रहृत्तं गोपयोषित्सु निर्घृ
णेन दुरात्मना ॥ १५ ॥ भावगर्भस्मितं वाक्यं विलासललितागं
तिः ॥ नागरीणां मनस्यैव कटाक्षाक्षेप मेवच ॥ १६ ॥ ग्राम्योहरि
रयं तासां विलासनिगडै र्धृतः ॥ भवतीनां पुनःपार्श्वं कयायुक्त्या
समेष्यति ॥ १७ ॥ एकोयं रथमारुह्य मथुरां याति केशवः ॥ अक्रू
रक्रूरकेणात्र विश्वासेन प्रतारितः ॥ १८ ॥ किंनवेत्ति नृशंसं सोयं म
हद्दुःखपरं जनं ॥ येनेदमन्त्यो राह्लाद न्नयत्यन्यत्र नोहरिः ॥ १९ ॥
एपरामेण सहितः प्रयात्यैतेननिर्घृणः ॥ रथमारुह्य गोविन्दः स्वयं
तत्तस्य वारणे ॥ २० ॥ गुरूणामग्रतो वक्तुं किंब्रवीषि ननःक्षमं ॥
गुरवः किंकरिष्यन्ति दग्धानां विरहाग्निना ॥ २१ ॥ नन्दगोपमुखा
गोपा गन्तुमेते समुद्यताः ॥ नोद्यमं कुरुते कश्चित् गोविन्दविनिव
र्त्तने ॥ २२ ॥ सुप्रभाताद्य रजनी मथुरावासियोषितां ॥ यासाम
च्युतवक्त्राब्जं प्राप्तं नेत्रस्य भोग्यतां ॥ २३ ॥ धन्यास्ते पथियेकृष्णा
मितोयान्त्यनिवारिताः ॥ उद्वहिष्यन्ति पश्यन्तः स्वदेहं पुलकाञ्चि
तम् ॥ २४ ॥ मथुरानगरीपौर नयनाना म्महोत्सवः ॥ गोविन्दाव

यवैर्दृष्टै रविन्नाथं भविष्यति ॥ २५ ॥ किन्तप्र च्च सभाग्या भि र्दृष्ट स्ताभि रधोक्षजः ॥ विस्तारिकान्तनयना या द्रक्ष्यन्त्यनिवारित म् ॥२६ ॥ अहो गोपीजनस्यास्य दर्शयित्वा महानिधिं ॥ उद्धृता न्यत्र नेत्राणि विधात्रा करुणात्मना ॥ २७ ॥ अनुरागेण शैथिल्य मस्मासु व्रजतो हरेः ॥ शैथिल्य मुपयान्त्याशु करेषु वलयान्य पि ॥ २८ ॥ अक्रूरः क्रूरहृदयः शीघ्रं प्रेरयते हयान् ॥ एवमार्त्ता सुयोषित्सु घृणा तस्य नजायते ॥ २९ ॥ एष कृष्णरथस्योच्चै श्चक्र रेणु र्निरीक्ष्यताम् ॥ दूरीकृतो हरिर्येन सोपिरेणु र्नलक्ष्यते ॥ ३० ॥ इत्येव मतिहार्देन गोपीजननिरीक्षितः ॥ तत्याज व्रजभूभागं सह रामेण केशवः ॥ ३१ ॥ गच्छन्तो त्वरिता स्तेन रथेन यमुनातटं ॥ प्राप्ता मध्याह्नसमये रामाक्रूरजनार्दनाः ॥ ३२ ॥ अथाह कृष्ण मक्रूरो भवद्भ्यां तावदास्यतां ॥ यावत्करोमि कालिंद्या माह्निकार्ह णमम्भसि ॥ ३३ ॥ तथेत्युक्ते ततःस्नातः स्वाचान्तः समहामतिः ॥ दध्यौ ब्रह्मपरं विप्राः प्रविश्य यमुनाजले ॥ ३४ ॥ फणासहस्रमा लाढ्यं बलभद्रं ददर्शसः ॥ कुन्दामलाङ्ग मुन्निद्र पद्मपत्रारुणेक्ष णम् ॥ ३५ ॥ वृतं वासुकिरम्भाद्यै र्महद्भिः पवनाशिभिः ॥ संस्तूय मानं वक्त्रभि र्वनमालाविभूषितं ॥ ३६ ॥ दधान मसिते वस्त्रे चारु पद्मावतंसकं ॥ चारुकुण्डलिन मात्त मन्तर्जलतलेस्थितं ॥ ३७ ॥ तस्योत्संगे घनश्याम माताम्रायतलोचनं ॥ चतुर्बाहु मुदाराङ्गं च क्राद्यायुधभूषणं ॥ ३८ ॥ पीते वसानं वसने चित्रमाल्यविभूषितं ॥

शक्रचापतडिन्मालाविचित्र मिवतोयदं ॥ ३९ ॥ श्रीवत्सवक्षसंचारु
केयूरमुकुटोज्वलं ॥ ददर्श कृष्णमक्लिष्टं पुण्डरीकावतंसकं ॥४० ॥
सनन्दनाद्य मुंनिभिः सिद्धयोगै रकल्मषैः ॥ संचिन्त्यमानं तत्रस्थै
र्नासाग्रन्यस्तलोचनैः ॥ ४१ ॥ बलकृष्णौ तदाक्रूरः प्रत्यभिज्ञाय वि
स्मितः ॥ अचिन्तय द्रथाच्छीघ्रं कथमत्रागताविति ॥ ४२ ॥ विवक्षोः
स्तम्भयामास वाचंतस्य जनार्द्दनः ॥ ततो निष्क्रम्य सलिला द्रथ म
भ्यागतः पुनः ॥ ४३ ॥ ददर्श तत्रैवै चोभौ रथस्योपरि विष्ठितौ ॥
रामकृष्णौ यथापूर्व्व मनुष्यवपुषान्वितौ ॥४४ ॥ निमग्नश्च पुनस्तोये
ददर्श सतथैवतौ ॥ संस्तूयमानौ गन्धर्वै र्मुनिसिद्धमहोरगैः ॥ ४५ ॥
ततो विज्ञातसद्भावः सतु दानपति स्तदा ॥ तुष्टाव सर्व्वविज्ञान म
यमच्युत मीश्वरं ॥ ४६ ॥ चिन्मात्ररूपिणेऽचिन्त्य महिम्ने परमा
त्मने ॥ व्यापिने नैकरूपाय पुरुषाय नमोनमः ॥ ४७ ॥ शब्दरूपाय
तेऽचिन्त्यहविर्भूताय तेनमः ॥ नमो विज्ञानरूपाय पराय प्रकृतेः
प्रभो ॥ ४८ ॥ भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ॥
आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥ ४९ ॥ प्रसीद स
र्व्वसर्व्वात्मन् चराचरमहेश्वर ॥ ब्रह्मविष्णुशिवाद्याभिः कल्पनाभि
रुदीरितः ॥ ५० ॥ अनाख्येयस्वरूपात्म न्ननाख्येयप्रयोजन ॥ अना
ख्येयाभिधानं त्वां नतोस्मि परमेश्वरं ॥ ५१ ॥ नयत्र नाथ विद्यन्ते
नामजात्यादिकल्पनाः ॥ तद्ब्रह्म परमं नित्य मविकारिभवानजः ॥ ५२
नकल्पनामृते त्वस्य सर्व्वस्याधिगमो यतः ॥ ततः कृष्णाच्युतानन्तवि

ण्णुसंज्ञोसि रचमे ॥ ५३ ॥ सर्वार्थं स्त्वमविकल्पनाभि रेते देवाद्या जगदखिलं त्वमेव विश्वं ॥ विश्वात्मा त्वमिति विकारभेदहीनः सर्व्वस्मि न्नहि भवतोस्ति किञ्चि दन्यत् ॥ ५४ ॥ त्वंब्रह्मा पशुपति रर्य्यमा विधाता त्वंधाता त्रिदशपतिः समीरणोऽग्निः ॥ तोये शोध नपति रन्तक स्त्वमेको भिन्नार्थैं र्जगदपिपासि शक्तिभेदैः ॥ ५५॥ विश्वं भवान् सृजति हन्ति गभस्तिरूपो विश्वञ्च तेगुण मयोयम जप्रपञ्चः ॥ रूपम्परं सदसदात्मक मचरंयत् ज्ञानात्मने सदसते प्र णतोस्मि तस्मै ॥ ५६ ॥ ओंनमो वासुदेवाय नमः संकर्षणायते ॥ प्र द्युम्नाय नमस्तुभ्यं अनिरुद्धाय तेनमः ॥ ५७ ॥

इतिब्राह्मे पुराणे व्यासर्षिसम्वादे मथुरागमने भगवद्रूपदर्श नन्नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

—०—

व्यास उवाच ॥ एवमन्तर्जले कृष्ण मभिष्टूय सयादवः ॥ अ र्चयामास देवेशं धूपैः पुष्पै र्मनोमयैः ॥ १ ॥ परित्यक्तान्यविषयं म नस्तत्र निवेश्यसः ॥ ब्रह्मभूतेचिरंस्थित्वा विरराम समाधितः ॥२॥ कृतकृत्य मिवात्मानं मन्यमानो द्विजोत्तमाः ॥ आजगाम रथं भूयो निर्गम्य यमुनांभसः ॥ ३ ॥ रामकृष्णौ च ददृशे यथापूर्व्व मवस्थि तौ ॥ विस्मिताक्षं तदाक्रूरं तञ्च कृष्णो ह्यभाषत ॥ ४ ॥ नूनन्ते दृ ष्टमाश्चर्य्यं मक्रूर यमुनाजले ॥ विस्मयोत्फुल्लनयनो भवान् संलक्ष्य तेमया ॥ ५ ॥ अक्रूर उवाच ॥ अन्तर्जले यदाश्चर्य्यं दृष्टंतन्न मया

च्युत ॥ तदत्रापिहि पश्यामि मूर्त्तिमत् पुरतःस्थितं ॥ ६ ॥ जगदे तन्महाश्चर्य्यं रूपं यस्यमहात्मनः ॥ तेनाश्चर्य्यपरेणाहं भवता कृष्ण संगतः ॥ ७ ॥ तत्किमेतेन मथुरां प्रयामो मधुसूदन ॥ बिभेमि कं न्साद्दुहिम्नः परपीडोपजीविनः ॥ ८ ॥ इत्युक्त्वाचोदयामास तान्ह यान्वातरंहसः ॥ संप्राप्तश्चापि सायाह्ने सोऽक्रूरो मथुरां पुरीं ॥ ९ ॥ विलोक्य मथुरां कृष्णं राम श्चाहसयादवः ॥ पद्भ्यां यातं महावी र्यौ रथेनैको विशाम्यहं ॥ १० ॥ गन्तव्यंवसुदेवस्य नोभवद्भ्यां तथा गृहं ॥ युवयोस्थ कृतेद्वन्द्वः कन्सेन सनिरस्यते ॥ ११ ॥ व्यासउवाच ॥ इत्युक्त्वा प्रविवेशाथ सोऽक्रूरो मथुरां पुरीं ॥ प्रविष्टो रामकृष्णौ च राजमार्गं मुपागतौ ॥ १२ ॥ स्त्रीभि र्नरैश्च सानन्दं लोचनै रभि वीक्षितौ ॥ जग्मतु र्लीलया वीरौ प्राप्तौ बालगजाविव ॥ १३ ॥ भ्र ममाणौ तुतौ दृष्ट्वा रजकं रङ्गकारकं ॥ अयाचेता न्सुरूपाणि वा सान्सि रुचिराणितौ ॥ १४ ॥ कन्सस्य रजकः सोथ प्रसादारूढवि स्मयः ॥ वह्वन्याक्षेपवाक्यानि प्राहोच्चै रामकेशवौ ॥ १५ ॥ तत स्त लप्रहारेण कृष्ण स्तस्यदुरात्मनः ॥ पातयामास कोपेन रजकस्यशि रोभुवि ॥ १६ ॥ हत्वा चादाय वस्त्राणि पीतनीलाम्बरे ततः ॥ रा मकृष्णौ मुदायुक्तौ मालाकारगृहं गतौ ॥ १७ ॥ विकासिनेत्रयुग लो मालाकारो ऽतिविस्मितः ॥ एतौ कस्यकुलोत्पन्नौ मनसा चिन्त यत्ततः ॥ १८ ॥ पीतनीलाम्बरधरौ दृष्ट्वा ऽभिसुमनोहरौ ॥ सतर्क यामास तदा भुवं देवावुभौगतौ ॥ १९ ॥ विकासिमुखपद्माभ्यां ता

भ्यां पुष्पाणि याचितः ॥ भुवं विष्टभ्य हस्ताभ्यां संस्पृश्य शिरसा म
ही ॥ २० ॥ प्रसादपरमौ नाथौ ममगेह मुपागतौ ॥ धन्योऽहं म
र्चयिष्यामीत्याहतौ माल्यजीवकः ॥ २१ ॥ ततः प्रहृष्टवदन स्तयोः
पुष्पाणिकामतः ॥ चारूण्येतानि वैतानि प्रददौ सविलोभयन् ॥ २२
पुनः पुनः प्रणम्यासौ मालाकारोनरोत्तमौ ॥ ददौपुष्पाणि चारूणि
गन्धवन्त्यमलानिच ॥ २३ ॥ मालाकाराय कृष्णोपि प्रसन्नः प्रददौ
वरान् ॥ श्रीस्त्वां मत्संश्रयात् भद्र नकदाचित् त्यजिष्यति ॥ २४ ॥
बलहानिर्न तेसौम्य धनहानि स्तथापिवा ॥ यावद्युगानि तावच्च न
मरिष्यति सन्ततिः ॥ २५ ॥ भुक्त्वा च विपुलान् भोगान् त्वमन्ते म
त्प्रसादजं ॥ ममानुस्मरणं प्राप्य दिव्यलोक मवाप्स्यसि ॥ २६ ॥
धर्मे मनश्च तेभद्र सर्व्वकालं भविष्यति ॥ युष्मत्सन्ततिजातानां बा
हुवीर्य्यं भविष्यति ॥ २७ ॥ व्यासउवाच ॥ इत्युक्त्वा तद्गृहा त्कृष्णो
बलदेवसहायवान् ॥ निर्जगाम मुनिश्रेष्ठा मालाकारेण पूजितः ॥ २८ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे ऽक्रूरप्रत्यागमनंनाम
चतुरशीतितमोऽध्यायः ॥ ८४ ॥

—o—

व्यास उवाच ॥ राजमार्गे ततः कृष्णः सानुलेपनभाजनां ॥
ददर्श कुब्जा मायान्तीं नवयौवनगोचरां ॥ १ ॥ तामाह ललितं क
ष्णः कस्येद मनुलेपनं ॥ भवत्यानीयते सत्यं वदेन्दीवरलोचने ॥ २ ॥
सकामेनैव साप्रोक्ता सानुरागा हरिंप्रति ॥ प्राहसा ललितं कुब्जा

तद्दर्शनबलात्कृता ॥३॥ कान्तकस्यानुजानासि कस्मैनाभिनियोजितां॥
नैकवक्रेति विख्याता मनुलेपनकर्मणि ॥ ४ ॥ नान्यपिष्टं हि कंसस्य
प्रीतये ह्यनुलेपनं ॥ भवत्यहमतीवास्य प्रसादधनभाजना ॥ ५ ॥
कृष्णउवाच ॥ सुगन्धमेतद्राजार्हं रुचिरं रुचिरानने ॥ आवयोर्गा
त्रसदृशं दीयता मनुलेपनं ॥ ६ ॥ व्यासउवाच ॥ श्रुत्वा तमाह सा
कृष्णं गृह्यतामिति सादरं ॥ अनुलेपनञ्च प्रददौ गात्रयोरुभयोरपि
तयोः ॥ ७ ॥ भक्तिच्छेदानुलिप्ताङ्गौ ततस्तौ पुरुषर्षभौ ॥ सेन्द्रचा
पौ विराजेतां सितकृष्णाविवाम्बुदौ ॥ ८ ॥ ततस्तां चिबुके शौरि रु
ल्लापनविधानवित् ॥ उल्लाप्यतोलयामास द्व्यङ्गुलेनाग्रपाणिना ॥ ९
कर्षं पद्भ्याञ्च तदा ऋजुत्वं केशवो नयत् ॥ ततः सा ऋजुतांप्राप्ता
योषिता ममवद्वरा ॥ १० ॥ विलासललितं प्राह प्रेमगर्भभरालसा ॥
वस्त्रे प्रगृह्य गोविन्दं व्रजगेहं ममेतिवै ॥ ११ ॥ श्रीकृष्ण उवाच ॥
आयास्ये भवतीगेह मितितां प्रहसन् हरिः ॥ विससर्ज जहासोच्चै
रामस्यालोक्य चाननं ॥ १२ ॥ भक्तिच्छेदानुलिप्ताङ्गौ नीलपीताम्ब
रावुभौ ॥ धनुःशालां ततोयातौ चित्रमाल्योपशोभितौ ॥१३॥ आ
ख्यायधनुरत्नन्तु प्रापापृष्टौतु रक्षिभिः ॥ आख्याते सहसा कृष्णोगृ
हीत्वा पूरयद्धनुः ॥ १४ ॥ ततः पूरयता तेन भज्यमानगहद्धनुः ॥
चकाराति महाशब्दं मथुरा तेनपूरिता ॥ १५ ॥ अनुयुक्तौ तत
स्तौतु भग्नेधनुषि रक्षिभिः ॥ रक्षिसैन्यं निकृत्याशु निष्क्रान्तौ कार्मु
कालयात् ॥ १६ ॥ अक्रूरागमवृत्तान्त मुपलभ्यततोधनुः ॥ भग्नंश्रुत्वा

य कस्तोऽपि प्राह चाणूरमुष्टिकौ ॥ १७ ॥ कंस उवाच ॥ गोपालदा
रकौ प्राप्तौ भवद्भ्यां तौ ममाग्रतः ॥ मल्लयुद्धे निहन्तव्यौ मम प्राण
हरौ स्थितौ ॥ १८ ॥ नियुद्धे तद्विनाशेन भवद्भ्यां तोषितोह्यहं ॥
दास्याम्यभिमतान् कामा नान्यथैतन्महाबलौ ॥ १९ ॥ न्यायतोऽन्या
यतोवापि भवद्भ्यां तौ समाहितौ ॥ हन्तव्यौ तद्वधाद्राज्यं सामान्यं
वो भविष्यति ॥ २० ॥ इत्यादिश्य ततो मल्लौ तत आहूय हस्तिपं ॥
प्रोवाचोच्चैस्त्वतोऽवष्टं समाज द्वारि कुञ्जरः ॥ २१ ॥ स्थाप्यः कुवल
यापीड स्तेन तौ गोपदारकौ ॥ घातनीयौ नियुद्धेन रङ्गद्वार मुप
गतौ ॥ २२ ॥ तमप्याज्ञाप्य दृष्ट्वाथ मञ्चान् सर्वानुपाकृतान् ॥ आ
सन्नमरणः कंसः सूर्य्योदय मुदैक्षत ॥ २३ ॥ ततः समस्तमञ्चेषु
नागरास्तु तदा जनाः ॥ राजमञ्चेषु चारूढाः सह भृत्यै र्महीभृ
तः ॥ २४ ॥ मल्लप्राश्निकवर्गं स्व रंगमध्यसमीपगः ॥ कृतः कंसेन कं
सोऽपि तुङ्गमञ्चे व्यवस्थितः ॥ २५ ॥ अन्तःपुराणां मञ्चाश्च तथान्ये
परिकल्पिताः ॥ अन्ये च वारमुख्याना मन्ये नगरयोषितां ॥ २६ ॥
नन्दगोपादयो गोपा मञ्चेष्वन्येष्ववस्थिताः ॥ अक्रूरवसुदेवौ च म
ञ्चप्रान्ते व्यवस्थितौ ॥ २७ ॥ नागरीयोषितां मध्ये देवकी पुत्रगर्द्धि
नी ॥ अन्तकाले च पुत्रस्य द्रक्ष्यामि रुचिरं मुखं ॥ २८ ॥ वाद्यमा
नेषु तूर्य्येषु चाणूरे चातिवल्गति ॥ हाहाकारकृते लोके आस्फो
र्यति मुष्टिके ॥ २९ ॥ हत्वा कुवलयापीडं हस्त्यारोहप्रचोदितं
मदासृगनुलिप्ताङ्गौ गजदन्तवरायुधौ ॥ ३० ॥ मृगमध्ये यथासिंह

गर्व्वलीलावलोकिनौ ॥ प्रविष्टौ सुमहारंगं बलदेवजनार्द्दनौ ॥ ३१॥
हाहाकारो महाञ्जज्ञे सर्व्वरंगेष्वनन्तरं ॥ कृष्णोयं वलभद्रोय मि
तिलोकस्य विस्मयात् ॥ ३२ ॥ सोयं येन हता घोरा पूतना बालि
घातिनी ॥ क्षिप्तं शकटं येन भग्नौ च यमलार्जुनौ ॥ ३३ ॥ सो
यंयः कालियं नागं ननर्त्तारुह्य बालकः ॥ धृतो गोवर्द्धनो येन स
प्तरात्रं महागिरिः ॥ ३४ ॥ अरिष्टो धेनुकः केशी लीलयैव महा
त्मना ॥ हता येनच दुर्वृत्ता दृश्यतां सोयमच्युतः ॥ ३५ ॥ अय
ञ्चास्य महावाहुर्वलभद्रोग्रजोऽग्रतः ॥ प्रयाति लीलया योषि न्म
नोनयननन्दनः ॥ ३६ ॥ अयन्स कथ्यते प्राज्ञैः पुराणार्थावलोकि
भिः ॥ गोपालो यादवं वंशं सकलं चोद्धरिष्यति ॥ ३७ ॥ अ तो
र्णो मही चासौ वर्वभारहरो भुवः ॥ इत्येवं वर्णिते पौरै रामेकृष्णे
च तत्क्षणात् ॥ ३८ ॥ उर स्ततोऽस्या देवक्याः स्नेहस्नुतपयोधरं ॥
महोत्सव मिवालोक्य पुत्रानन विलोकयन् ॥ ३९ ॥ तत्याज वसुदे
वोपि हर्षाद्भ्यागतां जरां ॥ विस्तारिताक्षियुगला राजानः पुरयो
षितः ॥ ४० ॥ नागरस्त्रीसमूहश्च द्रष्टुंनविरराम तौ ॥ सख्यःपश्य
त कृष्णस्य मुख मत्यरुणेक्षणं ॥ ४१ ॥ गजयुद्धकृतायासं स्वेदाम्बु
कणिकाञ्चितं ॥ विकाशिशरदम्भोज मवश्याय जलोक्षितं ॥ ४२॥
परिभूयाक्षिरं जन्म सफलं क्रियतां दृशः ॥ श्रीवत्साङ्कं जगद्धाम
बालस्यैन द्विलोक्यतां ॥ ४३ ॥ विपक्षक्षपणंवक्षो भुजयुग्मावुभावपि॥
किन्नपश्यसि मुग्धेत्वं मृणालधवलाननं ॥ ४४ ॥ वलभद्र मिमन्नी

लपरिधान मिहागतं ॥ जल्पता मुष्टिकेनैव चाणूरेण तथासखि ॥ ४५ ॥ क्रियते वलभद्रस्य साध्यमीष द्विलोक्यतां ॥ ४५ ॥ सख्यः पश्यत चाणूरं नियुद्धार्थमयं हरिं ॥ समुपैति नसन्त्यत्र किं हन्द्वायुद्धकारिणः ॥ ४६ ॥ क्वयौवनोन्मुखीभूतः सुकुमारतनुर्हरिः ॥ क्ववज्रकठिनाभोगशरीरः समहासुरः ॥ ४७ ॥ इमौ सुललितौ रङ्गेवर्त्तेते नवयौवनौ ॥ दैतेयमल्ला चाणूरप्रमुखास्त्वतिदारुणाः ॥ ४८ नियुद्धप्राश्निकानान्तु महानेष व्यतिक्रमः ॥ यद्बालवलिनो युद्धं मध्यस्थैः समुपेक्ष्यते ॥ ४९ ॥ व्यास उवाच ॥ इत्थं पुरस्त्रीलोकस्य वदतां चाह्नुतांकथां ॥ चतिप्रहर्षोन्तिर्जस्य भगवाञ्जनयन्हरिः ॥ ५० ॥ वलभद्रोपि चास्फोट्य वाहुञ्च ललितं यदा ॥ पदे पदे तदा भूमिर्नंसाभव त्तदद्भुतं ॥ ५१ ॥ चाणूरेण ततः कृष्णो युयुधे ऽमितविक्रमः ॥ नियुद्धकुशलो दैत्यो वलदेवेनमुष्टिकः ॥ ५२ ॥ सन्निपातावधूतैस्य चाणूरेणासमं हरिः ॥ क्षेपणै र्मुष्टिभि श्चैव कीटिवज्रनिपातनैः ॥ पादोन्नतै र्विघृष्टाभि स्तयोर्युद्धमभू न्महत् ॥ ५३ ॥ अशस्त्रमतिघोरंत त्तयोर्युद्धं सुदारुणं ॥ सुवलं प्राणनिष्पाद्यं समाजोत्सवसन्निधौ ॥ ५४ ॥ याव द्यावच्च चाणूरो युयुधे हरिणासह ॥ प्राणहानि मवाप्राग्नं तावत्ताव ल्लवालवं ॥ ५५ ॥ कृष्णोपि युयुधेतेन लीलयैव जगन्मयः ॥ खेदाच्चालयाभवत्कोपा न्निजशेखरगोचरः ॥ ५६ वलक्षयं विवृद्धिञ्च दृष्ट्वा चाणूरकृष्णयोः ॥ वारयामास तूर्य्याणि कंसःकोपपरायणः ॥ ५७ ॥ मृदङ्गादिषुवाद्येषु प्रतिषिद्धेषुतत्क्षणात् ॥

खेसंगतान्यवाद्यन्त देवतूर्य्याण्यनेकशः ॥ ५८ ॥ जयगोविन्द चा
णूरं जहि केशव दानवं ॥ इत्यन्तर्द्धिगता देवा सुष्टुवु स्तेप्रहर्षि
ताः ॥ ५९ ॥ चाणूरेण चिरंकालं क्रीडित्वा मधुसूदनः ॥ उत्पा
ट्यभ्रामयामास तद्वधाय कृतोद्यमः ॥ ६० ॥ भ्रामयित्वा शतगुणं दै
त्यमल्ल ममित्रजित् ॥ भूमावास्फोटयामास गगने गतजीवितं ॥ ६१
भूमावास्फोटित स्तेन चाणूरः शतधाव्रमन् ॥ रक्तस्राव महापङ्कां
चकार सतदा भुवं ॥ ६२ ॥ वलदेवस्तु तत्कालं मुष्टिकेन महाव
लः ॥ युयुधे दैत्यमल्लेन चाणूरेण यथाहरिः ॥ ६३ ॥ सोप्येनं
मुष्टिना मूर्द्धि वक्षस्याहत्य जानुना ॥ पातयित्वा धरापृष्टे निष्पि
पेष गतायुषं ॥ ६४ ॥ कृष्णस्तोशलकं भूयो मल्लराज म्महावलं ॥
वाममुष्टिप्रहारेण पातयामास भूतले ॥ ६५ ॥ चाणूरे निहते म
ल्ले मुष्टिके च निपातिते ॥ नीतेक्षयं तोशलके सर्वे मल्लाः प्रदुद्रु
वुः ॥ ६६ ॥ चञ्चलौतु तदारङ्गे कृष्णसंकर्षणावुभौ ॥ समानवयसो
गोपा न्वलादाकृष्य हर्षितौ ॥ ६७ ॥ कंसोपि कोपरक्ताक्षः प्रा
होच्चै र्व्यायतान्तरात् ॥ गोपावेतौ समाजाद्वै निष्क्राम्येतां वलादि
तः ॥ ६८ ॥ नन्दोपि गृह्यतां पापो निगडैराशु वध्यतां ॥ अवृद्धा
र्हेण दण्डेन वसुदेवोपि वध्यतां ॥ ६९ ॥ वलगन्तिगोपाःकृष्णेन ये
चेमे सहिताः पुरः ॥ गावो ह्रियन्ता मेषाञ्च यच्चास्ति वसुकिञ्च
न ॥ ७० ॥ एवमाज्ञापयानन्तं प्रहस्य मधुसूदनः ॥ उत्पत्याथाव्रुह्य
तम्मञ्चं कंसंजग्राह वेगितः ॥ ७१ ॥ केशेष्वाकृष्य विगल त्किरी

टमवनीतले ॥ सकंसं पातयामास तस्योपरि पपातच ॥ ७२ ॥ निःशेषजगदाधार गुरुणा पततोपरि ॥ कृष्णेन त्याजितः प्राणा नुग्रसेनात्मजो नृपः ॥ ७३ ॥ मृतस्य केशेषुतदा गृहीत्वा मधुसूदनः॥ चकर्ष देहं कंसस्य रङ्गमध्ये महाबलः ॥ ७४ ॥ गौरवेणातिमहता परिघातेन कृष्यता ॥ कृता कंसस्यदेहेन वेगितेनमहात्मना ॥७५॥ कंसेगृहीते कृष्णेन तद्भ्राताभ्यागतोरुषा ॥ सुनामा बलभद्रेण लीलयैव निपातितः ॥ ७६ ॥ ततोहाहाकृतं सर्व्वं मासी त्तद्रङ्गमण्डलम् ॥ अवज्ञयाहतं दृष्ट्वा कृष्णेन मथुरेश्वरं ॥ ७७ ॥ कृष्णोपिवसुदेवस्य पादौजग्राह सत्वरं ॥ देवक्या च महावाहु र्वलदेवसहायवान् ॥ ७८ ॥ उत्थाप्य वसुदेवस्य देवकीच जनार्द्दनं ॥ स्मृतं जन्मोक्तवचनं तावेव प्रणतौ स्थितौ ॥ ७९ ॥ वसुदेव उवाच ॥ प्रसीद देवदेवेश देवानांप्रवर प्रभो ॥ तथावयोः प्रसादेन कृताभ्युद्धार केशव ॥ ८० ॥ आराधितो यद्भगवा नवतीर्णो गृहेमम ॥ दुर्वृत्तनिधनार्थाय तेननः पावितंकुलं ॥ ८१ ॥ त्वमन्तः सर्व्वभूतानां सर्व्वभूतेष्ववस्थितः ॥ वर्त्तते च समस्तात्म स्त्वत्तो भूतं भविष्यति ॥ ८२ ॥ यज्ञेत्वमिज्यसेऽचिन्त्य सर्व्वदेवमयाच्युत ॥ त्वमेव यज्ञो यष्टाच यज्ञानां परमेश्वरः ॥ ८३ ॥ सापह्नवं ममनो यदेत त्त्वयिजायते ॥ देवक्या मात्मजप्रीत्या तदत्यन्तविडम्बनं ॥ ८४ ॥ त्वंकर्त्ता सर्व्वभूतानामनादिनिधनोभवान् ॥ क्वमे मनुष्यं कैषा च जिह्वाएनेति वक्ष्यति ॥ ८५ ॥ जगदेत ज्जगन्नाथ संभूतमखिलं यतः ॥ कया युक्त्या

विनामायां सोस्माकः संभविष्यति ॥ ८६ ॥ यस्मिन्प्रतिष्ठितं सर्वं जग
त्स्थावरजङ्गमं ॥ सकोष्ठोत्सङ्गशयनो मनुष्या धार्य्यते कथं ॥ ८७॥
सत्वं प्रसीद परमेश्वर पाहिविश्व संस्थावतारकरणेन ममासि पु
त्रः ॥ आब्रह्मपादपमयं जगदेतदीश त्वंनो विमोहयसिकिं परमे
श्वरस्त्वं ॥ ८८ ॥ मायाविमोहितदृश स्तनयो ममेति कंसाद्भयं कृ
तमपास्तभयातितीब्रं ॥ नीतोसि गोकुलमहातिभयाकुलस्य वृद्धिंग
तोसि मम चातिममत्वमीश ॥ ८९ ॥ कर्माणि रुद्रमरुदश्विशतक्र
तूनां साध्यानि यानि नभवन्ति निरीक्षितानि ॥ त्वंविष्णुरीश ज
गतामुपकारहेतोः प्राप्तोसि नःपरिगतो विगतोहिमोहः ॥ ९० ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे कंसवधो नाम
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

—०—

व्यास उवाच ॥ तौसमुत्पन्नविज्ञानौ सर्व्वकर्मप्रदर्शनात् ॥
देवकीवसुदेवौतु दृष्ट्वामायां पुनर्हरिः ॥ मोहाय यदुचक्रस्य वितता
नस वैष्णवीं ॥ १ ॥ उवाच रामो भोतात चिरा दुत्कण्ठितेनवः ॥
भवन्तौ कंसभीतेन दृष्टौ संकर्षणेनच ॥ २ ॥ कुर्वतां याति यःकालो
मातपित्रो र्नपूजनं ॥ तत्खण्डमायुषो व्यर्थं साधूनामुपजायते ॥ ३ ॥
गुरुदेवद्विजातीनां मातापित्रो श्च पूजनं ॥ कुर्वतः सफलं जन्म दे
हिनस्तातजायते ॥ ४ ॥ तत्क्षन्तव्यमिदं सर्व्व मतिक्रमकृतं पितः ॥
कंसवीर्य्यप्रतापाभ्या मावयोः परवश्ययोः ॥ ५ ॥ व्यासउवाच ॥ इ

त्युक्त्वाथ प्रणम्योभौ यदुवृद्धा ननुक्रमात् ॥ यथाव दभिपूज्याथ चक्र
तुः पूजां मानवान् ॥ ६ ॥ कंसपत्न्य स्ततःकंसं परिवार्य्य हतंभुवि॥
विलेपु मातरश्चास्य शोकदुःखपरिप्लुताः ॥ ७ ॥ बहुप्रकार मत्यर्थं
पश्चात्तापं ततोहरिः॥ ताःसमाश्वासयामास स्वयमेवाविलोचनः॥ ८
उग्रसेनं ततोवन्धा न्मुमोच मधुसूदनः ॥ अभ्यषिञ्च त्तथैवैनं निज
राज्ये हतात्मजं ॥ ९ ॥ राज्येऽभिषिक्तः कृष्णेन यदुसिंहः सुतस्य
सः ॥ चकार प्रेतकर्माणि येचान्ये तत्रघातिताः ॥ १० ॥ कृतोर्द्ध्वदे
हिकं चैनं सिंहासनगतं हरिः ॥ उवाचाज्ञापय विभो यत्कार्यमवि
शंकया ॥ ११ ॥ ययातिशापा द्वंशोय मराज्यार्होपि सांप्रतं ॥ मयि
भृत्येस्थिते देवा नाज्ञापयतु किंनृपैः ॥ १२ ॥ इत्युक्त्वा सोऽस्मरद्वा
यु माजगाम सतत्क्षणात् ॥ उवाच चैनं भगवान् केशवः कार्यमानु
षः ॥ १३ ॥ गच्छेदं ब्रूहि वायोत्व मलंगर्वेण वासव ॥ दीयता मुग्र
सेनाय सुधर्मा भवतासभा ॥ १४ ॥ कृष्णो ब्रवीति राजार्ह मेतदि
त्यमनुत्तमं ॥ सुधर्माख्यां सभां युक्त मस्यां यदुभि वीसितुं ॥ १५ ॥
व्यासउवाच ॥ इत्युक्तः पवनो गत्वा सर्व्वमाह शचीपतिं ॥ ददौसो
पि सुधर्माख्यां सभांवायोः पुरन्दरः ॥ १६ ॥ वायुना वाहृतांदिव्यां
सभायां यदुपुङ्गवाः॥ बभूवुः सर्व्वरत्नाढ्यां गोविन्दभुजसंश्रयाः॥ १७
विदिताखिलविज्ञानौ सर्व्वज्ञानमयावपि ॥ शिष्याचार्य्यक्रमं
वीरौ ख्यापयन्तौ यदूत्तमौ ॥ १८ ॥ ततः सान्दीपनं काश्य मवन्ति
पुरवासिनं ॥ अस्त्रार्थं जग्मतुर्वीरौ बलदेव जनार्द्दनौ ॥ १९ ॥

तस्यशिष्यत्व मभ्येत्य गुरुवृत्तिपरौ हितौ ॥ दर्शयाञ्चक्रतु र्वीरावा
चारमखिलंजने॥२०॥ सरहस्यंधनुर्वेदं ससंग्रहमधीयतां॥अहोरात्र
चतुःषष्ट्या तदद्भुतमभू द्विजाः ॥ २१ ॥ सान्दीपनिरसं भाव्यं त
योःकर्मातिमानुषं॥ विचिन्त्यतौ तदा मेने प्राप्तौ चन्द्रदिवाकरौ॥ २२
अस्त्रग्रामभशेष ञ्च प्रोक्तमात्र मवाप्यतौ ॥ ऊचतु र्व्रियतां यत्ते दा
तव्या गुरुदक्षिणा ॥ २३ ॥ सोप्यतीन्द्रिय मालोक्य तयोःकर्म्म म
हामतिः ॥ अयाचत मृतंपुत्रं प्रभासे लवणार्णवे ॥ २४ ॥ ततोग
तौ महावीरौ प्रभासं लवणार्णवं ॥ गृहीतास्त्रौ ततस्तौतु साध्यंपा
त्रो महोदधिः ॥ २५ ॥ ऊराच नमयापुत्रो हृतः सान्दीपनेरिति॥
दैत्यः पञ्चजनो नाम शंखरूपःस बालकं ॥ २६ ॥ जग्राह सोस्ति
सलिले ममैवासुरसूदन ॥ इत्युक्तोन्तर्जले गत्वा हत्वा पञ्चजनं त
था ॥ २७ ॥ कृष्णो जग्राह तस्यास्थिप्रभवं शंखमुत्तमं ॥ यस्य ना
देन दैत्यानां बलहानिः प्रजायते ॥ २८ ॥ देवानां वर्द्धते तेजो या
त्यधर्मश्च संक्षयं॥ तत्पाञ्चजन्यमापूर्य्य गत्वा यमपुरीं हरिः॥२९॥
बलदेवश्च बलवा ञ्जित्वा वैवस्वतं यमं ॥ तंबालं यातनासंस्थं यथा
पूर्वं शरीरिणम् ॥ ३० ॥ पित्रे प्रदत्तवान् कृष्णो बलश्च बलिनाम्व
रः ॥ मथुराञ्च पुनः प्राप्तावुग्रसेनेन पालितां ॥ प्रहृष्टपुरुषस्त्रीका
मुभौ रामजनार्द्दनौ ॥ ३१ ॥

इत्यादिब्राह्मे पुराणे व्यासर्षिसम्वादे सान्दीपनेः पुत्रानयनं
नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

व्यास उवाच ॥ जरासन्धसुते कंस उपयेमे महावलः ॥ अ
स्तिः प्राप्तिरुसे विप्रा स्तयोर्भर्तृहणं हरिं ॥ १ ॥ महावलपरीवारो
मगधाधिपतिर्वली ॥ हन्तुमभ्याययौ कोपान्महावलपराक्रमः॥२॥
उपेत्य मथुरां सोथ रुपोध मगधेश्वरः ॥ अक्षौहिणीभिः सैन्यस्य त्र
योविंशतिभि र्वृतः ॥ ३ ॥ निष्क्रम्याशु परीवारावुभौ रामजनार्द
नौ ॥ युयुधाते समन्तस्य वलिनौ वलसैनिकौ ॥ ४ ॥ ततो वलश्च कृ
ष्णश्च मति ञ्चक्रे महावलः ॥ आयुधानां पुराणाना मादाने मुनि
सत्तमाः ॥ ५ ॥ अनन्तरं चक्रशार्ङ्गं तूणौ चाक्षयशायकौ ॥ आका
शादागतौ शीघ्रं तथा कौमोदकी गदा ॥ ६ ॥ हलञ्च हलिनस्तः
द्गगनादागमत्करं ॥ सम्वर्त्ताग्निसमं विप्राः सुनन्दं मुशलंतथा॥७॥
ततोयुद्धे पराहत्य ससैन्यं मगधाधिपं ॥ पुरीं विविशतु र्वीरावुभौरा
मजनार्दनौ॥८॥ जिते तस्मिन्सुदुष्टे त्तेजरासन्धे द्विजोत्तमाः ॥ जी
वमानेगते तत्र कृष्णो मेने नतंजितं ॥ ९ ॥ पुनरप्याजगामाथ ज
रासन्धो वलान्वितः ॥ जित स्व रामकृष्णाभ्या मपक्रान्तो द्विजोत्त
माः ॥ १० ॥ दश चाष्टौ च संग्रामा ञ्जितोप्यत्यन्तदुर्मदः ॥ यदुभि
र्मागधो राजा चक्रे कृष्णपुरोगमैः ॥ ११ ॥ सर्वेष्वेवतु युद्धेषु यदुभिः
सपराजितः ॥ अपक्रान्तो जरासन्धः स्वल्पसैन्यै र्वलाधिकः ॥ १२॥
तद्वलं यादवानाम्वै रक्षितं यदनेकशः ॥ तत्तु सन्निधिमाहात्म्यं वि
ष्णोरंशस्य चक्रिणः ॥१३॥ मनुष्यधर्मशीलस्य लीलासाजगतःपतेः ॥
अस्त्राण्यनेकरूपाधि यानि मुञ्चन्ति यादवाः ॥ १४ ॥ मनसैव जग

त्यष्टिं संहार ञ्च करोतियः ॥ तस्यारिपचचपघे कियानुयमविस्त
रः॥ १५ ॥ तथापिये मनुष्याणां धर्मा स्तदनुवर्त्तनं ॥ कुर्व न्वलव
तासन्धिं हीनै र्युद्धं करोत्यसौ ॥ १६ ॥ सामचोपप्रदान ञ्च तथाभे
दंप्रदर्शगन् ॥ करोति दण्डपात ञ्च क्वचिदेव पलायनं ॥ १७ ॥
मनुष्यदेहिनां चेष्टा मित्येव मनुकुर्वतः ॥ लीलाजगत्पते स्तस्य छन्द
तःसंप्रवर्त्तते ॥ १८ ॥

इत्यादिब्राह्मे पुराणे व्यासर्षिसम्वादे जरासन्धोपरोधोनाम
सप्ताशीतितमोऽध्यायः ॥८७ ॥

—०—

व्यासउवाच ॥ गोपगोष्ठे द्विजःश्यालः षण्ढइत्युक्तवान्द्विजाः ॥
जन्तूनां सन्निधौ सर्वे जहसु र्यादवा स्तदा ॥ १ ॥ ततः कोपसमा
विष्टो दचिणापथ मेत्यसः ॥ सुतमिच्छं स्तपस्तेपे यदुचक्रासुखाव
हं ॥ २ ॥ आराधय न्महादेवं सुष्कपर्ण मभचयत् ॥ ददौवरं च
तुष्टोषौ वर्षेद्वादशमे हरः ॥ ३ ॥ सम्भावयामास चतं यवनेशो ह्यना
त्मजः ॥ यद्योषित्सङ्ग मासाद्य पुत्रोऽभू दनलप्रभः ॥ ४ ॥ तंकालय
वनं नाम स्वेपुरे यवनेश्वरः ॥ अभिषिच्य वनं यातो वज्रकङ्का ञ्च
नोरसं ॥ ५ ॥ सतु वीर्य्यमदोन्मत्तः पृथिव्यां वलिनो न्टपान् ॥ प
प्रच्छ नारद स्तस्मै कथयामास यादवान् ॥ ६ ॥ म्लेच्छकोटिसहस्रा
णांसहस्रैः सोभिसंवृतः ॥ गजाश्वरथसम्पन्नै,श्चकार परमोद्यमं ॥ ७ ॥
प्रययौ चाव्यवच्छिन्नं चिन्तयानो दिनेदिने ॥ यादवान् प्रतिसामर्षो

द्विजेन्द्रा मथुरां पुरीं ॥ ८ ॥ कृष्णोपि चिन्तयामास क्षयितुं याद
वंकुलं ॥ यवनेन रणेप्राप्य मागधः प्रहरिष्यति ॥ ९ ॥ मागधस्य
संक्षीणं सकालयवो बली ॥ हन्तातदिदमायान्तं यदूनां व्यसनं द्वि
धा ॥ १० ॥ तस्माद्दुर्गं करिष्यामि यदूना मतिदुर्जयं ॥ स्त्रियोपि
यत्र युद्ध्येयुः किम्पुन र्वृष्णिपुङ्गवाः ॥ ११ ॥ मयिसुप्ते प्रमत्तेवा या
तेप्रवसितेतथा ॥ यादवाभिभवंदुष्टा माकुर्वन् क्रूरयोधिनः ॥ १२ ॥
इतिसञ्चिन्त्य गोविन्दो योजनानिमहोदधिं ॥ ययाचे द्वादशपुरीं
द्वारकां तत्र निर्ममे ॥ १३ ॥ महोद्यानां महावप्रां तडागशतशो
भितां ॥ प्राकारगृहसम्बाधा मिन्द्रस्येवामरावतीं ॥ १४ ॥ मथुरा
वासिनंलोकं तत्रानीय जनार्द्दनः ॥ आसन्नकालयवनां मथुराञ्च
स्वयं ययौ ॥ १५ ॥ वहिरावासिते सैन्ये मथुराया निरायुधः ॥ नि
र्जगाम सगोविन्दो ददृशे यवन ञ्चतं ॥ १६ ॥ सज्ञात्वा वासुदेव
ञ्च वाहुप्रहरणो नृपः ॥ अनुयाति महायोगी चेतोभिः प्राप्यतेन
यः ॥ १७ ॥ तेनानुनीतः कृष्णोपि प्रविवेश महागुहां ॥ यत्रशेते
महावीर्य्यो मुचुकुन्दो नरेश्वरः ॥ १८ ॥ सोपि प्रविष्टो यवनो दृ
ष्ट्वाशय्यागतं नरं ॥ पादेन ताडयामास मत्वाकृष्णं सुदुर्मतिः ॥ १९ ॥
दृष्टमात्रश्च तेनासौ सकालयवनो ऽग्निना ॥ तस्य क्रोधेन मुनयो भ
स्मीभूतश्च तत्क्षणात् ॥ २० ॥ सहिदेवासुरे युद्धे गतो जित्वा म
हासुरान् ॥ निद्रार्त्तः सुमहाकालं निद्रांवव्रे वरन्तदा ॥ २१ ॥
प्रोक्तश्च देवैः संसुप्तं यस्त्वा सुत्थापयिष्यति ॥ देहजेनाग्निना सद्यः

सतु भस्मीभविष्यति ॥ २२ ॥ एवं दग्ध्वाच तंपापं दृष्ट्वाच मधुसूद
नम् ॥ कस्त्व मित्याह सोग्राह जातोऽहं शशिनःकुले ॥ २३ ॥ व
सुदेवस्य तनयो यदुवंशे समुद्भवः ॥ मुचुकुन्दोपि तत्रासौ वृद्धगर्ग
वचः स्मरन् ॥ २४ ॥ संस्मृत्य प्रणिपत्यैनं सर्वं सर्वेश्वरं हरिं ॥ आ
ह्वजातोभवान्विष्णो रंशस्त्वं परमेश्वरः ॥ २५ ॥ पुरा गर्गेण क
थितं अष्टाविंशतिमे युगे ॥ द्वापरान्ते हरे र्जन्म यदुवंशे भविष्य
ति ॥ २६ ॥ सत्वंप्राप्तो नसन्देहो मर्त्याना मुपकारकृत् ॥ तथाहि
सुमहत्तेजो नालं सोढुमहंतव ॥ २७ ॥ तथाहि सजलाम्भोद ध्व
निंधीरतरंतव ॥ व्युक्षच मतिवैयपोर्या युष्मत्पादसुतालितः ॥ २८॥
देवासुरमहायुद्धे दैत्यसैन्यमहाभटाः ॥ नशेकुर्ममयत्तेज स्त्वत्तेजो
नसहाम्यहं ॥ २९ ॥ सन्सारपतितस्यैको जन्तो स्त्वंशरण स्परं ॥
सप्रसीद प्रपन्नार्त्तिहर्त्ता हर ममाशुभं ॥ ३० ॥ त्वंपयोनिधयः श
लाः सरितश्च वनानि च ॥ मेदिनी गगनं वायुः पयोऽग्निश्च तथाप्
मान् ॥ ३१ ॥ पुन्सः परतरं यच्च व्याप्तजन्म विकल्पवत् ॥ शब्दादि
हीनमजरं जन्मक्षयविवर्जितम् ॥ ३२ ॥ त्वत्तो ऽमराः सपितरो
यक्षगन्धर्वकिन्नराः ॥ सिद्धा स्चाप्सरस स्त्वत्तो मनुष्याः पशवः ख
गाः ॥ ३३ ॥ सरीसृपो मृगाः सर्वे त्वत्तः सर्वे महीरुहाः ॥ यच्च
भूतं भविष्यद्वा किञ्चिदत्र चराचरं ॥ ३४ ॥ मया संसारचक्रेस्मि
न्भगवन् भ्राम्यतासदा ॥ तापत्रयाभिभूतेन नप्राप्ता निर्वृतिः क्वचि
त् ॥ ३५ ॥ दुःखान्येव सुखान्मत्वा मृगतृष्णा जलाशया ॥ मया

नाथ गृहीतानि यानिभूतानि वैभवत् ॥ ३६ ॥ राज्यं लक्ष्मीर्वलं कोशो मित्रपक्ष स्तयात्मजाः ॥ भार्य्याभृत्यजनायेच शब्दाद्या विषयाःप्रभो ॥ ३७ ॥ सुखबुध्या मयासर्वं गृहीतमिद मव्यय ॥ परिणामेत देवेश तापात्मकमभू न्मम ॥ ३८ ॥ देवलोकगतिं प्राप्तो नाथ देवगणोपिहि ॥ मत्तःसाहाय्यकामोभू च्छाश्वती कुत्रनिर्वृतिः ॥ ३९ त्वामनाराध्य जगतां सर्वेषां प्रभवास्पदं ॥ शाश्वती प्राप्यते केनपरमेश्वरनिर्वृतिः ॥ ४० ॥ त्वन्मायामूढमनसो जन्ममृत्युजरादिकान् ॥ शास्तवन्तोपि पश्यन्ति प्रेतराजाननं नराः ॥ ४१ ॥ ततोक्रियाशतपरा नरकेष्वतिदारुणं ॥ प्राप्नुवन्ति नरा दुःखं स्वरूपं निन्दतस्तव ॥ ४२ ॥ अहमन्येतु विषमे मोहिता स्तवमायया ॥ ममत्वगर्त्तगर्त्तान्ते भ्रमामि परमेश्वर ॥ ४३ ॥ सोऽहंत्वां शरणमपारमीशमाद्यं संप्राप्तः परमपदं प्रभो नकिञ्चित् ॥ सन्सारश्रमपरितापतप्तचेता निर्वाणे परिणतधाम्नि साभिलाषः ॥ ४४ ॥

इत्यादिब्राह्मे पुराणे व्यासर्षिसम्वादे मुचुकुन्दस्तवो नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

—०—

व्यास उवाच ॥ इतिस्तुत स्तदातेन मुचुकुन्देन धीमता ॥ प्राहेशः सर्वभूताना मनादि र्भगवान्हरिः ॥ १ ॥ यथाभिवाञ्छितान्दिव्यान् लोकान्गच्छनरेश्वर ॥ अव्याहतवरैश्वर्यो मत्प्रसादोपवृंहितः ॥ २ ॥ भुक्त्वा दिव्या न्महाभोगान् भविष्यसि महत्कुले ॥

जातिस्मरो मत्प्रसादा त्ततो मोक्षमवाप्स्यसि ॥ ३ ॥ व्यासउवाच ॥
इत्युक्तः प्रणिपत्येशं जगता मव्ययं न्टपः ॥ गुहामुखाद्विनिःक्रान्तो
ददृशे चाल्पका न्नरान् ॥ ४ ॥ ततः कलियुगं ज्ञात्वा प्राप्तं तप्तुं न्टप
स्तपः ॥ नरनारायण स्थानं प्रययौ गन्धमादनं ॥ ५ ॥ कृष्णोपि घा
तयित्वात मुपायेनहि तद्बलम् ॥ जग्राह मथुरामेत्य हस्त्यश्वस्यन्द
नोज्वलं ॥ ६ ॥ आनीय चोग्रसेनाय द्वारवत्यां न्यवेदयत् ॥ पराभि
भवनिःशंकं बभूवच यदोर्कुलं ॥ ७ ॥ बलदेवोपि मुनयः प्रशान्ताखि
लविग्रहः ॥ जातिदर्शनसोत्कण्ठः प्रययौ नन्दगोकुलं ॥ ८ ॥ ततो
गोपांश्च गोपीश्च यथापूर्व ममित्रजित् ॥ तथैवाभ्यवद त्प्रेम्णा बहु
मानपुरस्सरं ॥ ९ ॥ कैश्चापि संपरिष्वक्तः कांश्चिच्च परिषस्वजे ॥
हास्यञ्चक्रे समं कैश्चि द्गोपगोपीजनां स्तदा ॥ १० ॥ प्रियाण्यनेका
न्यवद त्तेषां तत्र हलायुधः ॥ गोप्यश्च मुदिता तत्र दृष्ट्वा प्रेमबला
त्मकं ॥ ११ ॥ अस्यचेष्टोपहसनं नकश्चि त्पुरयोषितां ॥ सौभाग्य
मानमधिकं करोति चणसौहृदः ॥ १२ ॥ क्वचैस्मरति नःकृष्णो गी
तानुगमनं फलं ॥ अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥ १३ ॥
अथवाकिं तदालापै रपरां क्रियतांकथां ॥ यदस्माभि र्विनातेन वि
नास्माकं भविष्यति ॥ १४ ॥ पिता माता तथा भ्राता भर्त्ता बन्धुज
नश्चकिं ॥ नत्यक्त स्तत्कृतेस्माभि रकृतज्ञ स्ततोहिसः ॥ १५ ॥ तथा
पिकश्चि दालाप मिहागमनसंश्रयं ॥ करोति कृष्णो वक्तव्यं भवता
ललनाः शुभम् ॥ १६ ॥ दामोदरः सगोविन्दः पुरस्त्रीशक्तमानसः ॥

अपेतप्रीति रस्मासु दुर्दर्शः प्रतिभातिनः ॥ १७ ॥ व्यास उवाच ॥ आमन्त्रितः सकृष्णेति पुन र्दामोदरेति च ॥ जहास सुस्वरं गोपी हरिणाकृष्टचेतसः ॥ १८ ॥ सन्देशैः सुष्टुमधुरैः प्रेमगर्भै रगर्वितैः॥ रासेणाप्यासिता गोप्यः कृष्णस्यातिमनोहरैः ॥ १९ ॥ गोपैश्च पूर्ववद्रामो हरिणाकृष्टचेतसैः ॥ परिहासकथा श्चक्रे सहते व्रजवासिभिः ॥ २० ॥

इति ब्रह्मपुराणे व्यासर्षिसम्वादे बलभद्रस्य गोकुलागमनं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥

—०—

व्यास उवाच ॥ वने विचरत स्तस्य सहगोपै र्महात्मभिः ॥ मानुषच्छद्मरूपस्य शेषस्य धरणीभृतः ॥ १ ॥ निष्पादितोरुकार्य्यस्य कार्य्येणोर्वीविचारिणः॥ उपभोगार्थमत्यर्थं वरुणः प्राहवारुणीं॥२॥ अभीष्टा सर्वदायस्य मदिरेत्वं महौजसः ॥ अनन्तस्योपभोगाय तस्य गच्छ मुदेशुभे ॥ ३ ॥ इत्युक्ता वारुणी तेन सन्निधान मथाकरोत्॥ सुगन्धंहि तथातत्र वृन्दावन मथाकरोत् ॥ ४ ॥ वृन्दावन मथोत्पन्ना कदम्बतरुकोटरात् ॥ विचरहलदेवोपि मदिरागन्धमुत्तम॥५॥ तस्मारमदिरातर्ष मवाप्याथ पुरातनं ॥ ततः कदम्बा त्सहसा मधुधारां सलाङ्गली ॥ पतन्तीं वीक्ष्य मुनयः प्रययौ परमांमुदं ॥ ६ ॥ पपौच गोपगोपीभिः समवेतो मुदान्वितः ॥ उपगीयमानो ललितं गीतवाद्यविशारदैः॥७॥ समत्तोत्पन्नघर्मार्त्तः कर्णिकोकटिकोवलः॥

आगच्छ यमुने स्नातु मिच्छामीत्याह विह्वलः ॥ ८ ॥ तस्य वाक्यं तदा सातु मत्तोक्त मवमन्य च ॥ नजगाम ततः क्रुद्धो हलं जग्राह लाङ्गली ॥ ९ ॥ गृहीत्वातां हलाग्रेण चकर्ष मदविह्वलः ॥ पापे नायासिना यासि गम्यता मिच्छयान्यतः ॥ १० ॥ साकृष्टा तेन स हसा मार्गं सन्त्यज्य निम्नगा ॥ यत्रास्ते वलदेवोसौ प्लावयामास तं वनं ॥ ११ ॥ शरीरिणी तथोपेत्य त्रासविह्वललोचना ॥ प्रसीदेत्य ब्रवीद्रामं मुञ्चमां मुशलायुध ॥ १२ ॥ सोऽब्रवी दवजानासि म मशौर्यं वलंयदि ॥ सोऽहंत्वांहलपातेन नयिष्यामि सहस्रधा॥१३॥ व्यास उवाच ॥ इत्युक्ता जातसंत्रासा तयानया प्रसादितः ॥ भूत ले प्लाविते तत्र मुमोच यमुनां वलः ॥ १४ ॥ ततः कान्तस्य वैका न्ति राजगाम महात्मनः ॥ अवतंस्योत्पलं चारु गृहीत्वैकं च कु ण्डलं ॥ १५ ॥ वरुणप्रहिता चासौ मालामम्लानपङ्कजां ॥ समु द्राभे ततोवस्त्रे नीले लक्ष्मी रयच्छत ॥ १६ ॥ कृतावतंसः सतदा चारुकुण्डलभूषितः ॥ नीलाम्बरधरः श्रीमान् शुशुभे कान्तिसंयु तः ॥ १७ ॥ इत्येवं भूषितो राम स्तया तत्र मनोरमः ॥ मासद्वयं नसंप्राप्तः पुनः समथुरां पुरीं ॥ १८ ॥ रेवतीं नाम तनयां रैवतस्य महीपतेः ॥ उपयेमे वलस्तस्यां जज्ञाते निशठोल्मुकौ ॥ १९ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे श्रीवलदेवचरिते नवतितमोऽध्यायः ॥ ९० ॥



व्यास उवाच ॥ भीष्मकः कुण्डिने राजा विदर्भविषयेऽभव
त् ॥ रुक्मी तस्याभवत्पुत्रो रुक्मिणी च वराङ्गना ॥ १ ॥ रुक्मि
णी चकमे कृष्णं सा च तं चारुहासिनी ॥ नददौ याचते चैनां रुक्मी
द्वेषेण चक्रिणे ॥ २ ॥ ददौ च शिशुपालाय जरासन्धेन चोदितः ॥
भीष्मको रुक्मिणा सार्द्धं रुक्मिणी सुरुविक्रमः ॥ ३ ॥ विवाहार्थं
ततः सर्वे तेचैद्यास्य महीभृतः ॥ कुपितास्ते हरिं हन्तुं व्यक्रुर्योगम
नुत्तमं ॥ ४ ॥ निर्जितास्च समागम्य रामाद्यैर्यदुपुङ्गवैः ॥ कुण्डिनं
नप्रवेक्ष्यामीत्यहत्वा युधिकेशवं ॥ ५ ॥ कृत्वा प्रतिज्ञां रुक्मी च तू
र्णं कृष्णमभिद्रुतः ॥ हत्वा वलं सनागाश्वं पत्तिस्यन्दनसंकुलं ॥ नि
र्जितः पतित स्चोर्व्यां लीलयैव सचक्रिणा ॥ ६ ॥ निर्जित्य रुक्मि
णंकृष्णो रुक्मिणीं वरयेच्च तां ॥ राक्षसेन विवाहेन संप्राप्तां मधुसू
दनः ॥ ७ ॥ तस्यां जज्ञे च प्रद्युम्नो मदनांशः सवीर्य्यवान् ॥ ज
हार शम्बरोयम्वै योजघान च शम्बरं ॥ ८ ॥ मुनय ऊचुः ॥ शंब
रेण हृतो वीरः सकथं तेन संहृतः ॥ एतत्कथानकं दिव्यं कथयस्व
महामुने ॥ ९ ॥ व्यास उवाच ॥ षष्ठेह्नि जातमात्रन्तु प्रद्युम्नं सू
तिकागृहात् ॥ नमे निहन्तेति द्विजा हृतवान्कालशंवरः ॥ १० ॥
नीत्वा चिक्षेप चैवैनं महोग्रे लवणार्णवे ॥ वक्रकल्लोलकलिते सु
घोरे मकरालये ॥ ११ ॥ पातितं तत्र चैवैको मत्स्यो जग्राह वा
लकं ॥ नममार च तस्यापि जठरानलपीडितः ॥ १२ ॥ मत्स्यव
न्धैस्च मत्स्योसौ मत्स्यैरन्यैसह द्विजाः ॥ घातितोऽसुरवर्य्याय शंवराय

निवेदितः ॥ १३ ॥ तस्य मायावतीनाम पत्नी सर्व्वगृहेश्वरी ॥ का
रयामास सूदाना मधिपत्य मनिन्दिता ॥ १४ ॥ दारिते मत्स्यज
ठरे ददृशे सोतिशोभनं ॥ कुमारं मन्मथतरो र्दग्धस्य प्रथमाङ्कुर
म् ॥ १५ ॥ कोयं कथमयं कस्य जठरं समुपागतः ॥ इत्येवं कौतु
काविष्टां तान्तन्वीं प्राह नारदः ॥ १६ ॥ अयं समस्तजगतां सृति
संहारकर्मणा ॥ शंवरेण हृतः कृष्णतनयः सूतिकागृहात् ॥ १७ ॥
क्षिप्तः समुद्रेमत्स्येन निगीर्णस्तेऽवसङ्गतः ॥ नररत्नमिदं सुभ्रु विश्र
ब्धापरिपालय ॥ १८ ॥ नारदेनैवमुक्तासा पालयामास तंशिशुं॥
वाल्यादेवातिरागेण रूपातिशयमोहिता ॥ १९ ॥ सयदा यौवना
भोगभूषितोऽ भूद्द्विजोत्तमाः ॥ साभिलाषा तदा सातु वभूव गज
गामिनी ॥ २० ॥ मायावती तदाचास्मै मायाः सर्व्वा महात्मने॥
प्रद्युम्नायानुरूपाय तन्न्यस्तहृदयेक्षणा ॥ २१ ॥ प्रसज्जतीन्तु तामा
ह कार्ष्णिः कमललोचनः ॥ मातृभाव मपाहाय किमेवं वर्त्तसेऽन्य
था ॥ २२ ॥ साचास्मै कथयामास नपुत्रस्त्वं ममेतिवै ॥ तनयंत्वा
मयं विष्णो र्हृतवान् कालशंवरः ॥ २३ ॥ क्षिप्तः समुद्रे मत्स्यस्य
संप्राप्तो जठरा न्मया ॥ साच रोदिति तेमाता तथाचान्तर्विवत्स
ला ॥ २४ ॥ व्यास उवाच ॥ इत्युक्तः शंवरं युद्धे प्रद्युम्नः ससमाहू
यत् ॥ क्रोधाकुलीकृतमना युयुधेऽथ महावलः ॥ २५ ॥ हत्वासैन्य
मशेषन्तु तस्य दैत्यस्य माधविः ॥ सप्तमायाव्यतिक्रम्य मायां संयुयुजे
ष्टमां ॥ २६ ॥ तया जघान तंदैत्यं मायया कालशंवरं ॥ ततश्च स

तयासार्द्धं साजगाम पितुःपुरं ॥ २७ ॥ अन्तःपुरं च पतितं मायावत्यासमन्वितं ॥ तंदृष्ट्वा हृष्टसंकल्पा बभूवुः कृष्णयोषितः ॥ २८ ॥ रुक्मिणी चाबदत्प्रेम्णा साश्रुदृष्टि रनिन्दिता ॥ धन्यायाः खल्वयं पुत्रो वर्त्तते नवयौवने ॥ २९ ॥ अस्मिन्वयसि पुत्रोमे प्रद्युम्नो यदि जीवति ॥ सभाग्या जननी वत्स त्वया कापि विभूषिता ॥ ३० ॥ अथवा यादृशः स्नेहो ममयादृग्वपुस्तव ॥ हरेरपत्यं सुव्यक्तं भवान्वत्सभविष्यति ॥ ३१ ॥ व्यास उवाच ॥ एतस्मिन्नन्तरे प्राप्तः सहकृष्णेन नारदः ॥ अन्तःपुरचरां देवीं रुक्मिणीं प्राह हर्षितः ॥ ३२ ॥ एषते तनयः सुभ्रु हत्वा शंबरमागतः ॥ हृतो येनाभव द्वालो भवत्याः सूतिकागृहात् ॥ ३३ ॥ इय मायावती भार्य्या तनयस्यास्य ते सति ॥ शंबरस्य नभार्येयं श्रूयता मत्रकारणं ॥ ३४ ॥ मन्मथेतु गते नाशं तस्मिन्निह परायणा ॥ शंबरं मोहयामास मायारूपेण रुक्मिणि ॥ ३५ ॥ विवाहाद्युपभोगेषु रूपं मायावहं शुभं ॥ दर्शयामास दैत्यस्य तस्येयं मदिरे क्षणा ॥ ३६ ॥ कामोवतीर्णः पुत्रस्ते तस्येयं दयिता रतिः ॥ विशंका नच कर्त्तव्या स्नुषेयं तव शोभना ॥ ३७ ॥ ततो हर्षसमाविष्टा रुक्मिणी केशव स्तथा ॥ नगरी च समस्ता साधुसाध्वित्यभाषत ॥ ३८ ॥ चिरनष्टेन पुत्रेण संगतां प्रेक्ष्य रुक्मिणीं ॥ अवाप विस्मयं सर्वो द्वारवत्याजन स्तदा ॥ ३९ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे प्रद्युम्नोत्पत्तिदर्शनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥

व्यास उवाच ॥ चारुदेष्णं सुचारुञ्च चारुदेहञ्च वीर्यवा
न् ॥ सुषेनं चारुगुप्तं च भद्रचारुं तथापरं ॥ १ ॥ चारुविंदुञ्च चा
रुञ्च वसुञ्च वलिनांवरं ॥ रुक्मिण्यजनयत्पुत्रान् कन्यां चारुम
तींतथा ॥ २ ॥ अन्याश्च भार्य्याः कृष्णस्य वभूवुः शतशो वराः ॥ का
लिन्दी मित्रविन्दा च सत्या नाग्नजिती तथा ॥ ३ ॥ देवी जांबव
तीचापि रोहिणी कामरूपिणी ॥ मद्रराजसुता चान्या सुशीला
शीलमण्डना ॥ ४ ॥ सत्राजिती सत्यभामा लक्ष्मणा चारुहासिनी ॥
षोडशात्र सहस्राणि स्त्रीणा मन्यानि चक्रिणः ॥ ५ ॥ प्रद्युम्नस्य
महावीर्य्यो रुक्मिण स्तनयां शुभां ॥ स्वयंवरस्थां जग्राह साचतं त
नयं हरेः ॥ ६ ॥ तस्या मेवाभवत्पुत्रो महाबलपराक्रमः ॥ अनिरु
द्धो रणेरुद्धो वीर्य्योदधि रिन्दमः ॥ ७ ॥ तस्यापि रुक्मिणः पौ
त्रीं वरयामास केशवः ॥ दौहित्राय ददौ रुक्मी स्पर्द्धयन्नपि शौरि
णा ॥ ८ ॥ तस्या विवाहे रामाद्या यादवा हरिणासह ॥ रुक्मिणो
नगरे जग्मु र्नाम्नाभोजकटे द्विजाः ॥ ९ ॥ विवाहे तत्र निर्वृत्ते प्रा
द्युम्नेः सुमहात्मनः ॥ कालिङ्गराजप्रमुखा रुक्मिणं वाक्य मब्रुवी
त् ॥ १० ॥ अनक्षज्ञो हली द्यूते तथास्य व्यसनं महत् ॥ तंजया
मोबलंकस्मा द्द्यूतेनैनं महाद्युतिं ॥ ११ ॥ तथेति तानाह नृपान्
रुक्मी वलसमन्वितः ॥ सभायां सहरामेण चक्रे द्यूतञ्चवैतदा ॥ १२ ॥
सहस्रमेकं निष्काणां निर्जितो रुक्मिणा वलः ॥ द्वितीयेपि तथाचा
न्यं सहस्रं रुक्मिणा जितः ॥ १३ ॥ ततो दशसहस्राणि निष्काणां

पणमाददे ॥ बलदेवेन जगता रुक्मी द्यूतविदांवरः ॥ १४ ॥ ततोज
हासापिवलं कलिङ्गाधिपति र्द्विजाः ॥ दन्ता न्सन्दर्शय न्मूढो रु
क्मी चाह मदोद्धतः ॥ १५ ॥ अविद्योयं मयाद्यूते बलभद्रः पराजि
तः ॥ युद्धेवा चाक्षविद्यायां त्वक्षज्ञोऽहं सभाविदः ॥ १६ ॥ दृष्ट्वा क
लिङ्गराजानं प्रकाशि दशनाननं ॥ रुक्मिणंप्रति दुर्वारं कोपच्चक्रे
हलायुधः ॥ १७ ॥ ततः कोपपरीतात्मा निष्ककोटिं हलायुधः ॥
ग्लहं जग्राह रुक्मी च तदर्थेऽक्षा नपातयत् ॥ १८ ॥ अजयद्बलदे
वस्तं प्राहोच्चै स्तंजितं मया ॥ मयेति रुक्मी प्राहोच्चै रलीकोक्तै र
लंवचः ॥ १९ ॥ त्वयोक्तोहि ग्लहः सत्यं नमयैषो ऽनुमोदितः ॥ ए
वंत्वया चेद्विजितं नमया विजितं कथं ॥ २० ॥ ततोन्तरिक्षे वागु
च्चैराह गम्भीरनादिनी ॥ बलदेवस्य तंकोपं धर्षयन्ती महात्मनः ॥ २१
विजितं बलदेवेन रुक्मिणा भाषितं मृषा ॥ अनुक्त्वापि वचः किंचि
त्पूतं भवति कर्मणा ॥ २२ ॥ ततोबलः समुत्थाय कोपसंरक्तलोच
नः ॥ जघानाष्टापदेनैव रुक्मिणं सुमहाबलं ॥ २३ ॥ कलिङ्गराज
मादाय विस्फुरन्तं बलाद्बलः ॥ बभञ्ज दन्तान् कुपितो यैःप्रकाशं
जहासमः ॥ २४ ॥ आकृष्य च महास्तंभं जातरूपं महाबलः ॥ ज
घानोत्पत्य तत्पक्षान् भूभृतः कुपितो बलः ॥ २५ ॥ ततोहाहाकृतं
सर्वं पलायनपरं द्विजाः ॥ तद्राजमण्डलं सर्वं बभूव कुपिते ब
ले ॥ २६ ॥ बलेन निहतं श्रुत्वा रुक्मिणं मधुसूदनः ॥ नोवाच कि
ञ्चि द्वचनं रुक्मिणी बलयोर्भयात् ॥ २७ ॥ ततो ऽनिरुद्धमादाय

स्तोहाश्चंद्विजोत्तमाः ॥ द्वारकामाजगामाथ यदुचक्रं सकेशवः ॥ २८ ॥

इत्यादिब्रह्मपुराणे व्यासर्षिसंवादे रुक्मीबलदेवयो र्द्यूतवर्णनं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥

—०—

व्यास उवाच ॥ द्वारवत्यां ततः शौरिं शक्र स्त्रिभुवनेश्वरः ॥ आजगामाथ मुनयो मत्तैरावतपृष्ठतः ॥ १ ॥ प्रविश्य द्वारकां सोथ समीपं हरिणासह ॥ कथयामास दैत्यस्य नरकस्य विचेष्ठितं ॥ २ ॥ त्वयानाथेन देवानां मनुष्यत्वेपि तिष्ठता ॥ प्रशमं सर्व्वदुःखानि नीतानि मधुसूदन ॥ ४ ॥ तपस्वीजननाशाय सोऽरिष्टो धेनुक स्तथा ॥ कंसः कुवलयापीडः पूतना बालघातिनी ॥ ५ ॥ नाशंनीता स्त्वया सर्वे येऽन्ये जगदुपद्रवाः ॥ युष्मद्दोर्दंडमद्बुद्धिपरित्राते जगत्त्रये ॥ ६ ॥ यज्ञे यज्ञहविः प्राप्ता तृप्तिंयान्ति दिवौकसः ॥ सोऽहं सांप्रत मायातो यन्निमित्तं जनार्द्दन ॥ तच्छ्रुत्वा तत्प्रतीकारं प्रयत्नं कर्त्तुमर्हसि ॥ ७ ॥ भौमोयं नरको नाम प्राग्ज्योतिषपुरेश्वरः ॥ करोतिसर्व्वभूताना मुपघात मरिंदम ॥ ८ देवसिद्धसुरादीना न्नृपीणा ञ्च जनार्द्दन ॥ हत्वाहि सोऽसुरः कन्या रुरोध निजमन्दिरे ॥ ९ ॥ छत्रंय त्सलिलस्रावि तज्जहार प्रचेतसः ॥ मन्दरस्य तथा शृंगं हृतवान्मणिपर्व्वतं ॥ १० ॥ अमृतस्राविणी दिव्ये मातुर्मे धृतकुण्डले ॥ जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतं द्विपं ॥ १२ ॥ दुत न्त मेनं गोविन्द पर्य्याप्तस्य तवोदितं ॥ यदत्र प्रतियत्तव्यं तत्स्वयं प्रविमृश्य

साम् ॥ १३ ॥ व्यास उवाच ॥ इतिश्रुत्वा स्मितंकृत्वा भगवान्देवकी
सुतः ॥ गृहीत्वा वासवं हस्ते समुत्तस्थौ वरासनात् ॥ १४ ॥ सञ्चि
न्त्य तमुपारुह्य गरुडं गगनेचरं ॥ सत्यभामां समारोप्य ययौ प्रा
ग्ज्योतिषं पुरं ॥ १५ ॥ आरुह्यैरावतं नागं शक्रोपि त्रिदशालयं ॥
ततो जगाम सुमनाः पश्यतां द्वारकौकसां ॥ १६ ॥ प्राग्ज्योतिषपुर
स्यासौ समन्ता च्छतयोजनं ॥ आवृतं मौरवैः पाशैः सुरान्तैस्तै र्द्वि
जोत्तमाः ॥ १७ ॥ तांश्चिच्छेदहरिः पाशान् क्षिप्ता चक्रं सुदर्शन
म् ॥ ततो मुरुः समुत्तस्थौ तञ्जघानैव केशवः ॥ १८ ॥ मुरोस्तु त
नयान्सप्त सहस्राणि ततोहरिः ॥ चक्रधाराग्निनिर्दग्धां श्चकार स
लिलानि च ॥ १९ ॥ हत्वा मुरुं हयग्रीवं तथापञ्चजनं द्विजाः ॥
प्राग्ज्योतिषपुरीं धीमां स्त्वरवा न्समुपाद्रवत् ॥ २० ॥ नरकेनास्य
तत्राभू न्महासैन्येन संयुगं ॥ कृष्णस्य यत्र गोविन्दो जघ्ने दैत्यान्
सहस्रशः ॥ २१ ॥ शस्त्रास्त्रवर्षं मुञ्चन्तं भौमन्त न्नरकं वली ॥ क्षि
प्त्वा चक्रं द्विधा चक्रे चक्री दैतेय चक्रहा ॥ २२ ॥ हते च नरके
भूमि र्गृहीत्वा दितिकुण्डले ॥ उपतस्थे जगन्नाथं वरं चेदमथाब्र
वीत् ॥ २३ ॥ पुत्र स्त्वयैव दत्तोमे त्वयैव विनिपातितः ॥ गृहाणकु
ण्डलेचैव पालयास्य चसन्ततिम् ॥२४॥ भारावतारणार्थाय ममैवभग
न्सदा ॥ अनन्तलोक मायातः प्रसादसुमुखप्रभो ॥ २५ ॥ त्वंकर्त्ता च
विकर्त्ता च संहर्त्ता प्रभवोभवान् ॥ व्यापिव्याप्यःरूपाकर्त्ता कार्यञ्च
भगवान्सदा ॥ २६ ॥ यच्चंभूतात्मरूप स्व स्तूयसे तवकिं तदा ॥

परमात्मा त्वमात्मा च भूतात्मा चाव्ययोवरः॥ यदातदा स्तुतिनां
स्ति किमर्थं स्तुतिमाचरः॥ २७॥ प्रसीद सर्व्वभूतात्मा न्नरकेणकृ
तंहियत्॥ तत्त्वच्यतां सदोषेण सूतः सच निपातितः॥ व्यास उवा
च॥ तथेति चोक्त्वा धरणीं भगवान् भूतभावनः॥ रत्नानि नरका
लस्य जग्राह मुनिसत्तमाः॥ २९॥ कन्यापुरे सकन्यानां षोडशा
तुलविक्रमः॥ शताधिकानि ददृशे सहस्राणि महामतिः॥ ३०॥
चतुर्दंष्ट्रान् गजां श्चोग्रान् षट्सहस्राणि दृष्टवान्॥ काम्बोजानां त
थाश्वानां नियुतान्येकविंशतिः॥ ३१॥ कन्या स्तांश्च तथनागां स्ता
नश्वान् द्वारकां पुरीं॥ प्रापयामास गोविन्दः सद्यो नरककिङ्क
रैः॥ ३२॥ ददृशे वारुणं छत्रं तथैव मणिपर्वतं॥ आरोपयामास
हरि र्गरुडोपरि संयतः॥ ३३॥ आरुह्य च स्वयं कृष्णः सत्यभामा
सहायवान्॥ अदित्याः कुण्डले दातुं जगाम त्रिदशालयं॥ ३४॥

इति ब्रह्मपुराणे व्यासर्षिसम्वादे भौमवधो नाम
त्रिनवतितमोऽध्यायः॥ ९३॥

—०—

व्यास उवाच॥ गरुडो वारुणं छत्रं तथैव मणिपर्वतं॥ सम
र्थञ्च हृषीकेशं लीलयैव वहन्ययौ॥ १॥ ततःशंखमुपाध्मासौ स्व
र्गद्वारगतो हरिः॥ उपतस्थु स्ततोदेवा सार्घपात्रा जनार्द्दनं॥ २॥
सदेवै स्त्वर्च्चितः कृष्णो देवमातु र्निवेशनं॥ सिताद्रिशिखराकारां
प्रविश्य ददृशे दितिं॥ ३॥ प्रणम्य सहशक्रेण अदित्यै कुण्डलोत्त

मौ ॥ ददौ नरकनाशं च शशंसाद्धे जनार्दनः ॥ ४ ॥ ततः प्रीता
जगन्माता धातारं जगतां हरिं ॥ तुष्टावादिति रव्यग्रा कृत्वा तत्रव
वामनः ॥ ५ ॥ अदितिरुवाच ॥ नमस्ते पुण्डरीकाक्ष भक्तानामभय
ङ्कर ॥ सनातनात्मन् भूतात्मन् सर्व्वात्मन् भूतभावन ॥ ६ ॥ प्राणा
त्ममनसोवुद्धि रिन्द्रियाणां गुणात्मकः ॥ त्रिगुणातीतनिर्द्वंद्वः शुद्धः
सर्व्वहृदिस्थितः ॥ ७ ॥ शितशीर्षादिभिः शेष कल्पनापरिवर्जितः ॥
जन्मादिभिर सम्बत्तः स्वप्नादिपरिवर्जितः ॥ ८ ॥ संध्या रात्रिरहो
भूमिः खम्मतं वायुरम्बुच ॥ हुताशनो मनोवुद्धि भूतादिस्त्वं तथा
च्युतः ॥ ९ ॥ सृष्टिस्थितिविनाशानां कर्त्ता कर्तृपति र्भवान् ॥ ब्र
ह्माविष्णुशिवाद्याभि रात्ममूर्त्तिभि रीश्वरः ॥ १० ॥ मायाते नाम
वीजाय परमार्थातिमोहिनी ॥ अनात्मन्यात्मविज्ञानं ययामूढो न
रःच्युतः ॥ ११ ॥ अन्वेष मतिभावोऽत्र यत्कला सुपजायते ॥ संसा
रमातु मायाया तवैवं नाथ चेष्टितं ॥ १२ ॥ यैस्व धर्मपरै र्नाथ नरै
राराधितो भवान् ॥ तेतरन्त्यखिलामेतां माया मात्मविमुक्तये ॥१३
ब्रह्माद्याः सकलादेवा मनुष्याः परमास्तथा ॥ विष्णुमायामहावर्त्तमो
हधर्मसमावृताः ॥ १४॥ आराध्यत्वा मभीप्सन्ते कामानात्मभवक्षये ॥
यदेते पुरुषा वद्धा मायया भगवं स्तव ॥ १५ ॥ मयातु पुत्रकामित्वा
वैरिपक्षक्षयायच ॥ आराधितोनमोक्षायमायाविलसितंहितत् ॥१६
कौपीनाच्छादनप्राया वाञ्छा कल्पद्रुमादपि ॥ जायते ऽकृतपुण्या
नां सोपराधः सदोषजः ॥ १७ ॥ तत्प्रसीदाखिलं जन्म मायापोह

कराव्यय ॥ अज्ञानं ज्ञानसद्भावं त्वन्तभूते सनातनं ॥ १८ ॥ नम
स्ते चक्रहस्ताय शंखहस्ताय तेनमः ॥ गदाहस्ताय ते विष्णो पद्म
हस्ताय तेनमः ॥ १९ ॥ एतत्पश्यति तेरूपं स्थूलचिह्नोपलक्षितं ॥
नजानाति परं तत्वं प्रसीद परमेश्वर ॥ २० ॥ व्यास उवाच ॥
अदित्यैवं स्तुतो विष्णुः प्रहस्याह सुरारणिं ॥ माता देवी त्वमस्मा
कं प्रसीद वरदाभव ॥ २१ ॥ अदितिरुवाच ॥ एवमस्तु यथेच्छाते
त्वमशेषैः सुरासुरैः ॥ अजेयः पुरुषव्याघ्र मृत्युलोके भविष्यसि ॥ २२
ततो नन्तरमेवाख्य शक्राणीसहितां दितिं ॥ सत्यभामा प्रणम्याह प्र
सीदेति पुनः पुनः ॥ २३ ॥ अदितिरुवाच ॥ मत्प्रसादान्नतेशुभ्रु
जरावैरूप्यमेवच ॥ भविष्यत्यनवद्याङ्गि सर्व्वभोगं गमिष्यसि ॥ २४॥
व्यास उवाच ॥ अदित्यातु कृतानुज्ञो देवराजो जनार्द्दनं ॥ यथा
वत्पूजयामास वङ्कमानपुरस्सरं ॥ २५ ॥ ततो ददर्श कृष्णोपि स
त्यभामासहायवान् ॥ देवोद्यानानि सर्व्वाणि नन्दनादीनि सत्त
माः ॥ २६ ॥ ददर्श च सुगन्धानि मञ्जरीपुञ्जधारिणं ॥ शैत्याह्ला
दकरं तोयं वालपल्लवशोभितं ॥ २७ ॥ मथ्यमानेऽमृते जातं जा
तरूपमयं तरुं ॥ पारिजातं जगन्नाथः केशवः केशिसूदनः ॥ २८॥
तंदृष्ट्वा प्राह गोविन्दं सत्यभामा द्विजोत्तमाः ॥ कस्मान्न द्वारकामे
व नीयते कृष्ण पादपः ॥ २९ ॥ यदि चैतद्वचः सत्यं ममात्यर्थं प्रि
येतिमे ॥ महेन्द्रनिःकुटार्थाय तदायं नीयतां तरुः ॥ ३० ॥ नमे
जाम्बवती तादृगभीष्टा नच रुक्मिणी ॥ सत्येयथा त्वमित्युक्तं त्वया

कृष्णासक्तप्रियं ॥ ३१ ॥ सत्यन्तु यदिगोविन्द नोपचारकृतंवचः॥
तदस्तु पारिजातोयं ममगेहविभूषणं ॥ ३२ ॥ विभ्रतो पारिजा
तस्य केशपक्षेण मञ्जरीं ॥ सपत्नीनामहं मध्ये शोभेय मिति काम
ये ॥ ३३ ॥ व्यास उवाच ॥ इत्युक्तः सप्रहस्यैन पारिजातं गरुत्म
ति ॥ ३४ ॥ आरोपयामास हरि स्तमूचु र्वनरक्षिणः ॥ ३४ ॥ भो
शची देवराजस्य महिषी तत्परिग्रहं ॥ पारिजातं न गोविन्द ह
र्तुमर्हसि पादपं ॥ ३५ ॥ शचीविभूषणार्थाय देवै रमृतमन्थने ॥
उत्पादितोयं नक्षेमी गृहीत्वैनं गमिष्यसि ॥ ३६ ॥ देवराजोमुखं
प्रेक्ष्यो यस्या स्तस्याः परिग्रहं ॥ कोवा प्रार्थयते क्षेमी गृहीत्वैनन्तु
कोव्रजेत् ॥ ३७ ॥ अवश्य मस्य देवेन्द्रो विष्कृतिंकृष्ण यास्यति ॥
वज्रोद्यातकरं शक्रमनुयास्यन्ति चामराः ॥ ३८ ॥ तदलं सकलैर्देवै
र्विग्रहेण तवाच्युत ॥ विपाककटुयत्कर्म्म नतच्छंसन्ति पण्डि
ताः ॥ ३९ ॥ इत्युक्ते तैरुवाचैतान् सत्यभामा तिकोपिता ॥ काश
चीपारिजातस्य कोवा शक्रः सुराधिपः ॥ ४० ॥ सामान्यः सर्व्वलो
कानां पारिजात स्तथा द्रुमः ॥ भर्त्तु र्बाहुमहागर्व्वात् रुणद्ध्येन म
थोशची ॥ ४१ ॥ तत्कथ्यतां द्रुतं गत्वा पौलोम्यावचनं मम ॥ सत्य
भामावदत्येवं भर्त्तृगर्व्वोद्धतातुरं ॥ ४२ ॥ यदित्वं दयिता भर्त्तुर्यदि
वश्यः पतिस्तव ॥ मद्भर्त्तुर्हरतो वृक्षं तत्कारयनिवारणं ॥ ४३ ॥ जा
नासि दयितं शक्रं जानामि त्रिदशेश्वरं ॥ पारिजातं तथाप्येनं
मानुषी हारयामिते ॥ ४४ ॥ व्यासउवाच ॥ इत्युक्ता रक्षिणोगत्वा

शच्यै चोक्तु र्यथोदितं ॥ शची चोत्साहयामास त्रिदशाधिपतिं स्व
तिम् ॥ ४५ ॥ ततः समस्तदेवानां सैन्यैः परिवृतो हरिः ॥ प्रवृत्तः
पारिजातार्थं मिन्द्रो योधयितुं द्विजाः ॥ ४६ ॥ ततः परिघनिस्त्रिं
शगदाशूलपरश्वधान् ॥ देवादेवपरीवारं युद्धाय समवस्थितं ॥ ४७ ॥
चकार शंखनिर्घोषैर् दिशः शब्देन पूरयन् ॥ मुमोच शरपात ञ्च
सहस्रायुतसम्मितम् ॥ ४८ ॥ ततो दिशो नभ श्चैव दृष्ट्वा शरशता
न्वितं ॥ मुमुचु स्त्रिदशाःसर्वे शस्त्रसंघान्य नेकशः ॥ ४९ ॥ एकैकं
शस्त्रमस्त्र ञ्च देवैर्मुक्तं सहस्रधा ॥ चिच्छेद लीलयैवेशो जगतां म
धुसूदनः ॥ ५० ॥ पाशः सलिलराजस्य समाकृत्योरगाशनः ॥ च
कार खण्डशः सर्वं वालपन्नगगेहवत् ॥ ५१ ॥ यमेन प्रहितं दण्डं
गदा व्विक्षेप खण्डितां ॥ पृथिव्यां पातयामास भगवा न्देवकीसु
तः ॥ ५२ ॥ शिविका ञ्च धनेशस्य चक्रेण तिलशोविभुः ॥ चक्रा
रशौरि रर्कंतु दृष्टिपुष्ट्वै हंतौजसं ॥ ५३ ॥ नीतोग्निः शतशो वाणै
र्द्रावित ञ्च दिशोदश ॥ छिन्नशूलाग्रधनुषा रुद्रा भुवि निपाति
ताः ॥ ५४ ॥ साध्यविश्वे च मरुतो गन्धर्वा श्चैव सायकैः ॥ सार्ङ्गिस्त
स्मेरितै रस्ता व्योम्नि शाल्मलितूलवत् ॥ ५५ ॥ गरुत्मानपि व
क्त्रेण पक्षाभ्यां नखराङ्कुरैः ॥ भक्षय दुपदेवा न्दन स्तथ्वंदा र
णे ॥ ५६ ॥ परस्परं वै वर्षन्ति धाराभि रिव तोयदाः ॥ ऐरावतेन
गरुडो युयुधे देवसंकुले ॥ देवैः समस्तै र्युयुधे शक्रेण च जनार्द
नः ॥५७ ॥ छिन्नेषु शेषवाणेषु शस्त्रेष्वस्त्रेषु चत्वरन् ॥ जग्राह वा

सवो वज्रं कृष्णश्चक्रं सुदर्शनं ॥ ५८ ॥ ततो हाहाकृतं सर्वं त्रैलो
क्यं सचराचरं ॥ ततो वज्रधरौ दृष्ट्वा देवराजजनार्द्दनौ ॥ ५९ ॥
चिप्तं वज्र मथेन्द्रेण जग्राह भगवा न्हरिः ॥ न मुमोच तथा चक्रं
शक्रं तिष्ठेति चाब्रवीत् ॥ ६० ॥ प्रणष्टवज्रं देवेन्द्रं गरुडक्षतवाह
नम् ॥ सत्यभामाब्रवी द्वीरं पलायनपरायणं ॥ ६१ ॥ त्रैलोक्येश्वर
नोयुक्तं शचीभर्त्तः पलायनं ॥ पारिजातद्रुमाभोगा त्वामुपस्थास्यते
शची ॥ ६२ ॥ कीदृशं देवराज्यन्ते पारिजातस्रगुज्वलां ॥ अपश्य
तो यथापूर्वं प्रणयाभ्यागतां शचीं ॥ ६३ ॥ अलं शक्रप्रयासेन नपी
डांयातुमर्हसि ॥ नीयतां पारिजातोयं देवाःसन्तु गतव्यथाः ॥ ६४ ॥
अतिगर्वावलेपेन बहुमानपुरःसरं ॥ रूपेण गर्वता सातु भर्त्ता स्त्री
कानगर्विता ॥ ६५ ॥ व्यास उवाच ॥ इत्युक्ते वै निववृते देवराजः
स्त्रियायुतः ॥ प्राहवै नामतां चण्डीं सखेदा चातिविस्तरैः ॥ ६६ ॥
नचापि सर्गसंहारस्थितिकर्त्ता खिलस्यः ॥ जितस्य तेन मेव्रीडा
जायते विश्वरूपिणः ॥ ६७ ॥ यस्मिन् जगत्सकल मेतदनादिमध्ये
यस्मा यतश्च नभविष्यति सर्व्वभूतात् ॥ तेनोद्भवप्रलयपालनकारकेण
व्रीडा कथंभवति देवि निराकृतस्य ॥ ६८ ॥ सकलभुवनमूर्त्तं र्मूर्त्ति
रात्मातु सूक्ष्मा विदितसकलवेद्यै र्ज्ञायते यस्य नान्तः ॥ तमजमकृत
मीशं शाश्वतं स्वेच्छयैव यदुपकृत ममर्त्यं कोविजेतुं समर्थः ॥ ६९ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे पारिजाताहरणे चतु
र्नवतितमोऽध्यायः ॥ ९४ ॥

व्यास उवाच ॥ संस्तुतो भगवानित्थं देवराजेन केशवः ॥ प्र
हस्य भावगम्भीर मुवाचेदं द्विजोत्तमाः ॥ १ ॥ देवराजो भवा नि
न्द्रो वयंमर्त्या जगत्पते ॥ चन्तव्यं भवता चैतदपराधकृतंमम ॥ २ ॥
पारिजाततरु श्चायं नीयता मुचितास्पदं ॥ गृहीतोयं मयाशक्र स
त्यावचनकारणात् ॥ ३ ॥ वज्रं चेन्द्र गृहाणत्वं यद्वस्ता त्प्रहितंत्व
या ॥ तव चैतत्प्रहरणं शक्रवैरिविदारणं ॥ ४ ॥ शक्रउवाच ॥ विमो
हयसि मामीश मर्त्योहं मितिकिं वदन् ॥ जानीम स्त्वां भगवतो
नतु सूक्ष्मविदो वयं ॥ ५ ॥ योऽसि सोऽसि जगत्त्राण प्रवृत्तौ नाथ
संस्थितः ॥ जगत्संकल्पनिर्वाहं जातो यदुकुले भवान् ॥ ६ ॥ नी
यता पारिजातोयं कृष्ण द्वारावतीं पुरीं ॥ मर्त्यलोके त्वयामुक्ते ना
यंसंस्थास्यते भुवि ॥ ७ ॥ व्यासउवाच ॥ तथेत्युक्त्वातु देवेन्द्र माज
गामभुवं हरिः ॥ प्रशक्तः सिद्धगन्धर्वैः स्तूयमानो महर्षिभिः ॥ ८ ॥
जगाम कृष्णः सहसा गृहीत्वा पादपोत्तमं ॥ ततः शंखमुपाध्माय
द्वारकोपरि संस्थितः ॥ ९ ॥ हर्ष मुत्पादयामास द्वारकावासिनो द्वि
जाः ॥ अवतीर्य्याथ गरुडात् सत्यभामासहायवान् ॥ १० ॥ निःकु
टेस्थापयामास पारिजातं महातरुं ॥ यमभ्येत्य जनः सर्वो जातिं
स्मरति पौर्विकीं ॥ ११ ॥ यस्य पुष्पेन गन्धेन मोदित ञ्च त्रियोज
नम् ॥ ततस्ते यादवाःसर्वे देहबन्धानमानुषान् ॥ ददृशुः पादपेयस्मि
नूकुर्वतो सुखदर्शनं ॥ १२ ॥ किङ्करैः समुपानीतं हस्त्यश्वादिगते
पुनः ॥ स्त्रियश्च कृष्णो जग्राह नरकस्य परिग्रहान् ॥ १३ ॥ ततः

काले शुभेप्राप्ते उपयेमे जनार्द्दनः ॥ ताः कन्या नरके नास न्सर्वतो याःसमाहृताः ॥ १४ ॥ एकस्मिन्नेव गोविन्दः काले तासां महामुने॥ जग्राह विधिव त्पाणिं यथाद्देषु धर्मतः ॥ १५ ॥ षोडशस्त्री सह स्राणि शतमेकं तथाधिकं ॥ तावन्ति चक्रे रूपाणि भगवा न्मधुसूदनः ॥ १६ ॥ एकैकाश्च तदा कन्या मेनिरे मधुसूदनं ॥ ममैव पाणिग्रहणं गोविन्दः कृतवानिति ॥ १७ ॥ निशासु जगतः स्रष्टा तासांगेहेषुकेशवः ॥ उवासविप्राः सर्वासां विप्ररूपधरोविभुः॥ १८॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे षोडशसहस्रस्त्रीविवाह करणन्नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

—०—

व्यास उवाच ॥ प्रद्युम्नाद्या हरेः पुत्रा रुक्मिण्याः कथितास्त व ॥ भानुञ्च भौमकि ञ्चैव सत्यभामा व्यजायत ॥ १ ॥ दीप्तिमन्तं रैवतञ्च रोहिण्या स्तनया हरेः ॥ २ ॥ वभूवु र्जाम्बवत्याश्च शाम्बाद्या वाहुशालिनः ॥ तनया भद्रविन्दाद्या नाग्नजित्यां महाबलाः ॥ ३ ॥ संग्रामजि त्प्रधानास्तु शैव्यायां चाभव न्सुताः ॥ वृका द्यास्तु सुतामाद्र्या नवनप्रमुखा स्तथा ॥४॥ अवाप लक्ष्मणापुत्रान् कालिंद्याश्च सुतादयः ॥ अन्यासां चैव भार्य्याणां समुत्पन्नानि च क्रिणः ॥ ५ ॥ अष्टायुतानि पुत्राणां सहस्राणि शतं तथा ॥ प्रद्युम्नः प्रथम स्तेषां सर्वेषां रुक्मिणीसुतः ॥ ६ ॥ प्रद्युम्ना दनिरुद्धोऽभू द्वज्र स्तस्मा दजायत ॥ अनिरुद्धो वलौघैस्त कृष्णपौत्रो महावलः ॥ ७ ॥

वाणस्य तनया भूषा सुपर्येमे द्विजोत्तमाः ॥ यत्र युद्धमभू द्घोरं हरि
शंकरयो र्महत् ॥ ८ ॥ छिन्नं सहस्रं बाहूनां यत्र वाणस्य चक्रि
णा ॥ मुनय ऊचुः ॥ कथं युद्धमभू द्ब्रह्म न्नूषार्थे हरकृष्णयोः ॥
कथं चयञ्च वाणस्य बाहूनां कृतवा न्हरिः ॥ ९ ॥ एतत्सर्वं महाभा
ग समाख्यातुं त्वमर्हसि ॥ महत्कौतूहलं जातं कथयस्व कथामिमा
म् ॥ १० ॥ व्यास उवाच ॥ ऊषा वाणसुता विप्राः पार्वतीं शंभुना
सह ॥ क्रीडन्ती मुपलक्ष्योच्चैः स्पृहां चक्रे तदाश्रयां ॥ ११ ॥ ततःस
कलविज्ञाना गौरी तामाह भामिनीं ॥ अलमत्यर्थतापेन भर्त्तात्व
मपि रंस्यसे ॥ १२ ॥ इत्युक्त्वा सा तदा चक्रे तदेति मतमात्मनः ॥
कोभर्त्ता भावयेदेनां पुनरप्याह पार्वती ॥ १३ ॥ वैशाखशुक्लद्वादश्यां
स्वप्ने योऽभिभवंतव ॥ करिष्यति सतेभर्त्ता राजपुत्रि भविष्यति॥ १४॥
व्यास उवाच ॥ तस्यान्तिके पुमान् स्वप्ने यथा देव्या उदीरितः ॥
तथैवाभिभवं चक्रे रागञ्चक्रे च तत्र सा ॥ १५ ॥ ततः प्रवुद्धा पुरुषं
नापश्यत समुत्सुका ॥ क्वगतोसीति निर्लज्जा द्विजा स्वोक्तवती स
ती ॥ १६ ॥ वाणस्य मन्त्री कुम्भाण्ड श्चित्रलेखातु तत्सुता ॥ तस्याः
सख्यं समभव त्याहकोयं त्वयोच्यते ॥ १७ ॥ यदा लज्जाकुला नास्य
कथयामास वासखी ॥ तदाविश्वास मानीय सर्वमेवाख्यणोद्वचः ॥ १८
विदितां सातु तामाह पुनरूषा यथोदितं ॥ देव्या तथैव तत्प्राप्तौ य
दुपायं कुरुद्रुतं ॥ १९ ॥ व्यास उवाच ॥ ततः पटे सुरा न्दैत्यान् ग
न्धर्वांश्च प्रधानतः ॥ मनुष्यां श्चाभिलिख्यासौ चित्रलेखा व्यदर्शय

त् ॥ २० ॥ अपास्य सातु तान् सर्वान् तथोरगसुरासुरान् ॥ मनु
ष्येषु ततो दृष्टिं ततो वृष्ण्यन्धकादिषु ॥ २१ ॥ कृष्णरामौ विलोक्या
सौ सुभ्रु र्लज्जावती तदा ॥ प्रद्युम्नदर्शने व्रीडा दृष्टिं निन्ये ततोद्वि
जाः ॥ २२ ॥ दृष्टमात्रे ततः कान्ते प्रद्युम्नतनये द्विजाः ॥ दृष्टवाद्य
र्थविक्राधिन्या लज्जा क्वापि निराकृता ॥ २३ ॥ सोयं सोयं तये
त्युक्ते जगाम योगगामिनी ॥ ययौ द्वारवती सूषां समाश्वास्य
ततः सखीं ॥ २४ ॥

इति ब्रह्मपुराणे व्यासर्षिसम्वादे वाणयुद्धे पञ्चनवति
तमोऽध्यायः ॥ ९६ ॥

—०—

॥ व्यास उवाच ॥ वाणोपि प्रणिपत्याग्रे ततश्चाह त्रिलोचनं ॥ देववाङ्क
सहस्रेण निर्विंणोहं विनाहवं ॥ १ ॥ कच्चिन्ममैषां वाहूनां साफल्यक
रणे नरः ॥ भविष्यति विनायुद्धं भाराय मम किं भुजैः ॥ २ ॥ अपूर्व्वध्व
जभङ्गस्ते यदा वाणभविष्यति ॥ पिशिताशि जनानन्दं रणं प्राप्स्य
सि त्वंतदा ॥ ३ ॥ ततः प्रणम्य मुदितः शंभु स्वाप्यागतो गृहं ॥
भग्नन्तु ध्वजमालोक्य हृष्टो हर्षं परं ययौ ॥ ४ ॥ एकस्मिन्नेव कालेतु
योगविद्यावलेनतु ॥ अनिरुद्धमथानिन्ये चित्रलेखाम्वरात्ततः ॥ ५ ॥
कन्यान्तःपुरमध्येतं रममाणं सहोषया ॥ विज्ञाय रक्षिणो गत्वा श
शंसु र्दैत्यभूपतेः ॥ ६ ॥ व्यादिष्टं किंकराणान्तु सैन्यं तेनमहात्मना ॥
जघान परिघं लौहमादाय परवीरहा ॥ ७ ॥ हतेषु तेषु वाणोपि

रथस्थस्तद्ध्वोयन: ॥ युध्यमानो यथाशक्ति यदा वीरेणनिर्जितः ॥ ८॥
मायया युयुधे तेन सतदा मन्त्रचोदितः ॥ ततस्तु पन्नगास्त्रेण वद्ध
न्यदुनन्दनं ॥ ९ ॥ द्वारवत्यां प्रयातोसा वनिरुद्धेन जल्पता ॥ य
दूना माचचक्षेतं वद्धं वाणेन नारदः ॥ १० ॥ तंशोणितपुरे श्रुत्वा
नीतं विद्या विदग्धया ॥ योषितः प्रत्ययं जग्मु र्यादवानां मतेरि
ति ॥ ११ ॥ ततो गरुडमारुह्य स्मृतमात्रागतं हरिः ॥ वलप्रद्युम्न
सहितो वाणस्य प्रययौ पुरम् ॥ १२ ॥ पुरीं प्रवेशे प्रमथै र्युद्धमासी
न्महात्मनः ॥ ययौ वाणपुराभ्यासं नीत्वा तत्संक्षयं हरिः ॥ १३ ॥
तत स्त्रिपाद स्त्रिशिरा ज्वरो माहेश्वरो महान् ॥ वाणरक्षार्थ म
त्यर्थं युयुधे शार्ङ्गधन्वना ॥ १४ ॥ तद्भस्मस्पर्शसंभूतं तपः कृष्णाङ्ग
सङ्गमान् ॥ अवाप वलदेवोपि समं सम्मीलितेक्षणः ॥ १५ ॥ ततः
प्रयुद्धमानस्तु सहदेवेन शार्ङ्गिणा ॥ वैष्णवेन ज्वरेणाशु कृष्णदेहा
द्विनिःसृता ॥ १६ ॥ नारायणभुजाघातपरिपीडनविह्वलः ॥ तस्यै
क्ष्य क्षम्यतामाह सहदेवैः पितामहः ॥ १७ ॥ ततस्तु क्षान्तं मयेति
प्रोक्त्वा तंवैष्णवंज्वरं ॥ आत्मन्येव लयंनिन्ये भगवान्मधुसूदनः ॥ १८॥
मम त्वयासमं युद्धं येस्मरिष्यन्ति मानवाः ॥ विज्वरा स्तेभविष्यन्ती
त्युक्त्वा चैनं ययौ हरिः ॥ १९ ॥ ततोऽग्नी न्भगवा न्पञ्च जित्वा नी
त्वाक्षयं तथा ॥ दानवानां वलं विष्णु श्चूर्णयामास लीलया ॥ २०॥
ततः समस्तसैन्येन दैत्येयानां वलेःसुतः ॥ युयुधे शङ्कर श्चैव कार्त्ति
केयश्च शौरिणा ॥ २१ ॥ हरिशङ्करयो र्युद्ध मतीवासी त्सुदारुणं॥

चुचुभुः सकला लोकाः शस्त्रास्त्रैः सहसार्दिताः ॥ २२ ॥ प्रलयोऽ
मशेषस्य जगतो नूनमागतः ॥ मेनिरे त्रिदशा यत्र वर्त्तमाने महा
हवे ॥ २३ ॥ जृम्भणास्त्रेण गोविन्दो जृम्भयामास शङ्करम् ॥ ततः
प्रणेशु र्दैत्येयाः प्रमथा श्च समन्ततः ॥ २४ ॥ जृम्भाभिभूतस्तु हरो
रथोपस्थ उपाविशत् ॥ नशशाक तथा योद्धुं कृष्णेना क्लिष्टकर्म्म
णा ॥ २५ ॥ गरुडक्षतवाहश्च प्रद्युम्नास्त्रेण पीडितः ॥ कृष्णहुङ्का
रनिर्द्धूतशक्ति श्चापययौ गुहः ॥ २६ ॥ जृम्भिते शंकरे नष्टे दैत्यसैन्ये
गुहेजिते ॥ नीते प्रमथसैन्ये च संशयं शार्ङ्गधन्वना ॥ २७ ॥ नन्दी
शसंगृहीताश्व मधिरुह्य महारथं ॥ बाण स्तया ययौ योद्धुं कृष्ण
कार्ष्णिबलैःसह ॥ २८ ॥ बलभद्रो महावीर्य्यो बाणसैन्यमनेकधा ॥
विव्याध बाणैः प्रभ्राश्य धर्म्मत श्चापलायत ॥ २९ ॥ आकृष्य लाङ्ग
लाग्रेण मुशलेनावपोथितम् ॥ बलं बलेन ददृशे बाणो बाणश्च चक्रि
णा ॥ ३० ॥ ततः कृष्णस्य बाणेन युद्धमासी त्समासतः ॥ परस्पर
न्तौ संग्रामे बाणेन प्रहितान् शरैः ॥ दीप्तान् ऊङ्कारविकृतान् का
यत्राणविभेदकान् ॥ ३१ ॥ कृष्ण श्चिच्छेद बाणोपि विभेद केशवं त
था ॥ क्षुरप्रेणैव बाणेन बाणं विव्याध चक्रभृत् ॥ ३२ ॥ मुमुचाते
तथास्त्राणि बाणकृष्णौ जिघांसया ॥ परस्परक्षतकरौ परिवार्य्यंत
तोद्दिजाः ॥ ३३ ॥ छिद्यमानेष्वशेषेषु शस्त्रेषु च निषीदति ॥ प्राम
र्षेण ततो बाणं हन्तु श्चक्रे हरिर्मनः ॥ ३४ ॥ मुञ्चतोबाण नाशा
य तच्चक्रश्च मधुद्विषः ॥ नग्ना दैत्येयविद्याभू त्कोटवीपुरतो हरेः ॥ ३५

तामग्रतो हरि र्दृष्ट्वा मितिलाक्षं सुदर्शनं ॥ मुमोच वाण मुद्दिश्य
छेत्तुं वाहुवनं रिपोः ॥ ३६ ॥ चक्रेण तत्त्वाहूनां वाणस्याच्युतचो
दितं ॥ छेदं चक्रे ऽसुरस्याशु शस्त्रक्षेपण माहृतम् ॥ ३७ ॥ छिन्ने
वाहुवने तत्तु करस्थं मधुसूदनः ॥ मुमुक्षुर्वाणनाशाय विज्ञातस्त्रि
पुरद्विषा ॥ ३८ ॥ उपेत्याह च गोविन्दं सामपूर्व्वं सुमापतिः ॥ त्रि
लोक्य वाणदोर्द्दण्डं छेदास्त्रक्स्रावनवर्षिणं ॥ ३९ ॥ रुद्र उवाच ॥ कृ
ष्णकृष्ण जगन्नाथ जानेत्वां पुरुषोत्तमं ॥ परेशं परमात्मान मना
दिनिधनं परं ॥ ४० ॥ देवतिर्य्यङ्मनुष्येषु शरीरग्रहणात्मकं ॥ ली
लेयं सर्व्वभूतस्य तवचेष्टोपलक्षणं ॥ ४१ ॥ तत्प्रसीदाभयं दत्तं वा
णस्यास्यमयाप्रभो ॥ तत्त्वया नानृतं कार्य्यं यन्मया व्याहृतंवचः ॥४२॥
अस्मत्संश्रयवृद्धोयं नापराधस्तवाव्यय ॥ मया दत्तवरो दैत्य स्ततस्त्वां
क्षमयाम्यहं ॥ ४३ ॥ व्यास उवाच ॥ इत्युक्तः प्राह गोविन्दः शूलपा
णिमुमापतिं ॥ प्रसन्नवदनो भूत्वा गतामर्षोऽसुरंप्रति ॥ ४४ ॥
श्रीभगवा नुवाच ॥ युष्मद्दत्तवरो वाणो जीवतादेषशंकर ॥
त्वद्वाक्यगौरवादेत न्मया चक्रं निवर्त्तितं ॥ ४५ ॥ त्वया यदभयं
दत्तं तद्दत्तमखिलं मया ॥ मत्तोविभिन्नं नात्मानं द्रष्टुमर्हसि
शंकर ॥ ४६ ॥ योहं सत्वं जगच्चेदं सदेवासुरमानुषं ॥ अविद्या
मोहितात्मानः पुरुषाभिन्नदर्शिनः ॥ ४७ ॥ इत्युक्त्वा प्रययौ कृष्णः
प्राद्युम्निर्यत्र तिष्ठति ॥ तद्बन्धफणिनो नेशु र्गरुडानिलशोषि
ताः ॥ ४८ ॥ ततो निरुद्ध मारोप्य सपत्नीकं गरुत्मति ॥

आजग्मु र्द्वारकां राम कार्ष्णि दामोदराः पुरीं ॥ ४९ ॥
इति ब्रह्मपुराणे व्यासर्षिसम्वादे बाणयुद्धं नाम सप्तनवति
तमोऽध्यायः ॥ ९७ ॥

—०—

द्विजाऊचुः ॥ चक्रे कर्म्म महच्छौरि र्बिभ्रन्तु मानुषीं तनुं ॥ जिगाय शक्रं सर्व्वञ्च सर्व्वदेवान् स्वलीलया ॥ १ ॥ यच्चान्यदकरो दन्य द्दिव्यचेष्टाभिघातकृत् ॥ कथ्यतां तन्महत्कर्म परं कौतूहलं हि नः ॥ २ ॥ व्यासउवाच ॥ गदतोमम विप्रेन्द्राः श्रूयता मिद मादरात् ॥ नरावतारे कृष्णेन दग्धा वाराणसी यथा ॥ ३ ॥ पौण्ड्रको वासुदेवोह मवतीर्णो महीतले ॥ नष्टस्मृति स्ततसर्वं विष्णुचिह्न मचीकरत् ॥ ४ ॥ दूतञ्च प्रेषयामास कृष्णाय सुमहात्मने ॥ त्यक्त्वा चक्रादिकं चिह्नं मदीयं त्वन्न चात्मनः ॥ ५ ॥ वासुदेवात्मकं मूढ मुक्त्वा सर्वमशेषतः ॥ आत्मनो जीविताथीय ततो मेप्रणतिं व्रज ॥ ६ ॥ इत्युक्तः सप्रहस्यैव दूतंप्राह जनार्द्दनः ॥ तवचिह्नमहं चक्रं समस्तं चेन्नमारितैः ॥ ७ ॥ वाच्यश्च पौण्ड्रको गत्वा त्वया दूतवचो मम ॥ ज्ञात स्त्वद्वाक्यसद्भावो यत्कार्यं तद्विधीयतां ॥ ८ ॥ गृहीतचिह्नएवाहमागमिष्यामि तेपुरीं ॥ उतप्रेक्षामितेचक्रं निजनिक्रमसंशयं ॥ ९ ॥ आज्ञा पूर्वंतु यदिद मागच्छेति त्वयोदितं ॥ सम्पादयिष्येचतुथ्यं तद वाप्योविलम्बितं ॥ १० ॥ शरणान्ते समभेत्य कर्त्तास्मि नृपते तथा ॥ यथा त्वत्तो भयंभूयो नमे किञ्चिद्भविष्यति ॥ ११ ॥ इत्युक्तो परतो

दंदं संस्मृत्याभ्यागतो हरिः ॥ गरुडन्तं तथारुह्य त्वरितं तत्पुरं य
यौ ॥ १२ ॥ तस्यापि केशवोद्योगं श्रुत्वा काशीपति स्तदा ॥ सर्व्व
सैन्यपरीवारः पार्ष्णिग्राह मुपाययौ ॥ १३ ॥ ततो बलेन महता
काशिराजबलेन च ॥ पौण्ड्रको वासुदेवोसौ केशवाभिमुखं य
यौ ॥ १४ ॥ तन्ददर्श हरि र्दूराढुवाच स्यन्दनेस्थितं ॥ शंखपद्मं ग
दाचक्रं बाहुपाणिधृताम्बुजं ॥ १५ ॥ स्रग्धरं कृतशार्ङ्गं च सुपर्ण र
चनध्वजम् ॥ वक्षस्थलकृतं चास्य श्रीवत्सं ददृशे हरिः ॥ १६ ॥ कि
रीटकुण्डलधरं पीतवासःसमन्वितं ॥ दृष्ट्वा तं भावगम्भीरं जहास
गरुडध्वजः ॥ १७ ॥ युयुधे च बलेनास्य सूदयामास तद्बलं ॥ का
शिराजबल ञ्चैव क्षयंनीत्वा जनार्द्दनः ॥ उवाच पौण्ड्रकं मूढ मा
त्मचिह्नोपलक्षणम् ॥ १८ ॥ श्रीभगवानुवाच ॥ पौण्ड्रकोक्तं त्वयाय
त्तु दूतवक्त्रेण माम्प्रति ॥ समुत्सृजेति चिह्नानि तत्ते सम्पादयाम्य
हम् ॥ १९ ॥ चक्रञ्च तत्समुत्सृष्टं गदेयन्ते विसर्जिता ॥ गरुत्माने
षनिर्द्दिष्टः समारोहतु तेध्वजं ॥ २० ॥ इत्युच्चार्य्य विमुक्तेन चक्रेणा
सौ विदारितः ॥ पोथितो गदयाभग्नो भक्षितश्च गरुत्मता ॥ २१ ॥
ततो हाहाकृते लोके काशीना मधिप स्तथा ॥ युयुधे वासुदेवेन
मित्रस्यापचितौ स्थितः ॥ २२ ॥ ततो शार्ङ्गविनिर्मुक्तैः छित्वा तस्य
शरैः शिरः ॥ काशिपुर्य्यां विचिक्षेप कुर्व्वँ ल्लोकस्य विस्मयं ॥ २३ ॥
हत्वा च पौण्ड्रकं शौरिः काशिराज ञ्च सानुगं ॥ रेमे द्वारवतीं
प्राप्तो रेमे स्वर्गगतो यथा ॥ २४ ॥ तच्छिरः पतितं तत्र दृष्ट्वा का

श्चिपतेः पुरे ॥ जनः किमेत दित्याह केनकेनेति विस्मितः ॥ २५ ॥
ज्ञात्वातं वासुदेवेन हतं तस्य सुतस्ततः ॥ पुरोहितेन सहित स्तो
षयामास शंकरं ॥ २६ ॥ वरं वृणीष्वेतितदा तंप्रोवाच नृपात्मजं ॥
सवत्रे भगव न्कृत्यां पितृहन्तु र्वधायमे ॥ स्यातु तिष्ठति कृष्णस्य त
त्प्रसादा न्महेश्वर ॥ २७ ॥ व्यास उवाच ॥ एवं भविष्यतीत्युक्त्वा द
क्षिणाग्नेरनन्तरं ॥ महाकृत्या समुत्तस्थौ तस्यैवाग्निनिवेशनात् ॥ २८ ॥
ततो ज्वालाकराला सा ज्वलत्केशकलापिनी ॥ कृष्ण कृष्णेति कु
पिता कृत्या द्वारवतीं ययौ ॥ २९ ॥ तामवेक्ष्य जनस्त्रासात् प्रमीत
लोचनो द्विजाः ॥ ययौ शरण्यं जगतां शरणं मधुसूदनं ॥ ३० ॥
काशिराजसुतेनेय माराध्य वृषभध्वजं ॥ उत्पादिता महाकृत्याल
वमन्यच्च चक्रिणा ॥ ३१ ॥ जहि कृत्या मिमामुग्रां द्विजिह्वां तां
जटालुकां ॥ चक्रमुत्सृष्टमक्षेषु क्रीडाशक्तेषु लीलया ॥ ३२ ॥ तद
ग्निमालाजटिलं ज्वालाभारातिभीषणं ॥ कृत्या मनुजगामाशु विष्णु
चक्रं सुदर्शनं ॥ ३३ ॥ चक्रप्रतापविध्वस्ता कृत्या माहेश्वरीतथा ॥
ननाश वेगिनी वेगा त्तदप्यनुजगामतां ॥ ३४ ॥ कृत्या वाराणसी
मेव प्रविवेश त्वरान्विता ॥ विष्णुचक्रप्रतिहता प्रभावा न्मुनिसत्त
माः ॥ ३५ ॥ ततः काशिवलं भूरि प्रमथानां ततोवलं ॥ समस्त
शस्त्रास्त्रयुतं चक्रस्याभिमुखं ययौ ॥ ३६ ॥ शस्त्रास्त्रमोचचतुरं
दग्ध्वा तद्बलमोजसा ॥ कृत्वा भस्मावशेषांतां तदा वाराणसीं
पुरीं ॥ ३७ ॥ प्रभूतभृत्यवर्गान्तां साश्वमातङ्ग मानवाम् ॥

अशेषकोषकोषांतां दुर्निरीक्ष्यां सुरैरपि ॥ ३८ ॥ ज्वालापरिकृता शेष गृहप्राकारतोरणां ॥ ददाह तद्दरं चक्रं सकला मेव तांपुरी म् ॥ ३९ ॥ अक्षीणसार मभ्येत्य साध्यसाधनसंस्पृहं ॥ तच्चक्रं प्र स्फुरद्दीप्ति विष्णोरभ्याययौ करं ॥ ४० ॥

इति ब्रह्मपुराणे व्यासर्षिसम्वादे पौंड्रकवधवाराणसीदहनं नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥

—०—

द्विजा ऊचुः ॥ भूय एवान्यपीच्छामो वलभद्रस्य धीमतः ॥ श्रोतुं पराक्रमं ब्रह्मं स्तन्नमाख्यातु मर्हसि ॥ १ ॥ यमुना कर्षणा दीनि श्रुतान्यस्माभि रत्रवै ॥ तत्कथ्यतां महाभाग यदन्यत्कृतवान्ब लः ॥ २ ॥ व्यास उवाच ॥ मुनयः श्रूयतां कर्म्म यद्रामेणाद्भुतं कृ तम् ॥ अनन्तेनाप्रमेयेन शेषेण धरणी धृता ॥ ३ ॥ दुर्योधनस्य त नयां स्वयम्वरकृतक्षणां ॥ वलादादत्तवलवान् शाम्बो जाम्बवतीसु तः ॥ ४ ॥ ततः क्रुद्धा महावीर्य्याः कर्णदुर्योधनादयः ॥ भीष्मद्रो णादय श्चैनं ववन्धु र्युधिनिर्जितम् ॥ ५ ॥ तच्छ्रुत्वा यादवाः सर्वे क्रोधं दुर्योधनादिषु ॥ मुनयः प्रतिचक्रुश्च तान्निहन्तुं महोद्यमं ॥ ६ ॥ तान्निवार्य्य वलः प्राह मदलोलाकुलाक्षरं ॥ चान्तिते मद्विवचना द्यास्यन्त्येकोहि कौरवान् ॥ ७ ॥ वलदेव स्ततोगत्वा नगरं गजसा ह्वयं ॥ वाह्यो पवनमध्येभू न्नविवेश च ततः पुरं ॥ ८ ॥ वलमागत माज्ञाय तदा दुर्योधनादयः ॥ आगत्यार्घ्यं मुदक ञ्च वलाय प्रत्यवे

दयन् ॥ ९ ॥ गृहीत्वा विधिव त्सर्वं तत स्तानाह कौरवान् ॥ श्रा
ज्ञापयत्युग्रसेनः शांवमाशु विमुञ्चत ॥ १० ॥ तत स्तद्वचनं श्रुत्वा
भीष्मद्रोणादयो द्विजाः ॥ कर्ण दुर्योधनाद्या श्च चुक्रुधु र्द्विजसत्त
माः ॥ ११ ॥ ऊचुश्च कौरवाः सर्वे वाह्लिकाद्याश्च भूमिपाः ॥ नरा
ज्याहं यदोर्वंश मवेत्य मुशलायुधं ॥ १२ ॥ भोभो किमेत द्भवता
वलभद्रेरितं वचः ॥ आज्ञां कुरु कुलोत्थानां यादवः कः प्रदास्य
ति ॥ १३ ॥ उग्रसेनोपि यद्याज्ञां कौरवाणां प्रदास्यति ॥ तदलं
पाण्डवैः पुत्रै र्नृपयोग्यै रलंकृतैः ॥ १४ ॥ तद्गच्छ वलदेवत्वं शाम्ब
मन्यायचेष्टितं ॥ विमोक्ष्यामो नभवतो नोग्रसेनस्य शासनात् ॥ १५
प्रणतिर्या कृतास्माकं मान्यानां कुकुरान्धकैः ॥ नास्माभिः साकृता
कैर्वा श्राज्ञा स्वामिनि भृत्यतः ॥ १६ ॥ गर्व्वमारोपिता यूयं समा
नासनभोजनैः ॥ कोदोषो भवतां नीति र्यत्प्रीत्या नावलोकि
ताः ॥ १७ ॥ अस्माभिरर्च्यो भवता योऽयं वलनिवेदितः ॥ प्रेमैत्त
नैतदस्माकं कुर्वन्त्युष्मत्कुलोचितं ॥ १८ ॥ व्यासउवाच ॥ इत्युक्त्वा
कुरवः सर्वे नामुञ्चन्स्ते हरेःसुतं ॥ कृतैकनिश्चयाः सर्वे विविशु र्ग
जसाह्वयं ॥ १९ ॥ मत्तः कोपेन चाघूर्णं ततो चिक्षेप जन्मनः ॥
उत्थापयामास हलं विषमं सहलायुधः ॥ २० ॥ ततो विदारिता
पृथ्वी सपुरा वनकानना ॥ आस्फोटयामास तदा दिशः शब्देन पू
रयन् ॥ २१ ॥ उवाच चातिताम्राक्षो भ्रुकुटीकुटिलाननः ॥ अहो
मदापलिप्तानां मसाराणां दुरात्मनां ॥ २२ ॥ कौरवाणामाधिपत्य

मस्माकं किलकालजं ॥ उग्रसेनस्य येनाज्ञां मन्यन्ते तेपि लंघना
त् ॥ २३ ॥ आज्ञाप्रतीक्षो धर्मेण सहदेवैः शचीपतिः ॥ यदध्यास्ते
सुधर्मायां सुग्रसेनः शचीपतिः ॥ २४ ॥ समस्तभूभृतां नाथ उग्रसे
नःसतिष्ठति ॥ अद्य निःकौरवामुर्वीं कृत्वा यास्यामि तांपुरीं ॥२५॥
कर्णं दुर्य्योधनं द्रोण मद्य भीष्मं सवाह्लिकं ॥ दुःशासनादीन्भूरि
च्च भूरिश्रवस मेवच स ॥ २६ ॥ सोमदत्तं सभीमञ्चा चार्जुनं सयु
धिष्ठिरं ॥ यमजौ कौरवां श्चान्या न्हत्वा साश्वरथद्विपान् ॥ २७॥
वीरमादाय तंशाम्बं सपत्नीकं ततःपुरीं ॥ द्वारका मुग्रसेनादीन् ग
त्वा वक्ष्यामि वान्धवान् ॥ २८ ॥ अथवा कौरवादीनां समस्तैः कुरु
भिःसह ॥ भारावतारणं शीघ्रं देवराजेन चोदितं ॥ २९ ॥ भागी
रथ्यां क्षिपाम्याशु नगरं नागसाह्वयं ॥ व्यास उवाच ॥ इत्युक्त्वा मद
रक्ताक्षः कुर्वाणोऽधोमुखं हलं ॥ प्रकारवप्रे विन्यस्य चकर्ष मुशला
युधः ॥ ३० ॥ आघूर्णितं तत्सहसा ततोवै हस्तिनापुरं ॥ दृष्ट्वा संक्षु
ब्धहृदया सुक्रुशुः सर्व्वकौरवाः ॥ ३१ ॥ राम राम महावाहो क्षम्य
तां क्षम्यतां त्वया ॥ उपसंह्रियतां कोपं प्रसीद मुशलायुध ॥ ३२ ॥
मुक्तः शाम्बः सपत्नीको ज्ञातं तववलं वल ॥ अविज्ञातप्रभावानां
क्षम्यता मपराधितं ॥ ३३ ॥ व्यास उवाच ॥ ततो निर्यातयामासुः
शांवं पत्नयाः समन्वितं ॥ निष्क्रम्य स्वपुरा त्तूर्णं कौरवा मुनिपुङ्ग
वाः ॥ ३४ ॥ भीष्मद्रोणकृपादीनां वदताञ्च मिथः प्रियम् ॥ क्षान्त
मेव मयेत्याह वलो वलवतांवरः ॥ ३५ ॥ अपोपि घूर्णिताकारं पुरा

व्यते तत्पुरं द्विजाः ॥ एवंप्रभावो रामस्य बलशौर्य्योपलक्षणः ॥ ३६॥ ततस्ते कौरवाः शाम्बं संपूज्य हलिनासह ॥ प्रेषयामासु रुद्वाहधनभार्य्यासमन्वितं ॥ ३७ ॥

इतिब्राह्मे पुराणे व्यासर्षिसम्वादे बलभद्रचरिते एकोनशततमोऽध्यायः ॥ ९९ ॥

—०—

एवं दैत्यवधं कृष्णो बलदेवसहायवान् ॥ चक्रे दुष्टक्षितीशानां तथैव च जगत्कृते ॥ १ ॥ क्षितेश्च भारं भगवान् फाल्गुणेन स मंविभुः ॥ अवतारयामास तदा समस्ताक्षौहिणीवधात् ॥ २ ॥ कृत्वा भारावतरणं भुवो हत्वाखिला न्नृपान् ॥ शापव्याजेन विप्राणामुपसंहृतवा न्कुलं ॥ ३ ॥ उत्सृज्य द्वारकां कृष्णः त्यक्त्वा मानुषमात्मनः ॥ शौरि र्विष्णुमयं स्थानं प्रविवेश पुन र्द्विजाः ॥ ४ ॥ द्विजा ऊचुः ॥ सविप्रशापव्याजेन संजह्रे स्वकुलं तथा ॥ कथञ्च मानुषं देह मुत्ससर्ज जनार्द्दनः ॥ ५ ॥ व्यास उवाच ॥ विश्वामित्र स्तथा कण्वो नारदश्च महामुनिः ॥ पिण्डारके महातीर्थे दृष्टा यदुकुमारकैः ॥ ६ ॥ ततस्ते यौवनोन्मत्ता हीनकार्य्यप्रचोदिताः ॥ शाम्बं जाम्बवती पुत्रं भूषयित्वा स्त्रियं यथा ॥ ७ ॥ प्रस्थितां स्ता न्मुनिवरा न्प्रणिपातपुरःसरं ॥ इयंस्त्री पुत्रकामस्य वभ्रोः किञ्जनयिष्यति॥ ८॥ व्यास उवाच ॥ दिव्यज्ञानोपपन्नास्ते तेषां नाशाय सुव्रताः ॥ मुनयःकुपिताः प्रोचु र्मुशलं जनयिष्यति ॥ ९ ॥ येनाखिलकुलोच्छेदो

यादवानां भविष्यति ॥ इत्युक्ता स्तेकुमारास्ते राघवचतुर्यथातथं ॥ १०
उग्रसेनाय मुशलं जज्ञे शांबस्य चोदरात् ॥ उग्रसेनोपि मुशल म
यश्चूर्णमकारयत् ॥ ११ ॥ जज्ञे चैवैरका चूर्णैः प्रक्षिप्तैस्तै र्महोदधौ ॥
मुशलस्याथ लोहस्य चूर्णितस्याथ वैद्विजाः ॥ १२ ॥ खण्डं चूर्णयि
तुंशेकु र्नैवते तोमराकृतिं ॥ तदप्यंबुनिधौ क्षिप्तं मत्स्यो जग्राह जा
लिभिः ॥ १३ ॥ घातितस्योदरा त्तस्य लुब्धो जग्राह वैजरा ॥ वि
ज्ञातपरमार्थोपि सर्वशक्तिमयो हरिः ॥ नैच्छ त्तदन्यथा कर्त्तुं वि
धिना यत्समाहितं ॥ १४ ॥ देवै श्च प्रहितो दूतः प्रणिपत्याह केश
वम् ॥ रहस्येवागमदूतः प्रहितो भगवन्सुरैः ॥ १५ ॥ वसुश्च मरुदा
दित्यरुद्रसाध्यादिभिःसह ॥ विज्ञापयति वःशक्र स्तदिदं श्रूयतांवि
भो ॥ १६ ॥ भारावतारणार्थाय वर्षाणा मधिकंशतं ॥ इदानीं गम्य
तांस्वर्गं भवतां यदिरोचते ॥ १७ ॥ देवै र्विज्ञापितो देव अथात्रैव
रतिस्तव ॥ तत्सांप्रतं यथाकाल मास्येयं मनुजादिभिः ॥ १८ ॥ श्री
भगवानुवाच ॥ यत्त्वमात्थाखिलं दूत वेद्यं तदह मप्यथ ॥ प्रारब्धए
वहिमया यादवाना मपिक्षयः ॥ १९ ॥ भुवो नाद्यापि भारोयं या
दवै रनिवर्हितैः ॥ अवतीर्य्यः करोम्येत त्सप्तरात्रेण सत्वरः ॥ २० ॥
जरासन्धादयोप्यन्ये निहता भारहेतवः ॥ क्षिते स्तेभ्यः कुमारोपि
यदूना मवधीयते ॥ २१ ॥ तदेतत्सु महाभार मवतार्य्यं क्षितेरिह ॥
यास्याम्यमरलोकस्य पालनाय ब्रवीहितान् ॥ २२ ॥ व्यास उवाच ॥
इत्युक्तो वासुदेवेन देवदूतः प्रणम्य च ॥ मुनयो दिवमागत्य देवरा

जान्तिकं ययौ ॥ २३ ॥ भगवानपि तथोत्पाता न्दिव्यान् भौमान्त
रिक्षगान् ॥ ददर्श द्वारकापुर्य्यां म्विनाशाय दिवानिशं ॥ २४ ॥
तांदृष्ट्वा यादवानाह पश्यध्वं मतिदारुणान् ॥ महोत्पातान् क्षयायैषां
प्रभासं याममाचिरं ॥ २५ ॥ व्यास उवाच ॥ महाभागवतः प्राह
प्रणिपत्योद्धवो हरिं ॥ भगवन्यन्मयाकार्य्यं तदाज्ञापय सांप्रतं ॥ २६
मेने कुलमिदं सर्वं भगवान् संहरिष्यति ॥ नाशायास्य निमित्तानि
कुलस्याच्युतलक्षये ॥ २७ ॥ श्रीभगवानुवाच ॥ गच्छत्वं दिव्यया ग
त्या मत्प्रसादसमुत्थया ॥ वदरीमाश्रमं पुण्यं गन्धमादनपर्वतं ॥ २८ ॥
नरनारायणस्थानं तत्पावित महीतले ॥ ममनामप्रसादेन तत्र सि
द्धिमवाप्स्यसि ॥ २९ ॥ अहं स्वर्गं गमिष्यामि उपहृत्य च वैकुलं ॥
द्वारकाञ्च मयात्यक्तां समुद्रः प्लावयिष्यति ॥ ३० ॥ इत्युक्तः प्रणिप
त्यैनं जगाम स तथोज्वलं ॥ नरनारायणस्थानं केशवेन प्रचोदि
तः ॥ ३१ ॥ ततस्ते यादवाः सर्वे रथानारुह्य शीघ्रगान् ॥ प्रभासं
प्रययुः सार्द्धं कृष्णरामादिभि र्द्विजाः ॥ ३२ ॥ प्राप्य प्रभासं प्रयताः
प्रीतास्ते कुकुरान्धकाः ॥ चक्रुस्तत्र सुदापानं वासुदेवानुमोदि
ताः ॥ ३३ ॥ पिवतांतत्र वैतेषां सङ्घर्षेण परस्परं ॥ अतिपाने ततो
जज्ञे कलहाग्निः क्षयावहः ॥ ३४ ॥ जघ्नुः परस्परं तेतु शस्त्रैर्दैव
वलात्कृताः ॥ क्षीणशस्त्रास्तु जगृहुः प्रत्यास न्नामथैरकां ॥ ३५ ॥
एरकानुगृहीतावै वज्रभूतेव लक्ष्यते ॥ तया परस्परं जघ्नुःसंप्रहा
रैःसुदारुणैः ॥ ३६ ॥ प्रद्युम्नशांवप्रमुखाः कृतवर्माथ सात्यकिः ॥ अ

निरुद्धादय श्चान्ये पृथु र्विपृथु रेवच ॥ ३७ ॥ चारुदेष्णाः सुवाङ्कश्च तथाक्रूरादयो द्विजाः ॥ एरका रूपिभि र्वज्रै स्तै र्निजघ्नुः परस्परम् ॥ ३८ ॥ निवारयामास तदा यादवां श्चैव केशवः ॥ सहायं मेनिरे प्राप्तं तेनिजघ्नुः परस्परं ॥ ३९ ॥ कृष्णास्तु कुपित स्तेषा मेरका मुष्टिमाददे ॥ वधाय सापि मुशलं मुष्टिलोह मभूत्तदा ॥ ४० ॥ जघान तेन निःशेषा नाततायी सयादवान् ॥ निजघ्नुः सहसा भेत्य तथान्येवै परस्परं ॥ ४१ ॥ तत स्वार्णवमध्येन जैत्रोऽसौ चक्रिणोरथः ॥ पश्यतो दारुकस्याशु गतः स्वर्गं द्विजोत्तमाः ॥ ४२ ॥ चक्रम्यमाणं तंरामं वृक्षमूलकृतासनम् ॥ ददृशु स्तेमुखा चापि निष्क्रमन्तं महोरगं ॥ ४३ ॥ निष्क्रम्य समुखा त्तस्य वभौ मायाभुजङ्गमः ॥ प्रयतै श्चार्षिसंसिद्धैः पूज्यमान स्तथोरगैः ॥ ४४ ॥ अर्घ्यमादायच तदा जलधिः सन्मुखं ययौ ॥ प्रविवेशच तत्तोयं पूजितः पन्नगोत्तमैः ॥ ४५ ॥ दृष्ट्वा वलस्य निर्याणं दारुकं प्राह केशवः ॥ इदमेव त्वयाचख्यं वसुदेवोग्रसेनयोः ॥ ४६ ॥ निर्याणं वलभद्रस्य यादवानां तथाक्षयं ॥ योगस्थित्वाह मप्येत त्परित्यक्त्वा कलेवरं ॥ ४७ ॥ वाच्यश्च द्वारकावासिजनः सर्व्व स्तथाहुकः ॥ ययेमां नगरीं सर्वां समुद्रः प्लावयिष्यति ॥ ४८ ॥

इति ब्रह्मपुराणे व्यासर्षिसम्वादे यदुवंशक्षयो नाम

शततमोऽध्यायः ॥ १०० ॥

—०—

व्यास उवाच ॥ इत्युक्तो दारुकः कृष्णं प्रणिपत्य पुनः पुनः ॥
प्रदक्षिणं च बहुशः कृत्वा प्रायाद्यथाविधिः ॥ १ ॥ स च गत्वा तथा
चक्रे द्वारकायां तथार्जुनः ॥ आनिनाय यथावुद्धिं वज्रं चक्रे तथानृ
पम् ॥ २ ॥ भगवानपि गोविन्दो वासुदेवात्मकं परं ॥ ब्रह्मात्मनि
समारोप्य सर्व्वभूतेष्वकारयत् ॥ ३ ॥ समानय द्विजवरो दुर्वासा य
दुवाच ह ॥ योगयुक्तोऽभवत्पादं कृत्वा जानुनि सत्तमाः ॥ ४ ॥ आ
गतो वै जरानाम स तदा तत्र लुब्धकः ॥ मुशलावशेषलोहस्य शाय
कन्यस्ततोमरः ॥ ५ ॥ स तत्पदं मृगाकारं समवेक्ष्य ह्यवस्थितः ॥
ततो विव्याध तेनैव तोमरेण द्विजोत्तमाः ॥ ६ ॥ गतः स ददृशे तत्र
चतुर्बाहुधरं नरं ॥ प्रणिपत्याह चैवैनं प्रसीदेति पुनः पुनः ॥ ७ ॥
अजानता कृतमिदं मया हरिणशंकया ॥ क्षम्यतामात्मपापेन नमां
संदग्धुमर्हसि ॥ ८ ॥ व्यास उवाच ॥ जरसं भगवानाह न तेऽस्तिभ
यमणवपि ॥ गच्छ त्वं मत्प्रसादेन लुब्धस्वर्गं सुखास्पदं ॥ ८ ॥ व्या
स उवाच ॥ विमानमागतं तस्य तदाक्या तमनन्तरं ॥ आरुह्य प्रय
यौ स्वर्गं लुब्धकस्तत्प्रसादतः ॥ १० ॥ गते तस्मिन्स भगवान्संयो
ज्यात्मानमात्मनि ॥ ब्रह्मभूतेऽव्ययेऽचिन्त्ये वासुदेवमयेऽमले ॥ ११ ॥
अजन्ये वाजरे चैवाप्रमेये ऽप्यखिलात्मनि ॥ तत्याज मानुषं देह
मतीत्य त्रिदिवं गतः ॥ १२ ॥

इति ब्रह्मपुराणे व्यासर्षिसम्वादे भगवत्स्वर्गारोहणं नामैको
त्तरशततमोऽध्यायः ॥ १०१ ॥

व्यास उवाच ॥ अर्जुनोपि तदाविष्य कृष्णरामकलेवरम् ॥
संस्कारं लम्भयामास तथान्येषा मनुक्रमात् ॥ १ ॥ अष्टौ महिष्यः
कथिता रुक्मिणीप्रमुखास्तु याः ॥ उपगृह्य हरे र्देहं विविशु स्ता
हुताशनं ॥ २ ॥ रेवती चैव रामस्य देह माश्लिष्य सत्तमाः ॥ वि
वेश ज्वलितं वह्निं तत्सङ्गा दतिशीतलं ॥ ३ ॥ उग्रसेनस्तु तच्छ्रुत्वा
तथैवानकदुंदुभिः ॥ देवकी रोहिणी चैव विविशु र्जातवेदसं ॥ ४॥
ततोऽर्जुनः प्रेतकार्य्यं कृत्वा तेषां यथाविधि ॥ निश्चक्राम जनं सर्वं गृ
हीत्वा वज्र मेवच ॥ ५ ॥ द्वारवत्या विनिःक्रम्य कृष्णपत्न्यः सहस्र
शः ॥ वज्रं जनञ्च कौन्तेयः पालयं श्चार्जुनो ययौ ॥ ६ ॥ सभासुध
र्मा कृष्णेन मर्त्यलोके समुच्छ्रिते ॥ स्वर्गं जगाम मुनयः पारिजात
श्च पादपः ॥ ७ ॥ यस्मिन्दिने हरि र्यातो दिवंसंत्यज्य मेदिनीं ॥
तस्मिन्दिने ऽवतीर्णोयं कालकायः कलिः किल ॥ ८ ॥ प्लावयामा
स तांशून्यां द्वारका ञ्च महोदधिः ॥ यदुदेवगृहं त्वेकं नाप्लाव यत्सा
गर स्तदा ॥ ९ ॥ नातिक्रान्तुमलं विप्रा स्तथा द्यापि महोदधिः ॥
नित्यं सन्निहित स्तत्र भगवान् केशवो यतः ॥ १० ॥ तदतीव महा
पुण्यं सर्व्वपातकनाशनं ॥ विष्णुक्रीडान्वितं स्थानं दृष्ट्वा पापा त्प्र
मुच्यते ॥ ११ ॥ पार्थः पावनदेशे च वहुधान्यधनायुते ॥ चकार वा
सं सर्व्वस्य पत्न्यस्य मुनिसत्तमाः ॥ १२ ॥ ततो लोभः समभव त्पा
र्थेनैकेन धन्विना ॥ दृष्ट्वा स्त्रियो नीयमाना दस्यूनां निहतेश्वरः ॥ १३॥
नयस्यसानतिक्रम्य धिगेत त्क्रियतां वलं ॥ हत्वा गर्व्वं समारूढो

भीष्मद्रोणजयद्रथान् ॥ कर्णादींश्च नजानासि वलं ग्रामनिवासि
नां ॥ १४ ॥ दृढयष्टि र्महाभारा यंगृहीया त्सदुर्मतिः ॥ सर्वा नेश
वजानाति किम्वावहुभिरुत्तमैः ॥ १५ ॥ ततो यष्टिप्रहरणा दस्यवो
लोकुहारिणः ॥ सहस्रशोऽभ्यधावन्त मर्जुनं निहतेश्वरं ॥ १६ ॥ न
यत्यस्मानतिक्रम्य धिगेत त्क्रियतां मनः ॥ ततो निवर्त्य कौन्तेयः प्रा
हाभीरान् हसन्निव ॥ १७ ॥ निवर्त्तयध्वं धर्मज्ञा यदीत्यस्तसूर
वः ॥ अवज्ञाय वच स्तस्य जगृहुस्ते तथा धनं ॥ स्त्रीजनं चैव मु
नयो विष्वक्सेनपरिग्रहं ॥ १८ ॥ ततोऽर्जुनो धनुर्दिव्यं गाण्डीवमज
रंयुधि ॥ आरोपयितु मारेभे नशशाक सवीर्यवान् ॥ १९ ॥ चकार
सज्यं कृत्स्नेन तदभू च्छिथिलं पुनः ॥ नसस्मार तथास्त्राणि चिन्त
यन्नपि पाण्डवः ॥ २० ॥ शरा न्मुमोच चैतेषु पार्थो हीर्ष्यांवम
र्षितः ॥ नभेदं तेपर त्वक्रु र्मुक्तागाण्डीवधन्वना ॥ २१ ॥ वह्निना
येऽक्षयादत्ताः शरा स्तेपि क्षयं ययुः ॥ युध्यतः सहगोपालै रर्जुनस्य
वलक्षयः ॥ २२ ॥ अचिन्तयं सकौन्तेयः कृष्णस्यैवहि तद्बलं ॥ यन्मया
शरसंघातैः सकला भूभृतो जिताः ॥ २३ ॥ मिषतः पाण्डुपुत्रस्य
ततस्ताः प्रमदोत्तमाः ॥ आभीरैरप्यपकृताः कामा च्चान्याः प्रवव्र
जुः ॥ २४ ॥ ततः शरेषु क्षीणेषु धनुःकोट्या धनञ्जयः ॥ जघान द
स्यून् तेचास्य प्रहारान् जहसु र्द्विजाः ॥ २५ ॥ प्रेक्षत स्तस्यपार्थस्य
वृष्ण्यन्धकवरस्त्रियः ॥ जग्मु रादाय तेम्लेच्छाः समन्ता न्मुनिसत्त
माः ॥ २६ ॥ ततः सदुःखितो जिष्णुः कष्टं कष्टमिति ब्रुवन् ॥ अहो

भगवतातेन मुक्तोस्मीति हरोदवै ॥ २७ ॥ तद्वनुस्तानि चास्त्राणि
सरथस्ते च वाजिनः ॥ सर्व्वमेकपदंनष्टं दानमश्रोत्रियेयथा ॥ २८॥
अहो चानिवलो दैवं विना तेन महात्मना ॥ यदसामर्थ्ययुक्तोपि
नीचवर्गं जयप्रदं ॥ २९ ॥ तौवाहू तत्तु मेमुष्टि स्थानं सोस्मि तथा
र्जुनः ॥ पुण्येनैव विनातेन गतं सर्व्वमसारताम् ॥ ३० ॥ ममार्जुन
त्वं भौमस्य भीमत्वञ्च ततो ध्रुवम् ॥ विनातेन यदा भीरै र्जितोहंक्त
थमन्यथा ॥ ३१ ॥ इत्थं वद न्ययौ जिष्णु रिन्द्रप्रस्थं पुरोत्तमं ॥ च
कार सर्व्वराजानं वज्रं यादवनन्दनं ॥ ३२ ॥ सददर्श ततो व्यासं
फाल्गुणः काननाश्रयं ॥ तमुपेत्य महात्मानं विनयेना भ्यवादय
त् ॥ ३३ ॥ तंवंद्यमानचरण मवलोक्य मुनीश्वरः ॥ अहो तेपार्थवि
च्छाया कथमत्यन्त मीदृशी ॥ ३४ ॥ अगम्यागमनं चेदं ब्रह्महत्याथ
वाकृता ॥ दृढाशा भङ्गदुःखीवा भ्रष्टच्छायोसि सांप्रतं ॥ ३५ ॥ आ
शांदत्वा पुनर्भुक्त्वा याचमाना निराकृताः ॥ अगम्यस्त्रीरति र्वापि
तेनासिविगतप्रभः ॥ ३६ ॥ भुंक्तेऽप्रदाय विप्रेभ्यो मिष्ट मेक मथो
भवान् ॥ किम्वा कृपाणवित्तानि हृतानिभवतोऽर्जुन ॥ ३७ ॥ कच्चि
त्त्वं सूर्यवातस्य गोचरत्वं गतोऽर्जुन ॥ दुष्टचक्षु र्हतोवापि निःश्रीकः
कथमन्यथा ॥ ३८ ॥ स्पृष्टोनखाम्भसा वाथ घटाम्भः प्रोक्षितोपिवा ॥
तेनातीव च विच्छायो नीचै र्वासु विनिर्जितः ॥ ३९ ॥ ततः पार्थो
विनिःश्वस्य श्रूयतां भगवन्निति ॥ प्रोक्तो यथावदाचष्ट विप्रायात्म
पराभवं ॥ ४० ॥ अर्जुनउवाच ॥ यद्बलं यद्धनं तेजो यद्वीर्यं यस्परा

क्रमं ॥ यास्त्रीः छाया च नःसोस्मा न्परित्यज्य हरिर्गतः ॥ ४१ ॥
द्रुत स्तेनैव महता स्मितपूर्वाभिभाषिणा ॥ हीना वयंच तेनैव जाता
स्याणुमया इव ॥ ४२ ॥ अस्त्राणां शायकानां च्च गाण्डीवस्य क्रि
याम्मम ॥ सारतां योभव न्न्यूना सगतः पुरुषोत्तमः ॥ ४३ ॥ यस्यात्र
लोकनादस्मा च्छ्री र्जयः सम्प दुन्नतिः ॥ मानत्याय सगोविन्द स्त्य
क्त्वा स्मान् भगवान् गतः ॥ ४४ ॥ भीष्मद्रोणगिरागाद्या स्तथा दु
र्योधनादयः ॥ यत्प्रभावेण निर्दग्धाः सकृष्ण स्त्यक्त्वा न्भुवं ॥४५॥
निर्यौवनाहतश्रीका भ्रष्टच्छायेव मेमही ॥ विमानिता नचैकोहं वि
रहे तस्य चक्रिणः ॥ ४६ ॥ यस्यानुभावा द्भीष्माद्यं मयाग्नौ शलभा
यितं ॥ विना तेनाद्य कृष्णेन हृतं कृष्णावरोधनं ॥ ४७ ॥ हृतं यष्टि
प्रहारेण परिभूय वलंमम ॥ भिन्नाः कृता स्तेन भिन्नं यज्जीवामि
तदद्भुतम् ॥ ४८ ॥ नवाच्यमान एकाकी निर्जितोस्मि पितामह ॥
व्यास उवाच ॥ श्रुत्वाहं तस्य तद्वाक्य मब्रुवं द्विजसत्तमाः ॥ दुःखित
स्यच दीनस्य पाण्डवस्य महात्मनः ॥ ४९ ॥ अलं तेव्रीडया पार्थ न
त्वं शोचितु मर्हसि ॥ अवेहि सर्व्वभूतेषु कालस्य गतिरीदृशी ॥५०॥
कालो भवाय भूताना मभवाय च पाण्डव ॥ कालञ्च तमिदं ज्ञा
त्वा भव स्थैर्यमनार्जुन ॥ ५१ ॥ नद्यः समुद्रा गिरयः सकला च व
सुन्धरा ॥ देवा मनुष्याः पशव स्तरवश्च सरीसृपाः ॥ ५२ ॥ सृष्टाः
कालेन कालेन पुन र्यास्यन्ति संपूर्वं ॥ कालात्मक मिदं सर्वं ज्ञात्वा
शम मवाप्नुहि ॥ ५३ ॥ यच्चाह कृष्णमाहात्म्यं तत्तथैव धनञ्जय ॥

भारावतारकार्यार्थं मवतीर्णः समेदिनीं ॥ ५४ ॥ भाराक्रान्ताधरा याता दुष्टाः सर्वे ततो हताः ॥ वृष्णयन्धककुलं सर्वं यथाव दुपसंहृतम् ॥ ५५ ॥ किञ्चिदन्य न्नकर्त्तव्य मस्य भूमितले प्रभोः ॥ ततो गतः सभगवान् कृतकृत्यो यथेच्छया ॥ ५६ ॥ सृष्टिसर्गं करोत्येष देवदेवः स्थितिं पुनः ॥ अन्तञ्चाथ समर्थोयं सांप्रतंवै यथाकृतं ॥ ५७॥ तस्मा त्पार्थं नसन्तप्य स्त्वया कार्यः पराभवे ॥ प्रभवन्ति च कालेषु पुरुषाणां पराक्रमाः ॥ ५८ ॥ यत्त्वयैकेन निहता भीष्मद्रोणादयो नृपाः ॥ तेषामर्जुनकालोत्थः किंन्यूनाभिभवेनसः ॥ ५९ ॥ विष्णो स्तस्यानुभावेन यथा तेच पराभवः ॥ दुःस्थस्य चैव भवतो दस्युभ्य स्व पराभवः ॥ ६० ॥ सदेवोऽन्यशरीराणि समाविश्यजगत्पतिः ॥ करोति सर्व्वभूतानां नाशं चान्ते जगत्पतिः ॥ ६१ ॥ भवेभवे सकौंतेय सहायस्ते जनार्द्दनः ॥ तथा ते तद्विपक्षा स्ते केशवेना नुलोकिताः ॥ ६२ ॥ कःश्रद्दध्यात्स गांगेया न्हन्यास्त्वं सर्व्वकौरवान् ॥ आभीरेभ्यश्च भवतः कःश्रद्दध्या त्पराभवं ॥ ६३ ॥ पार्थैत त्सर्व्वभूतस्य हरे र्लीलाविचेष्टितं ॥ त्वया यत्कौरवाद्या स्तु संग्रामे वै पराजिताः ॥ ६४ ॥ गृहीता दस्युभि र्याश्च भवता शोचिताः स्त्रियः ॥ तदप्याहं यथावृत्तं कथयामि तवार्जुन ॥ ६५ ॥ अष्टावक्रः पुरा विप्र उदवासरतोऽभवत् ॥ वहून्वर्षगणा न्पार्थं गृण न्द्रेवं सनातनं ॥ ६६ ॥ जितेषु सुरसंघेषु मेरुपृष्ठे महोत्सवः ॥ वभूव तत्र गच्छन्त्यो ददृशुस्तं सुरस्त्रियः ॥ ६७ ॥ रम्भा तिलोत्तमाद्यास्तु शतशोथ सहस्रशः ॥

तुष्टुवु स्तंमहात्मानं प्रशशंसुश्च पाण्डव ॥ ६८ ॥ आकण्ठमग्नं सलि
ले जटाभारधरं मुनिं ॥ विनयाव नता स्चैनं प्रणेमु स्ताः सहस्र
शः ॥ ६९ ॥ यथा यथा प्रसन्नोऽसौ तुष्टुवु स्तं तथा तथा ॥ सर्वास्ताः
कौरवश्रेष्ट वरिष्टत्वं द्विजन्मनां ॥ ७० ॥ अष्टावक्रउवाच ॥ प्रसन्नो
ऽहं महाभागा भवतीनां यदिष्यते ॥ मत्त स्तद्वृ नतत्सर्वं प्रदास्यामि
सुदुर्लभं ॥ ७१ ॥ रम्भा तिलोत्तमाद्यास्तु दिव्या श्चाप्सरसोऽब्रुवन्॥
प्रसन्नेत्वय्य संप्राप्तं किमस्माक मिति द्विजाः ॥ ७२ ॥ इतरा स्त्वब्रु
वन्विप्र प्रसन्नो भगवा न्यदि ॥ तदिच्छामः पतिं प्राप्तुं विप्रेन्द्रपुरुषो
त्तमं ॥ ७३ ॥ व्यास उवाच ॥ एवं भविष्यतीत्युक्त्वा उत्ततार जला
न्मुनिः ॥ तमुत्तीर्णं च ददृशु र्विरूपं वक्र मष्टधा ॥ ७४ ॥ तंदृष्ट्वा
गूहमानानां यासां हासः स्फुटोऽभवत् ॥ ताः शशाप मुनिः कोपम
वाप्य कुरुनन्दन ॥ ७५ ॥ यस्मा द्विरूपरूपन्मां मत्वा हासावमान
ना ॥ भवतीभिः कृता यस्मा च्छापं तस्मा ददामिवः ॥ ७६ ॥ मत्प्र
सादेन भर्त्तारं त्वं लब्ध्वातु पुरुषोत्तमं ॥ तच्छापोपहताःसर्वा दस्युहस्तं
गमिष्यथ ॥ ७७ ॥ इत्युदीरितमाकर्ण्य मुनि स्ताभिः प्रसादितः ॥
पुनः सुरेन्द्रलोकन्वै प्राह भूयो गमिष्यथ ॥ ७८ ॥ व्यास उवाच ॥
एवं तस्य मुनेः शापा दष्टावक्रस्य केशवं ॥ भर्त्तारं प्राप्य ताः प्राप्ता
दस्युहस्तं वराङ्गनाः ॥ ७९ ॥ तस्मा त्त्वया नकर्त्तव्यः शोकोऽल्पोपि
च पाण्डव ॥ तेनैवा खिलनाथेन सर्वं तदुपसंहृतं ॥ ८० ॥ भिषतां
वोपसंहार मासनं तेनकुर्वता ॥ वलं तेज स्तथा वीर्य्यं माहात्म्य

च्चोपसंहृतं ॥ ८१ ॥ तस्मा त्त्वया नरश्रेष्ठ ज्ञात्वैत द्भ्रातृभिःसह ॥ प रित्यज्याखिलं तत्र गन्तव्यं तपसेवनं ॥ ८२ ॥ तद्गच्छ धर्मराजाय निवेद्यैत द्वचोमम ॥ परश्वोभ्रातृभिः सार्द्धं गतिं वीरपथाकुरु॥ ८३॥ व्यास उवाच ॥ इत्युक्तोऽभ्येत्य पार्थाय यमाभ्या ञ्च सहार्जुनः ॥ दृ ष्टंचैवानुभूत ञ्च कथितं तदशेषतः ॥ ८४ ॥ व्यासवाक्य ञ्च तेसर्वे श्रुत्वार्जुनसमीरितं ॥ राज्ये परीक्षितं कृत्वा ययुः पाण्डुसुता व नम् ॥ ८५ ॥ इत्येतद्वो मुनिश्रेष्ठा विस्तरेण मयोदितं ॥ जातस्य य दोर्वंशे वासुदेवस्य चेष्टितम् ॥ ८६ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे कृष्णचरित्रवर्णनं नाम द्व्युत्तरशततमोऽध्यायः ॥ १०२ ॥

—०—

मुनय ऊचुः ॥ प्रादुर्भावं सुरेशस्य देवस्य च विचेष्टितं ॥ रा मस्य च मुनिश्रेष्ठ त्वयोक्तं भुवि दुर्लभं ॥ १ ॥ नतृप्ति मधिगच्छाम शृण्वतां भगवत्कथां ॥ अपरं श्रोतुमिच्छाम प्रादुर्भावं जगत्पतेः ॥ २ ॥ सम्यक्तुया कीर्त्यमाना न्मुने तांश्च वदस्वनः ॥ व्यासउवाच ॥ विष्णोः प्रभावश्रवणे दिष्ट्या वोमति रुत्थिता ॥ हन्तविष्णोः प्रवक्ष्यामि प्रा दुर्भावं द्विजोत्तमाः ॥ ३ ॥ सहस्राक्षं सहस्रास्यं सहस्रचरणोत्तमं ॥ सहस्रशिरसं देवं सहस्रकर मव्ययं ॥ ४ ॥ सहस्रजिह्वं भास्वन्तं स हस्रमुकुटं प्रभुं ॥ सहस्रदं सहस्रादिं सहस्रभुज मव्ययम् ॥ ५ ॥ हवनं सवनं चैव हव्यं होतार मेवच ॥ पात्राणिच पवित्राणि वेदीं

दीक्षाञ्च स्रुक्स्रुवं ॥ ६ ॥ स्रुक्सोमसूर्पमुषलं प्रोक्षणीं दक्षिणाय
नम् ॥ अध्वर्जुसामगं विप्रं सदस्याः सदनंसदः ॥ ७ ॥ यूपं चक्रं ध्रु
वंदर्व्वीं तुंगी चोलूखलानि च ॥ प्राग्वंशं पटुभूमि ञ्च होतारं हव
नञ्च यत् ॥ ८ ॥ ह्रस्वान्यति प्रमाणानि चराणि स्थावराणि च ॥
प्रायश्चित्तानि वार्घ्यञ्च स्थण्डिलानि कुशास्तथा ॥ ९ ॥ मन्त्रयज्ञञ्च
वह्निर्वा भागं भागवह ञ्च यत् ॥ अग्राशिनंसोमनुजं हुताचिंषमु
दाशुषं ॥ १० ॥ आहु र्वेदविदो विप्रा यंयज्ञे शाश्वतं प्रभुं ॥ तस्य
विष्णोः सुरश्रेष्ठः श्रीवत्साङ्कस्य धीमतः ॥ ११ ॥ प्रादुर्भाव सहस्रा
णि समतीता न्यनेकशः ॥ भूयश्चैवं भविष्यन्तीत्येव माह पिताम
हः ॥ १२ ॥ यच्छृणुध्वं महाभागा दिव्यां पुण्यामिमां कथां ॥ प्रा
दुर्भावाश्रितां विष्णोः सर्व्वपापहरां शिवां ॥ १३ ॥ शृणुध्वं तां म
हाभागा स्तद्गतेनान्तरात्मना ॥ प्रवक्ष्याम्यनुपूर्वेण यत्पृच्छध्वं ममा
नघाः ॥ १४ ॥ वासुदेवस्य माहात्म्यं यत्पृच्छध्वं महामतेः ॥ हि
तायसुरमर्त्यानां लोकानां प्रभवायच ॥ १५ ॥ बहुशः सर्व्वरूपात्मा
प्रादुर्भवति वीर्यवान् ॥ प्रादुर्भावांश्च वक्ष्यामि प्रादुर्भावगुणाधिका
न् ॥ १६ ॥ सुप्तो युगसहस्रंयः प्रादुर्भवति वीर्यवान् ॥ पूर्णे युगस
हस्रेतु देवदेवो जगत्पतिः ॥ १७ ॥ ब्रह्मा च कपिल श्चैव त्र्यम्बक
स्त्रिदशा स्तथा ॥ देवाः सप्तर्षय श्चैव नागा श्चाप्सरस स्तथा॥ १८॥
सनत्कुमारश्च महानुभावो मनुर्महात्मा भगवान् प्रजाकरः ॥ पुरा
णदेवोथ पुराणि चक्रे प्रदीप्तवैश्वानर दीप्ततेजाः ॥ १९ ॥

तोयवालुकमध्यस्थे नष्टे स्थावरजङ्गमे ॥ नष्टेदेवासुरवरे प्रणष्टोरग
राक्षसे ॥ २० ॥ पुरा कमलनाभस्य स्वपतः सागरांभसि ॥ पुष्करे
यत्र सम्भूता देवा सर्षिगणा स्तथा ॥ २१ ॥ एषपौष्कर कोनाम
प्रादुर्भावो जगत्पतेः ॥ पुराणं कथ्यतेयत्र देवस्तुतिसमाहितं ॥ २२
वाराहस्तु श्रुतिसुखः प्रादुर्भावो महात्मनः ॥ यत्र विष्णुः सुरश्रेष्टो
वाराहं रूपमास्थितः ॥ २३ ॥ महीं सागरपर्यन्तां सशैलवनकाननां ॥
एकार्णवजले भ्रष्टा मेकार्णवगतः प्रभुः ॥ २४ ॥ दंष्ट्रया यःसमुद्धृत्य
लोकानां हितकाम्यया ॥ सहस्रशीर्षा लोकाना मीश्वरो जगतांप
नः ॥ २५ ॥ एवं यज्ञवराहेण भूत्वा भूत्वा हितार्थिना ॥ उद्धृता
पृथिवी देवी सागराम्बुधरा पुरा ॥ २६ ॥ वाराह एव कथितो ना
रसिंह स्ततो द्विजाः ॥ यत्रभूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः ॥ २७
पुरा कृतयुगे विप्राः सुरारि र्वलदर्पितः ॥ दशवर्षसहस्राणि शता
निदशपञ्चच ॥ २८ ॥ जलोपवासनिरत स्तस्थौ मौनव्रतः शुचिः ॥
ततः शमदमाभ्यां च ब्रह्मचर्येण चैवहि ॥ २९ ॥ ब्रह्मा प्रीतोऽभ
वत्तस्य तपसा नियमेन च ॥ तस्मै स्वयं भूर्भगवान् स्वयमागत्य भो
द्विजाः ॥ ३० ॥ विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ आदित्यै
र्वसुभिः साध्यै र्मरुद्भि र्दैवतैः सह ॥ ३१ ॥ रुद्रविश्वसहायैश्च यक्ष
राक्षसकिन्नरैः ॥ दिग्भिश्च विदिग्भिश्च नदीभिः सागरैस्तथा ॥ ३२
नक्षत्रैश्च मुहूर्त्तैश्च चराचरमहाग्रहैः ॥ देवर्षिभि स्तपोवृद्धैः सिद्धै
र्विद्वद्भि रेवच ॥ ३३ ॥ राजर्षिभिः पुण्यतमै र्गंधर्वै रप्सरोगणैः ॥

चराचरगुरुः श्रीमान् व्रतः सर्वैः सुरैस्तथा ॥ ब्रह्माब्रह्मविदां श्रेष्ठो
दैत्यं वचनमब्रवीत् ॥ ३४ ॥ प्रीतोस्मि तवभक्तस्य तपसानेनसुव्रत॥
वरं वरय भद्रन्ते यथेष्टं काममाप्नुहि ॥ ३५ ॥ हिरण्यकश्यप उ
वाच ॥ नदेवासुरगन्धर्वा नयक्षोरगराक्षसाः ॥ ऋषयोवाथ मांशा
पैःक्रुद्धा लोकपितामह ॥ अपेयुस्तपसायुक्ता वरएषवृतोमया॥ ३६
नच शस्त्रेण वास्त्रेण गिरिणा पादपेन वा ॥ नशुष्केण नवार्द्रेण
नचान्येनापि सेवधः ॥ ३७ ॥ पाणिप्रहारेणैकेन सभृत्यबलवाह
नम् ॥ योमां नाशयितुं शक्तः सभे मृत्युर्भविष्यति ॥ ३८ ॥ भवेय
महमेवार्कः सोमो वायु र्हुताशनः ॥ सलिलं ध्वान्तरायच्च आकाश
ञ्चैव सर्व्वशः ॥ ३९ ॥ अहं क्रोधश्च कामश्च वरुणो वसवो यमः॥
धनदश्च धनाध्यक्षो यक्षः किंपुरुषाधिपः ॥ ४० ॥ ब्रह्मोवाच ॥ ए
तेदिव्यवरा स्तात मयादत्ता स्तवाद्भुताः ॥ सर्वा न्कामानिमां स्तात
प्राप्स्यसित्वं नसंशयः ॥ ४१ ॥ एवमुक्त्वातु भगवान् जगामाकाश
मेवतु ॥ वैराजं ब्रह्मसदनं ब्रह्मर्षिगणसेवितं ॥ ४२ ॥ ततो देवा
श्च नागाश्च गन्धर्वा मुनय स्तथा ॥ वरप्रदानं श्रुत्वैवं पितामह मुप
स्थिताः ॥ ४३ ॥ देवाऊचुः ॥ वरेणानेन भगव न्वधिष्यति सनो
ऽसुरः ॥ तत्प्रसीद जगन्नाथ वधोप्यस्य विचिन्त्यतां ॥ ४४ ॥ भग
वान्सर्व्वभूतानां स्वयं भूरादिकृ त्प्रभुः ॥ स्रष्टा च हव्यकव्याना म
व्यक्तः प्रतिरुद्ध्रुवः ॥ ४५ ॥ ततो लोकहितं वाक्यं श्रुत्वा देवः प्र
जापतिः ॥ प्रोवाच भगवा न्वाक्यं सर्व्वदेवगणां स्तथा ॥ ४६ ॥

अवध्यं त्रिदशानेन प्राप्तव्यं तपसः फलम् ॥ तपसीते च भगवा न्व
धं विष्णुः करिष्यति ॥ ४७ ॥ एतद्विज्ञात्वा सुराःसर्वे वाक्यं पङ्कज
जन्मनः ॥ स्वानि स्थानानि दिव्यानि जग्मुस्तत्र मुदायुताः ॥ ४८
लब्धमात्रेवरे वापि सर्वाः सोवाधते प्रजाः ॥ हिरण्यकशिपुर्दैत्यो
वरदानेन दर्पितः ॥ ४९ ॥ आश्रमेषु महाभागा न्मुनीन्वै संशित
व्रतान् ॥ सत्यधर्मरता न्दान्तान् पुराधर्षितवांस्तथा ॥ ५० ॥ त्रि
दिवस्थांश्च देवांश्च पराजित्य महासुरः ॥ त्रैलोक्यं वशमानीय स्व
र्गेवसति दानवः ॥ ५१ ॥ यदाच वरमत्तोऽसौ व्यचरद्दानवोभुवि ॥
यज्ञियानकरो द्दैत्या न्यज्ञियांश्च नदेवताः ॥ ५२ ॥ आदित्या वस
वः साध्या विश्वेच मरुत स्तदा ॥ शरण्यं शरणं विष्णुमुपतस्थु
र्महाबलं ॥ ५३ ॥ देवं ब्रह्ममयं यज्ञं ब्रह्मदेवं सनातनं ॥ भूतं भव्यं
भविष्यञ्च प्रभुं लोकनमस्कृतं ॥ ५४ ॥ नारायणं विभुं देवं शरण्यं
शरणंगताः ॥ त्रायस्व नोद्य देवेश हिरण्यकशिपो र्भयात् ॥ ५५ ॥
त्वंहिनःपरमोदेवः त्वंहिनः परमोगुरुः ॥ त्वंहिनः परमो धाता ब्रह्मा
दीनांसुरोत्तम ॥ ५६ ॥ उत्फुल्लामलपत्राक्ष शत्रुपक्षक्षयङ्कर ॥ क्षयाय
दितिवंशस्य शरणंत्वं भवस्वनः ॥ ५७ ॥ वासुदेव उवाच ॥ भयन्त्य
जध्व समरा अभयम्वै ददाम्यहं ॥ तथैव त्रिदिवं देवाः प्रतिपद्यन्त
माचिरम् ॥ ५८ ॥ एषोऽहं सगणं दैत्यं वरदानेन दर्पितं ॥ अवध्य
ममरेन्द्राणां दानवेन्द्रं निहन्म्यहं ॥ ५९ ॥ व्यास उवाच ॥ एवमु
क्त्वातु भगवा न्विसृज्य त्रिदिवेश्वरान् ॥ हिरण्यकशिपोः स्थान

माजगाम हरि स्ततः ॥ ६० ॥ नरस्यार्द्धं तनुं कृत्वा सिंहस्यार्द्धं तनुं हरिः ॥ नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना ॥ ६१ ॥ जीमूतघनसंकाशो जीमूतघननिःस्वनः ॥ जीमूतघनदीप्तौजा जीमूत घनवेगवान् ॥ ६२ ॥ दैत्यं सोऽतिबलं दृष्ट्वा शार्दूलं च त्रिविक्रमः॥ दृप्तै दैत्यगणै र्गुप्तं हतवा नेकपाणिना ॥ ६३ ॥ नृसिंह एष कथितो भूयोऽयं वामनो परः ॥ यत्र वामन मास्थाय रूपं दैत्यविनाशनम् ॥ ६४ ॥ बलेर्बलवतो यज्ञे बलिना विष्णुना पुरा ॥ विक्रमैस्त्रिभिरक्षोभ्याः क्षोभिता स्तेमहासुराः ॥ ६५ ॥ पुष्करः पुष्कल श्चैव साम्बोऽश्वपति रेवच ॥ प्रह्लादोऽश्वपतिः कुम्भः ससंह्लादो गणप्रियः ॥ ६६ ॥ वायु र्यविष्टो नमुचिः शम्बरो विलुरो महान् ॥ चन्द्रहन्ता सूर्य्यहन्ता क्रोधो वन्धनएवच ॥ ६७ ॥ कालकः कालकोपश्च हयक्रोधो विरोचनः ॥ वाचिपुश्च वरिष्ठश्च प्रलम्बनरकावुभौ॥६८॥ इन्द्रतापनकर्त्तावा केतुमा न्बलदर्पितः ॥ असिलोमा पुलोमाच वाष्कलः प्रमदो मदः ॥ ६९ ॥ स्वश्रिगः कालवदनः करालः केशिरेवच ॥ एकाक्ष श्चन्द्रवाक्ष श्च संहृदः शम्बरः स्वनः ॥ ७० ॥ शतघ्नीचक्रहस्ताश्च तथा मुशलपाणयः ॥ महाशिला प्रहरणाः शूलहस्ताश्च दानवाः ॥ ७१ ॥ नानाप्रहरणा घोरा नानावेशा महाबलाः ॥ कूर्मकुक्कुटवक्त्राश्च शशोलूकमुखा स्तथा ॥ ७२ ॥ मार्जारापि दिवक्त्राश्च महावक्त्रा स्तथापरे ॥ नक्रमेषाननाःक्रूरा गोऽजाविमहिषाननाः ॥ ७३ ॥ गोधाशल्यकवक्त्राश्च क्रौञ्चवक्त्राश्च दानवाः ॥ गरुडा

ननाः खरमुखा मयूरवदना स्तथा ॥ ७४ ॥ गजेन्द्रचर्मवसना स्त
थाकृष्णाजिनाम्बराः ॥ चीरसंवृतगोत्राश्च तथाफलकवाससः ॥ ७५
उष्णीषिणो मुकुटिन स्तथा कुण्डलिनोऽसुराः ॥ किरीटिनो लम्ब
शिखाः कम्बुग्रीवाः सुवर्च्चसः ॥ ७६ ॥ नानागन्धधरा दैत्या नाना
माल्यावलेपनाः ॥ स्वान्यायुधानि संगृह्य प्रदीप्तानि च तेजसा ॥
क्रममाणं हृषीकेश मुपावर्त्तन्त सर्व्वशः ॥ ७७ ॥ प्रमथ्य सर्वा न्दै
त्येया न्पादहस्ततलै र्विभुः ॥ रूपं कृत्वा महाभीमं जहाराशु समे
दिनीं ॥ ७८ ॥ तस्यविक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे ॥ ततः
प्रक्रममाणस्य नाभ्यांकिल तदस्थितौ ॥ ७९ ॥ परमं क्रममाणस्य
जानुदेशे स्थितावुभौ ॥ विष्णो रमितवीर्य्यस्य चन्द्र एवं द्विजात
यः ॥ ८० ॥ हत्वा समेदिनीं कृत्स्नां हत्वा चासुरपुङ्गवं ॥ ददौ श
क्राय वसुधां विष्णु र्बलवतांवरः ॥ ८१ ॥ एषवो वामनो नाम प्रादु
र्भावो महात्मनः ॥ वेदविद्भि र्द्विजैरेव वैष्णवं कथ्यतेयशः ॥ ८२ ॥
भूयो भूतात्मको विष्णोः प्रादुर्भावो महात्मनः ॥ दत्तात्रेय इति
ख्यातो क्षमया परया युतः ॥ ८३ ॥ तेन नष्टेषु वेदेषु क्रियासुच म
खेषु च ॥ चातुर्वर्ण्यैसुसंकीर्णे धर्मे शिथिलतां गते ॥ ८४ ॥ अभि
वर्द्धति चाधर्मे सत्ये नष्टे ऽनृते स्थिते ॥ प्रजा सुशीर्यमाणासु धर्मे
चाकुलतां गते ॥ ८५ ॥ सयज्ञाः सक्रिया वेदाः सत्यवेदाहितेनवै ॥
चातुर्वर्ण्यं मसंकीर्णं कृतं तेन महात्मना ॥ ८६ ॥ तेनहैहयराजस्य
कार्त्तवीर्यस्य धीमतः ॥ वरदेनवरोदत्तो दत्तात्रेयेण धीमता ॥ ८७

एतद्वाक्तद्दयात्तत्ते ममदत्तानि तेन्नृप ॥ शतानि दश वाहूनां भविष्य न्ति नसंशयः ॥ ८८ ॥ पालयिष्यसि कृत्स्नाञ्च वसुधा ञ्चासुरेश्वर ॥ दुर्निरीक्षोरिवृन्दानां युद्धतस्तु भविष्यसि ॥ ८९ ॥ एषवो वै ष्णवः श्रीमान् प्रादुर्भावो ऽद्भुतः शुभः ॥ पुनश्च जामदग्न्योयं प्रादु र्भावो महात्मनः ॥ ९० ॥ यथावाहुसहस्रेण विस्मितं दुर्जयं रणे॥ रामोर्जुन मनीकस्थं जघान भूपतिं प्रभुः ॥ ९१ ॥ रथस्थं पार्थिवं रामः पातयित्वार्जुनं विभुः ॥ धर्षयित्वा यथाकामं क्रोधमान ञ्च मांघवत् ॥ ९२ ॥ कृत्स्नं वाहुसहस्र ञ्च चिच्छेद भृगुनन्दनः ॥ प रप्रवधेन दीप्तेन ज्ञातिभिः स्पर्द्धितोऽरवै ॥ ९३ ॥ कीर्णाः क्षत्रिय कोटीभि र्मेरुमन्दरभूषणाः ॥ त्रिसप्तकृत्वा पृथिवी तेन निःक्षत्रिया कृता ॥ ९४ ॥ कृत्वा निःक्षत्रियां चैनां भार्गवः सुमहायशाः ॥ सर्व पापविनाशाय वाजिमेधेन चेष्टवान् ॥ ९५ ॥ यस्मिन्यज्ञे महादाने दक्षिणां भृगुनन्दनः ॥ मारीचाय ददौ प्रीतः कश्यपाय वसुन्धरा म् ॥ ९६ ॥ तुरगांश्च गजां श्चैव रथांश्च रथिनाम्वरः ॥ हिरण्यमक्ष यंधेनून् गजेन्द्रांश्च महीपतेः ॥ ९७ ॥ ददौ तस्मिन्महायज्ञे वाजि मेधेमहायशाः॥ अद्यापिच हितार्थाय लोकानां भृगुनन्दनः॥ ९८॥ चरमाण स्तपोघोरं जामदग्न्यः पुनः पुनः ॥ आस्तेवै देववच्छ्रीमा न्महेन्द्रे पर्वतोत्तमे ॥ ९९ ॥ एषविष्णोः सुरेशस्य शाश्वतस्याव्ययस्य च ॥ यामदग्न्य इतिख्यातः प्रादुर्भावो महात्मनः ॥ १०० ॥ चतुर्वि शेयुगे वापि विश्वामित्रपुरः सरः ॥ जज्ञे दशरथस्याशु पुत्रः

पद्मायतेक्षणः ॥ १०१ ॥ कृत्वात्मानं महाबाहु श्चतुर्द्धा प्रभुरीश्वरः ॥ लोके राम इतिख्यात स्तेजसा भास्करोपमः ॥ १०२ ॥ प्रसादनार्थं लोकस्य रक्षसां निग्रहाय च ॥ धर्मस्य च विवृद्ध्यर्थं जातस्तत्र महायशाः ॥ १०३ ॥ तमप्याहु र्मनुष्येन्द्रं सर्वं भूतपते स्तनुं ॥ यःसमा सर्व्वधर्मेच्च चतुर्द्दशवने ऽवसत् ॥ १०४ ॥ लक्ष्मणानुचरो रामः सर्व्वभूतहिते रतः ॥ चतुर्द्दशवने तप्त्वा तपो वर्षाणि राघवः ॥ १०५ ॥ रूपिणी तस्य वास्वस्य सीतेति प्रथिता जनैः ॥ पूर्व्वोचितत्वा यालक्ष्मी रामं तमनुगच्छति ॥ १०६ ॥ जनस्थाने च तत्कार्यं त्रिदशानां चकारसः ॥ तस्यापकारिणं क्रूरं पौलस्त्यं मनुजर्षभः ॥ १०७ ॥ सीतायाः पदमन्विष्ट न्निजघान महायशाः ॥ देवासुरगणाना ञ्च यक्षराक्षसभोगिनां ॥ १०८ ॥ यत्रावध्यं राक्षसेन्द्रं रावणं युधि दुर्जयं ॥ युक्तं राक्षसकोटीभि र्भिन्नाञ्जनचयोपमम् ॥ १०९ ॥ त्रैलोक्यद्राविणं क्रूरं रावणं राक्षसेश्वरं ॥ दुर्जयं दुर्द्धरं दृप्तं शार्दूलसमविक्रमम् ॥ ११० ॥ दुर्निरीक्ष्यं सुरगणै र्वरदानेन दर्पितम् ॥ जघान सचिवैः सार्द्धं ससैन्यं रावणं युधि ॥ १११ ॥ महाभ्रघनसंकाशं महाकायं महाबलं ॥ रावणं निजघानाशु रामो भूतपतिः परः ॥ ११२ ॥ सुग्रीवस्य कृते येन वानरेन्द्रो महाबलः ॥ वाली च निहतः संख्ये सुग्रीव श्चाभिषेचितः ॥ ११३ ॥ मधोश्च तनयो दृप्तो लवणो नाम दानवः ॥ हतो मधुवने वीरो वरदृप्तो महासुरः ॥ ११४ ॥ यज्ञविघ्नकरौ द्वौतु मुनीनां भावितात्मनां ॥ मा

रीचश्च सुवाहुश्च बलेन बलिनाम्बरौ ११५ ॥ निहतौ च निराशौच
कृतौ तेन महात्मना ॥ समरे युद्धशौण्डेन तथान्ये चापि राक्ष
साः ॥ ११६ ॥ विराधश्च कबन्धश्च राक्षसौ भीमविक्रमौ ॥ जघान पु
रुषव्याघ्रो गन्धर्वौ शापविक्षतौ ॥ ११७ ॥ हुताशनः किंशुतडिङ्कु
शाभैः प्रतप्तजाम्बूनदचित्रपुंखैः ॥ महेन्द्रवज्राशनितुल्यसारैः शरै
ष्युसारं विनियोजितौ बलात् ॥ ११८ ॥ तस्मै दत्तानि शस्त्राणि वि
श्वामित्रेण धीमता ॥ वधार्थं देवशत्रूणां दुर्द्धर्षाणां सुरैरपि ॥ ११९
वर्त्तमाने मखे येन जनकस्य महात्मनः ॥ भग्नं माहेश्वरं चापं क्री
डता लीलया पुरा ॥ १२० ॥ एतानि कृत्वा कर्माणि रामो धर्मभृ
तांवरः ॥ दशाश्वमेधानाहृत्या नाजहार निरर्गलान् ॥ १२१ ॥
नाश्रूयन्ताशुभावाचो नाकुलं मारुतो ववौ ॥ नवित्ता हरिणां वासो
रामे राज्यं प्रशासति ॥ १२२ ॥ पर्यदेवन्नविधवा नचानर्थोऽभवत्क
चित् ॥ सर्व्वमासीदृद्धिमन्तं रामे राज्यं प्रशासति १२३ ॥ प्राणि
नां नभयं चासीज्जलाग्न्यनिलवातजं ॥ नचापि वृद्धा बालानां प्रे
तकार्य्याणि चक्रिरे ॥ १२४ ॥ ब्रह्मपर्य्यचरत्क्षत्रं विशः क्षत्रञ्च
सुव्रताः ॥ शूद्रा श्चैवहि वर्णांस्त्रीन् शुश्रूषन्त्यनहंकृताः ॥ १२५ ॥
भार्य्यां नात्यचरद्भर्त्ता भार्य्या नात्यचरत्पतिम् ॥ सर्वमासीज्ज
गद्दान्तं रामे राज्यं प्रशासति ॥ १२६ ॥ गाथामप्यत्र गायन्ति ये
पुराणविदो जनाः ॥ रामे निवद्धतत्त्वार्था माहात्म्यन्तस्य धीम
तः ॥ १२७ ॥ रामो युवा लोहिताक्षो दीप्तास्यो ऽमितभाषितः ॥

आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ॥ १२८ ॥ दशवर्षस
हस्राणि रामो राज्य मकारयत् ॥ ऋक्साम यजुषां घोषो ज्याघो
षश्च महात्मनः ॥ अव्युच्छिन्नोऽभव द्राज्ये दीयतां भुज्यता मि
ति ॥ १२९ ॥ सत्यवा न्गुणसम्पन्नो दीप्यमानः स्वतेजसा ॥ अति
सूर्य्यं च चन्द्रञ्च रामो दाशरथि र्विभो ॥ १३० ॥ ईजे क्रतुशतैः पु
ण्यैः समाप्तवरदक्षिणैः ॥ हित्वायोध्यां दिवं यातो राघवोहि महा
बलः ॥ १३१ ॥ एवमेव महाबाहु रिक्ष्वाकुकुलनन्दनः ॥ रावणं सग
णं हत्वा दिवमाचक्रमे विभुः ॥ १३२ ॥ अपरः केशवस्यायं प्रादुर्भा
वोमहात्मनः ॥ विख्यातो माथुरे कल्पे सर्व्वलोकहितायवै ॥ १३३॥
यत्र शाल्वञ्च मैन्दञ्च कंसं द्विविद मेवच ॥ अरिष्टं वृषभ ञ्चैव पू
तनां दैत्यदारिकां ॥ १३४ ॥ नागं कुवलयापीडं चाणूरं मुष्टिकंत
था ॥ दैत्या न्मानुषदेहां स्च सूदयामास वीर्य्यवान् ॥ १३५ ॥ छिन्नं
बाहुसहस्र ञ्च बाणस्याद्भुतकर्मणा ॥ नरकस्य हतः संख्ये यवनस्य म
हाबलः ॥ १३६ ॥ हृतानि च महीपानां सर्व्वरत्नानि तेजसा ॥ दु
राचाराश्च निहताः पार्थिवा ये महीतले ॥ १३७ ॥ एते चान्ये च
बहवो दिव्या देवगणै र्वृताः ॥ प्रादुर्भावाः पुराणेषु गीयन्ते ब्रह्मवा
दिभिः ॥ १३८ ॥ यत्र देवापि मुह्यन्ति प्रादुर्भावानुकीर्त्तने ॥ पुरा
णं वर्त्तते यत्र वेदश्रुतिसमाहितं ॥ १३९ ॥ एतदुद्देश मात्रेण प्रा
दुर्भावानुकीर्त्तनं ॥ कीर्त्तिं च कीर्त्तनीयस्य सर्व्वलोकगुरो र्वि
भोः ॥ १४० ॥ प्रीयन्ते पितर स्तस्य प्रादुर्भावानुकीर्त्तनात् ॥ विष्णो

रमितवीर्य्यस्य यः शृणोति कृताञ्जलिः ॥ १४१ ॥ एतांस्तु योगेश्वर योगामयाः श्रुत्वा नरो मुच्यति सर्व्वपापैः ॥ ऋद्धिं समृद्धिं विपुलां च भोगान् प्राप्नोति शीघ्रं भगवत्प्रसादात् ॥ १४२ ॥ एवं मया मुनिश्रेष्ठा विष्णो रमिततेजसः ॥ सर्व्वपापहराः पुण्याः प्रादुर्भावाः प्रकीर्त्तिताः ॥ १४३ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे श्रीविष्णोः प्रादुर्भावानु कीर्त्तनं नाम त्र्युत्तरशततमोऽध्यायः ॥ १०३ ॥

—०—

ऋषय ऊचुः ॥ नतृप्तिमधिगच्छामः पुण्यधर्मांस्तवश्रुतु ॥ मुनेस्त्वन्मुखगीतस्य तदा कौतूहलं हिनः ॥ १ ॥ उत्पत्तिं प्रलय ञ्चैव भूतानां कर्मणां गतिं ॥ वेत्सि सर्वं मुने तेन प्रच्छामस्त्वां महामुने ॥ २ ॥ श्रूयते यमलोकस्य मार्गं परमदुस्तरं ॥ यद्भक्तोशंप्रदं नृणां सर्व्वभूतभयावहं ॥ ३ ॥ कथं तेन नरा यान्ति मार्गेण यमसादनं ॥ प्रयाणाञ्चैव मार्गेण ब्रूहिनो वदताम्बर ॥ ४ ॥ मुने एच्छाम सर्वज्ञ ब्रूहि सर्व्वं मशेषतः ॥ कथं नरकदुःखानि नाप्नुवन्ति नरा मुने ॥ ५ ॥ कियन्ति स्वर्गस्थानानि कियन्ति नरकानि च ॥ कथं सुकृतिनो यान्ति कथं दुःकृतकारिणः ॥ ६ ॥ किंरूपं किंप्रमाणञ्च किंवर्णं भूतयोरपि ॥ जीवस्य नियमास्तस्य यमलोके व्रतीहिनः ॥ ७ ॥ व्यासउवाच ॥ शृणुध्वं मुनिशार्दूला वदता मुनिसुव्रताः ॥ संसारचक्रमजरं स्थिति यस्य नविद्यते ॥ ८ ॥ सोऽहं वदामि यःसर्वं यम

मार्गस्य निर्णयं ॥ उत्क्रान्तिकाला दारभ्य यथानाम्यो वदिष्य
ति ॥ ९ ॥ स्वरूप ञ्चैव मार्गस्य यन्मां पृच्छथ सत्तमाः ॥ यमलोकस्य
चाध्वान मन्तरं मानुषस्य च ॥ १० ॥ योजनानां सहस्राणि षडशी
ति स्तदन्तरं ॥ तप्ततास्र मिवातप्तं तदध्वान मुदाहृतम् ॥ ११ ॥ त
दवश्यंहि गन्तव्यं प्राणिभि र्जीवसंज्ञकैः ॥ पूर्वाह्ने वापराह्ने च म
ध्याह्ने च तथा पुनः ॥ १२ ॥ पुण्या स्तु पुण्यकृतो यान्ति पापा स्पाप
कृतो नराः ॥ द्वाविंशतिश्च नरका यमस्य पथि संस्थिताः ॥ १३ ॥
येपि दुःकृतकर्माणो विपद्यन्ते पृथक् पृथक् ॥ नरको रौरवो रौद्रः
शूकर स्तालएव च ॥ १४ ॥ कुम्भीपाको महारौद्रः शाल्मलीय वि
मोहनः ॥ कृमिदः कृमिभक्ष स्च लालाभक्षोत्तम स्तथा ॥ १५ ॥ न
दीपूयवहा श्चान्या रुधिरार स्तथैवच ॥ अग्निज्वालो महारौद्रः
सुदंशः शुनभोजनः ॥ घोरा वैतरणी चैव असिपत्रवन स्तथा ॥ १६ ॥
नतत्र वृक्षा श्छायाश्च नच नद्यः सरांसि च ॥ नवाप्यो दीर्घिकावा
पि नकूपा नसभाप्रपाः ॥ १७ ॥ नमण्डपो नायतनो ननद्यो नच प
र्वताः ॥ नकिञ्चि दाश्रमस्थानं विद्यते तत्र वर्त्मनि ॥ १८ ॥ यत्रवि
श्रमते श्रान्तः पुरुषो ऽध्वनिकर्षितः ॥ अवश्यमेव गन्तव्यं समस्तै स्च
महापथः ॥ १९ ॥ प्राप्त कालेतु सन्त्यज्य सुहृद्बन्धुधनादिकं ॥ ज
रायुजाण्डजा श्चैव गमिष्यन्ति महापथं ॥ २० ॥ देवासुरमनुष्यै स्च
वैवस्वतवशानुगैः ॥ स्त्रीपुंनपुंसकै श्चैव पृथिव्यां जीवसंज्ञकैः ॥ २१ ॥
पूर्वाह्ने ञापराह्ने च मध्याह्नेच तथा पुनः ॥ संध्याकाले ऽर्द्धरात्रेवा

प्रत्यूषे वाप्युपस्थिते ॥ २२ ॥ इह्नैवा मध्यमै श्चापि यौवनस्थै स्तथैव च ॥ गर्भवासेऽथ वाल्येवा गन्तव्यः समहापथः ॥ २३ ॥ प्रवासस्थै र्गृहस्थैर्वा वनस्थै र्वास्थलै रपि ॥ जाग्रद्भिश्च प्रसुप्तैर्वा गन्तव्यः समहापथः ॥ २४ ॥ दूहानुभूयनिर्द्दिष्ट मायुषोन्ते स्वयन्तथा ॥ तस्यान्ते च स्वयं प्राणै रनिच्छन्नपि मुच्यते ॥ २५ ॥ जलमग्निं विषं शस्त्रं क्षुद्व्याधिं पतनं गिरेः ॥ निमित्तं किञ्चि दासाद्य देही प्राणैर्विमुच्यते ॥ २६ ॥ विहाय सुमहाकृत्स्नं शरीरं पाञ्चभौतिकं ॥ अन्यच्छरीरं प्राप्नोति सुखदुःखोपभुक्तये ॥ २७ ॥ तेन भुक्तेषु कृच्छ्राणि पापकर्मनरो स्वयं ॥ सुखानि धार्मिको भुंक्ते लोके इह यमच्छ्ये ॥ २८ ॥ उष्माप्रकुपितः काये तीव्रवायुसमीरितः ॥ भिन्नानि मर्मस्थानानि दीप्यमानो निरन्धनः ॥ २९ ॥ उदानो व्यान पवनस्तत श्चोर्द्ध्वं प्रवर्त्तते ॥ भुञ्जाना मन्नभक्ष्याणा मधोगतिनिरोधकृत् ॥ ३० ॥ ततो येनाम्बुदत्तानि घृतमन्नं रस स्तथा ॥ दारैः पुत्रै स्तथा चान्यै स्तेषु विप्रतिपद्यते ॥ ३१ ॥ अन्नानि येनदत्तानि श्रद्धापूतेन चेतसा ॥ सोपि तृप्ति मवाप्नोति विनाप्यन्नेन वैतदा ॥ ३२ ॥ येनान्नतानि नोक्तानि प्रीतिभेदकृतो नच ॥ आस्तिकः श्रद्दधानश्च सुखं मृत्युं सगच्छति ॥ ३३ ॥ देवब्राह्मणपूजायां येरता श्चानुसूयकाः ॥ शुद्धा वदान्या ह्रीमंत स्तेनराः सुखमृत्यवः ॥ ३४ ॥ यः कामान्नापि संरम्भा न्नद्वेषा द्धर्म मुत्सृजेत् ॥ यथोक्तकारी सौम्यश्च स सुख म्मृत्यु मृच्छति ॥ ३५ ॥ सुवारिदायिनो येतु येच मिष्टान्न

दायिनः ॥ प्राप्नुवन्ति नराः काले तस्मिन्मृत्युमुपस्थिते ॥ ३६ ॥ शी
तंजयन्ति धनदा स्तोयचन्दनदायिनः ॥ प्राणिनो वेदनां कष्टं ये
चामोद्वेगकारिणः ॥ ३७ ॥ मोहे ज्ञानप्रदातार स्तथा दीपप्रदा
स्तथा ॥ कूटसाक्षी मृषावादी येच प्राणहरा स्तथा ॥ ३८ ॥ तेमो
हमृत्यवः सर्वे तथाये वेदनिन्दकाः ॥ विभीषणाः पूतिगन्धाः कूटमु
द्गरपाणयः ॥ ३९ ॥ आगच्छन्ति दुरात्मानो यमस्य पुरुषा स्तथा ॥
प्राप्ते दिव्यपथे तेषां जायते तस्य वेपथुः ॥ ४० ॥ क्रन्दत्यविरतः सो
पि भ्रातृमातृसुत स्तथा ॥ सारुवाचास्फुटो विप्रा एकवर्णो विभाव्य
ते ॥ ४१ ॥ दृष्टि र्विभ्राम्यते चास्य त्कासरुद्धासचेष्टितं ॥ हृत स्तवे
दनाविष्ट स्तच्छरीरं वियुज्यते ॥ ४२ ॥ वाय्वग्रसारी तद्रूपं देह म
न्य त्प्रपद्यते ॥ तत्कर्मणां जनापार्थं नमातृपितृसम्भवं ॥ तत्प्रमाणं व
योऽवस्था प्राप्नुवन्ति नरा स्तथा ॥ ४३ ॥ ततो दूता यमस्याथ पाशै
र्बध्नातिदारुणं ॥ जन्तोः संप्राप्तकालस्य वेदना स्तस्य वैश्वशं ॥ ४४ ॥
भूतैः संत्यक्तदेहस्य कण्ठप्राप्तानिलस्य च ॥ शरीरा च्चापनीतोऽसौ
जीवो रौति पथावहन् ॥ ४५ ॥ निर्गतो वायुभूतस्तु तर्षकोष्णि क
लेवरः ॥ मातृभिः पितृभि श्चैव भ्रातृभिश्च पुरादिभिः ॥ ४६ ॥ दा
रैः पुत्रै र्वयस्यैश्च रुदद्भि स्त्यज्यते भुवि ॥ दृश्यमान स्च तैर्वीरै र
श्रुपूर्णेक्षणैर्भृशं ॥ ४७ ॥ स्वशरीरं समुत्सृज्य वायुभूतस्तु गच्छति ॥
अन्धकार मपारञ्च महाघोरं तमोवृतं ॥ ४८ ॥ सुखदुःखप्रदातारं
दुर्गमं पापकर्मणां ॥ दुःसहञ्च सुदूरञ्च दुर्निरीक्ष्यं दुरासदं ॥ ४९ ॥

दुरासामपि दूरञ्च पापिष्ठानां सदाहितं ॥ कृष्यमाणैश्च तैर्दूतै र्यां
म्यैः पाशैश्च संयतः ॥ ५० ॥ मुद्गरै स्ताड्यमान श्च नीयन्ते तंमहाप
थम् ॥ क्षीणायुषं समालोक्य प्राणिनां वापुरक्षये ॥ ५१ ॥ निरीक्ष्य
च समायान्ति यमदूता भयङ्कराः ॥ श्वेनश्रृङ्गारमारूढा वर्णलीक
ङ्कवाहनाः ॥ ५२ ॥ वाराहपशुवेपाल महिषाश्चतथापरे ॥ नाना
रूपधरा घोराः सर्वप्राणिभयङ्कराः ॥ ५३ ॥ दीर्घाननाः करालाश्च
वक्रनासा स्त्रिलोचनाः ॥ महाहनुकपोलाश्चः प्ररुषाः शरदां शत
म् ॥ ५४ ॥ निर्जग्मु र्विकृताकारै र्ज्वलत्पिङ्गलचञ्चलैः ॥ मार्जारो
लूकखद्योतशक्रचापै रिवोद्गतैः ॥ ५५ ॥ चिक्कुरैः सङ्कुलै स्तीव्रैर्लो
चनैः पावकोपमैः ॥ भ्रमभाभरणै र्भोगै रावद्धै र्भुजगोपमैः ॥ ५६ ॥
शोणासरलगात्रै श्च मुण्डमालाविभूषितैः ॥ कण्ठे कृष्णां सुविभ्रा
णाः फूत्काररतभीषणाः ॥ ५७ ॥ वह्निज्वालोपमैः केशै स्तस्य रूक्षै
र्भयङ्करैः ॥ वभ्रुपिङ्गललोमै श्च कद्रुभस्त्रैरिव त्वचः ॥ ५८ ॥ भुज
दण्डै र्महाघोरैः प्रलम्बैः परिघोपमैः ॥ केचि द्द्विवाहव स्तत्र तथा
न्येच चतुर्भुजाः ॥ ५९ ॥ षट्च वाहवस्चैव दशविंशद्भुजा स्तथा ॥
असंख्यातभुजा श्चान्ये केचिद्वाजुसहस्रिणः ॥ ६० ॥ आयुधै र्विवि
धाकारैः प्रज्वालै र्हिमपानकैः ॥ शक्तितोमरचक्राद्यैः सुदीप्तै र्विवि
धायुधैः ॥ ६१ ॥ पाशश्रृंखलदण्डै श्च चापहस्ता महावलाः ॥ आ
गच्छन्ति महारौद्रा मर्त्यानामायुषःक्षये ॥ ६२ ॥ गृहीत्वा प्राणि
नांसर्वे यमश्चाज्ञाकरा स्ततः ॥ तच्छरीरं समादत्ते यातनायां स्वक

मेजं ॥ ६३ ॥ तदाख्य नीयते जन्तो यमस्य सदनं प्रति ॥ वध्वा त
त्कालपाशैश्च निगडै र्वज्रशृंखलैः ॥ ६४ ॥ ताडयित्वा भृशं क्रुद्धा
स्ताडयद्भिः समन्ततः ॥ तंमुह्यमानंदुःखार्त्तं प्रापयन्तदूतस्ततः॥ ६५॥
आकृष्य नीयते जन्तु र्वध्वा तैर्यमकिङ्करैः ॥ कुशकण्टकवल्मीकसि
तीक्ष्णपाषाणकर्करे ॥ ६६ ॥ तथा प्रदीप्तज्वलने क्षारवज्रशतोत्क
टे॥ प्रदीप्तादित्यतप्तेन दह्यमानस्तु जन्तुभिः ॥ ६७ ॥ कृष्यते य
मदूतैश्च शिवासन्नादभीषणैः ॥ विकृष्यमाण स्तैर्गच्छ न्भक्ष्यमाणः
शिवाशतैः ॥ ६८ ॥ प्रयाति दारुणे मार्गे पापकर्मा यमालयम् ॥
क्वचिद्वातैः क्वचित्पचैः प्रज्वलद्भिः क्वचित्क्वचित् ॥ दुःखेनाकुलमा
नैश्च गन्तव्यः समशापथः ॥ ६९ ॥ निर्ग्र्थ्यमाणै रुधिरं विद्रुतै र्भ
यविह्वलैः ॥ क्वथमानशरीरैस्तु गन्तव्यो जीवसंज्ञकैः ॥ ७० ॥ क
ण्टकाविष्टमार्गेण सतप्तसिकतेनवा ॥ दह्यमानैस्तु गन्तव्यो नरैर्दा
नविवर्ज्जितैः ॥ ७१ ॥ मदशोणितदुर्गन्धै र्विष्टामूत्रानुलेपनैः ॥ द
ग्धस्फुटरुजाकीर्णे गंन्तव्यं जीवघातकैः ॥ ७२ ॥ स्वाभै र्व्याघ्रैः का
कवकै र्भक्ष्यमाणाश्च पापिभिः ॥ सर्पपाषाणसंकीर्णे भिद्यमानः स
मन्ततः ॥ उत्तिष्टद्भिः शूकरैश्च गन्तव्यं मांससारकैः ॥ ७३ ॥ पूर्वा
सन्तप्तसंकाशः मक्षिकाभिः सहस्रशः ॥ दह्यमानैश्च गन्तव्यं पापि
ष्टैर्मर्मघातकैः ॥ ७४ ॥ विश्वस्तंस्वमिमं मित्रं स्त्रियञ्च यस्तु घा
तयेत् ॥ शस्त्रै र्निष्कृत्यमानैस्तु गन्तव्यं वायुरन्तरैः ॥ ७५ ॥ घा
तयन्ति च येजन्तू न्ताडयन्ति निरागसः ॥ राक्षसै र्भक्ष्यमाणा स्ते

यांति पापाः पथं तमः ॥ ७६ ॥ ये हरंति परस्त्रीणां परप्रावरणानि च ॥ तेयांति विद्रुता नागाः प्रेतभूता यमालयं ॥ ७७ ॥ वासोधान्यं हिरण्यञ्च गृहं क्षेत्र मथापिवा ॥ ये हरंति दुरात्मानः परस्वं पापकर्मिणः ॥ ७८ ॥ पाषाणै र्लकुटै र्दण्डै स्ताडयमानै श्च जर्जरैः ॥ वमद्भिः शोणितं भूरि गन्तव्यन्तु यमालयम् ॥ ७९ ॥ वस्तून्येव हरन्तीह गुरुभूमिं तथैव च ॥ ताडयंति तथा विप्रा नाक्रोशंतिच येऽधमाः ॥ ८० ॥ शुष्ककाष्टनिवद्धा स्ते छीणकर्णाधिनाशिकाः ॥ पूयशोणितभक्ष्यास्ते कालरुक्षैश्च जम्बुकैः ॥ ८१ ॥ किङ्करै र्भीषणै श्चण्डै स्ताडयमानास्तु दारुणैः ॥ विक्रोशमाना गच्छन्ति पापिनस्ते यमालयम् ॥ ८२ ॥ एवं परमदुर्द्धर्ष मध्वानं ज्वलनप्रभं ॥ रौरवं दुर्गविषमं निर्द्दिष्टं मानुषस्य च ॥ ८३ ॥ प्रतप्तताम्रसंतापं वह्निज्वालास्फुलिङ्गकं ॥ क्रुरटङ्कं वृक्षाकीर्णं यथा विकटमङ्कुशैः ॥ ८४ ॥ शक्तिवज्रै श्च यत्तीक्ष्णं प्रज्वलन् तीव्रकण्टकैः ॥ अङ्गारवालुकामिश्रं वह्निकीटकदुर्गमं ॥ ८५ ॥ ज्वालामालाकुलं रौद्रं दीप्तसूर्यैः प्रतापितं ॥ अध्वानं नीयते देही कृष्यमाणः सुनिष्ठुरैः ॥ ८६ ॥ यदैवं क्रन्दते जन्तु र्दुःखार्त्तः पतितः क्वचित् ॥ तदैवाहन्यते सर्वै रायुधै र्यमकिङ्करैः ॥ ८७ ॥ सर्वै रेवहि गंतव्य मध्वानंतं सुदुर्गमं ॥ जायते विविधै र्घोरै र्यमदूतै रवज्ञया ॥ ८८ ॥ नीत्वा सुदुर्गमंमार्गं प्राणिनां यमकिङ्करैः ॥ प्रविश्यते पुरी घोरा ताम्रायसमयी द्विजाः ॥ ८९ ॥ सा पुरी विपुलाकारा लक्षयोजनमायता ॥

चतुरस्राविनिर्दिष्टा चतुर्द्वारवती शुभा ॥ ९० ॥ प्राकाराः का
ञ्चना स्तस्यां योजनायुतमुच्छ्रिताः ॥ इन्द्रनीलमहानीलपद्मरा
गोपशोभिताः ॥ ९१ ॥ सापुरी विविधैर्दूतै र्घोरैश्चैव समाकुला ॥
देवदानवगन्धर्वयक्षराक्षसपन्नगैः ॥ ९२ ॥ पूर्व्वद्वारं शुभं तस्याः प
ताकाशतशोभितं ॥ वज्रेन्द्रनीलवैदूर्यमुक्ताफलविभूषितं ॥ ९३ ॥
गीतैर्नृत्यैः सदारम्यै र्गन्धर्वाप्सरसांगणाः ॥ प्रवेश स्तेन देवाना ञ्च
षीणां योगिनां तथा ॥ गन्धर्वयक्षसिद्धानां विद्याधरविसर्प्पिणा
म् ॥ ९४ ॥ उत्तरन्तु वरं द्वारं घण्टाचामरमण्डितं ॥ छत्रचा
मरविन्यासं नानारत्नै रलंकृतं ॥ ९५ ॥ वीणावेणुरवै रम्यै
र्गीतमङ्गलनादितं ॥ ऋग्यजुःसामनिर्घोषै र्मुनिवृन्दैः समाकु
लम् ॥ ९६ ॥ विशन्ति तेन धर्मज्ञाः सत्यव्रतपरायणाः ॥ ग्रीष्मे
वारिप्रदा येच प्रियवादरता श्चये ॥ ९७ ॥ येच दानरताः शूरा मा
तापितृपराश्चये ॥ द्विजशुश्रूषयोयुक्ता नित्यं येऽतिथिपूजकाः ॥ ९८ ॥
पश्चिमंतु महाद्वारं पुर्य्यां रत्नैर्विभूषितं ॥ विचित्रमणिसोपान मम
रैः समलंकृतं ॥ ९९ ॥ भेरीमृदङ्गसन्नादै र्मंगलैः प्रणिनादितं ॥
प्रवेश स्तेन हृष्टानां शिवभक्तिमतां नृणां ॥ १०० ॥ सर्वतीर्थप्लुता
येच येचाग्निपरिशेवकाः ॥ प्रस्थाने येमृता वीरा मृताये पतने गि
रौ ॥ १०१ ॥ जले विपन्ना येवीराः साधितं यैरनाशकं ॥ येस्वामि
मित्रलोकार्थे गोगृहे संकुले हताः ॥ तेविशन्ति नराः शूराः पश्चि
मेन तपोधनाः ॥ १०२ ॥ पुर्य्यास्तस्या महाघोरं सर्वसत्वभयङ्करं ॥

हाहाकारसमाकीर्णं दक्षिणं द्वारमीदृशं ॥ १०३ ॥ अन्धकारतया लोकं तीक्ष्णशृंगैः समन्वितं ॥ कण्टकै र्वृश्चिकैः सर्पै र्वज्रकीटैः सुदुर्गमैः ॥ १०४ ॥ विलुम्पद्भि र्वृकै र्व्याघ्रै र्ऋक्षसंघैः सजम्बुकैः ॥ श्वानमार्जारगृध्रैश्च सज्वालकवलै र्मुखैः ॥ १०५ ॥ प्रवेशस्तेन वैनित्यं सर्वेषां पापकर्मणां ॥ येतापयन्ति विप्रांश्च वालं वृद्धं तथातुरं॥१०६ शरणागतं सविश्वस्तं स्त्रियं मित्रं निरायुधं ॥ अगम्यमानिनो मूढाः परद्रव्यापहारिणः ॥ १०७ ॥ निक्षेपस्यापहर्त्तारो विषवह्निप्रदायकाः ॥ परभूमिगृहं शय्या वस्त्रालंकारहारिणः ॥ १०८ ॥ पररंध्रेषु येक्रूरा येमदाभूतवादिनः ॥ ग्रामराष्ट्रपुरग्रामे महादुःखप्रमर्द्दकाः ॥ १०९ ॥ कूटसाक्षीप्रदातारः कन्यावादे च येऽनृताः॥ अभक्ष्यभक्ष्यनिरता येगच्छन्ति तथास्नुषां ॥ मातरं पितर ञ्चैव येगच्छंति यमामपि ॥ ११० ॥ अन्ये येचैव निर्द्दिष्टा महापातककारिणः ॥ दक्षिणेनतु तेसर्वे द्वारेण प्रविशंति च ॥ १११ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे यमलोकयमार्गनिरूपणं नाम चतुरुत्तरशततमोऽध्यायः ॥ १०४ ॥

—०—

मुनय ऊचुः ॥ कथं दक्षिणमार्गेण निर्विशंति पुनःपुनः ॥ श्रोतुमिच्छाम तान्ब्रूहि विस्तरेण तपोधन ॥१ ॥ व्यासउवाच॥ सुघोरंतं महाघोरं द्वारं वक्ष्यामि भीषणं ॥ नानाश्वापदसंकीर्णं शिवाशतनिनादितं ॥२॥ स्फुटकारावसंकाश मगम्यं लोमहर्षणं॥

भूतप्रेतपिशाचैश्च वृतं चान्यैश्च राक्षसैः ॥ ३ ॥ तं दृष्ट्वा सुमहा घोरं द्वारं दुष्कृतकारिणः ॥ मोहं गच्छन्ति सहसा त्रासाच्च प्रल पन्ति च ॥ ४ ॥ ततस्तान् शृंखलैः पाशै र्द्वास्थाः कर्षन्ति निर्दयम् ॥ ताडयन्ति च दण्डैश्च भर्त्सयन्ति पुनःपुनः ॥ ५ ॥ लब्धज्ञानमतस्तेतु रुधिरेण परिप्लुताः ॥ व्रजन्ति दक्षिणं द्वारं प्रज्वलन्ति पदे प दे ॥ ६ ॥ तीव्रकण्टकयुक्तेन शर्कराणिचितेन च ॥ क्षुरधारानिभै स्तीव्रैः पाषाणै रन्वितेन च ॥ ७ ॥ क्वचि त्पङ्केतमहता निरन्तरा श्च पातकैः ॥ लोहसूचिनिभै र्दन्तैः पच्छिद्यन्ते पृथक् क्वचित् ॥ ८ ॥ तथा प्रपातविषमैः पर्वतै र्वृकसंकुलैः ॥ प्रतप्ताङ्गारवर्षैश्च यान्ति मा र्गेण दुःखिताः ॥ ९ ॥ क्वचि द्विषमगर्ताभिः क्वचिल्लोष्टैः सुपिच्छि लैः ॥ सुतप्तवालुकाभिश्च दंशैः कीटैः सुदारुणैः ॥ १० ॥ क्वचि न्म हाजलौकाभिः क्वचि त्सर्प्पविषोल्बणैः ॥ महिषैश्च गजेन्द्रैश्च वलोन्म त्तैःप्रमाथिभिः ॥ आधिभिश्च महाघोरैः पीड्यमानाव्रजन्तिते ॥ ११ महाधूलिविमिश्रेण महाचण्डेन वायुना ॥ महापाषाणघोषेण हन्य माना निराश्रयाः ॥ १२ ॥ क्वचि द्विद्युत्प्रतापेन दीर्य्यमाणा व्रजन्ति ते ॥ महता वाणवर्षेण छिद्यमानाश्च सर्वतः ॥ १३ ॥ पतद्भि र्वज्रसं घातै रुल्काघोरैश्च दारुणैः ॥ प्रदीप्ताङ्गारवर्षेण दह्यमाना विशन्ति च ॥ १४ ॥ महता पांसुवर्षेण पूर्य्यमाणा रुदन्ति च ॥ मेघारावैः सुघोरै श्च वित्रास्यन्ते मुहुर्मुहुः ॥ १५ ॥ निःशेषशरवर्षैश्च चूर्णमा णाश्च सर्वतः ॥ महाक्षाराम्बुधाराभिः सिंच्यमाना व्रजन्तिच ॥ १६ ॥

महाशीतेन महता चीणायुः प्रकर्षेणवा ॥ समन्ता ह्रीर्य्यमाणा श्च सुष्यन्ते च श्रवन्ति च ॥ १७ ॥ दुष्टमार्गेण द्वारेण पाथेयरहितेन वा ॥ निरालम्बेन दुर्गेण निर्जलेन समन्ततः ॥ १८ ॥ अविश्रमेण महता निर्गतार्थास्च मानवाः ॥ नीयन्ते देहिनः सर्वे येमूढाः पापकर्मिणः ॥ १९ ॥ यमदूतै र्महाघोरै स्तयाज्ञाकारितावलात् ॥ एकाकिनः पराधीना मित्रवन्धुविवर्ज्जिताः ॥ २० ॥ शोचन्तः स्वानि कर्माणि रुदन्ति च मुहुर्मुहुः ॥ प्रेतभूता निषिद्धास्ते शुष्यमाणाः सुदुःखिताः ॥ २१ ॥ अन्नपानीयरहिता याचमानाः पुनः पुनः ॥ देहिदेहीति भाषन्तो मर्मगद्गदया गिरा ॥ २२ ॥ कृताञ्जलिपुटा दीनाः चुत्तृष्णापरिपीडिताः ॥ भक्ष्यानुच्चावचा न्दृष्ट्वा भोज्यानेव च पुष्कलान् ॥ २३ ॥ सुगन्धा न्द्रव्यसंयुक्तान् याचमानाः पुनःपुनः ॥ दधिखण्डघृतोन्मिश्रं दृष्ट्वा शाल्योदनं तथा ॥ २४ ॥ एतानि सुसुगन्धीनि शीतलान्युदकानिच ॥ तान् याचमाना न्स्तेयाग्या श्रशपंतस्तदाब्रुवन् ॥ २५ ॥ वचोभिः परुषै र्भीमाः क्रोधा रक्तान्तलोचनाः ॥ नभवद्भिर्हुतं काले नदत्तं ब्राह्मणेषु च ॥ २६ ॥ प्रसभंदीयमानस्य वारितस्च द्विजातिषु ॥ तस्य पापस्य च फलं सांप्रतं प्रतिगीृह्यय ॥ २७ ॥ अग्नौ दग्धञ्च भूमौतु गृहीतं न्तातस्करैः ॥ कुतो वासांप्रतं विप्रा यन्नदत्तं पुराधमाः ॥ २८ ॥ सुदत्तानीह दानानि साधुभिः साधकानितु ॥ तेषा मेते प्रदृश्यन्ते कल्पिताह्यन्न पर्व्वताः ॥ २९ ॥ भक्ष्या भोज्या स्च पानाश्च लेह्या श्चोष्यास्च संवृताः ॥

यैस्तु दत्तं हुतं तप्तं ब्राह्मणा श्चैव पूजिताः ॥ ३० ॥ तेषामन्नं समा
नीय इहनिक्षिप्यते सदा ॥ परस्वं कथ मस्माभि र्दातुं शक्यो नना
रकाः ॥ ३१ ॥ किङ्कराणां वचःश्रुत्वा निस्पृहं क्षुत्तृषार्दिताः ॥ तत
स्तैर्दारुणैः शस्त्रैः पात्यते यमकिङ्करैः ॥ ३२ ॥ नीयन्ते पापिनस्तत्र
यत्रातिष्ठत्स्वयंयमः ॥ धर्मात्मा धर्मकृद्देवः सर्व्वसंयमनो यमः॥ ३३॥
एवं पथातिकष्टेन प्राप्ताः प्रेतपुरं नराः ॥ ततस्ते पापकर्माण स्तस्य
न्तिच भयानकं ॥ ३४ ॥ पापानि वद्धनयना विपरीतात्मबुद्धयः ॥
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणं ॥ ३५ ॥ ऊर्ध्वकेशं महाश्मश्रु
प्रस्फुरच्चाधरोत्तरं ॥ अष्टादशभुजं क्रुद्धं नीलाञ्जनचयोपमं ॥ ३६ ॥
सर्वायुधोद्यतकरं ब्रह्मदण्डेन तर्जयन् ॥ महामहिष मारूढं दीप्ता
ग्निसमलोचनं ॥ ३७ ॥ रक्तमाल्याम्बरधरं महामेघ मिवोच्छ्रितं ॥
प्रलयाम्बुदनिर्घोषं पिवन्तं च महोदधिं ॥ ३८ ॥ ग्रसन्तमिव त्रैलो
क्य मुद्गिरन्त मिवानलं ॥ मृत्यु ञ्च तत्समीपस्थं कालानलसमप्रभ
म् ॥ ३९ ॥ प्रलयानलसंकाशं कृतान्त ञ्च भयानकं ॥ मारीचोग्रा
महामारी कालरात्रि श्च दारुणा ॥ ४० ॥ विविधा व्याधयः कष्टा
नानारूपा भयावहाः ॥ शक्तिशूलांकुशधराः पाशचक्रासिधारि
णः ॥ ४१ ॥ वज्रदण्डधरा रौद्राः खड्गतूणिधनुर्द्धराः ॥ असंख्याता
महावीर्य्याः क्रूरा श्चाञ्जनसप्रभाः ॥ सर्वायुधोद्यतकरा यमदूता भ
यानकाः ॥ ४२ ॥ अनेन परिवारेण महाघोरेण संवृतं ॥ यमं पश्य
न्ति पापिष्टा श्चित्रगुप्त ञ्च भीषणं ॥ ४३ ॥ निर्भर्त्सयति चात्यन्तं य

म स्तान्पापकारिणः ॥ यत्स्वयं क्रियतेकर्म तत्स्वयं कीर्त्यतेपुनः ॥ तत्किमात्मोपघातार्थं भवद्भि र्दुष्कृतं कृतं ॥ ४४ ॥ इदानींकिंनुशोचध्वं पीडयमानाः स्वकर्मभिः ॥ भुञ्जध्वं तानि दुःखानि नात्र दोषोस्ति कस्यचित् ॥ ४५ ॥ तत्रथैपृथिवीपालाः संप्राप्तास्तत्समीपगाः ॥ स्वकीयैः कर्मभि र्घोरैः दुःप्रज्ञा बलगर्विताः ॥ ४६ ॥ भोभो नृपा दुराचाराः प्रजाविध्वंसकारिणः ॥ अल्पकालस्य राज्यस्य कृतेकिं दुष्कृतंकृतं ॥ ४७ ॥ राज्यलोभेन मोहेन बलादन्यायतः प्रजाः ॥ यद्दण्डिताः फलं तस्य भुञ्जध्व मधुना नृपाः ॥ ४८ ॥ क्वतो राज्यबलंतच्च यदर्थ मशुभंकृतं ॥ तत्सर्वं सम्परित्यज्य यूय मेकाकिनः स्थिताः ॥ ४९ ॥ नापश्याम बलंसर्वं येनविध्वंसिताःप्रजाः ॥ ममदूतैः पात्यमाना अधुना कीदृशं फलं ॥ ५० ॥ एवं बहुविधै र्वाक्यै नृपा लब्धा यमेनते ॥ शोचन्तः पापकर्माणि तूष्णीमिति च पार्थिवाः ॥ ५१ ॥ इति कर्म समादिश्य नृपाणां धर्मराट् स्वयम् ॥ सर्व्व पापविशुद्ध्यर्थं मिदं वचन मब्रवीत् ॥ ५२ ॥ भोभो चण्ड महाचण्ड गृहीत्वा नृपमानिनं ॥ विशोधयध्वं पापेभ्यः क्रमेण नरकाग्निषु ॥ ५३ ॥ ततः शीघ्रं समुत्थाय नृपान्संगृह्य पादयोः ॥ भ्रामयित्वातु वेगेन क्षिप्त्वा चोर्द्ध्व्ञ्च योजनं ॥ ५४ ॥ सर्वप्राणेन महतासुतप्तेच शिलातले ॥ आस्फालयन्ति सहसा वज्रेणेव महद्द्रुमं ॥ ५५ ॥ ततस्ते रक्तस्रोतोभिः स्रवन्ते जर्जरीकृताः ॥ निःसंज्ञः सतदा देही निश्चेष्टश्च प्रजायते ॥ ५६ ॥ ततश्च वायुनास्पृष्टः शनैर्दुर्जीवनेपुनः ॥

नरः पापविशुद्ध्यर्थं क्षिप्यते नरकार्णवे ॥ ५७ ॥ अन्योन्यं ते तदा दूताः पापकर्मरता न्नरान् ॥ निवेदयन्ति विप्रेन्द्रा यमाय भृशदुःखितान् ॥ ५८ ॥ एषदेव तवादेशा दस्माभि र्मोहितो भृशम् ॥ आनीतो धर्मविमुखः सदा पापकृतो नरः ॥ ५९ ॥ पापलुब्धो दुराचारो महापातकसंयुतः ॥ उपपातककर्त्ता च सदा हिंसारतोऽशुचिः ॥ ६० ॥ अगम्यागमदुष्टात्मा परद्रव्यापहारकः ॥ कन्याहर्त्ता कूटसाक्षी कृतघ्नो मित्रवञ्चकः ॥ ६१ ॥ अनेनममदत्तेन सदा धर्मो विनिन्दितः ॥ पापमाचरितं कर्म मृत्युलोके दुरात्मना ॥ ६२ ॥ इदानीं तस्य देवेश निग्रहानुग्रहौ तव ॥ अनन्तरं क्रियायोगे वयं च परिपन्थिनः ॥ ६३ ॥ इतिविज्ञाप्य देवेशं न्यस्याग्रे पापकर्मिणम् ॥ समादिशति तान्घोरान् निग्रहाय स्वकिङ्करान् ॥ ६४ ॥ यथा यस्य विनिर्द्दिष्टो वसिष्ठाद्यै र्विनिग्रहः ॥ पापस्य संचयं क्रुद्धाः कुर्वंति यमकिङ्कराः ॥ ६५ ॥ अंकुशै र्मुद्गरै र्दण्डैः कवचैः शक्तितोमरैः ॥ शृणुध्वं नरकाना ञ्च स्वरूपञ्च भयङ्करं ॥ ६६ ॥ तत्र संपीड्यते भग्नो भिद्यते वज्रकण्टकैः ॥ नामानि च प्रमाणानि येन यान्ति नराश्च तान् ॥ ६७ ॥ महावीची च विख्यातं नरकं शोणितप्लुतम् ॥ वज्रकण्टकसन्मिश्रं योजनायुतविस्तरं ॥ ६८ ॥ वज्रलक्षं महाघोरं योयाति नरकं नरः ॥ योजनानां स्मृतं लक्षं कुम्भीपाकं सुदारुणम् ॥ ६९ ॥ ताम्रकुम्भवतादीप्ता वालुकाङ्गारसंभ्रताः ॥ ब्रह्महा भूमिहर्त्ता च निक्षेपस्यापहारकः ॥ दह्यते तत्र संक्षिप्तो यावदाहूत

संप्लवं ॥ ७० ॥ रौरवो ज्वरनारौवै प्रज्वलद्भिः समाव्रतः ॥ योज
नानां सहस्राणि षष्टिरायामविस्तरैः ॥ ७१ ॥ भिद्यन्तेतत्र नाराचैः
सज्वाले नरके नरः ॥ स्त्रीबालवृद्धहन्तारः याव दिन्द्रा चतुर्द्द
श ॥ ७२ ॥ ज्वालामालाकुलं रौद्रं महारौरवसंज्ञितं ॥ नरकंयो
जनानाञ्च सहस्राणि चतुर्द्दश ॥ ७३ ॥ पुरं चेत्तं गृहं ग्रामं यो
दीपयति वह्निना ॥ सतत्र दह्यते मूढो याव त्कल्पस्थितिं न
रः ॥ ७४ ॥ तामिस्रेति च विख्यातो लक्षयोजनविस्तरः ॥ निपत
द्भिः सदा रौद्रैः खड्गपट्टिशधारिभिः ॥ ७५ ॥ तत्र चौरा नराः
क्षिप्ता स्ताडयन्ते प्रयुतै र्भृशं ॥ शूलशक्तिगदाखड्गै र्यावत्कल्पशत
त्रयम् ॥ ७६ ॥ तामिस्रा द्द्विगुणं प्रोक्तं महातामिस्रसंज्ञितं ॥
जलौकासर्प्पसम्पूर्णं निरालोकं सुदुःखदं ॥ ७७ ॥ मातृहा पि
तृहा चैव मित्रविश्रम्भघातकः ॥ तिष्ठन्ति तत्रमाणास्तु यावत्तिष्ठति
मेदिनी ॥ ७८ ॥ असिपत्रवनं नाम नरकं शतयोजनं ॥ योजना
युतविस्तारं ज्वलत्खड्गैः समाकुलं ॥ ७९ ॥ पातित स्तत्र तैःख
ड्गैः शतधा तु समाहितः ॥ मित्रघ्नः कृन्त्यते ताव याव दाहूतसंप्लव
म् ॥ ८० ॥ करम्भवालुको नाम नरको योजनायुतं ॥ कूपाकारं
चलं दीप्तं वालुकांगारकण्टकैः ॥ ८१ ॥ दह्यते भिद्यते वर्षं लक्षा
युतत्रयंपुनः ॥ येनदग्धा जनानित्यं मिथ्यापापैः सुदारुणैः ॥ ८२॥
काकोलंनाम नरकं कृमिपूयपरिप्लुतं ॥ क्षिप्यतेतत्र दुष्टात्मा एका
की मिष्टभोजनः ॥ ८३ ॥ कुड्मलंनामनरकं पूर्णं विण्मूत्रशोणितैः ॥

पञ्चयज्ञक्रियाहीनाः क्षिप्यन्ते तत्र वैनराः ॥ ८४ ॥ सुदुर्गन्धमहा
भीमं मांसशोणितकर्दमं ॥ अभक्ष्यनिरता स्तत्र निरयन्ति नराध
माः ॥ ८५ ॥ क्रमिकीटसमाकीर्णं पूयपूर्णं महाघटं ॥ अधोमुखो
भवेत्तत्र कन्याविक्रयको नरः ॥ ८६ ॥ नाम्नावै तिलपी कोटिं नर
कं भृशदारुणं ॥ तिलवत्तत्र पीड्यन्ते परपीडारता भये ॥ ८७॥
नरकं तैलपाकेति ज्वालेन महताप्लुतम् ॥ पच्यते यमपैः सक्तं मो
हितं शरणागतं ॥ ८८ ॥ नाम्ना वज्रकपाटेति वज्रशृंखलयान्वित
म् ॥ पच्यन्ते निष्ठुरं तत्र यैःकृतं क्षीरविक्रयं ॥ ८९ ॥ निरुछ्वास
मिति प्रोक्त ममाघं वातवर्जितम् ॥ निश्चेष्टं क्षिप्यते तत्र विप्रदान
निरोधकृत् ॥ ९० ॥ अङ्गारो पचनं नाम प्रदीप्ताङ्गार सुज्वलं ॥
दह्यते तत्र येनोक्तं दानं विप्राय नार्पितम् ॥ ९१ ॥ महापातेति न
रकं लक्षयोजन मुच्छ्रितम् ॥ पात्यन्ते ऽधोमुखा स्तत्र ये जल्पन्तिसदा
नृतं ॥ ९२ ॥ महाज्वालेति नरकं ज्वालाभास्करभीषणम् ॥ दह्यते
तत्रसुचिरं यःपापबुद्धिकृन्नरः ॥ ९३ ॥ नरकं कर्करी ख्यातं पीड्यन्ते
तत्रवैनराः ॥ क्रकचै र्वज्रधाराग्रै रगम्यागमने रताः ॥ ९४ ॥ क्षुर
धारेति नरकं क्षुरधारासमन्वितं ॥ दह्यंते तत्र कल्पांतं विप्रभूमिह
रानराः ॥ ९५ ॥ नरकं चाम्बरी ख्यातं प्रलयानलदीपितं ॥ क
ल्पकोटिशतं दह्यं तत्र गोस्वर्ण हारकाः ॥ ९६ ॥ नरकं वज्रकुठा
र स्वज्रं परशुसंकुलं ॥ छिद्यंते तत्र छेत्तारो द्रुमाणां पापकारि
णः ॥ ९७ ॥ नरकं पतिताख्य ञ्च प्रलयानलदीपितं ॥ गरदो म

मुहूर्त्तं च क्षिप्यते तत्र पापकृत् ॥ ९८ ॥ नरकं कालसूत्रेति वज्र स्तत्र विकर्त्तनं ॥ भ्रमतस्तत्र छिद्यंते परस्वद्योपलुम्पकाः ॥ ९९ ॥ नरकं कश्मलं नाम श्लेष्मसिंहानकाद्भवाः ॥ तत्र संक्षिप्यते कल्यं मद्यमांसरुचि नरः ॥ १०० ॥ नरकं चोग्रमेधेति मलमूत्रपुरीषपि याम् ॥ क्षिप्यते तत्र नरके पितृपिण्डाप्रयच्छतः ॥ १०१ ॥ नरकं दुर्द्धरं नाम जलौकाष्टश्चिकाकुलं ॥ निक्षिप्ता स्तत्र दह्यंते गमने च शिवादकाः ॥ १०२ ॥ उन्कोपभवक स्तत्र वर्षायुतञ्च तिष्ठति ॥ यत्र वज्रमहापीड हारके वज्रनिर्मितम् ॥ इत्तुव त्तत्र पीडयन्ते ये नराः कूटसाक्षिणः ॥ १०३ ॥ अयोमयं प्रज्वलित मायासं नरकं स्मृतम् ॥ निक्षिप्ता स्तत्र दह्यंते वन्हिद्याहरता स्वये ॥ १०४ ॥ अत्रतिष्ठेति नरकं पूयसूत्रपुरीषिणाम् ॥ अधोमुखः पते त्तत्र स्मृति वेदविनिन्दकः ॥ १०५ ॥ नरकं पारिलुम्पाख्यं गृध्रश्वानष्टकाकुलं ॥ तप्यंते तत्रवै घोरे वालक्कुद्वजनापहाः ॥ १०६ ॥ नरकन्तु करालाख्यं करालं प्रेतसंकुलैः ॥ राक्षसै र्भक्ष्यते तत्र ब्राह्मणस्योपपीडकः ॥ १०७ ॥ लाक्षाप्रज्वलितं घोरं नरकन्तु विलेपनं ॥ निमग्ना स्तत्र दह्यंते मद्यपाने द्विजोत्तमाः ॥ १०८ ॥ महाप्रेतेति नरकं दीप्तशूलं महोच्छ्रयं ॥ तत्र शूलेन भिद्यंते पतिभार्य्योपभेदकाः ॥ १०९ नरकञ्च महाघोरं ज्वलन्ती त्वायसीशिला ॥ तयां चाकृष्यते पापः परदारोपसेवकः ॥ ११० ॥ नरकं शाल्मली ख्यातं प्रदीप्तं दृढकण्टकं ॥ तमालिङ्गति दुःखार्त्तो परच्छिद्ररतो नरः ॥ १११ ॥ ये

वदन्ति न्नृषां सत्यं परमर्मविकृन्तनं ॥ जिह्वां त ं छिद्यते तेषां सदष्टै
र्यमकिङ्करैः ॥ ११२ ॥ मातरं येऽभिगच्छंति भगिनीं दुहितरं स्नुषां ॥
अङ्गारराशौ प्रक्षिप्ता दह्यन्ते यमसेवकैः ॥ ११३ ॥ धर्मधामहिरण्य
स्वा परकीयं हरन्ति ये ॥ यमदूतैश्च तेमूढा भिद्यन्ते तत्र तोम
रैः ॥ ११४ ॥ फलं पत्रं तृणं स्वापि हृतं यैस्तु कुबुद्धिभिः ॥ यमदू
तैश्च ते क्रुद्धै र्दह्यन्ते तृणवह्निभिः ॥ ११५ ॥ परद्रव्यकलत्रे च यः
सदा हृतवान्नरः ॥ यमदूतै र्ज्वलत्तस्य हृदि शूलं निहन्यते ॥ ११६ ॥
कर्मणा मनसा वाचा ये धर्मविमुखा नराः ॥ यमलोकेतु ते घोरा
लभन्ते गुरुयातनाः ॥ ११७ ॥ एवं शतसहस्राणि लक्षकोटिशता
नि च ॥ नरकाणि नरै स्तत्र सेव्यन्ते पापकारिभिः ॥ ११८ ॥ इह
स्वल्पमतिं कृत्वा नरैः कर्माशुभं कृतं ॥ प्राप्नोति नरके घोरे यमदू
तैश्च यातनां ॥ ११९ ॥ नशृण्वन्ति नरा मूढा धर्मोक्तं साधुभाषित
म् ॥ दृष्टं केनेति प्रत्यक्षं प्रत्यक्षेण वदन्ति ते ॥ १२० ॥ दारुणान्नर
केवासं स्वर्गेवासं सुखप्रदं ॥ नरैः संप्राप्यते तत्र कर्मकृत्वा शुभा
शुभम् ॥ १२१ ॥

इत्यादि ब्रह्मपुराणे नरकाणां नामानुकीर्त्तनं नाम
पञ्चोत्तरशततमोऽध्यायः ॥ १०५ ॥

—०—

ऋषय ऊचुः ॥ अहोऽतिदुःखं घोरञ्च यममार्गे त्वयोदितं ॥
नरकाणि च घोराणि द्वारे याम्ये च सत्तम ॥ १ ॥ अस्त्युपायो न

वा ब्रह्मन् यममार्गे सुखीभवेत् ॥ ब्रूहि येन नरा यान्ति सुखेन यम
सादनं ॥ २ ॥ व्यास उवाच ॥ इह धर्मसमायुक्ता सत्वहिंसानिरता
नराः ॥ गुरुशुश्रूषणरता देवब्राह्मणपूजकाः ॥ ३ ॥ यस्मिन्मनुष्य
लोकास्तु सभार्याः ससुता स्तथा ॥ तमध्वानं नगच्छन्ति यथा त
त्कथयामिवः ॥ ४ ॥ विमानै र्विविधै र्दिव्यै र्वज्रकाञ्चनशोभितैः ॥
धर्मराजपुरीं यांति सेव्यमानाप्सरोगणैः ॥ ५ ॥ ब्राह्मणेभ्य स्तु दा
नानि नानारूपाणि भक्तितः ॥ येच सत्यं प्रभाषन्ति वह्नि रन्त स्व
निर्मलाः ॥ ६ ॥ तेऽपि यान्त्यमरप्रख्या विमानै र्यममन्दिरं ॥ गा
दानानि पवित्राणि विष्णु मुद्दिश्य साधुषु ॥ ७ ॥ प्रयच्छन्ति च ध
र्मज्ञाः कृशेषु कृशवृत्तिषु ॥ तेयान्ति दिव्यवर्णाभा विमानै र्मणिचि
त्रितैः ॥ ८ ॥ धर्मराजपुरीं श्रीमान् सेव्यमानाप्सरोगणैः ॥ उपान
युगलं छत्रं शय्यासन मथापिवा ॥ ९ ॥ ये प्रयच्छन्ति वस्त्राणि तथै
वाभरणानि च ॥ तेयान्त्यश्वै रथै स्सैव कुञ्जरै स्वाप्यलंकृताः ॥ १० ॥
धर्मराजपुरं रम्यं दिव्यं सौवर्णराजतैः ॥ येतु भक्त्या प्रयच्छन्ति गु
डपानकमर्जितम् ॥ ११ ॥ ओदनञ्च द्विजाग्रेभ्यो विशुद्धेनान्तरा
त्मना ॥ तेयान्ति काञ्चनै र्दिव्यै र्विविधैस्तु यमालयम् ॥ १२ ॥ व
रस्त्रीभि र्यथाकामे सेव्यमानाः पुनः पुनः ॥ येच क्षीरं प्रयच्छन्ति
घृतं दधि तथामधु ॥ १३ ॥ ब्राह्मणेभ्यः प्रदत्तेन शुद्धेन क्रतुसंस्कृतैः ॥
चक्रवाकप्रयुक्तैस्तु विमानै स्तु हिरण्मयैः ॥ यान्ति गन्धर्ववादित्रैः
सेव्यमाना यमालयम् ॥ १४ ॥ ये फलानि प्रयच्छन्ति पुण्यानि सु

रभीषि च ॥ हंसयुक्तै र्विमानै स्ब यान्ति धर्मपुरं नराः ॥ १५ ॥
ये तिलान् तिलधेनुञ्च घृतं धेनुमथापिवा ॥ श्रोत्रियेभ्यः प्रयच्छन्ति
विप्रेभ्यः श्रद्धयान्विताः ॥ १६ ॥ सोममण्डलसंकाशै यानै स्ते यान्ति
निर्मलाः ॥ गन्धर्वैरुपगीतं तं पुरं वैवस्वतस्य च ॥ १७ ॥ दीर्घिकाः
पुष्करिण्य स्च शीतलाश्च जलाशयाः ॥ यानै स्ते हेमचन्द्राभै र्दिव्य
खण्डनिनादितैः ॥ १८ ॥ व्यजनै स्तालवृन्तै स्च वीज्यमाना महा
प्रभाः ॥ येषा ञ्चैव कुलान्यत्र वित्तान्यायतनानि च ॥ १९ ॥ रत्नैः
प्रस्फुरमानानि मनोज्ञानि शुभानि च ॥ ते यांति लोकपालै स्तु वि
मानै र्द्युतिहारकैः ॥ धर्मराजपुरं रम्यं नानाजनसमाकुलं ॥ २० ॥
पानीयं ये प्रयच्छन्ति सर्वप्राण्युपजीवनं ॥ ते वितृष्णाः सुखं यांति
विमानै रतिरंहसैः ॥ २१ ॥ यैर्दत्तानि द्विजातिभ्यः तेऽध्वानं यांति
वै सुखं ॥ सौवर्णमणिपीठेषु पादौ कृत्वोत्तमेषु च ॥ ते प्रयांति वि
मानैस्तु अप्सरोगणमण्डितैः ॥ २२ ॥ आरामाणि विचित्राणि पु
ष्पोद्यानानि मानवाः ॥ रोपयन्ति फलाढ्यानि नराणा मुपकारि
णः ॥ २३ ॥ वृक्षच्छायासु रम्यासु शीतलं समलं कृतं ॥ वरस्त्रीगी
तवादित्रैः सेव्यमाना व्रजंति ते ॥ २४ ॥ सुवर्णं राजत ञ्चापि वि
द्रुमं मौक्तिकं तथा ॥ ये प्रयच्छन्ति ते यांति विमानैः कनकोज्व
लैः ॥ २५ ॥ भूमिदा स्च विमानै स्तु सर्व्वकामै स्च तर्पिताः ॥ उदि
तादित्यसंकाशै र्विमानै र्हंसयोजितैः ॥ २६ ॥ कन्या न्तु ये प्रयच्छ
न्ति ब्रह्मदेयामलं कृतां ॥ आदित्यसदृशै र्यानै दीप्यमाना ययाम

यः ॥ २७ ॥ गृहावासप्रदातारो गृहैः काञ्चनमण्डितैः ॥ व्रजंति वालार्कनिभै धर्मराजगृहं नराः ॥ २८ ॥ जलभाजनदातारः कुण्डिका कनकप्रदाः ॥ पूज्यमाना प्सरोभि श्च यांति हृत्ता महागजैः ॥ २९ ॥ पादाभ्यङ्गं शिरोभ्यङ्गं स्नानपादादिकं तथा ये प्रयच्छन्ति विपेन्द्राः ते यान्त्यश्वै र्यमालयम् ॥ ३० ॥ विश्रामयंति ये विप्रान् श्रांता नध्वनि कर्षितान् ॥ चक्रवाकप्रयुक्तेन यांति यानेन वै सुखं ॥ ३१ ॥ स्वागतमामाहरेत्युक्ता सुखंयांतिच तत्पदं ॥ अनंतराश्मिनो येच दम्भान्तविवर्जिताः ॥ तेपि सारसयुक्तै स्तु यांति यानै श्च तत्पुरं ॥ ३२ ॥ तृतीये दिवसे येच भुञ्जंते नियतव्रताः ॥ तेपि हस्तिरथै र्यानै र्यान्ति यानैश्च तत्पुरं ॥ ३३ ॥ वर्त्तते ह्येकभुक्तेन शाकं दम्भविवर्जिताः ॥ तेर्यांति धर्मनगरं यानै र्वर्हिणयोजितैः ॥ ३४ ॥ षष्टानुकालिको यस्तु शौचनित्यो जितेन्द्रियः ॥ सयाति कुञ्जरस्थस्तु शचीपतिरिव स्वयम् ॥ ३५ ॥ धर्मराजपुरं रम्यं नानामणिविभूषितं ॥ नानारश्मिसमायुक्तं जयशब्देन संयुतं ॥ ३६ ॥ पक्षोपवासिनो यांति यानैः शार्दूलयोजितैः ॥ पुरं तद्धर्मराजस्य सेव्यमानाः सुरासुरैः ॥ ३७ ॥ येतु मासोपवासन्तु कुर्वते सुसमाहिताः ॥ तेपि सूर्य्यप्रदीप्तै स्तु यांति यानै र्यमालयम् ॥ ३८ ॥ महाप्रस्थान मेकाग्रो यः प्रयाति दृढव्रतः ॥ सेव्यमानस्तु गन्धर्वै र्यांति यानै रविप्रभैः ॥ ३९ ॥ शरीरं साधये यस्तु वैष्णवेनांतरात्मना ॥ स रथेनाग्निवर्णेन यातिहि त्रिदशालयम् ॥ ४० ॥ प्राणां स्त्यजति यो मर्त्यः

स्मरन्विष्णुं स्वनाशनैः ॥ यानेनार्कप्रकाशेन याति धर्मपुरन्न रः ॥ ४१ ॥ प्रविष्टस्तु तलं यस्तु प्राणां स्त्यजति मानवः ॥ सोम मण्डलकल्पेन यानेन च सुखं ब्रजेत् ॥ ४१ ॥ स्वशरीरंहि विप्रेभ्यो वैष्णवोयः प्रयच्छति ॥ स याति तीर्थयात्रायां मनःशुद्धिं जितेन्द्रियः ॥ तेपि यांति नरा धर्मं सुखं यानैरलंकृताः ॥ ४२ ॥ ये यजंति द्विजाः श्रेष्ठाः क्रतुभि र्भूरिदक्षिणैः ॥ तप्तहाटकसंकाशै र्विमानै र्यांतिते सुखं ॥ ४३ ॥ परपीडामकुर्वंतो भृत्यानां भरणादिकं ॥ कुर्वंति ते सुखं यांति विमानैः कनकोज्वलैः ॥ ४४ ॥ य स्त्राता सर्व्व भूतेषु प्राणिनामंतरप्रदः ॥ क्रोधमोहविनिर्मुक्तः सर्व्वदा संयतेन्द्रियः ॥ ४५ ॥ पूर्णचन्द्रप्रकाशेन विमानेन महाप्रभः ॥ याति वैवस्वतपुरं देवगन्धर्वसेवितः ॥ ४६ ॥ एकभावेन ये विष्णुं ब्रह्माणं त्र्यम्बकं हरिं ॥ पूजयंतिहि ते यांति सद्यः शौचसमन्विताः ॥ तेपि यांति सुखेनैव धर्मराजपुरं नराः ॥ ४७ ॥ मांसात्पुष्टतरं नास्ति भक्ष्यभोज्यपरेषुवै ॥ तस्मान्मांसं नभुञ्जीत नास्तिमृष्टः सुखोदयः ॥ ४८ गोसहस्रन्तु यो दद्या द्यस्तु मांसं नभुञ्जते ॥ समावेतौ पुरा प्राह ब्रह्मावेदविदाम्वरः ॥ ४९ ॥ सर्व्वतीर्थेषु यत्पुण्यं सर्व्वतीर्थेषु यत्फलं ॥ अमांसभक्षणे विप्रा स्तद्दत्तानि च तत्समं ॥ ५० ॥ एवं सुखेन ते यांति यमलोकन्त्र धार्मिकाः ॥ दानव्रतपरा यानै र्यत्र देवो रवेः सुतः ॥ ५१ ॥ दृष्ट्वा तं धार्मिकं देवः स्वयं सम्मानये द्यमः ॥ स्वागतासनदानेन पाद्यार्घ्येण प्रियेणतु ॥ ५२ ॥ धन्या यूयं महात्मानः स्वा

त्मनो हितकारिणः ॥ येन दिव्यसुखार्थाय भवद्भिः सुकृतं कृतं ॥ ५३
इदं विमान मारुह्य दिव्यस्त्रीभोगभूषितः ॥ अतुलं सर्व्वकामं सु
दिव्यस्त्रीभोगभूषितम् ॥ ५४ ॥ स्वर्गं गच्छ त्वममलं सर्व्वकाम
समन्वितं ॥ तत्र भुक्त्वा महाभोगान् तेषु पुण्यपरिक्षयात् ॥ य
त्किञ्चि दल्पमशुभं पुन स्तदिह भुञ्जथ ॥ ५५ ॥ तेतु तन्धर्मरा
जानं नराः पुण्यानुभावतः ॥ पश्यंति सौम्यमनसं पितृभूतमिवा
त्मनः ॥ ५६ ॥ तस्मा द्धर्मं संविधिन्त्य सदा भुक्तिफलप्रदं ॥ धर्मा
दर्थश्च कामोयं धर्मा न्मोक्षश्च कीर्त्यते ॥ ५७ ॥ धर्मो मातापिता
भ्राता धर्मोनाथः सुहृ त्तथा ॥ धर्म स्वामि सखा गोप्ता त्रायते
महतो भयात् ॥ ५८ ॥ देवत्व ञ्च द्विजत्व ञ्च धर्मा त्प्राप्नोत्यसंश
यम् ॥ यदा च क्षीयते पापं नराणां पूर्व्वसञ्चितं ॥ तदैव भजनं
बुद्धि धर्मे चात्र द्विजोत्तमाः ॥ ५९ ॥ जन्मांतरसहस्रेषु मानुष्यं प्रा
प्य दुर्लभं ॥ योहि नाचरते धर्मं भवे त्स खलुवञ्चितः ॥ ६० ॥ कु
त्सिता ये दरिद्रा श्च विरूपा व्याधित स्तथा ॥ परप्रेष्या श्च मूर्खा
श्च ते ज्ञेया धर्मवर्जिताः ॥ ६१ ॥ येहि दीर्घायुषः शूराः पण्डिता
भोगिनोर्थिनः ॥ अरूपा रूपवंत श्च तैस्तु धर्मः पुरा कृतः ॥ ६२ ॥
एवं धर्मपरा विप्रा गच्छंति गति मुत्तमां ॥ अधर्मं सेवमाना स्तु
तिर्यग्योनिं व्रजंति ते ॥ ६३ ॥ ये नरा नरकध्वंसी वासुदेव मनु
व्रताः ॥ नसमर्थो यम स्तेषां तान्स्वप्नेपि नपश्यति ॥ ६४ ॥ अनादि
निधनन्देवं दैत्यदानवदारणं ॥ ये नमंति नरा नित्यं नहि पश्यंति

तेयमं ॥ ६५ ॥ कर्मणा मनसा वाचा येऽच्युतं शरणं गताः ॥
नसमर्थो यम स्तेषां ते मुक्तिफलभागिनः ॥ ६६ ॥ ये जना जग
तां नाथं नित्यं नारायणं द्विजाः ॥ नमंति नहि ते विष्णोः
स्थाना दन्यत्रगामिनः ॥ ६७ ॥ न ते दूता न्न तन्मार्गं न यमं नच
तां पुरीं ॥ प्रणम्य विष्णुं पश्यन्ति नरकाणि कथञ्चन ॥ ६८ ॥ कृ
त्वापि बहुशः पापं नरो मोहसमन्वितः ॥ नयाति नरकं नत्वा स
र्व्वपापहरं हरिं ॥ ६९ ॥ शाठ्येनापि नरा नित्यं ये स्मरन्ति जना
र्द्दनं ॥ तेपि यान्ति तनुं त्यक्त्वा विष्णो र्लोक मनामयम् ॥ ७० ॥
अत्यन्तचित्तक्रुद्धोपि यःसदा कीर्त्तये द्धरिं ॥ सोपि दोषक्षय न्मुक्तिं
लभे दिति मतिर्मया ॥ ७१ ॥

इति ब्रह्मपुराणे व्यासर्षिसम्वादे धार्मिकानां यमलोकगमनं
नाम षडुत्तरशततमोऽध्यायः ॥ १०६ ॥

—०—

लोमहर्षण उवाच ॥ श्रुत्वैवं यममार्गंतु नरकेषु च यातनां ॥
पप्रच्छुश्च पुनर्व्यासं संशय न्मुनिसत्तमाः ॥ १ ॥ मुनय ऊचुः ॥ भ
गव न्सर्व्वधर्मज्ञ सर्व्वशास्त्रविशारद ॥ मर्त्यस्य कःसहायोवा पिता
माता सुतो गुरुः ॥ ज्ञातिसम्बन्धवर्गाश्च मित्रवर्गा स्तथैवहि ॥ २
गृहं शरीर मुत्सृज्य काष्टलोष्टसमं जनाः ॥ गच्छन्त्यमुत्रलोकस्वै
कश्च ताननुगच्छति ॥ ३ ॥ व्यास उवाच ॥ एकः प्रसूयते विप्रा ए
कएव विनश्यति ॥ एक स्तरति दुर्गाणि गच्छत्येकस्तु दुर्गतिं ॥४॥

असहायः पिता माता तथा भ्राता सुतो गुरुः ॥ ज्ञातिसम्बन्धवर्गा श्च मित्त्रवर्गा स्तथैव च ॥ ५ ॥ मृतं शरीर मुत्सृज्य काष्ठलोष्टसम ञ्जनाः ॥ मुहूर्त्तमपि रोदित्वा ततो यान्ति पराङ्मुखाः ॥ ६ ॥ तै स्तच्छरीर मुत्सृज्य धर्म मेवानुगच्छति ॥ तस्मा द्धर्म सहाय श्च सेवितव्यः सदा नृभिः ॥ ७ ॥ प्राणी धर्म समायुक्तो गच्छे त्स्वर्गग तिम्पराम् ॥ तस्मा द्धर्म समायुक्तो नरके नोपपद्यते ॥ ८ ॥ तस्मा त्पापागतै रर्थै र्धर्मं सेवन्ति पण्डिताः ॥ धर्म एको मानुषाणां सहा यः परिकीर्त्तितः ॥ ९ ॥ लोभा न्मोहा दनुक्रोशा द्भया द्वाथ वहु श्रुताः ॥ नरःकरोति कार्य्याणि परार्थं लोभमोहितः ॥ १० ॥ धर्मं स्वार्थञ्च कामञ्च त्रितय ञ्जीविते फलं ॥ एत त्त्रय मवाप्तव्य मध र्मपरिवर्जितम् ॥ ११ ॥ मुनय ऊचुः ॥ श्रुतं भगवतो वाक्यं धर्म युक्तं परं हितम् ॥ शरीर मिदमन्नंतु बुद्धि नोत्पद्यायते ॥ १२ ॥ मृतं शरीरं हि नृणां सूक्ष्ममव्यक्ततांगतं ॥ अति निर्विषय प्राप्तं क थं धर्म्मोनुगच्छति ॥ १३ ॥ व्यास उवाच ॥ पृथिवी वायु राकाश मा पोज्योति र्मनोन्तरं ॥ वुद्धि रात्मा च सहिता धर्मं पश्यन्ति नित्य शः ॥ १४ ॥ सर्वथात्विह सर्वेषां साक्षिभूतादिवानिशं ॥ एतै श्च सह धर्म्मोहि त ञ्जीवमनुगच्छति ॥ १५ ॥ त्वगस्थिमांसशुक्रेषु शोणित ञ्च द्विजोत्तमाः ॥ शरीरं वर्त्तयन्त्येते जीवितेनविवर्जितं ॥ १६ ॥ ततो धर्मसमायुक्तः सजीवःसुखमेधते ॥ इहलोकेपरेचैव किम्भूयः प्रवदा मिवः ॥ १७ ॥ मुनयऊचुः ॥ तदर्थिनञ्च भवता यथाधर्मोनुगच्छति ॥

एतांतु ज्ञातुमिच्छामः कथ ञ्चेतः प्रवर्त्तते ॥१८॥ व्यास उवाच ॥ अन्न मश्नन्ति येदेवाः शरीरस्था द्विजोत्तमाः ॥ पृथिवी वायु राकाश मापो ज्योति र्मन स्तथा ॥ १९ ॥ तत स्तृप्तेषु भोविप्राः तेषु भूतेषु पञ्चसु ॥ मनः षष्ठेषु शुद्धात्मा रेतः सम्पद्यते महत् ॥ २० ॥ ततो गर्भः सम्भवति श्लेष्मा स्त्रीपुन्सयो र्द्विजाः ॥ एतद्वः सर्व्वं माख्यातं किम्भूयः श्रोतु मिच्छथ ॥ २१ ॥ मुनय ऊचुः ॥ आख्यातं नो भगवता गर्भे सञ्जायते तथा ॥ यथा जातस्तु पुरुषः प्रपद्येत तदुच्यताम् ॥ २२ ॥ व्यास उवाच ॥ आसन्नमात्रः पुरुषः स्वै र्गर्भै रनुभूयते ॥ विप्रयुक्तस्तु तैः सर्वैः पुन र्यात्यपरां गतिम् ॥ २३ ॥ सर्व्वभूतसमायुक्तः प्राप्नोति जीव एवहि ॥ ततः स्वकर्म पश्यन्ति शुभ ञ्वा यदि वाशुभम् ॥ २४ ॥ देवता भवति किम्भूयो मुनयः श्रोतु मिच्छथ ॥ मुनय ऊचुः ॥ त्वगस्थिमांस मुत्सृज्य तैश्च भूतै र्विवर्जितः ॥ जीवः सभगव न्क्वास्थः सुखं दुःखं समश्नुते ॥ २५ ॥ व्यासउवाच ॥ जीवः कर्मसमायुक्तः शीघ्रं रेतः प्रवर्त्तते ॥ स्त्रीणां पुष्पं समासाद्य ततः कालेन भोद्विजाः ॥ २६ ॥ यमस्य पुरुषैः क्लेशो यमस्य पुरुषै र्वधः ॥ दुःखं संसारचक्र ञ्च नरः क्लेश ञ्च विन्दति ॥ २७ ॥ इह लोके सतु प्राणी जन्मप्रभृति भोद्विजाः ॥ सुकृतम्वै कर्म भुंक्ते धर्मस्य फलमास्थितः ॥ २८ ॥ यदधर्मसमायुक्तं जन्मप्रभृति सेवते ॥ ततः सपुरुषो भूत्वा सेवते नित्यवै सुखं ॥ २९ ॥ अर्थान्तरान्तरं धर्म मधर्म मुपसेवते ॥ सुखस्यानन्तरं दुःखं सजीवोऽप्यनुगच्छति ॥ ३० ॥

अधर्मेण समायुक्तो यमस्य विषयं गतः ॥ महादुःखं समासाद्य ति
र्य्यग्योनौ प्रजायते ॥ २१ ॥ जीवो मोहसमायुक्त स्तन्मे शृणुत सां
प्रतम् ॥ यदैव दुःकृतैः शास्त्रैः सेतिहासै र्नियच्छति ॥ २२ ॥ यमस्य
विषयं घोरं मर्त्यलोकं प्रवर्त्तते ॥ इह स्थानानि पुण्यानि देवतुल्या
नि भोद्विजाः ॥ तिर्य्यग्योन्यतिरिक्तानि गतिमायान्ति सर्वशः॥२३
यमस्य भवने विप्रा ब्रह्मलोकसमे गुणैः ॥ कर्मभि र्नीयते बद्धो जन्तु
र्दुःखा न्युपाश्नुते ॥ २४ ॥ येन येन तु भावेन कर्मणा पुरुषो गतिं ॥
प्रयाति पुरुषो घोरां तथा वक्ष्याम्यहं परम् ॥ २५ ॥ अधीत्य चतु
रोवेदान् द्विजो मोहसमन्वितः ॥ पतिता न्प्रतिगृह्याशु खरयोनौ
प्रजायते ॥ २६ ॥ खरो जीवति वर्षाणि दशपञ्च च भोद्विजाः ॥
खरो मृतो बलीवर्द्दः सप्तवर्षाणि जीवति ॥ २७ ॥ बलीवर्द्दे मृते
चापि जायते ब्रह्मराक्षसः ॥ ब्रह्मराक्षस मासाद्य ततो जातस्तु रा
क्षसः ॥ २८ ॥ पतितं पातयित्वातु कृमियोनौ प्रजायते ॥ ततो जी
वति वर्षाणि दशपञ्च च भोद्विजाः ॥ २९ ॥ कृमिभावा द्विनिर्मुक्त
स्ततो जायेत्तु गर्दभः ॥ गर्दभ्यां पञ्चवर्षाणि ततो जायेत्तु शूक
रः ॥ ४० ॥ शूकरः पञ्चवर्षाणि ततो भवति जम्बुकः ॥ श्वा वर्षमे
कम्भवति ततो जायेत मानवः ॥ ४१ ॥ तत्र जीवति वर्षाणि दशप
ञ्च च भोद्विजाः ॥ दुष्कृतस्य क्षयं कृत्वा ततो जायेत्तु मानुषः ॥
असूयको नर स्चापि मृतो जायेत्तु शार्ङ्गकः ॥ ४२ ॥ विश्वासहर्त्ता
च नरो मीनो जायति दुर्मतिः ॥ भूत्वा मीन स्तु वर्षाणि त्वगो

जायति भोद्विजाः ॥ ४३ ॥ म्टगस्तु चतुरोमासा न्स्ततः छागः प्रजा
यते ॥ छागस्तु निधनं प्राप्य पूर्णे सम्वत्सरे ततः ॥ ४४ ॥ कीटः स
ञ्जायते जन्तु स्ततो जायति मानुषः ॥ धान्यवा न्तिलवा न्माषा न्स
र्षपांश्च कुलित्थकान् ॥ ४५ ॥ कल्माषानथ मुद्गांश्च गोधूमा नातसां
स्तथा ॥ शय्यास्थानस्य हर्त्ता च मोहा ज्जाये दचेतनः ॥ ४६ ॥ स
ञ्जायते नरः श्रेष्टा नरके सूर्विकत्त्रयं ॥ ततः प्रेत्य मुनिश्रेष्टा स्ततो
जायति शूकरः ॥ ४७ ॥ शूकरो जातमात्रस्तु रोगेण म्रियते पुनः ॥
श्वा ततो जायते लूकः कालस्यान्ते च मानुषः ॥ भूत्वासौ पञ्चवर्षा
णि ततो जायति मानवः ॥ ४८ ॥ परदाराभिमर्षंतु कृत्वाजाये त्तु
वैष्टकः ॥ श्वा शृगाल स्ततो गृध्रो व्यालः काको वृक स्तथा ॥ ४९ ॥
भ्रातु र्भार्य्यान्तु पापात्मा यो धर्षयति मोहितः ॥ पुंस्कोकिलत्वं स
नरो वत्सरं जायते द्विजाः ॥ ५० ॥ सख्यु र्भार्य्यां गुरो र्भार्य्यां रा
जभार्य्यां तथैव च ॥ प्रधर्षयित्वा कामाय स्ततो जाये त्तु शूक
रः ॥ ५१ ॥ शूकरः पञ्चवर्षाणि दशवर्षाणि वैष्टकः ॥ पिपीलिका
तु मासांस्त्री न्कीटस्यात्मान मेवच ॥ ५२ ॥ एता नासाद्य संसारा
न्कृमियोनौ प्रजायते ॥ तत्र जीवतिमासांस्तु कृमियोनौ चतुर्दश ॥
ततः पापच्चयं कृत्वा ततो जायति मानवः ॥ ५३ ॥ उपस्थिते विवा
हेच यज्ञे दाने च भोद्विजाः ॥ मोहात्करोति योविघ्नं सम्टतो जा
यते कृमिः ॥ ५४ ॥ कृमि र्जीवति वर्षाणां पञ्चवर्षाणि शूकरः ॥
श्वा वर्षमेकं भवति ततो जायति मानवः ॥ ५५ ॥ उपाध्यायस्य यः

पापं शिष्यः कुर्य्या द्वुद्धिमान् ॥ सजीवतीह संसारे क्रमेण द्रतचे
तनः ॥ ५६ ॥ श्वायोनौतु सुसम्भूतः त्रीणि वर्षाणि जीवति ॥ त
त्रापि निधनं प्राप्तः कृमियोनौ प्रजायते ॥ ५७ ॥ कृमिभावमनुप्रा
प्तो वर्षमेकन्तु जीवति ॥ ततस्तु निधनं प्राप्तो ब्रह्मयोनौ प्रजाय
ते ॥ ५८ ॥ यदि पुत्रसमं शिष्यं गुरु र्हन्या दकारणात् ॥ आत्मनः
कामकारेण सोपि हंसः प्रजायते ॥ ५९ ॥ मातरं पितरं चैव य
स्तु पुत्रोऽवमन्यते ॥ सोपि विप्रा स्ततो जन्तुः पूर्वं जायति गर्द
भः ॥ ६० ॥ गर्दभत्वं तु संप्राप्य दशवर्षाणि जीवति ॥ सम्वत्सरन्तु
कुम्भीर स्ततो जायति मानुषः ॥ ६१ ॥ पुत्रस्य मातापितरौ यस्यातु
ष्टावुभावपि ॥ पूर्वं मध्याकृतः सोपि स्ततो जायति गर्दभः ॥ ६२ ॥
खरो जीवति मासांस्तु दश वाथ चतुर्दश ॥ विडालः सप्तमासांस्तु
ततो जायति मानवः ॥ ६३ ॥ मातरं पितरं कुष्य सारीकः संप्रजा
यते ॥ ताडयित्वातु तावेव जायते कच्छपोद्विजाः ॥ ६४ ॥ कच्छपो
दशवर्षाणि त्रीणि वर्षाणि शल्यकः ॥ व्यालो भूत्वातुषण्मासं ततो
जायति मानवः ॥ ६५ ॥ वानरो दशवर्षाणि सप्तवर्षाणि मूषकः ॥
श्वाभूत्वा चैव षण्मासं ततो जायति मानुषः ॥ ६६ ॥ न्यासापह
र्त्ता च नरो यमस्य विषयं गतः ॥ संसाराणां शतं गत्वा कृमियोनौ
प्रजायते ॥ ६७ ॥ सोपि विप्रा स्ततो जंतुः कृमियोनौ प्रजायते ॥
तत्र जीवति वर्षाणि त्रयोदश द्विजोत्तमाः ॥ अधर्मसंशयो युक्तं त
तोजायति मानुषः ॥ ६८ ॥ देवकार्यमकृत्वातु पितृकार्यमथापिवा ॥

अनर्च्चयित्वा देवनां म्रतो जायति वायसः ॥ ६९ ॥ वायसःशतवर्षा
णि ततो जायति कुक्कुटः ॥ जायते व्याल कश्चापि मासं तस्मात्तु मा
नुषः ॥ ७० ॥ ज्येष्टं पितृसमं चापि भ्रातरं योऽवमन्यते ॥ सोपि म्र
त्यु मुपागम्य क्रौञ्चयोनौ प्रजायते ॥ ७१ ॥ ततः संप्राप्य निधनं
शूकरो जायते पुनः ॥ शूकरो जातमात्रस्तु रोगेण म्रयते द्वि
जाः ॥ ७२ ॥ श्वाभूत्वा कृतकर्म्मासौ जायते तत्र मानुषः ॥ तत्र
म्रत्युं समुत्पाद्य ततो जायति मूषकः ॥ ७३ ॥ कृतघ्नस्तु म्रतो विप्रा
यमस्य विषयं गतः ॥ यातनां प्राप्य चोग्रांतु ततो वर्द्धति भोद्वि
जाः ॥ ७४ ॥ संसारचक्र मासाद्य कृमियोनौ प्रजायते ॥ ततो ग
र्भं समासाद्य तत्रैव म्रयते नरः ॥ ७५ ॥ ततो गर्भशतै र्गत्वा वक्र
भिः संप्रपद्यते ॥ सन्सारा न्सुवहून् भुक्त्वा तत स्तिर्यक् प्रजाय
ते ॥ ७६ ॥ ततो दुःखमनुप्राप्य वक्रवर्षंगतं पुनः ॥ सपुन र्भवसंयुक्त
स्ततः कूर्मः प्रजायते ॥ ७७ ॥ अहि र्भूत्वा वक स्चापि पूत्रो जाये
त्ततः परम् ॥ चोरयित्वातु वै यस्य वृषभः संप्रजायते ॥ ७८ ॥ फल
म्वा मूलकं दूर्वा पूप न्स्चापि पिपीलिकः ॥ चोरयित्वातु निःपावा
ञ्जायते फलमूषकः ॥ ७९ ॥ पायसं चोरयित्वातु तित्तिरित्व मवा
प्नुते ॥ हृत्वा पुष्पमयं यूपं कूपे लूकः प्रजायते ॥ ८० ॥ अपो हृत्वा
तु दुर्बुद्धि र्वायसो जायते नरः ॥ राजतं भाजनं हृत्वा कपोतः संप्र
जायते ॥ ८१ ॥ हृत्वातु काञ्चनं भाण्डं कृमियोनौ प्रजायते ॥ यः
स्वर्णं चोरयित्वातु कुक्कुटत्वं नियच्छति ॥ ८२ ॥ कोशकारं ततो ह

त्वा नरो जायति मर्कटः ॥ अंशुकं चोरयित्वातु शुको जायति मा
नवः ॥ ८३ ॥ चोरयित्वा दुकूलंतु मृतो हंसः प्रजायते ॥ क्रौञ्चः
कार्पासिकं हृत्वा ततो जायति मानवः ॥ ८४ ॥ चोरयित्वा नरः
पट्ट माविक न्वैव भोद्विजाः ॥ चौमञ्च वस्त्र मादाय हंसो जंतुः प्र
जायते ॥ ८५ ॥ चूर्णं हृत्वातु पुरुषो विप्रा लोभपरायणः ॥ तत्र
जीवति वर्षाणि ततो दश च वायसः ॥ ८६ ॥ अधर्मस्य चयं कृत्वा
ततो जायति मानवः ॥ चोरयित्वा पय स्या पि वलाकासं प्रजाय
ते ॥ ८७ ॥ यस्तु चोरयते तैलं नरो मोहसमन्वितः ॥ सोपि विप्रा
मृतो जंतु स्तैलपायी प्रजायते ॥ ८८ ॥ अशस्त्रं पुरुषं हत्वा सश
स्त्रः पुरुषाधमः ॥ अर्थार्थं यदिवा चौरो मृतो जायति वैखरः ॥ ८९
खरो जीवति वर्षे द्वे ततः शस्त्रेण वध्यते ॥ ९० ॥ समृतो मृगयो
नौतु नित्योद्विग्नो ऽभिजायते ॥ ९१ ॥ मृगो वर्द्धति शस्त्रेण गते स
म्वत्सरे ततः ॥ हतो मृग स्ततो मीनः सोपि जालेन वध्यते ॥ ९२ ॥
मासे चतुर्थे संप्राप्ते श्वापदः संप्रजायते ॥ श्वापदो दशवर्षाणि द्वी
पि वर्षाणि पञ्च च ॥ ९३ ॥ ततस्तु निधनं प्राप्तः कालपर्याय
चोदितः ॥ अधमस्य चयं कृत्वा मानुषत्व मवाप्नुते ॥ ९४ ॥ वामं कृत्वा
तु पुरुषो लोमशः संप्रजायते ॥ तथा पिण्याकसम्मिश्र मन्नं संचोरये
न्नरः ॥ ९५ ॥ सजायते मनुष्यो दारुणो मूषको नरः ॥ सदंशको शको
नित्यं पापात्मा स द्विजोत्तमाः ॥ ९६ ॥ घृतं हृत्वातु दुर्बुद्धिः काक
मद्गुः प्रजायते ॥ विश्वासेनतु निक्षिप्तं योऽपनिह्नुति मानवः ॥ ९७ ॥

सगतायु र्नरः स्तेनो मत्स्ययोनौ प्रजायते ॥ मत्स्ययानि मनुप्राप्य स्ततो जायति मानुषः ॥ ९८ ॥ मानुषत्व मनुप्राप्य चीणायु रुप पद्यते ॥ पापानि तु नरः कृत्वा ततो जायति भोद्विजाः ॥ नचा त्मनः प्रमाणंतु धर्म जानाति किञ्चन ॥ ९९ ॥ ये पापानि नराः कृत्वा निरस्यन्ति व्रतैः सदा ॥ सुखदुःखसमायुक्ताः पाविता स्ते भवन्त्युत ॥ १०० ॥ असंवासाः प्रजायन्ते स्वेच्छावानचसंशयः ॥ नरः पापसमाचारी लोभमोहसमन्वितः ॥ १०१ ॥ वर्जयन्ति तु पापानि जन्मप्रभृति येनराः ॥ अरोगा रूपवन्त स्ते धनिनस्तुभवं त्युत ॥१०२॥ अपारे स्मिन्कथायोगे भूयः प्राप्य पथो द्विजाः ॥ एत न्मया महाभागा ब्रह्मणो वदतः पुरा ॥ सुरर्षीणां श्रुतं मध्ये पृष्ट श्चापि यथातथम् ॥ १०३ ॥ मया तुभ्य ञ्च कार्त्स्न्येन यथाव दनुवर्णितः ॥ एत च्छ्रुत्वा मुनिश्रेष्टा धर्मे कुरुत मानसम् ॥ १०४ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे संसारचक्रवर्णने सप्तोत्तरशततमोऽध्यायः ॥ १०७ ॥

—०—

मुनय ऊचुः ॥ अधर्मस्य गति र्ब्रह्मन् कथितायां त्वयानघ ॥ धर्मस्य तु गतिं श्रोतु मिच्छामो वदताम्बर ॥ १ ॥ यथा पापानि कर्माणि कृत्वा यांत्यशुभां गतिम् ॥ कर्मणा च कृतेनेव नते यान्त्य शुभां गतिम् ॥ २ ॥ व्यास उवाच ॥ कृत्वा पापानि कर्माणि अ धर्मवश मागतः ॥ मनसा विपरीतेन निरयं प्रतिपद्यते ॥ ३ ॥ मो

हा द्धर्मं यः कृत्वा पुनः समनुतप्यते ॥ मनःसमाधिसंयुक्तो न सेवेत दुःकृतं ॥ ४ ॥ यथा यथा मन स्तस्य दुःकृतं कर्म गर्हते ॥ समाहितेन मनसा विमुच्यति तथा तथा ॥ ५ ॥ भुजङ्ग इव निर्मोकान् पूर्वभुक्ता नुगर्हितान् ॥ दत्वा विप्रस्य दानानि विविधानि समाहितः ॥ मनसा नाधिसंयुक्तः सुगतिं प्रतिपद्यते ॥ ६ ॥ प्रधानानि च वक्ष्यामि यानि दत्वा द्विजोत्तमाः ॥ नरः कृत्वाप्यकर्माणि नरः पापै र्विमुच्यते ॥ ७ ॥ अन्ने प्रतिष्ठिता लोका स्तस्मा दन्नं प्रशस्यते ॥ अन्नेन च प्रसंशन्ति देवर्षिपितृमानवाः ॥ ८ ॥ अन्नस्य हि प्रदानेन स्वर्ग मश्नाति कौशिकः ॥ यावल्लभ्यं प्रदातव्यं द्विजातिभ्योऽन्न मुत्तमम् ॥ स्वाध्यायसमुपेतेभ्यः प्रहृष्टेनान्तरात्मना ॥ ९ ॥ यस्य ह्यन्न मुपाश्नाति ब्राह्मणानां शतंदश ॥ हृष्टेन मनसा दत्तं न सतिर्य्यं ग्गति र्भवेत् ॥ १० ॥ ब्राह्मणानां सहस्राणि दश भोज्य द्विजोत्तमाः ॥ नरोऽधर्मा त्प्रमुच्येत पापेष्वभिरतः सदा ॥ ११ ॥ भैक्ष्यान्नं यः समाहृत्वा विप्रो वेदपुरस्कृतः ॥ स्वाध्यायनिरते विप्रे दत्वेह सुखमेधते ॥ १२ ॥ अहिंसां ब्राह्मणः स्वामिन्यायेन परिपालयेत् ॥ क्षत्रिय स्तरसाप्राप्त मन्नं यो वै प्रयच्छति ॥ १३ ॥ द्विजेभ्यो वेदमुख्येभ्यः प्रयतः सुसमाहितः ॥ तेन योहन्ति धर्मात्मा दुःकृतं कर्म भोद्विजाः ॥ १४ ॥ षड्भाग मतिशुद्ध ञ्च कृत्वा भाग मुपार्जितम् ॥ वैश्योऽददा द्द्विजातिभ्यः पापेभ्यः परिमुच्यते ॥ १५ ॥ अवाप्य प्राणसन्देहं कार्य्यस्तेषु समाहितम् ॥ अन्नं दत्वा द्विजातिभ्यः

शूद्रः पापात्प्रमुच्यते ॥ १६ ॥ तत्रासन्नवलेनान्यो योजयित्वा त्रि
हस्तकः ॥ यः प्रयच्छति विप्रेभ्यो न स दुर्गाणि सेवते ॥ १७ ॥ न्या
येनाहृत मन्नंतु नरो हर्षसमन्वितः ॥ द्विजेभ्यो वेदवृद्धेभ्यो दत्वा
पापात्प्रमुच्यते ॥ १८ ॥ अन्न मूर्जस्करं लोके दत्वौजस्वी भवेन्न
रः ॥ सतां पन्थानमावृत्य सर्व्वपापैः प्रमुच्यते ॥ १९ ॥ दानवद्भिः
कृतपथा येच यान्ति मनीषिणः ॥ ते प्राप्यान्नप्रदातार स्तेभ्योधर्मः
सनातनः ॥ २० ॥ सर्व्वावस्था मनुष्येण न्यायेनान्न मुपार्जनम् ॥
कार्य्यं न्यायागतं नित्य मन्नंहि परमागतिः ॥ २१ ॥ अन्नस्यहि प्र
दानेन नरो धर्माणि सेवते ॥ सर्व्वकामसमायुक्तं प्रेतमार्गगतः सु
खम् ॥ २२ ॥ एवं खलु समायुक्तो नरः पापैः प्रमुच्यते ॥ तस्मा
दन्नं प्रदातव्य मन्यायेन विवर्जितम् ॥ २३ ॥ यन्तु ब्राह्मण पूर्व्वा
हि भोक्तु मन्नं गृही सदा ॥ अवंध्यं दिवसं कुर्य्या दन्नदानेन मा
नवः ॥ २४ ॥ भोजयित्वा ततो नित्यं न्याय्यं वेदविदाम्वरं ॥ न्या
यविद्धर्मविदुषा मितिहासविदं तथा ॥ २५ ॥ नयाति नरकं घोरं
संसारञ्च नसेवते ॥ सर्व्वकामसमायुक्तः प्रेत्य चैवाश्नुते सुखं ॥ २६ ॥
एवं खलु समायुक्तो रमते विगतज्वरः ॥ रूपवान् कीर्त्तिमां श्चैव
धनवां श्चोपजायते ॥ २७ ॥ एतद्वः सर्व्वमाख्यात मन्नदानफलं म
हत् ॥ मूल मेतत्तु धर्माणां प्रदानानाञ्च भोद्विजाः ॥ २८ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे संसारचक्रवर्णनं नामा

ष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥

मुनय ऊचुः ॥ परलोकगतानांतु स्वकर्मस्थानवासिनां ॥ ते
षां श्राद्धं कथं देयं पुत्रै श्चान्यैश्च वन्धुभिः ॥ १ ॥ व्यास उवाच ॥
नमस्कृत्य जगन्नाथं वाराहं लोकभावनं ॥ शृणुध्वं संप्रवक्ष्यामि
श्राद्धकल्पं यथोदितम् ॥ २ ॥ पुरा कोकाजलेमग्नान् पितॄनुद्धृत्य
दूरतः ॥ श्राद्धयित्वा तदा देवो यथा तत्र द्विजोत्तमाः ॥ ३ ॥ मु
नयऊचुः ॥ किमर्थं तेतु कोकायां निमग्नाः पितरोऽभवन् ॥ कथं ते
नोद्धृता स्तेनै वराहेण द्विजोत्तमाः ॥ ४ ॥ तस्मिन् कोकामुखे तो
र्थे भुक्तिमुक्तिफलप्रदे ॥ श्रोतु मिच्छामहे ब्रूहि परं कौतूहलं हि
नः ॥ ५ ॥ व्यास उवाच ॥ त्रेताद्वापरयोः सन्धौ पितरो दिव्यमानु
षाः ॥ पुरा मेरुगिरेः पृष्टे विश्वेदेवैः सुसंस्थिताः ॥ ६ ॥ तेषां समु
पविष्टानां पितॄणां सोमसम्भवा ॥ कन्या काचि दतिदिव्या प्राञ्ज
लिः पुरतः स्थिता ॥ ७ ॥ तामूचुः पितरो देवा ये तत्र समुपाग
ताः ॥ कासि भद्रे प्रभुः कोवा भवत्या वक्तुमर्हसि ॥ ८ ॥ सा प्रोवा
च पितॄ न्देवान् कुले चान्द्रमसीतिवै ॥ प्रभुत्वे भवतामेव वरयामि
तदिच्छतां ॥ ९ ॥ ऊर्जा नामास्मि प्रथमं स्वधा च तदनन्तरं ॥ भ
वद्भि श्चाद्यैव कृतं नाम कोकेति भावितम् ॥ १० ॥ तेहि तस्या वचः
श्रुत्वा पितरो दिव्यमानुषाः ॥ तस्या मुखं च वीक्ष्यन्ते न तृप्ति ञ्चैव
जग्मतुः ॥ ११ ॥ विश्वेदेवाश्च तान्स्त्यक्त्वा कन्यामुखनिरीक्षकान् ॥
योग्यता ञ्च निरीक्ष्यैव विहाय त्रिदिवं गताः ॥ १२ ॥ भगवानपि
शीतांशुः ऊर्जां नापश्यतात्मजां ॥ समाकुलमनाद्ध्यौ क्वगतेति म

हायशाः ॥ १३ ॥ स विवेद तदा सोमः पितृृन् प्राप्तांस्वकामतः ॥
ते चावलोक्य तां साध्वीं स्वीकृताश्च तपोवलात् ॥ १४ ॥ ततः का
पपरीतात्मा पितृृन्सोमस्तु तान् द्विजाः ॥ शशाप निपतिष्यध्वं
योगभ्रष्टा विचेतसः ॥ १५ ॥ यस्मा ददत्तां मत्कन्यां कामयध्वं सु
वालिशाः ॥ यस्माद्धृतवती चेयं पतीन् पितृमती सती ॥ १६ ॥ स्व
तन्त्रधर्मं मुत्सृज्य तस्मा द्भवतु निम्नगा ॥ कोकेति प्रथिता लोके
शरीराद्रिसमाश्रिता ॥ १७ ॥ इत्थं शप्ता स्वन्द्रमसा पितरो दिव्य
मानुषाः ॥ योगभ्रष्टा निपतिता हिमवत्पादभूतले ॥ १८ ॥ ऊर्जा
तत्रैव पतिता गिरिराजस्य विस्तृते ॥ यस्य तीर्थं समासाद्य सप्तसा
मुद्रमुत्तमं ॥ १९ ॥ कोका नाम ततो वेगा न्नदीतीर्थं समाकुलं ॥
प्लावयन्ती गिरेः पादं सर्पणा त्सासरि त्स्मृता ॥ २० ॥ अथ ते पि
तरो विप्रा योगहीनां महानदीं ॥ ददृशुः शीतसलिलां नविदु स्तां
सुलोचनां ॥ २१ ॥ ततस्तु गिरिराट् पितृृन् स्तांस्तु दृष्ट्वा क्षुधान्वि
तान् ॥ वदरीमादिदेशाथ धेनु ञ्चैकां मधुस्रवाः ॥ २२ ॥ क्षीरं स
मभवद्दिव्यं कोकान्तां वदरीफलं ॥ इदं गिरिवर ञ्चैव पोषणाय नि
रूपितम् ॥ २३ ॥ तत स्तृप्यन्ति वसतां पितृणां मुनिसत्तमाः ॥ द
शवर्षसहस्राणि पपुरेव महायशाः ॥ २४ ॥ एवं लोकेपि पितरं त
थैव विगतस्वधं ॥ दैत्या वभूवु र्वलिनो यातुधानाश्च राक्षसाः ॥ २५ ॥
ते तान् पितृगणा न्दैत्या यातुधाना श्च वेगितः ॥ विप्लवे दैवैश्च रहि
ता न्सर्वतः समुपाद्रवन् ॥ २६ ॥ दैत्येया यातुधाना श्च दृष्ट्वा तान्

पतितान् द्विजाः ॥ कोकातटस्था नन्योन्यान् शिला ञ्च जगृहु र्व
षा ॥ २७ ॥ गृहीतायां शिलायांतु कोका वेगवती पितृहन् ॥ छाद
यामास तोयेन प्लावयन्तीहिमाचलम् ॥ २८ ॥ पितॄनन्तर्हितान् दृ
ष्ट्वा दैत्येया राक्षसा स्तथा ॥ विभीतकं समारुह्य निराहारा स्ति
रोहिताः ॥ २९ ॥ सलिलेन विषीदन्तः पितरः क्षुत्तृषार्दिताः ॥ वि
षीदमान मात्मानं समीक्ष्य सलिलाश्रयाः ॥ जग्मु र्जनार्द्दनं देव
म्पितरः शरणं हरिं ॥ ३० ॥ जयस्व गोविन्द जगन्निवास जयो
ऽस्तु नः केशव तेप्रसादात् ॥ जनार्द्दनत्वं सलिलान्तरस्था नुद्धर्त्तु म
स्मा ननघप्रभाव ॥ ३१ ॥ निशाचरै र्दारुणदर्शनैः प्रभो वरैःखवैकु
ण्ठवराह विष्णो ॥ नारायण कृष्ण महेश्वरेश प्रजाहितार्थं जय
पद्मनाभ ॥ ३२ ॥ उपेन्द्र योगी मधुकैटभघ्न भो विष्णो अनन्ता
च्युत वासुदेव ॥ श्रीशार्ङ्गचक्राम्बुज शंखपाणे रक्षस्व देवेश्वर रा
क्षसेभ्यः ॥ ३३ ॥ त्वम्पिता जगतां शम्भो नत्वां शक्तः प्रबाधितुम् ॥
निशा च रागसम्भीमं तत स्त्वांशरणंगताः ॥ ३४ ॥ त्वन्नाम संकी
र्त्तनतो निशाचरा द्रवन्ति भूतान्यपि यान्ति चारयः ॥ नाशं तदा
संप्रति यान्ति विष्णो धर्म्मादिसत्यं भवतीह मुख्यं ॥ ३५ ॥ इत्थं
स्तुतः स पितृभि र्धरणीधर स्तु तुष्टः सदा विधृतशूकरदिव्यमूर्त्तिः ॥
कोकामुखं पितृगणं सलिले निमग्नं देवो ददर्श शिरसाथ शिलाव
कृन्तम् ॥ ३६ ॥ तं दृष्ट्वा सलिले मग्नं क्रोडरूपी जनार्द्दनः ॥
गोतं पितृगणं विष्णु रुद्धर्त्तु म्मति माददे ॥ ३७ ॥ दंष्ट्राग्रेण समा

इत्य शिलां स्विचेप शूकरः ॥ पितृनादाय च विभु रुज्जहार र सातलात् ॥ ३८ ॥ वराहदेहसंलग्नाः पितरः कनकोज्ज्वलाः ॥ को कामुखे गतभयाः कृता देवेन विष्णुना ॥ ३९ ॥ उद्धृत्य च पितृ न्देवो विष्णुतीर्थे च शूकरः ॥ ददौ समाहित स्तेभ्यो विष्णु र्लोमा गतं जलं ॥ ४० ॥ ततः स्वरोमसम्भूता न्कुशा नादाय केशवः ॥ स्वे दोद्भवतिलां स्चैव चक्रे त्रैलोक्य मुत्तमं ॥ ४१ ॥ ज्योतिः सूर्यप्रभं कृ त्वा प्रार्थ्यं तीर्थञ्च कामिकं ॥ स्थितः कोटिवरस्याधो वारिगंगाधरः शुचिः ॥ ४२ ॥ उग्रकूटे समादाय यज्ञिया नौषधीरसान् ॥ मधुक्षी ररसान् गन्धा न्पुष्पधूपानुलेपनान् ॥ ४३ ॥ आदाय धेनुं सरसो र त्नान्यादाय चार्णवात् ॥ दंष्ट्रयो लिख्य धरणी मभ्युक्ष्य सलिलेन च ॥ ४४ ॥ धर्मोद्भवेनोपलिख्य कुशै रन्विष्यता म्बरः ॥ परिणीयो न्मुखेनैना मभ्युक्ष्य च पुनः पुनः ॥ ४५ ॥ कुशा नादाय प्रागग्रान् रोमकूपान्तरस्थितान् ॥ ऋषी नाहूय पप्रच्छ करिष्ये पितृतर्पण म् ॥ ४६ ॥ तै रप्युक्तं कुरुष्वेति विश्वेदेवां स्ततो विभुः ॥ आहूय भ गवां स्तेषां विष्टराणि ददौ प्रभुः ॥ ४७ ॥ आहूय चाग्रत स्तेषां वे दोक्तविधिना हरिः ॥ अक्षतै देवतारक्षां चक्रे चक्रगदाधरः ॥ ४८ ॥ अक्षतास्तु यवौषध्यः सर्वे देवांशसम्भवाः ॥ रक्षन्ति सर्वे त्रिदशा र क्षार्थं सर्वदा क्रतौ ॥ ४९ ॥ देवदानवदैत्येषु यक्षरक्षःसुरेष्वपि ॥ नहि कश्चि त्क्षयं तेषां कर्त्तुं शक्त श्चराचरैः ॥ ५० ॥ नकेनचि त्क्ष तायस्मा त्तस्मा त्ते ह्यक्षताः कृताः ॥ देवतानांहि रक्षार्थं नियुक्ता वि

ष्णुना पुरा ॥ ५१ ॥ कुशगन्धैर्यवैः पुष्पैरर्घ्यं कृत्वा तु शूकरः ॥ विश्वेभ्यो देवेभ्य इति तत स्तान् पर्यपृच्छत ॥ ५२ ॥ पितॄनावाह यिष्यामि येदिव्या एव मानुषाः ॥ आवाहनीया नवनीं ततस्त्वा वाहये च्छुचिः ॥ ५३ ॥ छिन्नमूलाग्रदर्भांस्तु सलिलाद्येन दानवित् ॥ विधिना रोप्य हस्ते तु ददौ सव्ये सचासनं ॥ ५४ ॥ तथैव जानुसंस्थे तु करेणैकेन तान् पितॄन् ॥ अप्याययन्तु पितरो यवाम्बुतिलवर्हिषा ॥ ५५ ॥ वाराहः पितृविप्राणा माप्याययत्वितीरयत् ॥ सम्बत्सरैरित्युदीर्य्य तेषु अर्घ्यं ततो न्यसेत् ॥ ५६ ॥ यस्तिष्ठत्यन्ततां वाच्यं यन्मे पितृसत्पितुः ॥ यन्मे पितामहेत्येवं ददावर्घ्यं पितामहः ॥ ५७ ॥ पुष्पगन्धतिलोन्मिश्रं सुपुष्प मपसव्यतः ॥ तदनुज्ञाता महेभ्यस्तु विधिं चक्रे जनार्द्दनः ॥ ५८ ॥ ताननुभूय गन्धाद्यैर्धूपं दत्वा च शक्तितः ॥ आदित्या वसवो रुद्रा इत्यर्घ्यं मददत्पुनः ॥ ५९ ॥ तत श्चार्घ्यं समादाय सर्प्पिस्तिलकुशाकुलं ॥ विधाय पात्रेष्वन्ये च पर्यपृच्छ त्ततो मुनीन् ॥ ६० ॥ अग्नौ करिष्येति तैः कुरुष्वेति वचोदितः ॥ आहुतित्रितयं दद्या त्सोमायाग्ने यमाय च ॥ ६१ ॥ येमानवेति यजेत यःसदा काममच्युतम् ॥ हुतावशिष्टञ्च ददौ नामगोत्रप्रदर्शितम् ॥ ६२ ॥ त्रिराहुतिक मेकैकं पितरंप्रति च द्विजाः ॥ अतोऽवशिष्ट मन्नाद्यं पिण्डपात्रेषु निक्षिपेत् ॥ ६३ ॥ ततोऽन्नं सरसं स्वादु ददौ पायस पूर्वकं ॥ प्रत्यग्र मेकदा स्निग्धं सांप्रतं मधुभर्चितं ॥ ६४ ॥ मन्त्रितं पृथिवी त्येवं

मधुवातेत्यृचं जगौ ॥ भुञ्जानेषु च विप्रेषु जप्यमन्त्राणि पञ्च
च ॥ ६५ ॥ यतप्रकार मारभ्य नाधिकं ते ततोजगौ ॥ त्रिमधु
त्रिसुपर्णं च्च बृहदारण्यकं तथा ॥ जजाप चैषां व्यस्तु सूक्तंसौ
रं सुपौरुषं ॥ ६६ ॥ भुक्तवत्सु च विप्रेषु पृष्ट्वा तृप्तास्थ इत्युत ॥ तृप्ता
स्मेति सकृद्देवो ददौ मौनविमोचनं ॥ ६७ ॥ पिण्डपात्रं समादाय
छायायै प्रददौ ततः ॥ सा तदन्नं द्विधा कृत्वा द्विधैकैक यथाकरो
त् ॥ ६८ ॥ वराहो भूमयो लिख्य समुत्कृच्य कुशैरपि ॥ दक्षि
णाग्रान् कुशान् कृत्वा तेषामुपरि चासनं ॥ ६९ ॥ सलिलेषु समू
लेषु सकुशेष्वेव संशयः ॥ गन्धपुष्पादिकं कृत्वा ततः पिण्डस्तु भक्ति
तः ॥ ७० ॥ पृथिवी दस्यरित्युक्त्वा ततः पिण्डं प्रदत्तवान् ॥ पिताम
हान् प्रपितामहा न्स्तूपे चान्तररचितः ॥ ७१ ॥ मातामहाना म
प्येवं ददौ पिण्डानि शूकरः ॥ पिण्डनिर्वपणोच्छिष्ट मन्नं लेपभुजे
ऽददात् ॥ ७२ ॥ येतत्र पितरित्युक्त्वा ददौ वासांसि भक्तितः ॥ द्वि
गुणं यानि शुक्लानि धौता न्यभिनवानि च ॥ ७३ ॥ गन्धपुष्पादि
कं दत्वा कृत्वा चापि प्रदक्षिणां ॥ आचन्याचमये द्विप्रान् पैत्राणा
दौ ततः सुरान् ॥ ७४ ॥ तत स्त्वभ्युक्ष्य तान्येव दत्वापः सुमनोक्ष
तान् ॥ सलिलांश्च पितॄं श्चादौ दत्वादौ विष्णुसाक्षतान् ॥ ७५ ॥
साक्षिप्रभिति पितॄंश्च प्रीयन्तामिति देवतां ॥ प्रीणयित्वा परावृत्य
त्रिर्जपे चाघमर्षणं ॥ ७६ ॥ ततो निवृत्य व्यजपे यन्म नाम इतीर
यत् ॥ धारा न्न पितरो दत्त धारान्नं प्रददौ ततः ॥ ७७ ॥ अर्घ्यं

पात्राणि पिण्डाना मन्तरे सपवित्रकं ॥ राजतं दक्षिणां दत्वा वि
प्रा न्देवो गदाधरः ॥ ७८ ॥ संविभागं मनुष्येभ्यो ददौ स्वदिति चा
ब्रुवन् ॥ क्वचि त्स्वन्न मित्युक्त्वा प्रत्युक्त स्तै र्द्विजोत्तमैः ॥ ७९ ॥
अभिरम्यता मित्युवाच प्रोचु स्ते भि रतास्महे ॥ शेषमन्नंच पप्रच्छ
तैस्तैः स्नेहवचोदितैः ॥ ८० ॥ वीणां वादाय तान्विप्रान् कार्योदनु
मत स्तदा ॥ वाजे वाजेति च पठन् वहिर्वेदीविनिर्गताः ॥ ८१ ॥
कोटितीर्यतलेनासौ दपसव्यं समुत्क्षिपेत् ॥ अलग्नान्यखिला नर्घ्यां
नर्थयामास चाग्निपं ॥ ८२ ॥ दातारः सन्त्विशर्द्धंतां तै स्तथेति समी
रितः ॥ प्रदक्षिणा उपाहृत्य कृत्वा पादाभिवन्दनं ॥ ८३ ॥ आस
नादि ददौ चैषां छादयामास शूकरः ॥ विश्राम्यतां प्रतिश्याथ पि
ण्डं जग्राह मध्यमं ॥ ८४ ॥ छायामहा महावज्रो वज्रपिण्डमदात्प्र
भुः ॥ आत्त धत्त पितरो गर्वं मित्युक्त्वा सा तु रूपिणी ॥ ८५ ॥
पिण्डं गृहीत्वा विप्राणां चक्रे पादाभिवन्दनं ॥ विसर्जनं पितॄणां
स कर्त्तुकामस्तु शूकरः ॥ ८६ ॥ कोका च पितरश्चैव प्रोचुः स्वार्थक
रंवचः ॥ प्राप्तास्मि भगवन्पूर्वं दिवस्था हिमताननाः ॥ ८७ ॥ योग
भ्रष्टा भविष्यध्वं सर्वएव दिवश्रुताः ॥ तदेवं भवता भ्राचा प्रतिश्यन्तो
रसातलं ॥ ८८ ॥ योगभ्रष्टांश्च यश्चैषां तत्प्रचुषाचरचितः ॥ ततेभू
यश्च रक्षन्तु विप्रश्चेदेवा हि नः सदा ॥ ८९ ॥ स्वर्गं याश्यामि भो देव
प्रसादात्तव शूकर ॥ सोमोदेवः सचास्माकं भवत्युत्तमयोगधृक् ॥ ९० ॥
योगधारां तथा सोमो मायतेन कदाचन ॥ दिवि भूमौ मदावासो

भवत्तस्य सुयोगत: ॥ ९१ ॥ अन्तरिक्षे च केनापि मासपुष्टि स्तथा सुन: ॥ ऊर्ज्जा चेयं सुन: पत्नी स्वधा नाम्नी शशिः सुता ॥ ९२ ॥ तद्वैषा च योगाद्या योगमाता च खेचरी ॥ इत्येव सुक्तः पितृभि र्वाराहो भूतभावन: ॥ प्रोवाचाथ पितॄ न्विष्णु स्ता ञ्च कोकां म हानदीं ॥ ९३ ॥ यदुक्तन्तु भवद्भिर्मे सर्व्व मेतद्भविष्यति ॥ ब्रह्मा विष्णु श्च रुद्र श्च भवता मपि पूरुषा: ॥ ९४ ॥ आदित्या वसवो रुद्रा भवतो मूर्त्तय: स्थिता: ॥ योगिनो योगदेहाश्च योगाचाराश्च सुव्रता: ॥ ९५ ॥ कामतो विचरिष्यध्वं सर्व्वदा सर्व्वजन्तुषु ॥ स्व र्गस्था न्नरकस्थां श्च भूमिष्ठां श्च चराचरान् ॥ ९६ ॥ निर्जयोपि वलेनैव आप्यायिष्यथ सत्तमा: ॥ इय मूर्जा शशिसुता कीलालमधु विग्रहा ॥ ९७ ॥ भविष्यति महाभागा दक्षस्य दुहिता स्वधा ॥ त न्नेयं दुहिता पत्नी भविष्यति वरानना ॥ ९८ ॥ कोका नदीति वि ख्याता गिरिराजसमाश्रिता ॥ तीर्थकोटिमहापुण्य मद्य स्परिपा लिता ॥ ९९ ॥ अस्या मद्य प्रभृतिभि र्विनिस्थाप्याघ नाशकृत् ॥ वराह दर्शनं पुण्यं पूजनं भुक्तिमुक्तिदम् ॥ १०० ॥ कोकासलिल पानञ्च महापातकनाशनम् ॥ तीर्थेऽघं प्लावय न्नस्मि न्नुपवास ञ्च सार्ज्जवम् ॥ दान मक्षय्य मुदितं मृत्युपापजरापहं ॥ १०१ ॥ मा घे मासि सिते पक्षे भवद्भिश्च उपक्षयै: ॥ कोकामुख मुपागम्य स्था तव्यं दिनपञ्चकम् ॥ १०२ ॥ तस्मि न्कालेतु य: श्राद्धं पितॄणां निर्वपिष्यति ॥ प्रागुक्तफलभागी स भविष्यति नरोत्तम: ॥ १०३ ॥

एकादशीं द्वादशीं च श्रेयसत्र मया सदा ॥ य स्तत्रोपवसे द्धीमा न्स प्रागुक्तफलं लभेत् ॥ १०४ ॥ तद्व्रजध्वं महाभागा स्थान मिष्टं यथेच्छत ॥ अह मप्यत्र वत्स्यामीत्युक्त्वा चान्तरधीयत ॥ १०५ ॥ गते वराहे पितरः कोकाया मग्रतो ययुः ॥ कोकापि तीर्थसहिता संस्थिता गिरिराजनि ॥ १०६ ॥ छायामहीक्रीडयितुं पिण्डप्रास नद्दंहिता ॥ गर्भकामा यदास्त्राची हासहद्दे वसुन्धरा ॥ १०७ ॥ ततोऽस्या मभव त्पुत्रो भौमस्तु नरकोऽसुरः ॥ प्राग्ज्योतिष ञ्च न गर मस्य दत्तञ्च विष्णुना ॥ १०८ ॥ एव ञ्च प्रोक्त ञ्च तदस्य वि ष्णोः कोकामुखे दिव्यवराहरूपं ॥ श्रुत्वा नर स्त्यक्तमलो ऽभिपा प्मा दशाश्वमेधस्य फलं लभेत् ॥ १०९ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे श्रीवराहकृत श्राद्धवर्णन न्नाम नवोत्तरशततमोऽध्यायः ॥ १०९ ॥

—०—

मुनयऊचुः ॥ भूयः प्रब्रूहि भगवन् श्राद्धकल्पं सुविस्तरात्॥ कथं कस्य कदा केषु सुव्रतौहि तपोधन ॥ १ ॥ व्यास उवाच ॥ शृ णुध्वं मुनिशार्दूलाः श्राद्धकल्पं सुविस्तरात् ॥ यथा यत्र यदा येषु यैर्द्रव्यै स्तद्वदाम्यहं ॥ २ ॥ ब्राह्मणैः क्षत्रियै र्वैश्यैः श्राद्धं सदक्षिणो दितं ॥ कुलधर्ममनुस्मृत्य दातव्यं मन्त्रपूर्व्वकम् ॥ ३ ॥ स्त्रीभि र्वं र्णावरैः शूद्रै र्देयं विप्रानुशासनात् ॥ अमन्त्रकं विधिपूर्वं वह्नि पाकविवर्जितम् ॥ ४ ॥ पुष्करादिष तीर्थेष पुण्येष्वायतनेषु च ॥

शिखरेषु गिरीन्द्राणां पुण्यदेशेषु भोद्विजाः ॥ ५ ॥ सरित्सु पुण्य तोयासु नदेषु च नदीषु च ॥ सङ्गमेषु नदीना ञ्च समुद्रेषु च स प्तसु ॥ ६ ॥ स्वानुलिप्तेषु देशेषु तेष्वनुज्ञापितेषु च ॥ श्राद्ध मेतेषु दातव्यं वर्ज्यं मेतेषु चोच्यते ॥ ७ ॥ किरातेषु कलिङ्गेषु कोङ्कणेषु क्रमिष्वपि ॥ दशार्णेषु कुमार्य्येषु तङ्गणेषु क्रथेषु च ॥ ८ ॥ सिन्धो रुत्तरकूलेषु नर्मदाया ञ्च दक्षिणे ॥ पूर्वेषु करतोयायां नदेयं श्रा द्धमुच्यते ॥ ९ ॥ श्राद्धं देय मुशन्तीह मासे मासे च पक्षयोः ॥ पौर्णमासेषु च श्राद्धं कर्त्तव्य ञ्चर्क्षगोचरे ॥ १० ॥ नित्यश्राद्ध ञ्च दैवञ्च मनुष्यैः सहगीयते ॥ नैमित्तिकं सुरैः सार्द्धं नित्यं नैमित्ति कंतथा ॥ ११ ॥ काम्यान्यन्यानि श्राद्धानि प्रतिसम्वत्सरं द्विजाः ॥ वृद्धिश्राद्ध ञ्च कर्त्तव्यं जातकर्मादिकेषुवै ॥ तत्र युग्मा न्द्विजानाह मातृपूर्वन्तु वैद्विजाः ॥ १२ ॥ कन्यागते सवितरि दिनानि दशप ञ्च च ॥ पूर्वेणैवेह विधिना श्राद्धं तत्र विधीयते ॥ १३ ॥ प्रतिप द्धनलाभाय द्वितीया द्विपदप्रदा ॥ वरार्थिनी तृतीया तु चतुर्थी शत्रु नाशिनी ॥ १४ ॥ श्रियं प्राप्नोति पञ्चम्यां षष्ठ्याञ्च वृद्धिमुत्तमां ॥ सप्तम्यां श्रिय माप्नोति कार्य्यसिद्धिं तथोदितं ॥ १५ ॥ नवम्यां पशु माप्नोति दशम्यां पूर्णकामदं ॥ वेदां स्तथाप्नुया त्सर्वा नेकादश्यां क्रियापरः ॥ १६ ॥ द्वादश्यां पुत्रलाभ ञ्च प्राप्नोति पितृपूर्वकः ॥ पशुवृद्धिं प्रियां मेधां स्वातन्त्र्य मपुष्टि मुत्तमां ॥ १७ ॥ दीर्घ मायु रथैश्वर्यं कुर्वाण स्तु त्रयोदशीं ॥ अवाप्नोति नसन्देहः श्राद्धं श्राद्ध

परोनरः ॥ यथा सम्भवितान्नेन श्राद्धं सम्यक् समन्वितम् ॥ १८॥ युवानः पितरो यस्य मृताः शस्त्रेण चाहताः ॥ तेन कार्य्यं चतुर्द्दश्यां तेषां तृप्ति मभीप्सताम् ॥ १९ ॥ अष्टश्राद्धं प्रकुर्वन्तु स तेन पुरुषः शुचिः ॥ सर्वा न्कामानवाप्नोति स्वर्गं चान्त मश्नुते ॥ २० ॥ अतः परं मुनिश्रेष्ठाः शृणुध्वं वदतो मम ॥ पितृणां प्रीतये यच यद्देयं प्रीतिकारिणम् ॥ २१ ॥ मासा तृप्तिं पितृणांतु हविष्यान्नैः प्रजायते ॥ मासद्वय म्मत्स्यमांसै स्तृप्तिं यान्ति पितामहाः ॥ २२ ॥ त्री न्मासा न्हारिणं मांसं विज्ञेय म्पितृतर्प्पणं ॥ चतुरोमास मश्नाति श शस्य पिशितं पितृन् ॥ २३ ॥ मावसं पञ्चमासान्वै षण्मासान् शूकरामिषं ॥ छागलस्वै सप्तमासा नैणेय न्वसमासिकं ॥ २४ ॥ क रोतु तृप्तिं नववै रुरुमांसा न्नसंशयः ॥ गव्यमासं पितृतृप्तिं करोति दशमासिकीं ॥ २५ ॥ तथैकादशमासांस्तु औरभ्रं पितृतृप्तिकं ॥ स म्वत्सरं तथा गव्यं पयः पायस मेवच ॥ २६ ॥ वध्रीणमांसं सन्होरं कालशाकं तथा मधु ॥ दुहिता नसमग्र ञ्च दत्ता न्यात्मकुलोद्भ वैः ॥ २७॥ अनन्यान्वै प्रयच्छन्ति तृप्तियोगां सुत स्तथा ॥ पितृणां नात्र सन्देहो गयाश्राद्ध ञ्च भोद्विजाः ॥ २८ ॥ योददाति गुडैर्मि श्रा न्स्तिलान्वा श्राद्धकर्म्मणि ॥ मधुवा मधुमिश्रम्वा अक्षय्यं सर्व्वमेव तत् ॥२९॥ अपिनः सकुले जातो यो नो दद्या ज्जलाञ्जलिं ॥ पायसं मधुसंयुक्तं वर्षासुच मघासु च ॥३०॥ एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ॥ गौरीं समुद्वहे द्भार्य्यां नीलम्वा वृष मुत्सृजेत् ॥ ३१ ॥

कृत्तिकासु पितॄन् नर्च्य स्वर्गमाप्नोति मानवः ॥ अपत्यकामो रोहि
ण्यां सौम्ये तेजस्विनां लभेत् ॥ ३२ ॥ सौर्य्य माद्रासु चाप्नोति चे
न्नाणि च पुनर्वसौ ॥ पुष्ये तु धन मक्षय्य मश्लेषे पुरुषोत्तमम् ॥ ३३ ॥
मघासु सुप्रजां पुष्टिं सौभाग्यं फाल्गुणीषु च ॥ प्रदानशीलो भव
ति सापत्य श्चोत्तरासु च ॥ ३४ ॥ प्रयाति श्रेष्टतां शास्त्रे हस्ते श्राद्ध
प्रदो नरः ॥ रूपं तेजश्च चित्रासु तथापत्य मवाप्नुयात् ॥ ३५ ॥ वा
णिज्यलाभदा स्वाति विंशाखा पुत्रदा सदा ॥ कुर्वता श्चानुराधा
सु दद्युश्च चक्रवर्त्तिताम् ॥ ३६ ॥ अधिपत्यं च ज्येष्ठासु मूले चारो
ग्य मुत्तमं ॥ आषाढासु यशः प्राप्ति रुत्तरासु विशेषतः ॥ ३७ ॥
श्रवणे च शुभा न्कामा न्धनिष्ठासु धनं महत् ॥ वेदवित्त्व माभिजि
ति भिषक्सिद्धिं च वारुणे ॥ ३८ ॥ अजाविकं प्रौष्टपदि विद्वेष स्तु
तथोत्तरे ॥ रेवतीषु तथा कुप्य माश्विनीषु तुरङ्गमान् ॥ ३९ ॥ श्रा
द्धं कुर्वं स्तथाप्नोति भरण्यां चायु रुत्तमं ॥ एवं फल मवाप्नोति कु
र्वं स्तेषु तत्त्ववित् ॥ ४० ॥ तस्मा त्काम्यानि श्राद्धानि कर्त्तव्यानि
द्विजोत्तमाः ॥ कन्याराशिगते सूर्य्ये फल मत्यन्त मिच्छता ॥ ४१ ॥
यान्या न्कामा नभिध्यायन् कन्याराशिगते रवौ ॥ श्राद्धं कुर्वंति म
नुजा स्तां स्तां कामां ल्लभन्ति ते ॥ ४२ ॥ नान्दीमुखानां कर्त्तव्यं क
न्याराशिगते रवौ ॥ पौर्णमास्यां तु कर्त्तव्यं वराहवचनं यथा ॥ ४३ ॥
दिव्यभौमान्तरिक्षाणि स्थावराणि वराणि च ॥ पिण्डमिच्छन्ति पि
तरः कन्याराशिगते रवौ ॥ ४४ ॥ कन्यागते सवितरि यान्यहानि तु

षोडश ॥ क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् ॥ ४५ ॥
राजसूयाश्वमेधाभ्यां यदिच्छेत्तत्फलं लभेत् ॥ अपि तु शाकमूला
द्यैः पितॄन्कन्यागते ऽर्चयेत् ॥ ४६ ॥ उत्तराहस्तविप्राग्या गते
तीक्ष्णांसुमालिनि ॥ योऽर्चयेत पितॄन् भक्त्या तस्य वास स्त्रिविष्ट
पे ॥ ४७ ॥ हस्ते गते दिनकरे पितृराजस्य शासनात् ॥ तावत्पितृ
पुरी शून्या याव दृश्चिकदर्शनं ॥ ४८ ॥ वृश्चिके समतिक्रान्ते पितरो
दैवतैः सह ॥ निःश्वस्य प्रतिगच्छन्ति शापं दत्वा तु दुःसहं ॥ ४९ ॥
अष्टाकासु च कर्त्तव्यं श्राद्धं हैमन्तिकासु वै ॥ अन्वष्टकासु क्रमशो
मातृपूर्वं तदिष्यते ॥ ५० ॥ ग्रहणे व्यतिपाते च रविचन्द्रसमागमे॥
जन्मर्क्षे ग्रहपीडायां श्राद्धं पार्वण मुच्यते ॥ ५१ ॥ अयनद्वितये
श्राद्धं विषुवद्द्वितये तथा ॥ संक्रान्तिषु च कर्त्तव्यं श्राद्धं विधिव दुत्त
मम् ॥ ५२ ॥ श्राद्ध मेतेषु कर्त्तव्यं पिण्डनिर्वापणा दनु ॥ वैशाखस्य
तृतीयायां श्राद्धं कार्य्यं द्विजोत्तमैः ॥ ५३ ॥ त्रयोदश्यां भाद्रपदे
माघेमासि त्रयेऽनि ॥ श्राद्धं कार्य्यं च शुक्लायां नवम्यां कार्त्तिकस्य
च ॥ ५४ ॥ श्राद्धं कार्य्यं पायसेन दक्षिणाभिमुखे ततः ॥ यदा च
श्रोत्रियोऽभ्येति गेहे वेदाङ्गवेदवित् ॥ तेनैकेन च कर्त्तव्यं श्राद्धं वि
धिव दुत्तमम् ॥ ५५ ॥ श्राद्धीयद्रव्यसम्पत्ते र्यदा स्या त्साधुसङ्गमः ॥
पार्व्वणेन विधानेन श्राद्धं कार्य्यं द्विजोत्तमैः ॥ ५६ ॥ प्रतिसम्व
त्सरं कार्य्यं मातापित्रोः त्रयेऽनि ॥ पितृव्यस्याप्य पुत्रस्य भ्रातु
र्ज्यैष्ठस्य चैव हि ॥ ५७ ॥ पार्वणं दैवपूर्वं स्या देकोदिष्टं सुतैरपि ॥

द्वौ दिव्ये पितृकृत्ये त्रौ नेकैक मुभयत्रवा ॥ ५८ ॥ मातामहानाम प्येवं सर्वभूतेन कीर्त्तितं ॥ मृतभूतश्च सततं भुवि पितृजलं तथा ॥ ५९ सतिलं सकुशं देया द्वहि र्जलसमीपतः ॥ तृतीयेऽहनि कर्त्तव्यं प्र त्यगाहवनीद्विजैः ॥ ६० ॥ दशाहे ब्राह्मणाः शुद्धा द्वादशाहे च च त्रियाः ॥ वैश्याः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥ ६१ ॥ सूत कान्तिगृहे श्राद्ध मेकोदिष्टं प्रचचते ॥ द्वादशे चैकमाशे च त्रिपचे च ततः परम् ॥ ६२ ॥ मासि मासि च कर्त्तव्यं याव त्सम्वत्सरं द्वि जाः ॥ ततः परतरं कार्य्यं सपिण्डीकरणं तदा ॥ ६३ ॥ कृते सपि ण्डीकरणे पार्वणं प्रारभे त्पुनः ॥ ततः प्रभृतिनिर्मुक्तः प्रेतत्वा त्पितृतां गतः ॥ ६४ ॥ नान्दीमुखा स्त्वमूर्त्तास्तु मूर्त्तिमन्तस्तु पा र्वणाः ॥ अमूर्त्ता मूर्त्तिमन्तश्च पितरो द्विविधाः स्मृताः ॥ ६५ ॥ ए कोपि नयनं विप्रा वहूना मेव वान्धवैः ॥ श्राद्धं कुर्वन्ति रचाञ्च वृ द्धिचेपः प्रजायते ॥ ६६ ॥ तस्मा च्छ्राद्धं नरो भक्त्या विदधीत यथा विधि ॥ कुर्वीत कुर्वतः श्राद्धं कुले कश्चि न्नसीदति ॥ श्राद्धं देयंतु विप्रेषु संयतेष्वग्निहोत्रिषु ॥ अवदातेषु विप्रेषु श्रोत्रियेषु विशेष तः ॥ ६८ ॥ त्रिणाचिकेत स्त्रिमधु स्त्रिषु वर्णषडङ्गवित् ॥ मातापि तृपर श्चैव स्वस्त्रीयं सामवेदवित् ॥ ६९ ॥ ऋत्विक् पुरोहिताचा र्य्यं मुपाध्यायं च भोजयेत् ॥ मातुलः श्वशुरः श्यालः संबन्धिद्रो णपाठकः ॥ ७० ॥ मण्डनब्राह्मणो यस्तु पुराणार्थविशारदः ॥ अ कल्कक्क सततः प्रतिग्रहविवर्जितः ॥ ७१ ॥ एते श्राद्धेतु भोक्तव्या

ब्राह्मणाः पंक्तिपावनाः ॥ निमन्त्रयेत पूर्वोक्त पूर्वोक्तान्वै द्विजोत्त मान् ॥ ७२ ॥ दैवे नियोगे पात्रे च तां तथैव प्रकल्पयेत् ॥ तैश्च स म्यत्तिभि र्भाव्यं यस्य श्राद्धं करिष्यति ॥ ७३ ॥ श्राद्धं दत्वा च भु क्त्वा च मैथुनं योभिगच्छति ॥ पितर स्तस्य वैमासं तस्मिन् रेतसि शेरते ॥ ७४ ॥ गत्वा च योषितं श्राद्धं कुर्य्यात्तं स्नानवर्जितः ॥ रे तोमूत्रकृताहारा स्तन्मासं पितर स्तयोः ॥ ७५ ॥ तस्मात्तु प्रथमंका र्यं प्राज्ञेनोपनिमन्त्रणं ॥ अप्राप्तौ तद्दिने वापि वर्ज्यं योषित्प्रसंगि नः ॥ ७६ ॥ भिक्षार्थ मागतां श्चापि कालेन संप्रतीन्यतीन् ॥ भोज ये त्प्रणिपाताद्यैः प्रसादयति मानसः ॥ ७७ ॥ योगिनश्च सदा श्रा द्धे भोजयेत्तु विपश्चितः ॥ योगाधाराहि पितर स्तस्मा त्तान् पूजये त्सदा ॥ ७८ ॥ ब्राह्मणानां सहस्राणि एको योगी भवेद्यतिः ॥ य जमान ञ्च भोक्ता च नौरिवांभसि तारयेत् ॥ ७९ ॥ पितृगाथा स्तथैवात्र गीयन्ते ब्रह्मवादिभिः ॥ यागीता पितृभिः सार्द्धं पूर्वमैल स्य भूपतेः ॥ ८० ॥ कदा नौ सन्ततेरग्र्यो कस्यचि द्भविता सुतः ॥ योयोगि भुक्तशेषान्नं भुवि पिण्डं प्रदास्यति ॥ ८१ ॥ गयाया मथ वा पिण्डं खड्गमांसं तथा हविः ॥ कालशाकं तिलाढ्यञ्च कृशरं चा स्य तृप्तये ॥ ८२ ॥ वैश्वदेवं च सौम्यं च खड्गमांसं परं हविः ॥ वि षाणवर्ज्यं शिरसा अपादादश्नपाहने ॥ ८३ ॥ दद्या च्छ्राद्धं त्रयोद श्यां मघासु च यथाविधि ॥ मधुसर्प्पिस्समायुक्तं पायसं दक्षिणाय ने ॥ ८४ ॥ तस्मा त्सम्पूजये द्भक्त्या स्वपितॄन् विधिव न्नरः ॥

कामा नभीष्मत्र सकलान् पापादाशु विमोचनम् ॥ ८५ ॥ वसुरुद्रां स्तथादित्या न्नचत्रग्रहतारकं ॥ प्रीणयन्ति मनुष्याणां पितरः श्रा द्धतर्पिताः ॥ ८६ ॥ आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥ प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥ ८७ ॥ श्रा द्धंकृत्वा विधानेन सम्भोज्यच द्विजोत्तमान् ॥ विसर्ज्जयेत्प्रियानुक्ता प्रणिपत्य च भक्तितः ॥ ८८ ॥ आधारमनुगच्छेता नागच्छे दानुमो हितः ॥ ततो नित्यक्रियां कुर्य्या द्भोजयेत तथातिथीन् ॥ ८९ ॥ नित्यक्रियां पितॄणां प्रा क्केचिदिच्छन्ति सत्तमाः ॥ नपितॄणां त थैवान्ये क्रिया पूर्व्ववदाचरेत् ॥ ९० ॥ केन केन वदेत्त्यैके केचि त्पूर्व्वं च्च पूर्व्ववत् ॥ इदानीं संप्रवक्ष्यामि वर्ज्जनीया न्द्विजाधमा न् ॥ ९१ ॥ मित्रध्रु क्कुनखी मूर्च्छ यक्ष्मी शुक्ली वणिक्पथः ॥ श्याम दन्तश्च खल्वाटः कर्णायस्त्वविरो ऽपढ़ः ॥ ९२ ॥ मूकः पण्डाकुणिः पण्डो दुश्चर्म्मा व्यङ्गकेकरः ॥ कुष्ठिकुष्टो रक्तदृष्टि र्वामनो विकटो ऽलसः ॥ ९३ ॥ मित्रशत्रुर्दुःखलीनः पशुपालो निराकृतिः ॥ परि वित्तिः परिवेत्ता परिवेदनिकासुतः ॥ ९४ ॥ वृषलीपतिः स्वस्तुतश्च भवेन्नश्राद्धभुग्द्विजः ॥ वृषलीपुत्रसंस्कर्त्ता न्त्यगादिचविष्टया ॥ ९५ भृतकाध्यापको यस्तु भृतिकाध्यापत स्वयः ॥ सूतिस्वातिष्टाच भृग गयोसौ समविक्रयी ॥ ९६ ॥ अभिशस्त्य स्तथास्तेनः पतितो वाड्ड कःसठः ॥ मिथुनो वेदसंत्यागी अग्नित्याग स्च निष्ठुरः ॥ ९७ ॥ रा ज्ञःपुरोहितो भृत्यो विद्याहीनोऽथ मत्सरी ॥ विदह्नि र्भर्त्सकः क्रूरः

पतितो वार्द्धकिः सठः ॥ ९८ ॥ नक्षत्रसूचकश्चैव पर्व्वकारश्च ग
र्हितः ॥ अयाज्ययाजकः खण्डो गर्हिता न्येच येऽधमाः ॥ ९९ ॥
न ते श्राद्धे नियोक्तव्या दृष्ट्वा ये पंक्तिदूषकाः ॥ असतां प्रग्रहोपन्नाः
सता ञ्चैवावमानताः ॥ १०० ॥ दण्डो दैवकृत स्तत्र सर्व्वः पतति
दारुणः ॥ हित्वागमं सुविदितं वालिशं यस्तु भोजयेत् ॥ आदिध
र्म्मं समुत्सृज्य दाता तत्र विनश्यति ॥ १०१ ॥ वस्त्राभावे क्रियाना
स्ति यज्ञदेदेपि सोपिवा ॥ तस्मा द्वासांसि देयानि श्राद्धकाले विशे
षतः ॥ १०२ ॥ कौशेयं चौमकार्पासं दुकूलमहतं तथा ॥ श्राद्धेष्वे
तानि योदद्या त्कामा नाप्नोति चोत्तमान् ॥ १०३ ॥ यथा गोषु प्र
सूतासु वत्सो विन्दति मातरं ॥ तथा तं तत्र विप्राणां जन्तु र्विप्रोऽ
वतिष्ठते ॥ १०४ ॥ नाम गोत्रञ्च मन्त्रञ्च दत्तमन्नेन योजिते ॥ अ
पियो निधनं प्राप्त स्तृप्ति स्तमुपतिष्ठति ॥ १०५ ॥ देवताभ्यः पितृ
भ्यश्च महायोगिभ्य एव च ॥ नमः स्वाहायै स्वधायै नित्यमेव भवन्तु
नः ॥ १०६ ॥ अवावसाने श्राद्धस्य त्रिरावृत्या जपे त्सदा ॥ पिण्डनिर्वप
नेवापि जपेदेवं समाहितः ॥ १०७ ॥ चिप्र मायान्ति पितरो राक्षसाः
प्रद्रवन्तिच ॥ प्रीयन्ते त्रिषु लोकेषु मन्त्र मुच्चारयन्त्युत ॥ १०८ ॥ चौमं
सूत्रं वरं दद्या च्छाणं कार्पासिकं तथा ॥ पर्यणोपेन्द्रसूत्रञ्च कौशेयञ्च
विवर्ज्जयेत् ॥ १०९ ॥ वर्जये द्दीहशं प्राज्ञोयद्यपि व्याहत म्भवेत् ॥
तस्मौणयत्यथैतानि दातु श्चाप्यानयो भवेत् ॥ ११० ॥ न निबेधे भवेत्पि
ण्डं पितॄणां यस्य जीवति ॥ दृष्टेनात्येपि भक्ष्येण भोजये त्तं यथा

विधि॥१११॥ पिण्ड मग्नौ सदा दद्या च्छ्रद्धाभक्तियुतो नरः॥ प्रजार्थी
पत्न्यै दद्याच्च मध्यमं मन्त्रपूर्व्वकं॥११२॥ उत्तमं सूति मन्विच्छनूगो
षुनित्यं प्रयच्छति॥ अद्याचैव यशः कीर्त्ति मप्सु नित्यं निवेदयेत्॥११३
प्रार्थयं दीर्घमायु स्च वायसेभ्यः प्रयच्छति॥ कुमारशाला मन्विच्छ
न्कुक्कुटेभ्यः प्रयच्छति॥ ११४॥ एके विप्राः पुनः प्राहुः पिण्डोद्धर
णमग्रतः॥ अनुज्ञाता स्तु तै र्विप्रैः काम मुद्ध्रियतामिति॥ ११५॥
तस्मा च्छ्राद्धं तथा कार्य्यं यथोक्त मृषिभिः पुरा॥ अन्यथातु भवेद्दो
षः पितॄणां नोपतिष्ठति॥ ११६॥ यवै व्रीहितिलै र्माषै र्गोधूमै
श्चणकै स्तथा॥ सन्तर्प्पयेत्पितॄ न्मुद्गैः श्यामकैः सर्षपद्रवैः॥११७॥
नीवारै र्हस्तिश्यामाकैः प्रियङ्गुभि रथार्च्चयेत्॥ प्रशान्विकांसतृणि
कां दत्वा शुद्धिं विचक्षणः॥ ११८॥ आम्रमाम्रातकं विल्वं दाडि
मं वीजपूरकं॥ प्राचीनामलकं क्षीरं नाडिकेयं तथैवच॥ ११९॥
कानार्यद्रन्च खर्ज्जूरं द्राक्षा नीलकपित्थकं॥ पटोलञ्च प्रियालुञ्च
कर्कटी वदराणि च॥ १२०॥ वैकङ्कतञ्च नारङ्गं वीजपूरककाव
पि॥ एतानि फलजातानि श्राद्धे देयानि यत्नतः॥ १२१॥ गुडस
र्पिसंस सुण्ठी देयं फाणितसुर्मुरम्॥ गव्यं पयोदधिसर्प्पिः तैलम्वा
तिलसम्भवम्॥ १२२॥ सैन्धवं सागरोत्थञ्च लवणं सागरं तथा॥
निवेदये च्छुविन्वाध्वां श्चन्दनागुरुकुङ्कुमान्॥ १२३॥ कालशाकं त
न्दुलीयं वास्तूकं मूलकं तथा॥ पालन्निं शतपत्र ञ्च गन्धनैः वाल
कामपि॥ १२४॥ कुन्दं काण्टतरं चैव भृङ्गमारण्यकेतकी॥ यूथि

कामतिसुक्त ञ्च श्राद्धयोग्यानि भोद्विजाः ॥ १२५ ॥ कमलं कुसुदं पद्मं पुण्डरीक ञ्च यत्नतः ॥ इन्दीवरं कोकनदं कह्लार ञ्च नियो जयेत् ॥ १२६ ॥ कुष्टं मांसी कलाशोकं कुनरी जातिपचकं ॥ तालीसो भीरसुस्त ञ्च ग्रन्थिपर्णञ्च सुव्रताः ॥ १२७ ॥ सुरामित्येव मादीनि गन्धयोग्यानि चचते ॥ गुग्गुलं चन्दनं चैव शिवा मोघा गुरु स्तथा ॥ १२८ ॥ धूपानि यानि योग्यानि शुभं गुग्गुल मेवच ॥ राजमाषं पयश्चैव मसूराकोरदूषकान् ॥ १२९ ॥ विप्रुषा न्मकटां श्चैव कोद्रवां श्च विवर्ज्जयेत् ॥ माहिषं चामरं मार्गं माविकैकशफो द्भवम् ॥ १३० ॥ स्त्रैणमौष्ट्रमजावीकं दधिचीरं घृतं त्यजेत् ॥ तालं वरुणकाकोली वज्रपुत्रार्जुनिः फलं ॥ १३१ ॥ जम्बीरं रक्तविल्वञ्च शालस्यापि फलं त्यजेत् ॥ मत्स्यशूकरकूर्मा श्च गावो वर्ज्या विशेष तः ॥ १३२ ॥ प्लुतकं स्मगनाभि ञ्च रोचनां पद्मचन्दनं ॥ कालेय कं तूग्रगन्धं तुरुष्क ञ्चापि विवर्ज्जयेत् ॥ १३३ ॥ फलक ञ्च कुमारी च किरातं पिण्डमूलकं ॥ ग्रहाणां चक्रिका नुग्रतरमा ञ्च नपत्रि काम् ॥ १३४ ॥ जीवं शतञ्च पुष्पञ्च नालिकागन्धसूतकम् ॥ इति सत्यं सर्व्वपेयं पलाण्डुं लसुनं त्यजेत् ॥ १३५ ॥ मानस्कन्दं विष स्कन्दं वज्रकन्दं गदोत्थिकम् ॥ पुष्पालुं सपिण्डालुं श्राद्धकर्म्मणि वर्जयेत् ॥ १३६ ॥ अलावुं शक्तिकर्णं च कूष्माण्डं कंदुकत्रयम् ॥ वा र्त्ताकं शिवजायानि लोमशानि वटानि च ॥ १३७ ॥ कालिन्दं रक्तवाण्डं च वीणां कान्तिकुवालुकं ॥ श्राद्धकर्म्माणि वर्ज्यानि

विभीतकफलं तथा ॥ १३८ ॥ अरनालञ्च सूक्तञ्च शीर्यं पर्युषित
न्तथा ॥ नोग्रगन्धं च दातव्यं कोविदारककिंशुकौ ॥ १३९ ॥ अत्य
न्तं पिच्छिलं रुक्ष्यं पाकाज्जीतं सुसत्तमाः ॥ नदेयं गतरसं च मद्य
गन्धं विवर्जयेत् ॥ १४० ॥ हिंगूग्रगन्धां फणिभू नचियानिषजाति
के ॥ कुसुम्बुरु कलिङ्गोत्थं वर्जये दम्लचेतसं ॥ १४१ ॥ दाडिमं मा
गधी चैव नागराद्रिकतिन्तिडी ॥ पानकं च रसालं च गोचीरं च
निवेदयेत् ॥ १४२ ॥ यानि चात्यन्तवर्ण्याणि स्वादुस्निग्धानि भोद्वि
जाः ॥ दूषेदम्ल कटून्येव देयानि श्राद्धकर्म्मणि ॥ १४३ ॥ अम्लत्वं
चातिलवण मतितिक्तं कटूनिवा ॥ आसुरानीह भोज्यानि तानि
श्राद्धे नयोजयेत् ॥ १४४ ॥ छागमांसं वार्त्तिकं च तैत्तिरं शशकामि
षम् ॥ शैवालाचक्रराजीव मांसं श्राद्धे नियोजयेत् ॥ १४५ ॥ वा
द्धीनसंरक्तशिरा लोहशल्कसमन्वितम् ॥ सिंहताडं च खण्डं च
योज्यं श्राद्धे तथोच्यते ॥ १४६ ॥ यद्यप्युक्तं हि मनुना रोहितं प्रति
योजयेत् ॥ योक्तव्यं हव्यकव्येषु तथा न विप्रयोजयेत् ॥ १४७ ॥ ए
वंपुरोक्तं भोविप्रा वाराहेणावलोकितं ॥ मया निषिद्धं भुञ्जानो रौ
रवं नरकं व्रजेत् ॥ १४८ ॥ एतानि च निषिद्धानि वाराहेण तपो
धनाः ॥ अभक्ष्याणि द्विजातीनां नदेयानि पितृष्वपि ॥ १४९ ॥
हितंच शूकरं कूर्मं गोधां हंसंच वर्जयेत् ॥ एतानि च निषिद्धानि
वाराहेण तपोधनाः ॥ १५० ॥ अभक्ष्याणि द्विजातीन्द्राः शल्कहा
नां च मत्स्यकान् ॥ कुररं च निरस्थिं च वासहारिं च कुकुटा

नू ॥ १५१ ॥ कलविङ्कमयूरांश्च भारद्वाजांश्च शार्ङ्गकान् ॥ नक्र
लोलूकमार्जारान् लोका नन्यान्मुवर्द्धकान् ॥ १५२ ॥ टिट्टिभान्
गार्द्दजम्बूकान् वासुकचतरचकान् ॥ सस्वर्गतानपि पितॄन्नरके
पातयिष्यति ॥ १५३ ॥ कुसुम्भशाकं जम्बीरं शिग्रुकं कोविदारकं॥
शाणकं गृञ्जनं चैव मसूरिविषमं तथा ॥ १५४ ॥ कोद्रवं कोकि
लाचं च वक्रकं तुम्बपद्मकम् ॥ चकोरश्येनमांसं च वर्त्तुलाष्टकतानि
नीं ॥ १५५ ॥ फलं तालतरूणां च भुक्त्वा नरकमृच्छति ॥ दत्वा
त्पितृषु तैः श्राद्धं व्रजेत्यूपवहन्नरः ॥ १५६ ॥ तस्मा त्सर्व्वप्रयत्नेन
नाहरेत विचक्षणः ॥ निषिद्धानि वराहेण स्वयं पिण्डत्व माद
रात् ॥ १५७ ॥ चिरमेवात्मना मांसभक्षणं मुनयः कृतं ॥ नत्वेवं
विनिषिद्धाना मादानं पुम्भिरादरात् ॥ १५८ ॥ अज्ञानाद्वा प्रमा
दाद्वा सकृदेतानि च द्विजाः ॥ भक्षितानि निषिद्धानि प्रायश्चित्तं
तत श्चरेत् ॥ १५९ ॥ फलं मूलं दधिक्षीरं तत्र गोमूत्रयावकैः ॥
भोज्यान्नं भोज्यसंयुक्तं प्रत्येकं दिनसप्तकम् ॥ १६० ॥ एवं निषिद्धा
चरणे कृते सकृदपि द्विजैः ॥ शिष्यते च शरीरन्तु विष्णुभक्ति
र्विशेषतः ॥ १६१ ॥ निषिद्धा न्वर्जयेद्द्रव्या न्यथोक्तांश्च तपोधनाः॥
समाहृत्य ततः श्राद्धं कर्त्तव्यं निजशक्तितः ॥ १६२ ॥ एवं विधान
तःश्राद्धं कृत्वा स्वविभवोचितम् ॥ आब्रह्मस्तम्बपर्यन्तं जगत्प्रीणाति
मानवः ॥ १६३ ॥ मुनय ऊचुः ॥ पिता जीवति यस्यायं मृतौ द्वौ
पितरौ पितुः ॥ कथं श्राद्धन्तु कर्त्तव्य मेतद्विस्तरतो वद ॥ १६४॥

व्यास उवाच ॥ यस्मै दद्यात्पिताश्राद्धं तस्मै दद्यात्सुतः स्वयं ॥ एवं नहीयते धर्मो वैदिको लौकिकस्तथा ॥ १६५ ॥ मुनयऊचुः ॥ मृतः पिता जीवति च यस्य ब्रह्मन् पितामहः ॥ सहि श्राद्धं कथं कुर्य्यादेतत्त्वं वक्तुमर्हसि ॥ १६६ ॥ व्यास उवाच ॥ पितुः पिण्डं प्रदद्याच्च भोजयेच्च पितामहं ॥ प्रपितामहस्य पिण्डं तै रयं शास्त्रेषु निर्णयः ॥ १६७ ॥ मृतेषु पिण्डं दातव्यं जीवन्तं चापि भोजयेत् ॥ सपिण्डीकरणं नास्ति नच पार्वण मिष्यते ॥ १६८ ॥ आचार माचरे त्पुत्रः पितृमेधाश्रितं नरः ॥ आयुष्मा न्धनपुत्रैश्च वर्द्धत्याशु नसंशयः ॥ १६९ ॥ पितृमेधाध्यतमसुं प्रातःकालेषु यः पठेत् ॥ तदन्न मश्नन्ति पितरः स्वर्गतिं त्रियुगं द्विजाः ॥ १७० ॥ एवं मयोक्तं पितृमेधकल्पं पापापहं पुण्यविवर्द्धनं च ॥ श्रोतव्य मेतत्प्रयतैश्च नित्यं श्राद्धेषु य श्चाप्यनुकीर्त्तयेत्तु ॥ १७१ ॥

इतिश्री ब्रह्मपुराणे व्यासर्षिसम्वादे श्राद्धकल्पवर्णनं नाम दशोत्तरशततमोऽध्यायः ॥ ११० ॥

—०—

व्यास उवाच ॥ एवं सम्यं गृहस्थेन देवताः पितरस्तथा ॥ संपूज्या हव्यकव्याभ्या मन्नेनातिथिबान्धवाः ॥ १ ॥ भूतानितु तथा विप्राः पशुपक्षिपिपीलिकाः ॥ भिक्षवो याच्यमानाश्च येऽन्ये चैवागता गृहे ॥ २ ॥ सदाचारवतां विप्राः साधूनां गृहमेधिनां ॥ पापं भुंक्ते समुल्लंघ्य नित्यनैमित्तिक क्रियाः ॥ ३ ॥ मुनय ऊचुः ॥ कथितं

भवता विप्र नित्यं नैमित्तिकं च यत् ॥ नित्यं नैमित्तिक ञ्चैव नि
तयङ्कर्म पौरुषं ॥ ४ ॥ सदाचारं मुने श्रोतु मिच्छामो वदत स्तव॥
यत्कुर्व न्सुख माप्नोति परत्रे ह च मानवः ॥ ५ ॥ व्यास उवाच ॥
गृहस्थेन सदा कार्य्य माचार परिपालनम् ॥ नत्वा चारविहीनस्य
भद्रमत्र परत्रवा ॥ ६ ॥ यज्ञदानतपांसीह पुरुषस्य नभूतये ॥ भ
वन्तियः सदाचारं समुल्लंघ्य प्रवर्त्तते ॥ ७ ॥ सदाचारोहि पुरुषो
ब्रह्मायु विन्दते महत् ॥ कार्य्यो धर्मः सदाचार आचारो हन्त्यल
क्षणं ॥ यथा स्वरूपं वक्ष्यामि सदाचारस्य भोद्विजाः ॥ आत्मनैक
मनाभूत्वा तथैव परिपालयेत् ॥ ९ ॥ त्रिवर्गसाधने यत्नः कर्त्तव्यो
गृहमेधिना ॥ तत्संसिद्धौ गृहस्थस्य सिद्धिरत्र परत्र च ॥ १० ॥
पादेनापिच पारक्यं कुर्य्याच्छ्रेयः स्वमात्मवान् ॥ अर्द्धेन चात्मभ
रणं नित्यनैमित्तिकानि च ॥ ११ ॥ पादेनैव तथा न्यस्य मूलभूतं
विवर्द्धते ॥ एव माचरतो विप्रा अर्थं साफल्यमृच्छति ॥ १२ ॥ त
द्वत्पापनिषेधार्थं धर्मः कार्य्यो विपश्चिता ॥ परत्रार्थं तथा कार्य्यो
यश्च तत्र फलप्रदः ॥ १३ ॥ प्रत्यवायभया त्काम स्तथान्येवा विरो
धकृत् ॥ द्विधा कामः परिचित स्त्रिवर्गाय विरोधकृत् ॥ १४ ॥ पर
स्परानुबद्धांश्च सर्वानेता न्विचिन्तयेत् ॥ समुत्थाय तथाचम्य प्राङ्मु
खो नियतः शुचिः ॥ १५ ॥ पूर्वां संध्यां सनक्षत्रां पश्चिमां सदिवाक
रां ॥ उपासीत यथान्यायं तथा यत्नेन तान्यपि ॥ १६ ॥ असत्प्रला
पमनृतं वाक्पारुष्यन्तु वर्जयेत् ॥ असच्छास्त्र मसद्वाद मसत्सेवांच

वैद्विजाः ॥ १७ ॥ सायं प्रात स्तथा होमं कुर्वीत नियतात्मवान् ॥
नोद्गास्तमने विम्ब सुद्वीक्षेत विवस्वतः ॥ १८ ॥ केशप्रसाधनादर्श
दन्तधावन मञ्जनं ॥ पूर्वाह्न एव कार्य्याणि देवताना ञ्च तर्प्पण
म् ॥ १९ ॥ ग्रामावास ञ्च तीर्थाणां क्षेत्राणा ञ्चैव वर्त्मनि ॥ वि
ण्मूत्रं नानुतिष्ठेत नकृष्टे नच गोव्रजे ॥ २० ॥ नग्नां परस्त्रियं नेक्षे
न्नपश्ये दात्मनः सकृत् ॥ उदक्यादर्शनं स्पर्शं वर्ज्यं सम्भाषणं त
था ॥ २१ ॥ नाप्सुमूत्रं पुरीषम्बा मैथुनं नसमाचरेत् ॥ नाधितिष्ठे
त्तथा प्राज्ञः पथि पत्राणि वाप्सुवि ॥ २२ ॥ पितृदेवमनुष्याणां भू
ताना ञ्च तथार्च्चनम् ॥ कृत्वा विभवतः पश्चा द्गृहस्थो भोक्तु मर्ह
ति ॥ २३ ॥ प्राङ्मुखोदङ्मुखो वापि त्वाचान्तो वाग्यतः शुचिः ॥
भुञ्जीतान्नं च तच्चित्तो ह्यन्तर्जानुः सदा नरः ॥ २४ ॥ उपघातमृ
तेदोषा न्नान्नस्योदीरये द्बुधः ॥ प्रत्यक्षलवणं वर्ज्यं मत्युस्नापन मेव
च ॥ २५ ॥ नगच्छ न्नापि तिष्ठन्वै विण्मूत्रोत्सर्ग मात्मनः ॥ कुर्वी
तचैव मुच्छिष्टो नकिञ्चिदपि भक्षयेत् ॥ २६ ॥ उच्छिष्टो नालभे
त्किञ्चि त्स्वाध्याय ञ्च विवर्ज्जयेत् ॥ नपश्ये च्च रविं चन्द्रं नचत्रा
णि च कामतः ॥ २७ ॥ भिन्नासन ञ्च शय्याञ्च भाजन ञ्च विव
र्ज्जयेत् ॥ गुरूणा मासनं देयं अभ्युत्थानादिसत्कृतम् ॥ २८ ॥ अनु
कूल न्तथालाप मभिवादनपूर्व्वकं ॥ तथानुगमनं कुर्य्या त्प्रतिकूल
ञ्च संत्यजेत् ॥ २९ ॥ नैकवस्त्र ञ्च भुञ्जीत नकुर्य्या द्देवतार्च्चनं ॥
नावाहये द्द्विजा नग्नौ होमं कुर्वीत बुद्धिमान् ॥ ३० ॥ न स्नायीत

नरो नग्नो नशयीत कदाचन ॥ नपाणिभ्यां सुभाभ्यान्तु कण्डूयीत
शिरस्तथा ॥ ३१ ॥ नचाभीक्ष्णं शिरःस्नानं कार्य्यं निःकारणंनरैः॥
शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदुपस्पृशेत् ॥ ३२ ॥ अनध्यायेषु स
र्वेषु स्वाध्यायञ्च विवर्ज्जयेत् ॥ ब्राह्मणानलगो सूर्य्यं नसेहेत कदा
चन ॥ ३३ ॥ उदङ्मुखो दिवारात्रा वुत्सर्गो दक्षिणामुखः ॥ अा
वाधासु यथाकामं कुर्य्यां न्मूत्रपुरीषयोः ॥ ३४ ॥ दुःकृतं न गुरो
र्ब्रूयात् क्रुद्धं चैनं प्रसादयेत् ॥ परिवादन्नशृणुया दन्येषा मपि कु
र्व्वताम् ॥ ३५ ॥ पन्था देयो ब्राह्मणानां राज्ञो दुःखातुरस्य च ॥
देवालयं चैत्यतरुं तथैव च चतुष्पथम् ॥ ३६ ॥ विद्याधिकं गुरुञ्चैव
वुधः कुर्य्यात्प्रदक्षिणम् ॥ उपान इस्त्रमाल्य ञ्च धृत मन्यैर्न धार
येत् ॥ ३७ ॥ चतुर्द्दश्यां तथाष्टम्यां पञ्चदश्या ञ्च पर्व्वसु ॥ तैला
भ्यङ्गं तथा भोगान् योषित ञ्च विवर्ज्जयेत् ॥ ३८ ॥ दम्भाभिमान
तैक्ष्ण्य ञ्च नकुर्वीत विचक्षणः ॥ मूर्खोन्मत्तव्यसनिनो विरूपा नपि
वातथा ॥ ३९ ॥ न्यूनाङ्गां श्चाधनां श्चैव नोपहासं नदूषयेत् ॥ परस्य
दण्डं नोगच्छे त्प्रौत्यर्थं पुत्रशिष्ययोः ॥ ४० ॥ तद्वन्नोपविशे त्प्राज्ञः
पादेनाकृष्य चासनम् ॥ संयावं कृशरं मांसं नात्मार्थ मुपसाधये
त् ॥ ४१ ॥ सायं प्रातश्च भोक्तव्यं कृत्वा चातिथिपूजनं ॥ कुर्वीत स
ततं विप्रा वर्ज्जये इन्तवीरुधः ॥ ४२ ॥ नोदक्शिरा स्वपेज्जातु नतुप्र
त्यक्शिरा नरः ॥ शिरस्य गस्तिमाधाय शयीताथ पुरन्दरं ॥ ४३ ॥
नवगन्धवतीष्वप्सु स्नायीत न तथोषसि ॥ उपरागे परं स्नान मृते

दिन मुदाहृतम् ॥ ४४ ॥ अपमार्जनव त्स्नातो गात्राण्यम्बरधारि
भिः ॥ न चावधूनये त्केशा न्वाससी नच निर्धुनेत् ॥ ४५ ॥ नानु
लेपन मादद्या न्नस्नातः कर्हिचि द्बुधः ॥ न चापि रक्तवासा स्या
च्चित्रासितधरोपिवा ॥ ४६ ॥ न च कुर्य्या द्विपर्य्यासं वाससो नापि
भूषणैः ॥ वर्ज्यं च विदृशं वस्त्र मत्यन्तोपहतं च यत् ॥ ४७ ॥ को
टकेशावपन्नं च चौर्णं श्वभि रवेक्षितं ॥ पिष्टमांसं वृथा मांसं वर्ज्यं
मांसं च वर्जयेत् ॥ ४८ ॥ नभक्षयेत त्वरितं प्रत्यक्ष लवणानि च ॥
वर्ज्यं चिरोषितं विप्राः शुष्कं पर्युषितं च यत् ॥ ४९ ॥ पिष्टशाके
क्षुपयसां विकारा द्विजसत्तमाः ॥ तथा मत्स्यविकारा श्च नैव वर्ज्या
चिरोषिताः ॥ ५० ॥ उदयास्तमने भानोः शयनञ्च विवर्जयेत् ॥
नस्नातो नैव संविष्टो न चैवान्यमना नरः ॥ ५१ ॥ न चैव शयने नो
र्व्यां मुपविष्टो न शब्दकृत् ॥ न चैकवस्त्रो न चलन् प्रेक्षता मप्रदा
यवा ॥ ५२ ॥ भुञ्जीत पुरुषः स्नातः सायं प्रात र्यथाविधिः ॥ पर
दारानगन्तव्या पुरुषेण विपश्चिता ॥ ५३ ॥ इष्टपूर्त्तायुषं हन्ति पर
दारगति र्नृणां ॥ नहीदृश मनायुष्यं लोके किञ्चन विद्यते ॥ यादृ
शं पुरुषस्येह परदाराभि मर्षणम् ॥ ५४ ॥ देवानां चाग्निकार्य्याणि
तथागुर्वभिवादनं ॥ कुर्वीत सम्यगाचम्य तद्वन्नतु भुजिक्रियां ॥ ५५ ॥
अफेनशब्दगन्धाभि रद्भिरच्छाभि रादरात् ॥ आचमे चैव शुद्धि श्च
प्राङ्मुखोदङ्मुखोपिवा ॥ ५६ ॥ अन्तर्जला दावसथा द्वल्मीका
न्मूषकस्थलात् ॥ कृतशौ चावशिष्टाच वर्जये त्पञ्चवै मृदः ॥ ५७ ॥

प्रचाल्य हस्तौ पादौ च समभ्युक्ष्य समाहितः ॥ अन्तर्जानु स्तथा चामेत्त्रि स्तु चापि वैनरः ॥ ५८ ॥ परिमृज्याद्भि रावर्त्य खानि मूर्द्धानमस्पृशेत् ॥ सम्यगाचम्य तोयेन क्रियां कुर्वीत वैशुचिः ॥ ५९ चुते वलीढे वान्ते च तथा निष्ठीवनादिषु ॥ कुर्य्यादाचमनं स्पृश्य गाञ्च स्पृष्ट्वा कदाचन ॥ ६० ॥ कुर्वीत लम्भनं चापि दक्षिणश्रवणस्य वा ॥ यथाविभवतो ह्येत त्पूर्वाभावे ततः परम् ॥ ६१ ॥ नविद्यमाने पूर्वोक्ते उत्तरप्राप्ति रिष्यते ॥ नकुर्य्याद्दन्तसंघर्षं नात्मनो देहताडनम् ॥ ६२ ॥ स्वप न्नध्याय न्तथा भुञ्जन् स्वाध्याय ञ्च विवर्ज्जयेत् ॥ व्यङ्गिनीं वर्जयेत्कन्यां कुलीना ञ्चापि रोगिणीं ॥ ६३ ॥ उद्वहेत्तिष्टमाञ्चो च सप्तमीं पञ्चमीं तथा ॥ रक्षेद्दारा स्त्यजे दीर्ष्यां तथापि स्वप्नमैथुनौ ॥ ६४ ॥ परोपतापकं कर्म्म जन्तुपीडा ञ्च सर्वदा ॥ उदक्याः सर्व्ववर्णानां वर्ज्या रात्रिचतुष्टयम् ॥ ६५ ॥ स्त्रीजन्मपरिहारार्थं पञ्चमीं चापि वर्जयेत् ॥ ततः षष्ठ्यां व्रजे द्रात्र्यां ज्येष्ठा युग्मासु रात्रिषु ॥ ६६ ॥ विधर्म्मिणो वै पूर्वादौ संध्याकाले च षण्टकः ॥ अपवादो विनीतानां नश्रोतव्यं कथञ्चन ॥ ६७ ॥ नचोत्कृष्ट स्यासन ञ्च नोत्कृष्टस्य प्ररोहयेत् ॥ स्नापिते च वला त्याज्यः कटभूमि सुपेत्य च ॥ ६८ ॥ देववेदद्विजातीनां साधुसत्यमहात्मनां ॥ गुरोः पतिव्रतानां च ब्रह्मयज्ञतपस्विनां ॥ परिवादं नकुर्वीत परिहासं च नो द्विजाः ॥ ६९ ॥ धवलाम्बरसम्वीत तस्मिन् पूर्वविभूषितः ॥ कार्यो नुतै र्निन्दितै र्न नचैवं क्रूरसङ्गिभिः ॥ ७० ॥ ननिस्वै र्न समुद्दिग्नै

नंच दैवपरै नरैः ॥ ७१ ॥ शुद्धदौच्चितभूपाल स्नातका श्वशुरैः स
ह ॥ उत्तिष्ठे द्द्विचिधा चैता न्वर्जये द्गृहमेधिनः ॥ ७२ ॥ सन्ध्य गो
ष्ठार्चनं कृत्वा यथास्थान मनुत्तमं ॥ सम्पूजय न्ततोवह्निं प्रदद्या च्चा
हुती र्द्विजाः ॥ ७३ ॥ प्रथमं ब्रह्मणे दद्या त्प्रजाना म्पतयेततः ॥
तृतीया ञ्चैव गृह्येभ्यः काश्यपाय तथापरम् ॥ ७४ ॥ ततो ऽनुमतये
दद्या द्दत्वा गृहबलिं ततः ॥ पूर्वोजाता नपापांस्तु नित्यकर्मक्रिया
विधौ ॥ ७५ ॥ वैश्वदेवं ततः कुर्या द्बलयः शृणुत द्विजाः ॥ यथा
नैवं विभागन्तु देवा नुद्दिश्य वैपृथक् ॥ ७६ ॥ पर्जन्याय धरित्री
णां दद्यात्तु मणिके त्रयम् ॥ वायवे च प्रतिदिशं दिग्भ्यः प्राच्यादि
शः क्रमात् ॥ ७७ ॥ ब्रह्मणे चान्तरिक्षाय सूर्याय च यथाक्रमम् ॥
विश्वेभ्य श्चैव देवेभ्यो विश्वभूतेभ्य एवच ॥ ७८ ॥ उषसे भूतपतये
दद्या च्चोत्तरत स्ततः ॥ स्वधा च नम इत्युक्त्वा पितृभ्य श्चैव दक्षि
णे ॥ ७९ ॥ कृत्वापसव्यं दातव्यं यन्मे भूतानि भोजनात् ॥ अन्ना
वशेषमिश्रन्वै तोयं दद्या यथाविधि ॥ ८० ॥ देवानां च ततः कुर्या
द्ब्राह्मणानां नमस्क्रियां ॥ अङ्गुष्टोत्तरतो रेषा पाणे र्या दक्षिणस्य
तु ॥ एत द्ब्राह्मत्र मिति ख्यातं तीर्थं माचमनायवै ॥ ८१ ॥ तर्जन्य
ङ्गुष्टयो रन्तः पितृतीर्थं मुदाहृतम् ॥ पितॄणां तेन तोयानि दद्या
न्नान्दीमुखा दृते ॥ ८२ ॥ अंगुल्यग्रं तथा दैवं तेन दिव्यक्रियावि
धिः ॥ तीर्थं कनिष्ठिकामूले कार्यं तच्च प्रजापतेः ॥ ८३ ॥ एवमेभिः
सदा तीर्थै र्न्देवानां जलेनच ॥ नान्दीमुखानां कुर्वीत प्राज्ञः पि

रुडोदकक्रियां ॥ ८४ ॥ प्राजापत्येन तीर्थेन यच्च किंचित्प्रजापतेः॥
युगप ज्जल मग्निं च बिभ्रया न्न विचक्षणः ॥ ८५ ॥ गुरुदेवपितृ
न्देवा न्नच पादौ प्रसारयेत् ॥ नाचक्षीत स्रवन्तीं गां जलं नाञ्जलि
ना पिबेत् ॥ ८६ ॥ शौचकालेषु सर्वेषां गुरुतुल्येषु वाबुधः ॥ नवि
लम्बेत मेधावी नसुखेनानलन्धमेत् ॥ ८७ ॥ तत्र विप्रा नवस्तव्यं य
त्र नास्ति चतुष्टयम् ॥ ऋणप्रदाता वैद्यश्च श्रोत्रियः सजलानदी॥८८
जितभृत्यो नयोपन्नो बलवा न्धर्मतत्परः ॥ तत्र नित्यं वसे त्प्राज्ञः
कुतः कुनृपतौ सुखं ॥ ८९ ॥ पौराः सुसंहिता यत्र सततं न्यायव
र्त्तिनः ॥ शान्तकम्माः ततो लोक स्तत्र वासः सुखोदयः ॥ ९० ॥ य
स्मि न्कृषीवलोराष्ट्रे प्रायशो शान्तिभागिनः ॥ यत्रौषधान्यशेषाणि
वसे त्तत्र विचक्षणः ॥ ९१ ॥ तत्र विप्रानवस्तव्यं यत्र चैत त्त्रयं स
दा ॥ जिगीषु र्बद्धवैर स्तु जनश्च विगतोत्सवः ॥ ९२ ॥ वसे न्नित्यं
सुशीलेषु सहचारिषु पण्डितः ॥ यत्राप्रधृष्यो नृपति र्यत्र शस्यप्र
दा मही ॥ ९३ ॥ इत्येत त्कथित न्विप्रा मया वो हितकाम्यया ॥
अतः परं प्रवक्ष्यामि भक्ष्यभोज्यप्रतिक्रियां ॥ ९४ ॥ भोज्यमन्नं प
र्युषितं स्नेहाक्तं चिरसंभृतम् ॥ अस्नेहा श्चापि गोधूम यवगोरसवि
क्रियाः ॥ ९५ ॥ शशको मषको गोधा स्वाविधौन्सोपशल्यकः ॥
भक्ष्या स्तैते तथा वर्ज्यौ ग्रामशूकरकुक्कुटौ ॥ ९६ ॥ पितृदेवादिशे
षं च श्राद्धे ब्राह्मणकाम्यया ॥ प्रोक्षितं चौषधार्थे च खाद न्मांसं न
दुष्यति ॥ ९७ ॥ शंखाश्मस्वर्णरूप्याणां रज्जिता समवाससां ॥

शाकमूलफलानां च तथा मद्दैलचर्म्मणां ॥ ९८ ॥ मणिवस्त्रप्रवाला
नां तथा मुक्ताफलस्य च ॥ पत्राणां च फलानां च अम्बुना शौच
मिष्यते ॥ ९९ ॥ तथाऽस्मकानां तोयेन यस्य संघर्षणेन च ॥ संहारा
णांच पत्राणां शुद्धि स्तुष्टेनवारिणा ॥ १०० ॥ सूर्पाणा मजिनानां
च मुशलो लूखलस्य च ॥ संहतानां च वस्त्राणां प्रोक्षणा त्संचयस्य
च ॥ १०१ ॥ कल्कानां मप्यशेषाणा मम्बुमच्छौच मिष्यते ॥ अधि
कानां समस्तानां केशानां चैव मिष्यते ॥ १०२ ॥ सिद्धार्थकानां क
ल्केन घर्षणेनापि वापुनः ॥ साधूनां चैव भवति उपधातवसन्त
दा ॥ १०३ ॥ तथा कार्पासिकानां च शुद्धिस्तु जलभस्मना ॥ दा
जदन्तासि शृंगाणां तक्षणा च्छुद्धि रिष्यते ॥ १०४ ॥ पुनः पाकेन
भाण्डानां पार्थिवानां च मेध्यता ॥ शुद्धं भैक्ष्यं कारुहस्तः पण्यं योषि
न्मुखं तथा ॥ १०५ ॥ यथा गतमविज्ञातं दासवर्गेणसत्कृतम् ॥
धान्यं सक्तं चिरातीत मनेकान्तविलं लघु ॥ १०६ ॥ अन्तः प्रभूतं
बालञ्च वृद्धान्तरविचेष्टितं ॥ कर्मांतागारशालां च स्तनद्वयं शुचि
स्त्रियः ॥ १०७ ॥ शूचयंश्च तथैवापः श्रवन्त्यो गन्धवुद्बुदाः ॥ भूमि
र्विशुद्ध्यते काला द्दाहमार्जनगोकुलैः ॥ १०८ ॥ लेपा दुल्लेखना
त्त्वस भस्मना मार्जनादिना ॥ केशकीटकपन्ने च गोघ्राते मक्षि
कामिते ॥ मृदम्बुभस्म वातञ्च क्षेप्तव्यं व्याधिशुद्धये ॥ १०९ ॥ औ
दुम्बरं नाम करेण वारिणा त्रपुसीसयोः ॥ क्षिप्ताम्बुभिस्तु कांस्या
नां शुद्धिः प्रायो द्रवस्य च ॥ ११० ॥ अमेध्याक्तस्य मृत्तोये गंन्धा

पहारणेनच ॥ अमेध्यां स्तैव वर्णानां वर्णगन्धांश्च हारयेत् ॥१११॥
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्। चर्मभाण्डैस्तु धाराभिस्तथा यन्त्रोद्धृतं जलम्॥
सुचि सोत्स्य चाण्डाल कव्यादे विनिपातितं ॥ यथागतं च तैला
दिशुचि गोतृप्तिदं पयः ॥ ११२ ॥ राजाग्निरथ गोच्छायो रश्मयः
पवनो मही ॥ विप्रुषो मक्षिकाद्याश्च दुष्टसंगादिदोषिणः ॥ ११३॥
अजाश्वमुखतो मेध्या नगौर्वत्सस्य वानतो ॥ मातुः प्रस्रावते मेध्यं
शकुनेः फलपातनम् ॥ ११४ ॥ आसनं शयनं यानं तटौ नद्या स्तृ
णानिच ॥ सोम स्तथाम्बुपानैश्च शुद्धन्त्येतानि पक्ववान् ॥ ११५ ॥
रथ्यानां सर्पणं स्नानं क्षुत्पानानां च कर्मसु ॥ आचामेत यथान्या
यं वासोऽन्य त्परिधायवा ॥ ११६ ॥ अज्ञाना मध्यसंस्पर्शो हिरथ्या
कर्द्दमांभसि ॥ यदृष्टावितताना च मेध्यता वायुसंयताः ॥ ११७ ॥
प्रभूतोपहता हृत्वा दग्रमुद्धृत्य सन्त्यजेत् ॥ शेषस्य प्रोक्षणं कुर्यादा
दावद्भि स्तथा मृदः ॥ ११८ ॥ उपवास स्त्रिरात्रंस्तु दुष्टभिक्षाशनो
ऽभवत् ॥ अज्ञाने ज्ञानपूर्वेषु नद्दोषाय समेन च ॥ ११९ ॥ उदक्यां
श्वानमग्नां च श्वपिकान्त्यावशायिनः ॥ स्पृष्ट्वा स्नायीत शौचार्थं त
थैव मृतहारिणः ॥ १२० ॥ शवं स्पृष्ट्वा स्निग्धस्नेहं स्नातः शुद्ध्यति
मानवः ॥ आचम्यैवतु निःस्नेहं गामालभ्यार्कमीक्ष्यवा ॥ १२१ ॥ नलं
घये त्तथैवास्वक् स्वादुद्वर्त्तिमनानिच ॥ गृहादुच्छिष्टविण्मूत्र पादां
भस्य क्षिपे द्वहिः ॥ १२२ ॥ पञ्च पिण्डा ननुद्धृत्य नस्नाया त्परवारि
णि ॥ स्नायीत देवखातेषु गंगाहृदि सरित्सु च ॥ १२३ ॥ नोद्यानादौ
विकालेषु प्राज्ञ स्तिष्ठे त्कदाचन ॥ नालभे ज्जनविद्विष्टा न्वीरहीना

स्तथा स्त्रियः ॥ १२४ ॥ देवतापितृसच्छास्त्रयज्ञिसव्यादिनन्दिकैः॥
कृत्वा तु स्पर्शनालापं शुद्ध्या कस्य विलोकनात् ॥ १२५ ॥ अवलोच्यं
तथा दिव्यं सन्यस्तं पतितं भवं ॥ विधर्मस्तुतिमाखण्ड विवस्त्रात्या
वशायिनः ॥ १२६ ॥ हतनिर्यातका सैव परदाररता सये ॥ एतदें
वहि कर्त्तव्यं प्राज्ञैः सोधन मात्मनः ॥ १२७ ॥ अभोज्यभिक्षुपाखं
ण्डमार्जाराखुवककुक्कुटान् ॥ पतितापविचाण्डालं हतहार ञ्च धर्म
वित् ॥ १२८ ॥ संस्पृश्य शुद्ध्यते स्नाना दुदक्याग्रामशूकरौ ॥ तद्व
च सूषिकाशौचं दूषितं पुरुषायवै ॥ १२९ ॥ यस्य चानुदिनं हानि
र्गृहे नित्यस्य कर्मणः ॥ यस्तु ब्राह्मणसंत्यक्तः किल्बिषो स नराध
मः ॥ १३० ॥ नित्यस्य कर्मणो हानिं नकुर्वीत कदाचन ॥ तस्य त्वा
चरणे वद्धं केवलं हतजन्मसु ॥ १३१ ॥ दशाहं ब्राह्मण स्तिष्ठे द्दा
नहोमादिवर्ज्जितम् ॥ क्षत्रियो द्वादशाहे च वैश्यो मासार्द्ध मेव
च ॥ १३२ ॥ शूद्रस्य मास मासीत नित्यकर्मविवर्ज्जितः ॥ परस्परं
निजं कर्म्म कुर्युः सर्वं यथोदितम् ॥ १३३ ॥ प्रेताय सलिलं देयं व
हिर्गत्वा तु गोत्रकैः ॥ गोत्रकैस्तु क्रियाः सर्व्वाः कार्याः सञ्चयना
त्परम् ॥ स्पर्श एव सपिण्डानां हताहानि तथोभयोः ॥ अक्षमिच्छ
यशस्त्वन्ते तेजोवर्द्धनवक्लिषु ॥ १३५ ॥ विषप्रतापादिभूते प्रजानाश
कयो रपि ॥ वाले देशान्तरस्थे च तथा प्रव्रजिते हते ॥ सद्यः शौ
चं मनुष्यस्य त्र्यहस्तुक्त मशौचकम् १३६ ॥ सपिण्डानां सपिण्डैस्तु
हतेत्यस्मि न्हतोयदि ॥ पूर्व्वशेषं समाख्यातं काय्यों तत्रदिनैःक्रि

था ॥ १३७॥ एवमेव विधि र्दृष्टो जन्मन्यपिहिसूतके ॥ सपिण्डानां सपिण्डेषु यथा वच्चोदकेषु च ॥ १३८ ॥ जाते पुत्रे पितुः स्नानं स चैलस्य विधीयते ॥ तत्रापि यदि वान्यस्मि न्ननुपाते तथापरं ॥ १३९॥ तत्रापि शुद्धि रुदिता पूर्व्वजन्मदतो दिनैः ॥ दश द्वादश मासार्द्ध माससंख्यै र्गतिः सदा ॥ १४० ॥ स्वस्वकर्म क्रियाः कुर्युः सर्वे वर्णा द्विजातयः ॥ प्रेत मुद्दिश्य कर्त्तव्य मेकोद्दिष्ट मतः परम् ॥ १४१ ॥ दानानि चैव देयानि ब्राह्मणेभ्यो मनीषिभिः ॥ यदा दिष्टतमं लोके यच्चास्य दयितं गृहे ॥ १४२ ॥ तत्त द्गुणवते देयं तदेवाक्षय मिच्छ ता ॥ पूर्णैस्तु दिवसैः स्पृष्ट्वा शालिनं वाहनं बुधैः ॥ १४३ ॥ प्रतो ददण्डौ च तदा सर्वे वर्णाः कृतक्रियाः ॥ कुर्युः समुद्राः शुचिनः परत्रेह च भूतये ॥ १४४ ॥ अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चि ता ॥ धर्मतो धनमाहार्य्यं द्रव्य ञ्चापि प्रयत्नतः ॥ १४५ ॥ येन प्र कुपितो नात्मा जुगुप्सां नैति भो द्विजाः ॥ तत्कर्त्तव्य मशंकेन यन्न गोप्यं महाजनैः ॥ १४६ ॥ एव माचरतो विप्राः पुरुषस्य गृहे वस न् ॥ यशःकीर्त्तिप्रदं नृणां तेजोबलविवर्द्धनम् ॥ १४७ ॥ अनुष्ठेयं स दा सद्भिः स्वर्गसाधन मुत्तमैः ॥ ज्ञातव्यं सुप्रयत्नेन सम्यक् श्रेयोभि कांक्षिभिः ॥ १४८ ॥ ज्ञात्वैवं यः सदाकाल मनुष्ठानं करोतिवै ॥ सर्व्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥ १४९ ॥ सारा त्सा रतरं चेद माख्यानं द्विजसत्तमाः ॥ श्रुतिस्मृत्युदितं धर्मं नदेयं यस्य कस्यचित् ॥ १५० ॥ न नास्तिकाय दातव्यं न दुष्टमतये

द्विजाः ॥ नदाम्भिकाय मूर्खाय नकुतर्कप्रलापिने ॥ १५१ ॥
इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे सदाचाराध्यायो नामै
कादशोत्तरशततमः ॥ १११ ॥

—०—

मुनयऊचुः ॥ श्रोतु मिच्छामहे ब्रह्मन् वर्णधर्मा न्विशेषतः ॥ चतुराश्रमधर्मांश्च द्विजवर्य्य ब्रवीहिनः ॥ १ ॥ व्यासउवाच ॥ ब्राह्म णक्षत्रियविशां शूद्राणा ञ्च यथाक्रमं ॥ शृणुध्वं संयता भूत्वा वर्ण धर्मा न्मयोदितान् ॥ २ ॥ दानं दया तपोदेव यज्ञैः स्वाध्यायतत्प रः ॥ नित्योदको भवे द्विप्रः कुर्य्या च्चाग्निपरिग्रहं ॥ ३ ॥ हत्यर्थं जी वये च्चान्या नन्या नध्यापये त्तथा ॥ कुर्युः परिग्रहादानं सत्यर्थंन्या यतो द्विजाः ॥ ४ ॥ सर्व्वलोकहितं कुर्य्या न्नाहितं कस्यचि द्विजाः ॥ दानानि दद्या दिच्छातो द्विजेभ्यः क्षत्रियोऽपिहि ॥ ५ ॥ यज्ञेतु वि विधै र्यज्ञै रधीयीत ततो द्विजाः ॥ शस्त्राजीवो महीरक्षा प्रवरात स्यजीविका ॥ ६ ॥ तस्यापि प्रथमे काले पृथिवी परिपालनं ॥ धरि त्रीपालने नैव कृतकृत्यो नराधिपः ॥ ७ ॥ भवन्ति नृपते रक्षा प्रा पको दिवि कर्मणां ॥ दुष्टानां शासनं चापि शिष्टानां परिपालना त् ॥ ८ ॥ प्राप्नोत्यभिमतान् लोकान् वर्णसंस्थापको नृपः ॥ पशुपा ल्यञ्च वाणिज्यं कृषिं च मुनिसत्तमाः ॥ वैश्यायजीविकां ब्रह्मा ददौ लोकपितामहः ॥ ९ ॥ तस्याप्यध्ययनं यज्ञो दानधर्मं च शस्य ते ॥ नित्यनैमित्तिकादीना मनुष्ठान ञ्च कर्मणां ॥ १० ॥ द्विजाति

संश्रयं कर्म तदर्थं तेन पोषणं ॥ ऋतुकाले च गमनं स्वदारे च द्वि जोत्तमाः ॥ ११ ॥ अनसूया च सामान्या वर्णानां कथिता गुणाः ॥ आश्रमाणा ञ्च सर्वेषा मेत त्सामान्यलक्षणम् ॥ १२ ॥ गुणा स्तथो पधर्मा श्च विप्रादीना मिमे द्विजाः ॥ तद्देवार्यादि कर्त्तव्यं न कुर्य्या त्कर्म संकरम् १३ ॥ इत्येते कथिता विप्रा वर्णधर्माः सनातनाः ॥ ध र्ममाश्रमिणां सम्य ग्ब्रुवतो मे निबोधत ॥ १४ ॥ बालः कृतोपनयनो वेदाहरणतत्परः ॥ गुरो गृंहे वसन्विप्रा ब्रह्मचारी समाहि तः ॥ १५ ॥ शौचाचारवता तत्र कार्य्यं सुश्रूषणं गुरोः ॥ व्रतानि चरिता ग्राह्या वेदविद्भिः सनातनाः ॥ १६ ॥ उभे संध्ये रविं विप्रा स्तथैवाग्निं समाहितः ॥ उपतिष्ठे त्तथा कुर्य्या द्गुरो रप्यभिवादन म् ॥ १७ ॥ स्थिते एष्टे व्रजे याति नीचै राशीत वाग्यतः ॥ शिष्यो गुरो र्द्विजश्रेष्टाः प्रतिकूलं न संचरेत् ॥ १८ ॥ तेनैवोक्तं पठे द्वेदं नान्यचित्तः पुरः स्थितः ॥ अनुज्ञात ञ्च भिक्षान्न मश्नीया द्गुरुणा ततः ॥ १९ ॥ अवगाहे दपः पूर्व्व माचार्य्येणावगाहिते ॥ समिज्ज लादिकं चास्य कल्यं कल्य मुपानयेत् ॥ २० ॥ गृहीते गृह्यवेद ञ्च ततोऽनुज्ञा मवाप्यवै ॥ गार्हस्थ्य मावसे त्प्राज्ञो निष्पन्नगुरुनिःकृ तिः ॥ २१ ॥ विधिनावा प्तदारस्तु धनं प्राप्तं स्वकर्मणा ॥ गृहस्थ कार्य मखिलं कुर्य्या द्विप्रः स्वशक्तितः ॥ २२ ॥ निर्वापेन पितॄ न र्च्चयेन् यज्ञै र्देवां स्तथातिथीन् ॥ अन्नै र्मुनीं स्तथा साध्यै रपत्येन प्रजापतीन् ॥ २३ ॥ वलिकर्मणा च भूतानि वात्सल्येनाखिलंजगत् ॥

प्राप्नोति लोकान् पुरुषो निजकर्मसमार्जितान् ॥ २४ ॥ भिक्षां भु
क्त्वा ये केचित्परिव्राड्ब्रह्मचारिणः ॥ तेप्यत्रैव प्रतिष्ठन्ते गार्हस्थ्यस्ते
नवै परम् ॥ २५ ॥ वेदाहरणकार्येण तीर्थस्नाना च ये द्विजाः ॥ अ
टन्ते वसुधां विप्राः पृथिवीदर्शनाय च ॥२६ ॥ अनिकेता ह्यनाहारा
येतु सायं गृहास्तुते ॥ तेषां गृहस्थाः सततं प्रतिष्टा योनि रेव
च ॥ २७ ॥ तेषां च स्वागतादीनि वक्तव्यं मधुरं सदा ॥ गृहाग
तानां दद्याच्च स्थानमासनभोजनम् ॥ २८॥ अतिथि र्यस्य भग्नाशो
गृहा त्प्रतिनिवर्त्तते ॥ स दत्वा दुःकृतं तस्मै पुण्य मादाय गच्छ
ति ॥ २९ ॥ अवज्ञान महङ्कारो दम्भ श्चापि गृहे वसन् ॥ परिता
पोपघातौ च पारुष्यं न प्रशस्यते ॥ ३० ॥ यस्तु तस्य करोत्येव गृह
स्थः परमां विधिं ॥ सर्व्वबन्धविनिर्मुक्तो लोका नाप्नोति चोत्तमा
न् ॥ ३१ ॥ वयःपरिणतो विप्राः कृतकृत्यो गृहाश्रमी ॥ पुत्रेषु भा
र्य्यां निक्षिप्य वनं प्राया त्सहैववा ॥ ३२ ॥ पर्णमूलफलाहारः केश
स्मश्रुजटाधरः ॥ भूमिशायी भवेत्तत्र मुनिः सर्वातिथि र्द्विजाः ॥ ३३
चर्मकाशकुशैः कुर्य्या त्परिधानोत्तरीयके ॥ तद्व न्त्रिषवणं स्नानं स
स्तमस्य द्विजोत्तमाः ॥ ३४ ॥ देवताभ्यर्चनं होमः सर्वाभ्यागतपू
जनं ॥ भिक्षा च बलिदान ञ्च शस्त मस्य प्रशस्यते ॥ ३५ ॥ वन्य
स्नेहेन गात्राणा मभ्यङ्ग श्चापि शस्यते ॥ तप स्तस्य च विपेन्द्राः शी
तोष्णादिसहिष्णुता ॥ ३६ ॥ यमेव नियत श्चार्य्यो वानप्रस्थं चरे
न्मुनिः ॥ स दहत्यग्निव द्दोषान् जये ल्लोकांश्च शाश्वतान् ॥ ३७ ॥

चतुर्थ स्वाश्रमो भिक्षोः प्रोच्यतेच मनीषिभिः ॥ तस्य स्वरूपं वदतो बुध्यध्वं मुनिसत्तमाः ॥ पुत्रद्रव्यकलत्रेषु त्यजेत्स्नेहं द्विजोत्तमाः ॥ चतुर्थाश्रमसंस्थानं गच्छेन्निर्धूतमत्सरः ॥ ३९ ॥ त्रैवर्गिकां स्त्यजेत्सर्वा नारम्भा न्द्विजसत्तमाः ॥ मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु ॥ ४० ॥ जरायुजाण्डजादीनां वाङ्मनःकर्मभिः क्वचित् ॥ युक्तः कुर्वीतनद्रोहं सर्व्वसंगांश्च वर्जयेत् ॥ ४१ ॥ एक रात्रिस्थिति ग्रामे पञ्चरात्रिस्थितिः पुरे ॥ तथा तिष्ठेद्यथा प्रीति र्द्वेषो वास्य नजायते ॥ ४२ ॥ प्राणयात्रानिमित्तं च व्यङ्गारेभुक्तिवर्जने ॥ काले प्रशस्तग्रामेषु भिक्षार्थं पर्यटे द्गृहान् ॥ ४३ ॥ अलाभेनविषादः स्या ल्लाभत्वेनतु हर्षयेत् ॥ प्राणयात्रिकमात्रं स्यान्मात्रासङ्गा द्विनिर्गतः ॥४४॥ अभिपूजितलाभेच्च यति र्मुक्तोपिवध्यते ॥ कामःक्रोध स्तथा दर्प्पो लोभमोहादय स्चये ॥ ४५ ॥ तांस्तु दोषान् परित्यज्य परिव्रज्यमनाभवेत् ॥ अभयंसर्व्वसत्वेभ्योभय मुत्पद्यते क्वचित्॥४६॥ कृत्वाग्निहोत्रं स्वशरीरसंस्थं शरीरमग्निं स्वमुखेजुहोति ॥ विप्रस्तु भैक्ष्योपगतै र्हविर्भि श्चिताग्निनास व्रजतिस्म लोकान् ॥ ४६ ॥ मोक्षाश्रमं यस्च रते यथोक्तं शुचिस्वसंकल्पितबुद्धियुक्तः ॥ अनिन्धनं ज्योतिरिव प्रशान्तं सब्रह्मलोकं जयति द्विजातिः ॥ ४८ ॥

इत्यादिब्रह्मपुराणे व्यासर्षिसम्वादे वर्णाश्रमधर्मवर्णनं नाम द्वादशोत्तर शततमोऽध्यायः ॥ ११२ ॥

—०—

मुनय ऊचुः ॥ सर्व्वज्ञ स्त्वं महाभाग सर्व्वभूतहितेरत ॥
भूतं भव्यं भविष्य ञ्च नतेस्त्यविदितं मुने ॥ १ ॥ कर्मणा केन व
र्णाना मधमा जायते गतिः ॥ उत्तमा च भवे त्केन ब्राह्मणत्वं म
हामते ॥ २ ॥ शूद्रस्तु कर्मणा केन ब्राह्मणत्वं नियच्छति ॥ श्रोतु
मिच्छामहे केन ब्राह्मणः शूद्रता मियात् ॥ ३ ॥ व्यास उवाच ॥
हिमवति गिरौरम्ये नानाधातुविभूषिते ॥ नानाद्रुमलताकीर्णे ना
नाश्चर्यसमन्विते ॥ ४ ॥ तत्रस्थितं महादेवं त्रिपुरघ्नं त्रिलोचनं ॥
शैलराजसुता देवी प्रणिपत्य सुरेश्वरम् ॥ ५ ॥ इमं प्रश्नं पुरा
विप्रा अपृच्छ च्चारुलोचना ॥ तदहं संप्रवक्ष्यामि शृणु ध्वं मुनिसत्त
माः ॥ ६ ॥ उमोवाच ॥ भगवन्भगनेत्रघ्न पूष्णोदन्तविशातन॥ द
क्षक्रतुहरत्र्यक्ष संशयो मे महानयम् ॥ ७ ॥ चातुर्वर्ण्यं भगवता पू
र्वंसृष्टं स्वयम्भुवा ॥ केन कर्मविपाकेन वैश्यो गच्छति शूद्रतां ॥ ८ ॥
वैश्यो वाक्षत्रियः केन द्विजो वाक्षत्रियो भवेत् ॥ प्रतिलोमे कथंदेव
शक्यो धर्मो निवर्जितम् ॥ ९ ॥ केनवा कर्मणा विप्रः शूद्रयोनौ प्र
जायते ॥ क्षत्रियः शूद्रता मेति केनवा कर्मणा विभो ॥ १० ॥ एत
न्मि त्संशयो देव वद भूतपते तथा ॥ त्रयो वर्णाः प्रकृत्येह कथंब्रा
ह्मण्य माप्नुयुः ॥ ११ ॥ महादेव उवाच ॥ ब्राह्मण्यं देवि दुःप्राप्यं
निसर्गा द्ब्राह्मणाः शुभाः ॥ क्षत्रियो वैश्यशूद्रौवा निसर्गा दिति मे
मतिः ॥ १२ ॥ कर्मणा दुःकृतेनेह स्थाना द्भ्रश्यन्ति वैद्विजाः ॥ श्रेष्ठं
वर्ण मनुप्राप्य तस्मा दाक्षेप्यते द्विजाः ॥ १३ ॥ स्थितो ब्राह्मण ध

र्मेण ब्राह्मण्य मुपजीवति ॥ क्षत्रियो वाथ वैश्योवा ब्रह्मभूयं स ग
च्छति ॥ यस्त्र विप्रत्वमुत्सृज्य क्षात्रं धर्मं निषेवते ॥ तस्य क्षत्रत्व मा
पन्नं क्षत्रयोगः प्रजायते ॥ १५ ॥ वैश्यकर्मा च योविप्रो लोभमोह
व्यपाश्रयः ॥ ब्राह्मण्यं दुर्लभं प्राप्य करोत्यन्यमतिः सदा ॥ १६ ॥
सद्विजो वैश्यता मेति वैश्योवा शूद्रता मियात् ॥ स्वधर्मात्प्रच्युता
विप्रा स्ततः शूद्रत्व माप्नुते ॥ १७ ॥ तत्रासौ निरयं प्राप्तो वर्णभ्र
ष्टो बहिःकृतः ॥ ब्रह्मलोका त्परिभ्रष्टः शूद्रत्व मुपजायते ॥ १८ ॥
क्षत्रियोवा महाभागे वैश्योवा धर्मचारिणि ॥ स्वानि कर्माण्यपाकृ
त्यशूद्रकर्म निषेवते ॥ १९ ॥ स्वस्थाना च्च परिभ्रष्टो वर्णसंकरतांग
तः ॥ ब्राह्मणः क्षत्रियो वैश्यो शूद्रत्व ञ्च निषेवते ॥ २० ॥ यस्तु शू
द्रस्तु कर्मेण ज्ञानविज्ञानवा ञ्छुचिः ॥ धर्मज्ञो धर्मनिरतः स्वधर्म
फल मश्नुते ॥ २१ ॥ इद ञ्चैवापरं देवि ब्राह्मण्यं समुदाहृतं ॥ अ
ध्यात्मनैष्टिकीं सिद्धिं धर्मकामेन वोधितम् ॥ २२ ॥ उग्रान्नमहितं
देवि गणान्नं श्राद्धसूतकं ॥ पिष्टान्नं नैव दातव्यं शूद्रान्नं चैव माक्क
चित् ॥ २३ ॥ शूद्रान्नं गर्हितं देवि सदा प्रोक्तं महात्मभिः ॥ पिता
महमुखोत्सृष्टं प्रमाणमिति मेमतिः ॥ २४ ॥ शूद्रान्नेनावशेषेण ज
ठरेन्निपतिते द्विजाः ॥ आहिताग्नि स्तथा दग्ध्वा समुद्रमिति भागभ
वेत् ॥ ४५ ॥ तेन शूद्रान्नशेषेण ब्रह्मस्थाना दुपाकृतः ॥ ब्राह्मणः
शूद्रता मेति नास्ति तत्र विचारणा ॥ २६ ॥ यस्यान्नेनावशेषेण
जठरे म्रियते द्विजाः ॥ तस्ययोनिं व्रजेद्विप्रो यस्यान्नमुपजीवति ॥ २७

ब्राह्मणत्वं सुखं प्राप्य दुर्लभं योऽवमन्यते ॥ अभोज्यान्नानि यो
श्नाति स द्विजत्वा त्पतेतवै ॥ २८ ॥ सुरापो ब्राह्मणः स्तेयी दा
रोपाप स्ततोऽशुचिः ॥ स्वाध्यायवर्ज्जितः पापी लुब्धो नैःकृतिकः
शठः ॥ २९ ॥ अव्रती वृषलीभर्त्ता कूराशी सोमविक्रयी ॥ विद्दी
नमेव विप्रोहि पतते ब्रह्मयोनितः ॥ ३० ॥ गुरुतल्पी गुरुद्वेषी गु
रुकुत्सारतश्च यः ॥ ब्रह्मद्वेषोपि पतति ब्राह्मणो ब्रह्मयोनितः ॥ ३१ ॥
एभिस्तु कर्म्मभि र्देवि शुभै राचरितै स्तथा ॥ शूद्रो ब्राह्मणतां ग
च्छे द्वैश्यः क्षत्रियतां व्रजेत् ॥ ३२ ॥ शूद्रकर्म्माणि सर्वाणि यथा
न्यायं यथाविधि ॥ शुश्रूषां परिचर्यां यो ज्येष्टवर्णे प्रयत्नतः ॥ ३३ ॥
कुर्य्या द्विजन्मनां श्रेष्टो सततं सप्रतिष्ठति ॥ देवद्विजातिसत्कर्ता
सर्वातिथिकृतो द्विजाः ॥ ३४ ॥ ऋतुकालाभिगामी च नियतो नि
यतात्मनः ॥ भैच स्वै च जनाद्वेषी शेषान्नकृतभोजनः ॥ ३५ ॥
वृथामांसं नभुञ्जीत शूद्रो वृत्तत्व मृच्छति ॥ आनिभावानहंवादी
निर्द्वन्द्वः सामकोविदः ॥ ३६ ॥ यजतेनित्ययज्ञैश्च स्वाध्यायपरमः
शुचिः ॥ दान्तो ब्राह्मणसत्कर्त्ता सर्व्ववर्णावुभूषुकः ॥ ३७ ॥ गृहस्थष्ट
तमातिष्ठ न्द्विकालकृतभोजनः ॥ नेताग्निमात्रविहितं वैश्यो भवति
सद्विजः ॥ ३८ ॥ सवैश्यः क्षत्रियो जातो जन्मप्रभृतिसंस्कृतः ॥ उ
पनीतो व्रतपरो द्विजो भवति संस्कृतः ॥ ३९ ॥ यदातियजतेयज्ञैः
सम्पन्नै श्चापि दक्षिणैः ॥ अधीत्य स्वर्ग मन्विच्छं स्त्रेताग्निशरणः स
दा ॥ ४० ॥ आर्त्तहस्तप्रदो नित्यं प्रजा धर्मेण पालयन् ॥ सत्यस

त्यानि कुरुते नित्यं यः पशुदर्शनः ॥ ४१ ॥ धर्मदण्डेन निर्द्वन्द्वो ध
र्मकामार्थसाधकः ॥ यन्त्रितः कार्यकरणे खड्गाङ्कृतलक्षणः ॥४२॥
अप्यधर्मं नसेवेत स्वच्छन्देनार्थकोविदः ॥ ऋतुकालेतु धर्मात्मा प
त्नीमुपगमेत्सदा ॥ ४३ ॥ सदोपवासो नियतः स्वाध्यायनिरतः स
दा ॥ शूद्राणां चात्र कामानां नित्यं सिद्धि मिति ब्रुवन् ॥ ४४ ॥
स्वार्थाद्वा यदिवा कामा न्नकिञ्चि दुपलक्षयेत् ॥ पितृदेवातिथिकृ
ते साधनं कुरुतेति यत् ॥ ४५ ॥ स्ववेश्मनि यथान्याय मुपास्ते भै
क्ष्यमेव च ॥ त्रिकाल मग्निहोत्र ञ्च जुहूानावै यथाविधि ॥ ४६ ॥
गोब्राह्मणहितार्थाय रणेनाभिमुखो हतः ॥ त्रेताग्निमन्त्रपूतेन स
माविश्य द्विजो भवेत् ॥ ४७ ॥ ज्ञानविज्ञानसम्पन्नः संस्कृतो वेद
पारगः ॥ वैश्यो भवति धर्मात्मा क्षत्रिय स्वेन कर्मणा ॥ ४८ ॥ ए
तैः कर्मफलै र्देवि पूर्वजातिकुलोद्भवः ॥ शूद्रोप्यागमसम्पन्नो द्वि
जो भवति संस्कृतः ॥ ४९ ॥ ब्राह्मणो वाप्यसद्वृत्तः सर्व्वसंस्कारभो
जनः ॥ सद्ब्राह्मण्यं समुत्सृज्य शूद्रो भवति तादृशः ॥ ५० ॥ क
र्मभि र्देवि शुद्धात्मा निःपापो विजितेन्द्रियः ॥ शूद्रोपि द्विजवत्से
व्यः इति ब्रह्मा ब्रवी त्स्वयम् ॥ ५१ ॥ स्वभावकर्मणावापा यत्र शू
द्रोऽधितिष्ठति ॥ विशुद्धः शुद्धजातिर्व्वा विज्ञेयइति मेमतिः ॥५२
उपोभि र्वापि संस्कारो नश्रुति र्नच संस्कृतिः ॥ कारणानि द्विजा
तस्य ब्रत मेवतु कारणम् ॥ ५३ ॥ सर्वोऽपि ब्राह्मणो लोके ब्रतेना
नुविधीयते ॥ ब्रतेस्थितस्तु शूद्रोपि ब्राह्मणत्व ञ्च गच्छति ॥५४॥

ब्राह्मणश्च भवे च्छूद्रो ऽप्येवं वृत्तस्य मे मतः ॥ निर्गुणं निर्मलं ब्रह्म यत स्तिष्ठति स द्विजाः ॥ ५५ ॥ एते ये विमता देवि स्थानभाव निदर्शकाः ॥ स्वय ञ्च वरदेनोक्ता ब्रह्मणा सुव्रतप्रजाः ॥ ५६ ॥ ब्राह्मणोहि महत्क्षेत्रं लोके चरति पादवत् ॥ यस्तत्र बीजं वपति साकृषिः प्रेत्य भाविनी ॥ ५७ ॥ सुदेशेन सदा भाव्यं सत्पथालंविना तथा ॥ ब्राह्मंहि मार्गमाक्रम्य वर्त्तितव्यं बुभूषुणा ॥ ५८ ॥ संहिताध्ययनं भाव्यं गृहे ते गृहमेधिना ॥ नित्यं स्वाध्याययुक्तेन न चाध्यापन जीविना ॥ ५९ ॥ एवंभूतोहि योविप्राः सन्ततं सत्पथे स्थितः ॥ आहिताग्नि रधीयानो ब्रह्मभूयाय कल्पते ॥ ६० ॥ ब्राह्मण्यं देवि संप्राप्य रक्षितव्यं यतात्मना ॥ योनिप्रतिग्रहादानैः कर्मभिश्च शुचिस्मिते ॥ ६१ ॥ एतत्ते गुह्यमाख्यातं यथा शूद्रो भवेद्द्विजः ॥ ब्राह्मणो वाच्युतो धर्मा द्यथा शूद्रत्व माप्नुयात् ॥ ६२ ॥

इत्यादिब्रह्मपुराणे उमामहेश्वरसम्वादे वर्णधर्मविपर्य्ययो नाम त्रयोदशोत्तरशततमोऽध्यायः ॥ ११३ ॥

—०—

उमोवाच ॥ भगव न्सर्व्वभूतेश सुरासुरनमस्कृत ॥ धर्माधर्मैन्नृणां देव ब्रूहि मे संशयं विभो ॥ १ ॥ कर्मणा मनसा वाचा त्रिविधैर्हिनःसदा ॥ बध्यन्ते बन्धनैः केषै र्मुच्यन्तेवाययापुनः ॥ २ ॥ केन शीलेन वैदेव कर्मणा कीदृशेनवा ॥ देवउवाच ॥ देवि धर्मार्थतत्त्वज्ञे धर्मनित्ये सदा उमे ॥ सर्व्वप्राणिहितं प्रश्नं श्रूयतां बुद्धिवर्द्ध

नम्॥ ३॥ सत्यधर्मरताः शान्ताः सर्व्वलिङ्गविवर्जिताः॥ नाधर्मेण
नधर्मेण वर्त्तन्ते छिन्नसंशयाः॥ ४ प्रलयोत्पत्तितत्त्वज्ञाः सर्व्वज्ञाःस
र्व्वदर्शिनः॥ वीतरागा विमुच्यन्ते पुरुषाः कर्मबन्धनैः॥५॥ कर्मणा
मनसा वाचा ये नहिंसन्ति किञ्चन॥ ये नसंयति कस्मिंश्चि त्तेन
वध्यन्ति कर्मभिः॥ ६॥ प्राणानि पाताः कुशलाः शीलवन्तो दया
न्विताः॥ तुल्यद्वेष्याः प्रिया दान्ता मुच्यन्ते कर्मबन्धनैः॥ ७॥ सव
भूतदयावन्तो विश्वास्याः सर्व्वजन्तुषु॥ त्यक्तहिंसाः सदाचारा स्ते
नराः स्वर्गगामिनः॥ ८॥ यतन्ते निर्मला नित्यं परदारविवर्जिताः॥
धर्मलब्धार्थभोक्तार स्ते नराः स्वर्गगामिनः॥ ९॥ परदारेषु ये
नित्यं चारित्रा ब्रह्मलोचनाः॥ जितेन्द्रियाः शीलपरा स्ते नराः
स्वर्गगामिनः॥ १०॥ एष देवकृतो मार्गः सेवितव्यः सदा नरैः॥
असुधादिकृत स्सैव मार्गः सेव्यः सदा वुधैः॥ ११॥ दानकर्मातपोयु
क्तः शीलशौचदयापरः॥ स्वर्गवास मभीप्सन्ति नसेव्य स्तत उत्त
मः॥ १२॥ उमोवाच॥ वाचातु वध्यते येन मुच्यते ह्यथवा पुनः॥
तानि कर्माणि मेदेव वद भूतपतेऽनघ॥ १३॥ महेश्वर उवाच॥
आत्महेतोः परार्थम्वा स्वधर्माश्रया स्तथा॥ ये म्टषां न वदन्त्येव
तेनराः स्वर्गगामिनः॥ १४॥ वृत्यर्थं धर्महेतोर्वा कामकारा स्तथै
वच॥ अन्टतं ये नभाषन्ते तेनराः स्वर्गगामिनः॥ १५॥ श्लक्ष्णांवा
णीञ्च मधुरां मधुरां पापवर्जिताम्॥ स्वागतेनाभिभाषन्ते तेनराः
स्वर्गगामिनः॥ १६॥ परुषं ये न भाषन्ते कटुकं निष्ठुरं तथा॥

अपैशून्यरताः सन्त स्तेनराः स्वर्गगामिनः ॥ १७ ॥ पिशुन न्नप्रभा
षन्ते मित्रभेदकरी गिंरः ॥ ऋतमैत्रन्तु भाषन्ते तेनराः स्वर्गगामि
नः ॥ १८ ॥ ये वर्जयन्ति परुषं परद्रोहञ्च मानवाः ॥ सर्व्वभूतस
माः शान्ता स्तेनराः स्वर्गगामिनः ॥ १९ ॥ शठप्रलापा द्विरता वि
रुद्धपरिवर्जकाः ॥ सौम्यप्रलापिनो नित्यं तेनराः स्वर्गगामिनः ॥ २०
नकोपा द्व्याहरन्तिये वाचं हृदयदारुणं ॥ शान्ति म्वदन्ति ये विप्रा
स्तेनराः स्वर्गगामिनः ॥ २१ ॥ एष वाणीकृतो देवि धर्मः सेव्यः स
दानरैः ॥ शुभसत्यगुणौ नित्यं वर्जनीया मृषा वुधैः ॥ २२ ॥ उमो
वाच ॥ मनसा वध्यते येन कर्मणा पुरुषः सदा ॥ तन्मे ब्रूहि महा
भाग देवदेव पिनाकधृक् ॥ २३ ॥ महेश्वर उवाच ॥ मानसेनेह ध
र्मेण संयुक्तः पुरुषः सदा ॥ स्वर्गं गच्छति कर्माणि तन्मे कीर्त्तयतः
शृणु ॥ २४ ॥ दुःप्रणीतेन मनसा दुःप्रणीततराकृतिः ॥ नरो वध्य
ति येनेह शृणुवा तं शुभानने ॥ २५ ॥ अरण्ये विजने न्यस्तं पर
स्वं दृश्यते यदा ॥ मनसापि नहिन्सन्ति तेनराः स्वर्गगामिनः ॥ २६
ग्रामे गृहेवा यद्द्रव्यं पारक्यं विजने स्थितम् ॥ नाभिनन्दन्ति वै नि
त्यं तेनराः स्वर्गगामिनः ॥ २७ ॥ तथैव परदारां ये कामवृत्तरहो
गतां ॥ मनसापि नहिन्सन्ति तेनराः स्वर्गगामिनः ॥ २८ ॥ शत्रुंच
मित्रञ्च येनित्यं तुल्येन मनसा गिरा ॥ व्रजन्ति मैत्रं संगत्य तेनराः
स्वर्गगामिनः ॥ २९ ॥ श्रुतवन्तो दयावन्तः शुचयः सत्यसंगराः ॥
स्वधनैः परितुष्यन्ते तेनराः स्वर्गगामिनः ॥ ३० ॥ अवैरा ये त्वना

यासा मैत्रीचित्तरताः सदा ॥ सर्व्वभूतदयावन्त स्ते नराः स्वर्गगा
मिनः ॥ ३१ ॥ श्रद्धावन्तो दयावन्तः चमावन्तश्च ये नराः ॥ धर्माध
र्मविदो नित्यं तेनराः स्वर्गगामिनः ॥ ३२ ॥ शुभाना मशुभानाञ्च
कर्मणां फलसञ्चयं ॥ विक्रन्याश्रय ये देवि ते नराः स्वर्गगामि
नः ॥ ३३ ॥ पापादपेता येदेवि येच द्विजपराः सदा ॥ समुत्थानप
रायेच तेनराः स्वर्गगामिनः ॥ ३४ ॥ शुभैः कर्मफलै र्देवि मयैते प
रिकीर्त्तिताः ॥ स्वर्गमार्गपरा भूयः किंत्वं श्रोतुमिहेच्छसि ॥ ३५ ॥
उमोवाच ॥ माहात्म्ये संशयः कश्चित्मत्त्वांप्रति महेश्वर ॥ तस्मात्त्वं
निपुणेनाद्य ममव्याख्यातु मर्हसि ॥ ३६ ॥ केनायु र्लभते दीर्घं क
र्मणा मानुषः प्रभो ॥ उपवासोपि देवेश केनायु र्लभते महत् ॥
चीणायुः केनभवति कर्मणा भुवि मानवः ॥ ३७ ॥ दुःप्रज्ञाः केचि
दाभान्ति केचि दाभान्ति पण्डिताः ॥ ३८ ॥ महाप्रज्ञा स्तथा चा
न्ये ज्ञानविज्ञानभागिनः ॥ ३९ ॥ अल्पबाधा स्तथा केचि न्महाबा
धा स्तथापरे ॥ दृश्यन्ते पुरुषा देव तन्मे व्याख्यातु मर्हसि ॥ ४० ॥
देव उवाच ॥ हन्ततेऽहं प्रवक्ष्यामि देवि कर्मफलोदयं ॥ मृत्युलोके
नराः सर्वे ये नप्रीणन्ति पातकम् ॥ ४१ ॥ यो नित्योद्यमितो दण्डै
र्दण्डहस्तो नरः सदा ॥ नित्य मुद्यतशस्त्र श्च हन्ति भूतगणा न्न
रः ॥ ४२ ॥ निर्दयः सर्व्वभूतेभ्यो नित्य मुद्वेगकारकः ॥ अपि कीट
पिपीलाना मशरण्यः सुनिर्घृणः ॥ ४३ ॥ एवम्भूतो नरो देवि नि
रयंप्रतिपद्यते ॥ विपरीतस्तु धर्मात्मा स्वरूपेण हिजायते ॥ ४४ ॥

निरयं याति कर्मात्मा स्वरूपेणाभिजायते ॥ निरयं याति हिंसा त्मा याति स्वर्गं महिंसकः ॥ ४५ ॥ यातनां निरये रौद्रां मतिकृ च्छ्रां लभे न्नरः ॥ यः कश्चि न्निरया त्तस्मा त्समुत्तरति कर्हिचि त् ॥ ४६ ॥ मानुषं लभते वापि हीनायु स्तत्र जायते ॥ पापेन क र्म्मणा देवि बद्धो हिन्सारति र्न्नरः ॥ ४७ ॥ अप्रियः सर्व्वभूतानां हीनायु रुपजायते ॥ शुभेन कर्म्मणा देवि विप्र विद्याविवर्जितः ॥ ४८॥ निःक्षिप्तशस्त्रो निर्द्दण्डो नहिंसति कदाचन ॥ नघातयति नोहन्ति घ्नन्तं नैवाब्रवी दिति ॥ ४९ ॥ सर्व्वभूतेषु सस्नेहो यथात्मनि तथा परे ॥ ईदृशः पुरुषोत्कर्षो देवि देवत्व मश्नुते ॥ ५० ॥ उपपन्नान् शुभान् भोगान् सचाश्नाति मुदायुतः ॥ अथचे न्मानुषे लोके कदा चिदुपपद्यते ॥ ५१ ॥ येच दीर्घायुषां मार्गाः सुव्रतानां सुकर्मणां ॥ प्राणिहिन्साविमोक्षेण ब्राह्मणाः समुदीरिताः ॥ ५२ ॥

इत्यादि ब्रह्मपुराणे उमामहेश्वरसम्वादे सद्धर्मवर्णने

चतुर्द्दशोत्तरशततमोऽध्यायः ॥ ११४ ॥

—०—

उमोवाच ॥ किंशीलः किंसमाचारः पुरुषः कैश्च कर्मभिः ॥ स्वर्गं समभिपद्येत संप्रदानेन केनवा ॥ १ ॥ महेश्वरउवाच ॥ दाता ब्राह्मणसत्कर्त्ता दीनार्त्तकृपणादिषु ॥ भक्ष्यभोज्यान्नपानानां वास सां च महामतिः ॥ २ ॥ प्रतिश्रयाः सभा कूपाः प्रपाः पुष्करिणी स्तथा ॥ नित्यकादीनि कर्माणि करोति नियतः सदा ॥ ३ ॥ आस

नं शयनं यानं गृहं रत्नं धनं तथा ॥ सस्यजातानि सर्वाणि सुचेत्रा
ण्यथ योजितः ॥ ४ ॥ सुप्रशान्तमना नित्यं यः प्रयच्छति मानवः॥
एवंभूतो नरो देवि देवलोके ऽभिजायते ॥ ५ ॥ तत्रोष्य सुचिरंका
लं भुक्त्वा भोगा ननुत्तमान् ॥ सोऽप्सरोभिश्च मुदितो रमित्वा नन्द
नादिषु ॥ ६ ॥ तस्मा त्स्वर्गाच्च्युतो लोका न्मानुष्य मुपजायते ॥ म
हाभोगकुले देवि धनधान्यसमन्वितः ॥ ७ ॥ तत्र कामगुणैः सर्वैः
समुपेतो मुदायुतः ॥ महाकायो महाभागो धनी भवति मानवः ॥८॥
एते देवि महाभागाः प्राणिनो दानशीलिनः ॥ ब्रह्मणावै पुरा प्रो
क्ताः सर्व्वस्य प्रियदर्शनाः ॥ ९ ॥ अपरे मानवा देवि प्रदानकृपणा
द्विये ॥ येऽन्नानि नप्रयच्छन्ति विद्यमानेष्यवुद्धयः ॥ १० ॥ दीनां श्च
कृपणा न्दृष्ट्वा भिक्षुका नतिथीनपि ॥ याचमाना न्निवर्त्तंते जिह्वा
लोभसमन्विताः ॥ ११ ॥ ते धनानि नवासांसि नभोगां श्चैव काञ्च
नं ॥ नगावो नान्नविकृतिं प्रयच्छन्ति कदाचन ॥ १२ ॥ अप्रलुब्धा
नवेलुब्धा नास्तिका दानवर्जिताः ॥ एवम्भूता नरा देवि निरयं या
न्त्यवुद्धयः ॥ १२ ॥ तेवै मनुष्यतां यान्ति यदा कालस्य पर्ययात् ॥ ध
नरिक्ते कुले जन्म लभन्ते तेऽल्पवुद्धयः ॥ १३ ॥ क्षुत्पिपासापरीता
श्च सर्व्वलोकवहिःकृताः ॥ निराशाः सर्व्वभोगेभ्य अल्पभोगरता न
राः ॥ १४ ॥ आसनार्हस्य येपीठं नयच्छन्त्यल्पवुद्धयः ॥ शुभं वाभिग
तं प्रेम्णा शुश्रूषां नानुभूयते ॥ १५ ॥ अभिमानप्रभूतेन लोभेन
समभाश्रिताः ॥ सन्मान्यां श्चावमन्यन्ते वृद्धान्परि भवन्ति च ॥

एवम्विधा नरा देवि सर्वे निरयगामिनः ॥ १६ ॥ तेचेयदि नरा स्त
स्मान्निरया दुत्तरन्ति च ॥ वर्षपूगै स्ततो जन्म लभंते कुत्सिते कु
ले ॥ १७ ॥ स्वपाकपुष्कसादीनां कुत्सितानाम चेतसां ॥ कुलेषु ते
ऽभिजायन्ते गुरुदृद्धावमानिनः ॥ १८ ॥ नदाम्भी नच मानी यो दे
वतातिथिपूजकः ॥ एवम्भूतो नरो देवि स्वर्गतिं प्रतिपद्यते ॥ १९ ॥
ततो मानुष्य माविश्य विशिष्टकुलजो भवेत् ॥ एष धर्मो मयाप्रोक्तो
विधात्रा स्वयमादिभिः ॥ २० ॥ यस्तु रौद्र समाचारः सर्व्वसत्वभ
यङ्करः ॥ हस्ताभ्यां यदिवा पद्भ्यां रज्जुदण्डेन वापुनः ॥ २१ ॥ लोष्टैः
स्तम्भैस्तु पाशैर्वा जन्तून्यो वाधते शुभे ॥ हिंस्रार्थं निःकृतिप्रज्ञं प्रो
द्वेजयति चैवहि ॥ २२ ॥ उपक्रामति जन्तूंश्च उद्वेग मविजानतः ॥
हस्तपादैः सनियतैः विश्वास्यः सर्व्वजन्तुषु ॥ २३ ॥ न ताडयति द
ण्डेन नलोष्टै नोयुधेन च ॥ नोद्वेजयति भूतानि शुभकर्मा सदा न
रः ॥ २४ ॥ एवंशीलसमाचारः स्वर्गं समुपजायते ॥ तत्रासौ भवते
दिव्ये मुदा वसति देववत् ॥ २५ ॥ सचेत्कर्मक्षया न्मर्त्यो मनुष्येषु
प्रजायते ॥ अल्पायासो निरातङ्कः सुजान सुख मेधते ॥ २६ ॥ सु
खभागी निरायासो निरुद्वेगः सदा नरः ॥ एष देवि सतां मार्गो
वाधा यत्र नविद्यते ॥ २७ ॥ उमोवाच ॥ इमे मनुष्या दृश्यन्ते म
होत्साहाविशारदाः ॥ दुःप्रज्ञा श्चापरे देवि विज्ञानज्ञानवर्ज्जि
ताः ॥ २८ ॥ केन कर्मविपाकेन प्रज्ञावा न्पुरुषो भवेत् ॥ अल्पप्रज्ञो
विरूपाश्च कथंभवति मानवः ॥ २९ ॥ तन्मे त्वं संशयं छिंधिः सर्व

धर्मभृतांवर ॥ जात्यन्धा श्चापरे देव रोगार्त्ता श्चापरे तथा ॥३०॥
नराः षण्डाश्च दृश्यन्ते कारणं ब्रूहि तत्ववै ॥ महेश्वर उवाच ॥ ब्रा
ह्मणा न्वेदविदुषः सिद्धा धर्मरता स्तथा ॥ परिगृह्णन्त्यहरहः कुश
लाकुशलाः सदा ॥ ३१ ॥ वर्ज्जयन्तो ऽशुभं कर्म्म साधयानाः शुभं त
था ॥ लभन्ते स्वर्गतिं नित्य मिहलोके तथा सुखं ॥ ३२ ॥ सचेन्मा
नुष्यतां याति मेधावी तत्र जायते ॥ श्रुतं यत्नानुगं यस्य कल्याणन्तु
प्रजायते ॥ ३३ ॥ परदारेषु येषाम्वै चक्षु र्दुष्टंप्रजायते ॥ तेन दुष्ट
स्वभावेन जात्यन्धा स्ते भवन्तिहि ॥ ३४ ॥ मनसातु प्रदुष्टेन नग्नां प
श्यन्ति ये स्त्रियं ॥ रोगार्त्ता स्ते भवन्तीह विस्मिता श्च तथा द्वि
जाः ॥ ३५ ॥ व्यास उवाच ॥ तत्रासंस्ते मुनिवरा स्त्रिपुरारेः समी
पतः ॥ तीर्थयात्राप्रसंगेन गता स्तस्मिन्गिरौ द्विजाः ॥ ३६ ॥ तेपि
संपूज्य तं देवं शूलपाणिं प्रणेमिरे ॥ पप्रच्छुः संशयं चैव लोकानां
हितकाम्यया ॥ ३७ ॥ मुनय ऊचुः ॥ त्रिलोचन नमस्तेस्तु दक्षक्रतु
विनाशन ॥ पृच्छाम स्त्वां जगन्नाथ संशयं हृदि संस्थितं ॥ ३८ ॥
संसारेऽस्मि न्महाघोरे भैरवे लोमहर्षणे ॥ भ्रमन्ति सुचिरं कालं
पुरुषा श्चाल्पमेधसः ॥ ३९ ॥ येनोपायेन मुच्यन्ते जन्मसंसार बन्ध
नात् ॥ ब्रूहि तच्छ्रोतु मिच्छामः परं कौतूहलं हिनः ॥ ४० ॥ महे
श्वर उवाच ॥ कर्मपाशनिबद्धानां नराणां दुःखभागिनां ॥ नान्यो
पायं प्रपश्यामि वासुदेवात्परं द्विजाः ॥ ४१ ॥ येपूजयन्ति तंदेवं शंख
चक्रगदाधरं ॥ वाङ्मनःकर्मभिः सम्यक् तेयान्ति परमंपदं ॥ ४२ ॥

किंतेषां जीवितेनेह पशुव चेष्टितेन च॥ येषां नप्रवणं चित्तं वासु
देवे जगन्मये॥ ४३ ॥ ऋषय ऊचुः॥ पिनाकिन् भगनेत्रघ्न सर्व्व
लोकनमस्कृत॥ माहात्म्यं वासुदेवस्य श्रोतुमिच्छाम शंकर॥४४॥
महेश्वर उवाच॥ पितामहादपि वरः शाश्वतः पुरुषः परः॥ कृ
ष्णो जाम्बुनदाभासो व्यभ्रे सूर्य्यइवोदितः॥ ४५ ॥ शिव उवाच॥
दशबाहु र्महातेजा देवतारिनिषूदनः॥ श्रीवत्सांको हृषीकेशः स
र्व्वदा देवयूथपः॥ ४६ ॥ ब्रह्मा तस्योदरगतः तस्याहं च शिवो भ
वः॥ शिरोरुहैश्च ज्योतींषि रोमभ्यश्च सुरासुराः॥ ४७॥ ऋषयो
देहसंभूता स्तस्य लोकाश्च शाश्वताः॥ पितामहगृहं साचा त्सर्वंदे
वगृहञ्च सः॥ ४८॥ सोऽस्याः पृथिव्याः कृत्स्नायाः स्रष्टा त्रिभुवने
श्वरः॥ संहर्त्ता चैव भूतानां स्थावरस्य चरस्य च॥ ४९॥ सहि दे
वः परः सोपि देवानाम्बै परं तपः॥ सर्व्वज्ञः सर्व्वसंस्रष्टा सर्व्वगः
सर्व्वतोमुखः॥ ५२॥ नतस्मा त्परमं भूतं त्रिषु लोकेषु किञ्चन॥
सनातनो महाभागो गोविन्द इति विश्रुतः॥ ५१॥ स सर्वान् पा
र्थिवा न्संख्ये घातयिष्यति मानदः॥ सुरकार्य्यार्थं मुत्पन्नो मानुषं व
पुराश्रितः॥ ५२॥ नहि देवगणाः शक्ता स्त्रिविक्रमविनाकृताः॥
भुवने देवकार्य्याणि कर्त्तुं नायकवर्ज्जिताः॥ ५३॥ नायकः सर्व्वभू
तानां सर्व्वभूतनमस्कृतः॥ एतस्य देवनाथस्य देवकार्य्यपरस्यवा॥५४॥
ब्रह्मभूतस्य सततं ब्रह्मर्षिशरणस्य च॥ ब्रह्मा च तस्य नाभिस्थः श
रीरेऽहं च संस्थितः॥ ५५॥ सर्वे सुखं संस्थिता स्च शरीरे तस्य

देवताः ॥ सदेवः पुण्डरीकाक्षः श्रीगर्भः श्रीसहोषितः ॥ ५६ ॥ शा
र्ङ्गचक्रायुधः खड्गी सर्व्वनागरिपुध्वजः ॥ उत्तमेन सुशीलेन शौचे
नच दमेन च ॥ ५७ ॥ पराक्रमेण वीर्य्येण वपुषा दर्शनेन च ॥ आ
रोहेणप्रमाणेन धैर्य्येणार्येण सम्पदा ॥ ५८ ॥ आनृशंस्येन रूपेण ब
लेनच समन्वितः ॥ अस्त्रैः समुदितः सर्वै र्दिव्यैरद्भुतदर्शनैः ॥५९॥
योगमायासहस्राक्षो विरूपाक्षो महामनाः ॥ वाचामित्रजनश्लाघी
ज्ञातिबन्धुव्रतप्रियः ॥ ६० ॥ क्षमावां श्चानहंवादी सदेवो ब्रह्मनाय
कः ॥ भयहर्त्ता भयार्त्तानां मित्राणां नन्दिवर्द्धनः ॥ ६१ ॥ शरण्यः
सर्व्वभूतानां दीनानां पालनेरतः ॥ श्रुतवा नर्थसम्पन्नः सर्व्वभूतनम
स्कृतः ॥ ६२ ॥ समाश्रितानां सुदकृ च्छत्रूणामपि वर्द्धकृत् ॥ नीति
ज्ञः सर्व्वसम्पन्नो ब्रह्मवादी जितेन्द्रियः ॥ ६३ ॥ भवार्थं सर्व्वदेवा
नां वृध्यानयतया पुनः ॥ प्राजापत्ये शुभे मार्गे विस्मिता स्च तथा
द्विजाः ॥ ६४ ॥ येमूढाः सुदुराचारा त्रियोनौ मैथुने रताः ॥ पुरु
षेषु सुदुःप्रज्ञाः क्लीवत्व मुपयान्तिवै ॥ ६५ ॥ पशूंश्च ये निबध्नन्ति ये
चैव गुरुतल्पगाः ॥ प्रकीर्णमैथुना येच क्लीवत्वं यान्तिवै नराः॥६६॥
उमोवाच ॥ अवद्यं केनवै कर्म निरवद्यं तथैव च ॥ श्रेयः कुर्वन्नवा
प्नोति मानवो देवसत्तम ॥ ६७ ॥ महेश्वर उवाच ॥ श्रेयः समन्वि
च्छत सदायः प्रयच्छति च द्विजान् ॥ धर्मान्वेषी गुणाकांक्षी सः
स्वर्गं समुपाश्नुते ॥ ६८ ॥ यदि मानुष्यतां देवि कदाचित्सतु गच्छ
ति ॥ मेधावी धारणायुक्तः प्राय स्तत्राभिजायते ॥ ६९ ॥ एवं देवि

सतां धर्मो गन्तव्यो भूतिकारकः ॥ त्वयाश्चैव हितार्थाय मयावै स
मुदाहृतः ॥ ७० ॥ उमोवाच ॥ अपरे ऽप्यल्पविज्ञाना धर्मविद्वेषि
णो नराः ॥ ब्राह्मणान् वेदविदुष इच्छन्ति परिसर्प्पितुं ॥ ७१ ॥
श्रुतवन्तो नराः केचित् श्राद्धदेवपरायणाः ॥ अव्रता भ्रष्टनियमा
स्तथान्ये राक्षसोपमाः ॥ ७२ ॥ यज्ञे दाने तथैवान्ये निर्होमाश्च त
थापरे ॥ केन कर्मविपाकेन भवन्तीह वदस्व मे ॥ ७३ ॥ महेश्वर
उवाच ॥ आगमाल्लोकधर्माणां यदि पूर्वं विनिर्मितम् ॥ प्रासादना
नुवर्त्तेत दृश्यन्ते दृढसंव्रताः ॥ ७४ ॥ अधर्मं धर्ममित्याहु र्येच मो
हवशंगताः ॥ अव्रता नष्टमर्यादा स्तेप्रोक्ता ब्रह्मराक्षसाः ॥ ७५ ॥
तेचे त्कालकृतोद्योगा त्सम्भवन्तीह मानुषाः॥ निर्धर्मा निर्वषट्कारा
स्तेभवन्ति नराधमाः ॥ ७६ ॥ एष देवि मया सर्व्वः संशयच्छेदना
यते ॥ कुशलाकुशलो नृणां व्याख्यातो धर्मसागरः ॥ ७७ ॥

इत्यादि ब्रह्मपुराणे उमामहेश्वरसम्वादे पञ्चदशोत्तर
शततमोऽध्यायः ॥ ११५ ॥

—०—

व्यास उवाच ॥ श्रुत्वैवं सा जगन्माता भर्त्तु र्वचनमादितः ॥
कृष्णे बभूव सप्रीता भवं पप्रच्छ सादरम् ॥ १ ॥ पार्वत्युवाच ॥
देव देव महादेव भक्तानाञ्च फलप्रद ॥ वक्तुमर्हसि माहात्म्यं कृ
ष्णस्य कलिनाशनं ॥ २ ॥ महादेव उवाच ॥ शृणु देवि प्रवक्ष्या
मि देवधर्मं सुसंस्कृतम् ॥ समुत्पत्स्यति गोविन्दो मनोर्वंशे महात्म

नः ॥ ३ ॥ अंशुर्नाम मनोः पुत्रो ह्यन्तर्द्धान स्ततः परं ॥ अन्तर्द्धा
नाद्धविर्द्धानः प्रजापति रनिन्दितः ॥ ४ ॥ प्राचीनवर्हि र्भविता ह
विर्द्धाना त्प्रभोः सुतः ॥ तस्य प्रचेतःप्रमुखा भविष्यन्ति दशात्म
जाः ॥ ५ ॥ प्राचेतस स्तथा दक्षो भवितेह प्रजापतिः ॥ दाक्षायि
ण्यां स्तथादित्यो मनुरादित्यत स्तथा ॥ मनो श्च वंशे विख्याते सु
द्युम्नश्च भविष्यति ॥ नहुषो भविता तस्मा ययाति स्तस्य चात्म
जः ॥ ७ ॥ यदु स्तस्मा न्महासत्वः क्रोष्टा तस्मा द्भविष्यति ॥ क्रो
ष्टोश्चैव महान्पुत्रो वृजिनीवान् भविष्यति ॥ ८ ॥ वृजिनीवतश्च भ
विता शूर श्चोशीनर स्तथा ॥ तस्य त्ववरजः पुत्रः शूरो नाम भ
विष्यति ॥ ९ ॥ तेषां विख्यातवीर्य्याणां चारित्रगुणशालिनां ॥
दक्षाणां शुचिशुद्धानां वंशे ब्राह्मणसत्तमाः ॥ १० ॥ स शूरः क्षत्रि
यश्रेष्टो महावीर्य्यो महायशाः ॥ स्ववंशविस्तरः कर्त्ता जनयिष्यति मा
नवः ॥ ११ ॥ वसुदेव इतिख्यातं पुत्रमानकदुंदुभिं ॥ तस्य पुत्र श्च
तुर्बाहु र्वासुदेवो भविष्यति ॥ १२ ॥ दाता ब्राह्मणसत्कर्त्ता ब्रह्मभू
तो द्विजप्रियः ॥ यज्ञः सर्व्वस्य यो विद्वान् योजयिष्यति यादवः ॥ १३ ॥
जरासन्धन्तु राजानं निर्जित्य गिरिगह्वरे ॥ सर्वपार्थिवसंस्नाप्यो
भविष्यति सवीर्यवान् ॥ १४ ॥ पृथिव्या मप्रतिहतो धैर्येण च भवि
ष्यति ॥ विक्रमेण च सम्पन्नः सर्वपार्थिवपार्थिवः ॥ १५ ॥ शूरः
संनद्धनो भूतो द्वारकायां वसं स्तथा ॥ पालयिष्यति तां देवीं विजित्य
च वसुन्धराम् ॥ १६ ॥ तं भवन्तः समासाद्य ब्राह्मणाःश्रीजगत्पतिं ॥

अर्च्चयन्तो यथान्यायं ब्रह्माणमिव शाश्वतं ॥ १७॥ योहि मां द्रष्टु
मिच्छेत ब्रह्माणं स्वापितामहं ॥ द्रष्टव्य स्तेन भगवान् वासुदेवः प्रता
पवान् ॥ १८ ॥ दृष्टे तस्मिन्नहं दृष्टो नमेत्रास्ति विचारणा ॥ पि
तामहोवा सुव्यक्त इतिचिन्त्य तपोधनाः ॥ संपश्यन् पुण्डरीकाक्षः
प्रीतियुक्तो भविष्यति ॥ १९ ॥ यश्च तं मानुषो लोके संस्मरिष्यति
केशवं ॥ तस्य कीर्त्तिं जयं श्चैव स्वर्गं श्चैव भविष्यति ॥ २० ॥ धर्मा
णां देशकः साक्षा द्भविष्यति सधर्मवाक् ॥ धर्मविद्भिः सदेवेशो न
मस्कार्यः सदाच्युतः ॥ २१ ॥ धर्मएव सदाहिस्या त्तस्मिन्नभ्यर्च्चिते
विभौ ॥ सहि देवो महातेजाः प्रजाहितचिकीर्षया ॥ २२ ॥ ध
मार्थं पुरुषव्याघ्रः ऋषिकोटिं ससर्जह ॥ ते सृष्टा स्तेन विधिना प
र्व्वते गन्धमादने ॥ २३ ॥ सनत्कुमारप्रमुखा स्तिष्ठन्ति तपसान्वि
ताः ॥ तस्मा त्सर्वाग्रधर्मज्ञो नतस्य द्विजपुङ्गवाः ॥ २४ ॥ वन्दितां
हि सवन्देत मानिनो मानयीतवः ॥ दृष्टं पश्येदहरहः संस्थितःप्रति
संस्मयत् ॥ २५ ॥ अर्च्चित श्चार्चये न्नित्यं सदेवो द्विजसत्तमाः ॥
एवं तस्यानवद्यस्य विष्णोर्वै परमं तपः ॥ आदिदेवस्य महतः सज्ज
नाचरितं सदा ॥ २६ ॥ भवनेऽभ्यर्च्चितो नित्यं देवैरपि सनातनः ॥
अभयेनानुरूपेण प्रापुध्व न्त मनुव्रताः ॥ २७ ॥ कर्मणा मनसा वा
चा सनमस्यो द्विजाः सदा ॥ यत्नवद्भि रवश्योयं द्रष्टव्यो देवकीसु
तः ॥ २८ ॥ एषवै विहितो मार्गो मयावै मुनिसत्तमाः ॥ तं दृष्ट्वा स
र्व्वतो देवा दृष्टाःस्युः सुरसत्तमाः ॥ २९ ॥ महावराहं तं देवं सर्व्व

लोकपितामहं ॥ अहञ्चैव नमस्यामि नित्यमेव जगत्पतिम् ॥ ३० ॥
तत्र व स्थितयं दृष्टं भविष्यति नसंशयः ॥ समस्तंहि वयं देवा स्तस्य
देहे वसामहे ॥ ३१ ॥ तस्यैव चाग्रतो नित्यं स्थिताद्रिनिषयप्रभः ॥
हली वल इतिख्यातो भविष्यति धराधरः ॥ ३२ ॥ त्रिशिरा तस्यदे
वस्य दृष्टोऽनन्तइति प्रभोः ॥ सुपर्णो यस्तु तोर्थेन कश्यपस्यात्मजो
वली ॥ ३३ ॥ अन्तं नैवाशक्तद्रष्टुं देवस्य परमात्मनः ॥ सविशेषो वि
चरते परयावै सुदायुतः ॥ ३४ ॥ अन्तर्वसति भोगेन परिरभ्यवसुन्ध
रां ॥ यएवं विश्रुतोऽनन्तो भगवा न्वसुधाधरः ॥ ३५ ॥ योरामः स
हृषीकेशो ह्यच्युतः सधराधरः ॥ तावुभौ पुरुषव्याघ्रौ दिव्यौ दिव्य
पराक्रमौ ॥ ३६ ॥ द्रष्टव्यौ माननीयौच चक्रलाङ्गलधारिणौ ॥ ए
षवोऽनुग्रहः प्रोक्तो मया पुण्य स्तया पुनः ॥ यद्भवन्तो यदुश्रेष्टं यूय
मीयुः प्रयत्नतः ॥ ३७ ॥

इतिब्रह्मपुराणे शिवर्षिसम्वादे षोडशोत्तरशत
तमोऽध्यायः ॥ ११६ ॥

मुनयऊचुः ॥ अहो कृष्णस्य माहात्म्यमस्माभिस्य श्रुतं प्रभो ॥
सर्व्वपापहरं पुंसां धन्यं संसारनाशनं ॥ १ ॥ सम्पूर्णविधिव द्भक्त्या
वासुदेवं महामुने ॥ कांगतिं यान्ति मनुजा वासुदेवार्चने र
ताः ॥ २ ॥ किं प्राप्नुवन्ति ते मोक्षं किम्वा स्वर्गं महामुने ॥ अन्यथा
किं मुनिश्रेष्ट प्राप्नुवन्त्युभयं फलं ॥ ३ ॥ छेत्तु मर्हसि सर्व्वज्ञ
संशयं नो हृदि स्थितम् ॥ छेत्ता नान्योस्ति लोकेस्मिं स्त्वदृते मुनि

सत्तम ॥ ४ ॥ व्यास उवाच ॥ साधु साधु मुनिश्रेष्ठा भवद्भि र्यद्दुदा
हृतम् ॥ शृणुध्व मनुपूर्व्वेन्वै वैष्णवानां सुखावहं ॥ ५ ॥ दीक्षामा
त्रेण कृष्णस्य नरा मोक्षं लभन्तिवै ॥ किंपुन र्ये सदा भक्त्या पूजय
न्त्यच्युतं द्विजाः ॥ ६ ॥ नतेषां दुर्लभं मोक्षं स्वर्गञ्च मुनिसत्तमाः ॥
लभन्ते वैष्णवाः कामा न्यान्या निच्छन्ति तान्विदुः ॥ ७ ॥ रत्नप
र्व्वतमासद्य नानारत्नं समाददे ॥ स्वेच्छया मुनिशार्दूला स्तथा कृ
ष्णा त्मनोरथान् ॥ ८ ॥ श्रद्धया विधिवत्पूज्य वासुदेवं जगद्गुरुं ॥
धर्मार्थकाममोक्षाणां प्राप्नुवन्ति नराः फलं ॥ ९ ॥ आराध्य तं ज
गन्नाथं विशुद्धेनान्तरात्मना ॥ प्राप्नुवन्ति नराः कामान् सुराणाम
पि दुर्लभान् ॥ १० ॥ येऽर्च्चयन्ति सदा भक्त्या वासुदेवाख्य मव्यय
म् ॥ नतेषां विद्यते किञ्चि द्दुर्लभंहि मनोरथं ॥ ११ ॥ धन्यास्ते पु
रुषा लोके येऽर्च्चयन्ति सदा हरिं ॥ सर्व्वपापहरं देवं सर्व्वकामफ
लप्रदम् ॥ १२ ॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजा स्त
था ॥ संपूज्यते सुखं भुक्त्वा प्राप्नुवन्ति परां गतिम् ॥ १३ ॥ तस्मा
च्छृणुध्वं मुनयो यत्पृच्छत ममानघाः ॥ प्रवक्ष्यामि समासेन गतिं
तेषां महात्मनां ॥ १४ ॥ त्यक्त्वा मानुष्यकं देहं रोगायतन मव्रतं ॥
जरामरणसंयुक्तं जलवुद्बुदसन्निभं ॥ १५ ॥ मांसशोणितदुर्गन्धं वि
ण्मूत्रादि संयुतं ॥ अस्थिस्थूणममेध्यञ्च स्नायुचर्मशिरान्वितं ॥ १६ ॥
कामगेन विमानेन दिव्यगन्धर्व्वनादिना ॥ तरुणादित्यवर्णेन किङ्कि
णीजालमालिना ॥ १७ ॥ उपगीयमाना गन्धर्वै रप्सरोभि रलंकृ

ताः ॥ व्रजन्ति लोकपालानां भवने ते पृथक् पृथक् ॥ १८ ॥ भुवना
नि पृथक् तेषां सर्व्वभोगै रलंकृताः ॥ ततोन्तरिक्षं लोकं ते यान्ति
सर्व्वसुखप्रदम् ॥ १९ ॥ तत्र भुक्त्वा शुभान् भोगान् दशमन्वन्तरं
द्विजाः ॥ तस्मा द्ध्रुवत्र लोकन्तु यान्ति तेवैष्णवा द्विजाः ॥ २० ॥
विंश न्मन्वन्तरं कालं तत्र भुक्त्वा मनोरमान् ॥ भोगानादित्यलोक
न्तु तेयान्ति सुरपूजिताः ॥ २१ ॥ त्रिंशन्मन्वन्तरं तत्र भोगान् भु
क्त्वातिदैवतान् ॥ तस्माद्व्रजन्ति तेवीरा श्चन्द्रलोकं सुखप्रदं ॥ २२ ॥
मन्वन्तराणां तेतत्र चत्वारिंशद्गुणान्वितं ॥ कालं भुक्त्वा शुभान् भो
गान् जरामरणवर्ज्जिताः ॥ २३ ॥ तस्मा न्नक्षत्रलोकन्तु विमानैः
समलंकृतं ॥ व्रजन्ति ते मुनिश्रेष्ठा गुणैः सर्वैरलंकृताः ॥ २४ ॥ म
न्वन्तराणां पञ्चाश द्भुक्त्वा भोगा न्यथेप्सितान् ॥ तस्मा द्व्रजन्ति ते
विप्रा देवलोकं सुदुर्लभम् ॥ २५ ॥ षष्टिमन्वन्तरं याव त्तत्र भुक्त्वा
सुदुर्लभान् ॥ भोगान्वा विविधा न्विप्रा रुद्राप्सरकसमाहृतान् ॥ २६ ॥
शक्रलोकं मुदा तस्मा द्गच्छन्ति सुरपूजिताः ॥ मन्वन्तराणां तत्रैव
भुक्त्वा कालं च सप्तति ॥ २७ ॥ भोगा नुच्चावचा न्दिव्या न्मनसः
प्रीतिवर्द्धनान् ॥ तस्मा द्व्रजन्ति ते लोकं प्राजापत्य मनुत्तमं ॥ २८ ॥
भुक्त्वा तानीप्सितान् भोगा न्सर्व्वकामगुणान्वितान् ॥ मन्वन्तर म
शीति ञ्च कालं सर्व्वसुखप्रदम् ॥ २९ ॥ तस्मात्पैतामहं लोकं या
न्ति ते वैष्णवा द्विजाः ॥ मन्वन्तराणां नवतिं क्रीडित्वा तत्र वै
सुखं ॥ ३९ ॥ इहागत्य पुन स्तस्मा द्विप्राणां प्रवरे कुले ॥ जायन्ति

योगिनो विप्रा वेदशास्त्रार्थपारगाः ॥ ३१ ॥ एवं सर्वेषु लोकेषु भुक्त्वा भोगान्यथासुखं॥ इहागत्य पुनर्यान्त्युपर्युपरि च क्रमात्॥ ३२॥ सम्भवे सम्भवे तेतु शतवर्षं द्विजाः सतः॥ भुक्त्वा यथेप्सितान् भोगान्यान्ति लोकान्तरं ततः ॥३३॥ दशजन्म यदा तेषां क्रमेणैवं प्रपूर्यते ॥ तदा लोकं हरे र्दिव्यं ब्रह्मलोकं ब्रजन्ति ते ॥ ३४ ॥ गत्वा तत्राचयान् भोगान् भुक्त्वा सर्व्वगुणान्वितान् ॥ मन्वन्तरशतं यावज्जन्ममृत्युविवर्ज्जिताः ॥ ३५ ॥ गच्छन्ति भवनं पश्चाद्धराहस्य द्विजोत्तमाः ॥ तिष्ठन्ते सत्वभावेन सर्व्वदेवनमस्कृताः ॥३६॥ ततोयान्तितु तेवीगाः नरसिंहगृहं द्विजाः ॥ क्रीडन्ते तत्र मुदिता वर्षकोट्ययुतानिच ॥३७॥ तदन्ते वैष्णवं यान्ति पुरं सिद्धनिषेवितं ॥ क्रीडन्ते तत्र साहस्र्यान् वर्षाणां प्रयुतानिच ॥ ३८ ॥ ब्रह्मलोकेषु येविप्रा गच्छन्ते साधकोत्तमाः॥ तत्र स्थित्वा चिरं कालं वर्षकोटिशतं वसन् ॥ ३९ ॥ ततो नारायणपुरं यान्तिते साधकेश्वराः ॥ भुक्त्वा भोगांश्च विविधान् वर्षकोट्यर्बुदानिच ॥४०॥ अनिरुद्धपुरं पश्चाद्दिव्यरूपा महाबलाः॥ गच्छन्तिसाधकतराः स्तूयमानाः सुरासुरैः ॥ ४१ ॥ तत्र कोटिसहस्राणि वर्षाणांतु चतुर्द्दश॥ तिष्ठन्ते वैष्णवास्तत्र जरामरणवर्ज्जिताः ॥४२॥ प्रद्युम्नेयं परं पश्चाद्गच्छंते विगतज्वराः॥ तत्र गच्छंति ते विप्रा लचकोटिशतद्वयम् ॥ स्वच्छन्दगामिनो हृष्टा बलशक्तिसमन्विताः ॥ ४३ ॥

इत्यादिब्रह्मपुराणे वैष्णवानां गतिख्यापनो नाम सप्तदशोत्तरशततमोऽध्यायः ॥ ११७ ॥

व्यास उवाच ॥ एकादश्यामुभे पक्षे निराहारः समाहितः ॥
स्नात्वा सम्यग्विधानेन धौतवासा जितेन्द्रियः ॥ १ ॥ सम्पूज्य विधि
वद्विष्णुं श्रद्धया सुसमाहितः ॥ पुष्पधूपै स्तथादिव्यै दींपै र्नैवेद्यकै
स्तथा ॥ २ ॥ उपहारै र्बहुविधै र्जाप्यहोमप्रदक्षिणैः ॥ स्तोत्रै र्ना
नाविधै र्दिव्यै र्गीतै र्वाद्यै र्मनोरमैः ॥ दण्डव त्प्रणिपातै श्च जयश
ब्दै स्तथोत्तमैः ॥ एवं सम्पूज्य विधिव द्रात्रौ कृत्वा च जागरं॥४॥
कथां वा गीतिकां विष्णो र्गाये द्विष्णुपरायणः ॥ याति विष्णोः प
रंस्थानं नरो नास्त्यत्र संशयः ॥ ५ ॥ मुनयऊचुः ॥ प्रजागरे गी
तिकायां फलं विष्णो र्महामुने ॥ ब्रूहि तच्छ्रोतुमिच्छामः परंकौतू
हलं हिनः ॥ ६ ॥ व्यास उवाच ॥ शृणुध्वं मुनिशार्दूलाः प्रवक्ष्या
म्यनुपूर्वशः ॥ गीतिकायां फलं विष्णो र्जागरे यदुदाहृतं ॥ ७॥
अवन्तिनगरीत्येवं वभूव भुवि विश्रुता ॥ तत्रास्ते भगवा न्विष्णुः शं
खचक्रगदाधरः ॥ ८ ॥ तस्यां नगर्यां वसते चाण्डालो गीतकोवि
दः ॥ सद्वृत्तत्रोत्पादितधनो भृत्यानां भरणे रतः ॥ ९ ॥ विष्णुभक्तः
सचाण्डालो मासेमासे दृढव्रतः ॥ एकादश्यां समागम्य सोपवासोऽथ
गीयते ॥ १० ॥ गीतिका विष्णुनामाङ्काः प्रादुर्भावसमाश्रिताः ॥ गां
धारः खड्जनिषदस्वरपञ्चमधैवतैः ॥ ११ ॥ रात्रौ जागरणे विष्णो
र्गाथाभिः सयथामतिः ॥ प्रणामेन प्रणामेन द्वादश्यां कृष्ण मेव
च ॥ जामात्रभागिनेयांश्च भोजयित्वा सकन्यकाः ॥ ततः सपरिवा
रस्तु पश्चा द्भुंक्ते द्विजोत्तमाः ॥ १२ ॥ एवं तस्यासत स्तत्र कुर्वतो

विष्णुप्रीणनं ॥ गीतिकाभि र्विचित्राभि र्वयःप्रतिगतं द्विजाः ॥ १४ ॥
एकदा चैत्रमासेतु कृष्णैकादश्यगोचरे ॥ विष्णुशुश्रूषणार्थाय ययौ
वन मनुत्तमं ॥ १५ ॥ वने जातानि पुष्पाणि गृहीतुं भक्तितत्परः ॥
चिप्रातटे महारण्ये विभीतकतरो रधः ॥ १६ ॥ दृष्टः सराक्षसेना
थ गृहीत स्वापि भक्षितुं ॥ चाण्डाल स्तमथोवाच नाद्य भक्ष्य स्त्व
याह्यहं ॥ १७ ॥ प्रात र्भक्ष्यसि कल्याणसत्यमेष्याम्यहं पुनः ॥ अद्य
कार्य्यं सुमह त्तस्मा न्मुञ्चस्व राक्षस ॥ १८ ॥ स्वसत्येन समेष्यामि
ततः खादस्व मामिति ॥ विष्णुशुश्रूषणार्थाय रात्रिजागरणं मया ॥
कार्यं न तत्र विघ्नम्मे कर्त्तुमर्हसि राक्षस ॥ १९ ॥ तंराक्षसं प्रत्युवाच
स सत्यवचनै र्दृढैः ॥ सत्यमूलं जगत्सर्वं ब्रह्मराक्षस तच्छृणु ॥ २० ॥
सत्येनाहं शपिष्यामि पुनरागमनायच ॥ आदित्य श्चन्द्रमाववह्नि र्वा
यु र्भूमि र्जलं नभः ॥ अहोरात्र मुभे संध्ये विदु र्यन्म मचेष्टित
म् ॥ २१ ॥ परदारेषु यत्पापं परद्रव्यापहारिषु ॥ यच्च ब्रह्महनः
पापं यत्पापं गुरुतल्पगे ॥ २२ ॥ वंध्यापतेश्च यत्पापं यत्पापं वृषली
पतेः ॥ शूलिकस्य च यत्पापं यत्पापं क्रूरकर्म्मिणां ॥ २३ ॥ कृपणस्य
च यत्पापं यच्च वंध्यतिथेरपि ॥ अमावास्याष्टमी षष्ठी कृष्णशुक्लच
तुर्द्दशी ॥ २४ ॥ तेषु यत्पुरणा त्पापं यद्विप्रा व्रजतः स्त्रियं ॥ रज
स्वलां तथा यस्य श्राद्धं कृत्वा स्त्रियं व्रजेत् ॥ २५ ॥ सर्व्वस्वप्नान्तभो
ज्यानां यत्पापं मलभोजने ॥ मित्रभार्यां गच्छताञ्च यत्पापं पिशु
नस्य च ॥ २६ ॥ दम्भमायानुरक्ते च यत्पापं मधुघातिनां ॥ यच्च क

न्याविक्रुत्पापं यच्च गोषु नरान्तते ॥ २७ ॥ स्त्रीबालहन्तु र्यत्पापं य
च्चमिथ्याबभाषिणः ॥ देवदेवद्विजन्टप यच्चसन्धिसतिस्त्रियः॥२८॥
यच्च निन्दयतां पापं गुरुमिथ्योपरै स्तत: ॥ अग्निदायिषु यत्पापंअ
ग्निदायिषुयद्दने ॥ २९ ॥ गूढचेष्टेषु यत्पापं यच्च गोघ्ने द्विजाधमे ॥
यत्पापं परिवेत्तस्तु यत्पापं परिवेदिनः ॥ ३० ॥ तयो र्दातु र्गृहीत
श्च यत्पापं भ्रूणघातने ॥ किञ्चात्र बहुभिः प्रोक्तैः शपथै र्वञ्जभि स्त
व ॥ ३१ ॥ श्रूयतां शपथं भीमं दुर्वाच्यमपि राक्षस ॥ स्वकन्याजी
विने पापं कूटसत्येन साक्षिणि ॥ ३२ ॥ अयाज्ययाजके खण्डे य
त्पापंश्रवणेऽधमे॥प्रव्रज्यवसिते यच्च ब्रह्मचारिणि कामुके ॥ एतैस्तु
पापै र्लिप्येऽहं यदि नेष्यामि तेंतिकम् ॥ ३३ ॥ मातङ्गवचनं श्रुत्वा
विस्मितो ब्रह्मराक्षसः ॥ प्राह गच्छस्व सत्य ञ्च समयं प्रतिपाल
य ॥ ३४ ॥ इत्युक्तः चणदाशेषे स्वपाकः चणदासुतः ॥ समादायाग
मच्चैव विष्णोः सनिलयंततः ॥ ३५ ॥ तानि प्रादा द्ब्राह्मणाय सोपि
प्रक्षाल्यते तदा ॥ विष्णुमभ्यर्च्य निलयं जगाम स तपोधनाः ॥
सोपि मातङ्गदायादः सोपवासस्तु तांनिशां ॥ यो वहि र्वाह्यभूमि
स्थः प्रजागर मुपाकरोत् ॥ ३७ ॥ प्रभातायान्तु शर्वर्यां स्तुत्वादेवं
नमस्यच ॥ सत्यन्तु समयं कर्त्तुं प्रतस्थे यत्र राक्षसः ॥ ३८ ॥
तत्र यांतं पथि नरः प्राह भद्र क्वगच्छसि ॥ सतथा कथय त्सर्वं सो
प्येनं पुनरब्रवीत् ॥ ३९ ॥ धर्मार्थकाममोक्षाणां शरीरं साधन ञ्च
यत् ॥ महता तत्प्रयत्नेन शरीर मिह पालयेत् ॥ ४० ॥

जीवन्धर्मार्थकामसुखं नर स्तथाप्नोति मोक्षं ॥ जीव त्कीर्त्तिमुपैति च भवतिन्हतस्य च काकथा ॥ ४१ ॥ मातङ्ग स्तद्वचः श्रुत्वा प्रत्युवाचार्थहेतुमत् ॥ भद्रसत्यं पुरस्कृत्य गच्छामि सपथाः कृताः ॥ ४२ ॥ तंभूयः प्रत्युवाचासौ दृश्यते मूढधीर्भवान् ॥ किंनश्रुतं तथा साधो मनुना यदुदाहृतं ॥ ४३ ॥ गोस्त्रीद्विजानां परिरक्षणार्थं विवाहकार्ये सुहृदाञ्च धर्मे ॥ प्राणात्यये सर्वधनापहारे पञ्चान्रुतान्याहु रपातकानि ॥ ४४ ॥ धर्मवाक्यं नच स्त्रीषु नविवाहे रिपो स्तथा ॥ वञ्चनेनावहानौ च स्वनाशेऽन्रुतघातके ॥ ४५ ॥ एवं तद्वाक्य माकर्ण्य मातङ्गः प्रत्युवाचह ॥ मैवं वदस्व भद्रंते सत्यं लोकेषु पूज्यते ॥ ४६ ॥ सत्येनावाप्यते सौख्यं यत्किञ्चि ज्जगतीगतं ॥ सत्येनार्कः प्रतपति सत्येनापो रसात्मिकाः ॥ ४७ ॥ ज्वलत्यग्निश्च सत्येन वाति सत्येन मारुतः ॥ धर्मार्थकामसंप्राप्ति र्मोक्ष स्चापि सुदुर्लभं ॥ ४८ ॥ सत्येन जायते पुंसां तस्मा त्सत्यं नसन्त्यजेत् ॥ इत्युक्त्वा सोऽथ मातङ्ग स्तंप्रक्षिप्य नरोत्तमं ॥ ४९ ॥ जगाम तत्र यत्रास्ते प्राणिनां ब्रह्मराक्षसः ॥ विस्मयोत्फुल्लनयनः शिरःकम्पित मब्रवीत् ॥ ५० ॥ साधुसाधु महाभाग सत्यवाक्यानुपालक ॥ नमातङ्ग महं मन्ये भवंतं सत्यलक्षणं ॥ ५१ ॥ कर्मणा तेन मन्ये त्वां ब्राह्मणं शुचिमव्ययम् ॥ तत्किञ्चि त्त्वां भद्रसुखं प्रवक्ष्ये धर्मसंशयम् ॥ ५२ ॥ किंतत्र भवता रात्रौ कृतं विष्णुगृहे वद ॥ तमित्युवाच मातंगः शृणु विष्णुगृहे मया ॥ ५३ ॥ यत्कृतं रजनीभागे याथातथ्यं वदामिते ॥ वि

ष्णोर्देवकुलस्याग्रे स्थितेनामन्त्रमूर्त्तिना ॥ ५४ ॥ प्रजागरं कृतं रा
त्रौ गायता विष्णुगीतिकां ॥ तं ब्रह्मराक्षसः प्राह कियन्तं काल म
च्युते ॥ प्रजागरं विष्णुगृहे कृतं भक्तिमता वद ॥ ५५ ॥ तमच्युवा
चप्रहसन् विंशत्यब्दानि राक्षस ॥ यदहं त्वां प्रवच्यामि तद्भवा न्क
र्त्तुमर्हति ॥ ५६ ॥ एकादश्यां मासि मासि कृतं भद्रप्रजागरं॥
एकरात्रिकृतं साधो ममदेहि प्रजागरं ॥ ५७ ॥ एवंत्वां मोक्षयि
ष्यामि नमोच्यामि कथञ्चन ॥ त्रिसत्येन महाभाग इत्युक्त्वा विर
रामह ॥ ५८ ॥ मातङ्ग स्तमुवाचाथ मयात्मानं निशाचर ॥ नि
वेदितं किमुक्तेन खादस्व स्वेच्छयापि मां ॥ ५९ ॥ तमाह राक्ष
सो भूयो यामद्वयप्रजागरं ॥ सगीत न्मे प्रयच्छस्व कृपां कर्त्तुं त्वम
र्हसि ॥ ६० ॥ मातंगो राक्षसं प्राह किमसम्बन्ध मुच्यते ॥ खाद
स्व स्वेच्छया मां त्वं नप्रदास्ये प्रजागरं ॥ ६१ ॥ मातङ्गवचनं श्रुत्वा
प्राह तं ब्रह्मराक्षसः ॥ कोहि दुष्टो मतिमदो भवा न्दृष्टं समुत्सहे
त् ॥ ६२ ॥ प्रवाधितुं पीडितुम्वा रक्षितं धर्मकर्मणा ॥ दीनस्य पाप
ग्रस्तस्य साधवःसु दयान्विताः ॥ ६३ ॥ तेन मे त्वं महाभाग कृपां
कृत्वा प्रजागरं ॥ यामस्यैकस्यवा देहि गच्छवा निलयं स्वयं ॥ ६४ ॥
तंपुनः प्राह चाण्डालो नयास्यामि निजंगृहं ॥ नचापि तवदास्यामि
कथञ्चि द्यामजागरं ॥ ६५ ॥ तंविहस्याथ चाण्डालं प्रोवाच ब्रह्मरा
क्षसः ॥ रात्र्यवसाने यागीतिः कृता काले शिवालये ॥ ६६ ॥ तस्याः
फलं प्रयच्छस्व त्राहि पापा त्समुद्धर ॥ एवमुक्त स्तदा तेन मातङ्ग

स्तमुवाचह ॥ ६७ ॥ किं पूर्वं भवता कर्म्म वीचितं धर्म्म मंजसा ॥ येन त्वं दोषपापेन सम्भूतो ब्रह्मराक्षसः ॥ ६८ ॥ प्रोवाच दुःखसंतप्तः सुसंस्मृत्य कृतं कृतं ॥ श्रूयतां योऽहमासम्वै पूर्वं यच्च मया कृतम् ॥ ६९ ॥ सोमशर्म्मा इति ख्यातः पूर्वमासमहं द्विजः ॥ पुत्रोऽध्यापनशीलस्य देवशर्म्मणस्य च द्विजः ॥ ७० ॥ केचित्तु यजमानस्य शूद्रमन्नं वहिः कृतः ॥ न्टपस्य वार्म्म शक्तेन यूपकर्मस्वनुष्ठितः ॥ ७१ ॥ अग्नी धृताकरो यज्ञे लोभमोहप्रपीडितः ॥ तस्मि न्परिसमाप्तेतु लोभमोहादनुष्ठितः ॥ ७२ ॥ पशुमारब्धघातेस्मि न्हादशाहं महाक्रतुं ॥ प्रवर्त्तमाने कर्मणि कुचिशूलोऽभव न्मम ॥ ७३ ॥ आपूर्णे दशरात्रेतु समारब्धे तथा क्रतौ ॥ विरूपाचपदोत्पत्या मातृत्वां राचसे चणे ॥ ७४ ॥ स्ततोऽहं तेन दोषेण संभूतो ब्रह्मराचसः ॥ सुखेन मन्त्रहीनेन सूत्रस्वरविवर्ज्जितम् ॥ ७५ ॥ अजानता यज्ञविद्यां यद्यष्टं जपितञ्च यत् ॥ स्तते कर्मविपाकेन संभूतो ब्रह्मराचसः ॥ ७६ ॥ तन्मां पापमहांभोधौ निमग्नंहि समुद्धर ॥ प्रजागरे गीतिकैकां पश्चिमां दातुमर्हसि ॥ ७७ ॥ तमुवाचाथ चाण्डालो यदि प्राणिवधा द्भवान् ॥ निवृत्तिं नरके दद्या स्ततः पश्चिमगीतिकां ॥ ७८ ॥ वाढ मित्यवद त्सोपि मातङ्गोपि ददौ तदा ॥ गीतिकाफलमामन्त्र्य मुहूर्त्तार्द्धंप्रजागरम् ॥ ७९ ॥ तस्मि न्गीतफले दत्ते मातङ्गं ब्रह्मराचसः ॥ प्रणम्य प्रययौ हृष्ट स्तीर्थवर्य्यं पृथूदकं ॥ ८० ॥ तत्रानशनसंकल्पं कृत्वा प्राणा नवाहजत् ॥ राचसत्वा द्विनिर्मुक्तो

गीतिकाफलहृंहितः ॥ ८१ ॥ पृथूदकप्रभावा च्च ब्रह्मलोकं सुदु
ष्करं ॥ दशवर्षसहस्राणि निरातङ्को वस त्ततः ॥ ८२ ॥ तस्यान्ते
ब्राह्मणो जातो भूमौ च स्मृतिवान् वशी ॥ तस्याहं चरितं भूयः
कथयिष्यामि भोद्विजाः ॥ ८३ ॥ मातंगस्य कथाशेषं शृणुध्वं गदतो
मम ॥ राक्षसेतु गते धीमान् गृहमेत्य यथात्मवान् ॥ ८४ ॥ तस्मि
न्ना स्वरितं स्मृत्वा निर्विण्णः शुचिरं त्वसौ ॥ पुत्रेषु भार्य्यां निक्षि
प्य ददौ भूम्यां प्रदक्षिणां ॥ ८५ ॥ कोकामुखा त्समारभ्य यावद्दै
स्कन्ददर्शनं ॥ दृष्ट्वा स्कन्दं ययौ धारां चक्रे चापि प्रदक्षिण
म् ॥ ८६ ॥ ततोऽद्रिवर मागम्य विंध्यमुच्चं शिलोच्चयम् ॥ पाप
प्रमोचनं तीर्थं माससाद सतु द्विजाः ॥ ८७ ॥ स्नानं पापहरे
चक्रे सतु चाण्डालवंशजः ॥ विमुक्तः पापसंघै स्च पूर्व्वजातो रनेक
शः ॥ ८८ ॥ पूर्व्वजन्मन्यभूद्भिक्षुः भिक्षुः संयतवाङ्मनः ॥ यचका
रात्र मतिमा न्वेदवेदाङ्गपारगः ॥ ८९ ॥ एकदा गोषु नगरात् ह्रि
यमाणासु तस्करैः ॥ भिक्षानधूना रजसा भुक्ता तेनाथ भिक्षु
णा ॥ ९० ॥ सतेन भ्रमदोषेण चाण्डालीं योनिमागतः ॥ पापप्र
मोचिनीं स्नातः सम्प्रतो नर्मदातटे ॥ ९१ ॥ मुक्तोऽभू द्ब्राह्मणवरो
वाराणस्या न्त्व भोद्विजाः ॥ तत्रास्य वसतः कैस्तु विशुद्धिः सिद्धपूरु
षैः ॥ ९२ ॥ विरूपजातो वलवा न्योगमायावलान्वितः ॥ तं दृष्ट्वा
सोमहारार्थं मभिवाद्य मुवाचह ॥ ९३ ॥ कुशलं सिद्धपुरुषाः कुत
स्त्वागम्यते चिरात् ॥ एव माभाषित स्तेन ज्ञातोऽह मिति चिन्तय

त्॥ ९४ ॥ प्रत्युवाचाथ वंद्यन्तं स्वर्गलोकादुपागतः॥ नसिद्धं प्राह
मुग्धोसौ किं त्वं वेत्सि त्रिविष्टपे ॥ ९५ ॥ नारायणोरुप्रभवा मुर्वशी
मप्सरां वरां ॥ सिद्ध स्तमाह तां वाचं शक्रं चामरधारिणीं ॥ ९६ ॥
स्वर्गस्याभरणं मुख्य मुर्वशीं तां वराङ्गनां ॥ विप्रः सोपि तदा विप्रा
वभूव सयुधान्वितः ॥ ९७ ॥ वभूव सिद्धोपि ययौ मेरुपृष्टं सुराल
यम्॥ समेत्यैवोर्वशीं प्राह यदुक्तोसौ द्विजेनतु ॥ ९८ ॥ साप्राह तं
सिद्धवरं नाहं काशिपतिं द्विजं ॥ जानामि सत्य मुक्तं ते न चेतसि
ममस्थितम्॥ ९९ ॥ इत्युक्तः प्रययौ सोपि कालेन वहुना पुनः ॥
वाराणसीं ययौ सिद्धो दृष्टो मूर्खेण वैपुनः ॥ १०० ॥ दृष्टो दृष्टः
कलं भूयः किमाहो मूढमागतः ॥ सिद्धोऽब्रवी न्नजानामि मामुवा
चोर्वशी स्वयं ॥ १०१ ॥ सिद्धवाक्यं तत स्तस्मिं भिन्नौष्टपुटसंपुटः ॥
पुनः प्राह कथं वेत्सो त्येवं वाक्यं त्वयोर्वशी ॥ १०२ ॥ वाढमेवं वा
करिष्येत्युक्त्वा सिद्धो दिवं गतः ॥ ददर्श शक्रभवना न्निष्क्रामन्ती म
थोर्वशीं ॥ किन्त्वाह त्वां द्विजवरः साच तं सत्यमब्रवीत्॥ नियमं
किञ्चिदपिह्वि करोतु द्विजसत्तमः ॥ १०४ ॥ येनाहं कर्मणा सिद्धं
तंजानामि नचान्यथा ॥ तदुर्वशी वचोऽभ्येत्य ऊचु मूर्खंद्विजात
ये ॥ १०५ ॥ कथयामास सिद्धस्तु सोपि सन्नियमं ययौ ॥ तवाग्रे
सिद्धपुरुष नियमञ्च कृतं मया ॥ १०६ ॥ नभोक्ष्येऽद्यप्रभृतिवै शक
टंतस्य मोरितं ॥ इत्युक्तः प्रययौ सिद्धः स्वर्गें दृष्टोर्वशी मया ॥ १०७
प्राहासौ शकटं भोक्ष्ये नाद्यप्रभृति कर्हिचित्॥ तं सिद्ध मुर्वशी प्रा

ह ज्ञातोसौ सांप्रतं मया ॥ १०८ ॥ नियमप्रग्रहा देव मूर्खः साधु
प्रकारकः ॥ इत्युक्त्वा प्रययौ शीघ्रं हस न्नारायणात्मजा ॥ १०९ ॥
सिद्धोपि विचचारासौ कामचारी महीतलं ॥ उर्वश्यपि वरारोहा
गत्वा वाराणसीं पुरीं ॥ ११० ॥ मत्स्योदरीजले स्नानं चक्रे दिव्य
वपुर्द्धरा ॥ अथासावपि मूर्खस्तु नन्दो मत्स्योदरीमनु ॥ १११ ॥ ज
गाम च ददर्शासौ स्नापमाना मथोर्वशीं ॥ तां दृष्ट्वा वरवेश्याव
मन्मथक्षोभ मेवच ॥ ११२ ॥ चकार मूर्खचेष्टां च तं ब्रवी च्चोर्वशी
स्वयं ॥ तंमूर्खं सिद्धगदितं ज्ञात्वा सस्मित माहितम् ॥ ११३ ॥ कि
मिच्छसि महाभाग मत्तः शीघ्र मिहोच्यतां ॥ करिष्यामि वच स्तु
थ्यं त्वं विस्रब्धं करिष्यसि ॥ ११४ ॥ मूर्ख उवाच ॥ आत्मप्रदानेन
मम प्राणान् रक्ष शुचिस्मिते ॥ तञ्च प्राहोर्वशी विप्रं नियमस्यास्ति
सांप्रतं ॥ ११५ ॥ त्वं तावत्त्वत्र मप्यत्र तिष्ठस्वागमनं मम ॥ मास
मात्रेण संजाता दर्शितञ्च कृशं द्विजं ॥ ११६ ॥ कृत स्नानं नदीती
रे निराहारं सुराङ्गना ॥ तं दृष्ट्वा निश्चययुतं भूत्वा दृढवपु स्त
तः ॥ ११७ ॥ प्रीतां तामप्युपकृतां शकटं शर्कराहृतं ॥ घृतेन मधु
ना चैव नन्दो मत्स्योदरी मता ॥ ११८ ॥ स्नात्वा च भूमौ वसतोश
कट ञ्च यथार्थतः ॥ तं ब्राह्मणं समाहूय वाक्य माह सुलोच
ना ॥ ११९ ॥ मया तीव्रं विप्रचीर्णं व्रतं येनाथ कारणात् ॥ व्रतांते
निःकृतिं दद्या त्प्रतिग्राही पशोद्विज ॥ १२० ॥ सप्राह किमिदं लो
के दीयते शर्कराघृतं ॥ पुच्छामकण्ठं प्रच्छामि सात्वं भद्रेण मे

द॥ १२१ ॥ सा प्राह शकटे विप्र शर्कराघृतसंयुता॥ सत्वं समादा
यतथा प्राणां स्तर्पय माचिरं॥१२२॥ सतं श्रुत्वाथ संस्मृत्य चुधया
पीडितोपि सन्॥ प्राह भद्रे नगृह्णीष्ये नियमोहि कृतो मया॥१२३
नासौ काष्टमयो भुंच्च चुधया वापि पीडितः॥ तां ब्राह्मणः प्रत्युवाच
नमया तद्विशेषणम्॥ कृतं भद्रेऽय नियमं सामान्येनैव यत्कृ
तम्॥ १२४॥ तं भूयः प्राह सातन्वी नच भोच्यासि ब्राह्मण॥ गृ
हं गृहीत्वा गच्छस्व कुटुम्बैः सह भोच्यसि॥ १२५॥ स तामुवाच
सुहृदे न तावद्यामि माचिरं॥ इह याता वरारोहा त्रैलोक्येऽप्यधि
कागुणैः॥ १२६॥ सा मया मदमत्तेन प्रार्थिता चासि वै तया॥
स्थीयतां चण मित्येवं स्थास्यामीति मयोदितं॥ १२७॥ मासमात्रं
गतायास्तु तया भद्रे स्थितस्य च॥ ममसत्यानुचरस्य संगमाय धृत
व्रते॥ १२८॥ तस्य सा वचनं श्रुत्वा कृत्वा रूप मनुत्तमं॥ विहस्य
भावगम्भीर मुर्वशी प्राह तं द्विजाः॥ १२९॥ सत्यं सत्यं त्वया वि
प्र व्रतं निश्चितचेतसा॥ निष्पादितंहि वा देव मह्यं दर्शन मिच्छ
ता॥ १३०॥ अहमेवोर्वशी विप्र त्वज्जिज्ञासार्थ मागता॥ परीचि
तो निश्चितवान् भव सत्यतयात्रवै॥ १३१॥ गच्छ शूकर चोद्देशं रू
पतीर्थं च विश्रुतम्॥ सिद्धि माप्स्यसि विप्रेन्द्र तत्र त्वं मामवाप्स्य
सि॥ १३२॥इत्युक्त्वा दिव मुत्पत्य सा जगामोर्वशी द्विजाः॥ सच
सत्यतया विप्रो रूपतीर्थं जगामह॥ १३३॥ ततः शान्तिपरोभूत्वा
नियमव्रतधृक् शुचिः॥ देहोत्सर्गं जगामासौ गान्धर्वं लोक मुत्तम

र्थं मपार्थां नारदस्यवै ॥ विडम्बनान्तु तां विप्राः शृणुध्वं गदतो म
म ॥ २१ ॥ प्रागासीन्नृपतिः श्रीमा नाम्नोध्र इतिविश्रुतः ॥ नगरे
कामदमन स्तस्याथ तनयः शुचिः ॥ २२ ॥ धर्मा रामः क्षमा शी
लः पितुः शुश्रूषणे रतः ॥ प्रजानुरञ्जको दक्षः श्रुतिशास्त्रकृतश्र
मः ॥ २३ ॥ पिता चास्याकरो द्योगं विवाहाय नचैच्छत ॥ तंपि
ता प्राह किमिति नेच्छसि दारसंग्रहं ॥ २४ ॥ सर्व्व मेत त्सुखार्थं
हि वाञ्छन्ति मनुजाः किल ॥ सुखमूलाहि दाराश्च कस्मा न्न त्वं
समाचरः ॥ २५ ॥ स पितु र्वचनं श्रुत्वा तूष्णीमास्ते स गौरवः ॥
भुज्ञ र्मुहु स्तञ्च पिता चोदयामास भोद्विजाः ॥ २६ ॥ अथासौ
पितरं प्राह तात नामानुरूपतः ॥ मया समाश्रितं व्यक्तं त्वदाज्ञा
परिपालनं ॥ २७ ॥ तं पिता प्राह प्रहसन् ग्राम्यं नाम तुपुत्रक ॥
न विधारयितव्यंत्वा त्पु रुषेण विपश्चिता ॥ २८ ॥ कुरु ममेदं वचः
पुत्र प्रभुरस्मि पिता तव ॥ मानिमन्नोक्तुलं मह्यं नरके सन्ततिक्ष
यात् ॥ २९ ॥ सहि तत्पितु रादेशं मत्वा नृपसुतो वशी ॥ प्रोत्या
संस्मृत्य पौराणां संसारस्य विचित्रतां ॥ ३० ॥ पुत्र उवाच ॥ तात
शृणु वचो मह्यं तत्त्ववाक्यं सहेतुमत् ॥ मया जन्मसहस्राणि जरा
मृत्युशतानि च ॥ ३१ ॥ प्राप्तानि दारसंयोगा न्नानाजन्मानि पूर्व्व
शः ॥ तृणगुल्मलतावल्ली सरीसृपमृगा द्विजाः ॥ ३२ ॥ पशुस्त्रीपु
रुषाद्यानि प्राप्तानि शतशो मया ॥ गणकिन्नरगन्धर्वविद्याधरमहोर
गाः ॥ ३३ ॥ यक्षगुह्यकरक्षांसि दानवाप्सरसः सुराः ॥ तदा

ईश्वरत्वञ्च प्राप्तं तात पुनः पुनः ॥ ३४ ॥ स्रष्टस्तु वहुशः स्रष्टौ संहारे चापि संहृतः ॥ दारसंयोगयुक्तस्य न जाने दुग्विडम्बना ॥ ३५ ॥ इत स्तृतीये यद्वृत्तं मम जन्मनि तच्छृणु ॥ कथयामि समासेन तीर्थमाहात्म्यसम्भवात् ॥ ३६ ॥ अतीतजन्मानि वहूनि तात न्वदेवगन्धर्व्वमहोरगाणां ॥ जातेषु वंशेषु यथा महर्षे स्ततो ममाभू दचलाहि भक्तिः ॥ ३७ ॥ जनार्द्दने लोकपतौ मधुघ्ने व्रतोपवासै र्विविधै स्व भक्त्या ॥ सन्तोषित श्चक्रगदास्त्रधारी तुष्टोऽस्यगा त्पचिपति र्महात्मा ॥ ३८ ॥ विष्णुः समारुह्य वरप्रदो मे प्राहोच्चशब्दं व्रियतां द्विजाते ॥ यंयं वरं वाञ्छसि तं प्रदास्ये ततोऽह मूचे हरि मीशशीलं ॥ ३९ ॥ गुणोपपन्ना त्ववयः प्रमाणा सुरूपिणी यौवनमाससाद ॥ चाण्डालरूपेण सुवाहनेन विवाहिता रूपविवर्ज्जितेन ॥ ४० ॥ पति र्नतस्याभिमतो वभूव सा तस्य दैवाभिमुखी वभूव ॥ पुत्रद्वयं नेत्रहीनं वभूव जाता च कन्या वधिरा तथान्या ॥ ४१ ॥ पति र्दरिद्र स्त्वथ सापि मुक्ता नदीं गता रोदिति तत्र नित्यं ॥ गता कदाचि त्कलशं गृहीत्वा सान्तर्जलं स्नातु मथ प्रविष्टा ॥ ४२ ॥ यावद्द्विजोऽसौ पुनरेव तात यातः क्रियायोगरतः सुशीलः ॥ तस्याः स भर्त्तातु चिरं गतेति द्रष्टुं जगामाथ नदीं सुपुत्रः ॥ ४३ ॥ ददर्श कुम्भं नच तां तटेऽसौ ततोऽतिदुःखा त्प्ररोदयन् पुनः ॥ ततोऽन्धयुग्मं वधिराञ्च कन्यां दुःखान्वितोऽसौ समुपाजगाम ॥ ४४ ॥ ते वैरुदन्तं पितरञ्च दृष्ट्वा दुःखान्विता रुरुदुर्वै भृशार्त्ताः ॥ ततः स

पप्रच्छ नदीतटस्थान् द्विजान् भवद्भि र्यदि योपि दृष्टा ॥ ४५ ॥ दृ
ष्टातु नेयं समुपद्रवन्तीं व्याख्यात तन्मे विभवा त्वचिन्त्य ॥ ततोम्बु
तीरे किल योपि दृष्टा हृष्टांभसिप्रसभं संप्रविष्टा ॥ ४६ ॥ नदी न्न
भूयस्तु समुत्ततार नतावदृष्टे साधुसमाहितं ततः ॥ स तद्वचस्तारत
रं द्विजेन्द्रा रुरोद शोकाश्रुउपप्लुताचः ॥ ४७ ॥ तम्बा रुदन्तं स
सुतञ्च कन्यां दृष्ट्वाहमार्त्तः सुतराम्बभूव ॥ ततोऽब्रुवंतं नृपते मत
ङ्गं किमर्थ मार्त्तेनहि रुद्यतेत्वया ॥४८॥ तस्मान्नलाभो भवितेति मू
र्खं स्माक्रन्दितेनेह दृथाहि किन्ते ॥ समासुवाचात्मजयुग्म मन्धं
कन्यांतु चैकां वधिरा न्तथैव ॥ कथं द्विजाते अधुनाह मेना मामा
सयिष्ये पुनरित्य मेतान् ॥ ४९ ॥ इत्येवमुक्त्वासमुतैश्च सार्द्धं कृच्छ्रा
तिशोकेन च रोदितिस्म ॥ यथा यथा रोदिति सः स्वपाक स्तथा
तथा मेति व्यथा वभूव ॥ ५० ॥ ततोऽह मार्त्तश्च निवार्य्य तस्मै स
र्व्वञ्च वृत्तान्तमथाचचक्षे ॥ ततः सदुःखार्त्तं सहान्धपुत्रै र्विवेश को
कामुख मार्त्तरूपः ॥ ५१ ॥ प्रविष्टमात्रः सलिलं मतङ्ग स्तीर्थप्रभा
वाच्च विमुक्तपापः ॥ विमान मारुह्य शशिप्रकाशं ययौ दिवं तात
ममैव पश्यन् ॥ ५२ ॥ तस्मि न्प्रविष्टे सलिले मृते च ममातिरासी
दिति मोहकर्त्री ॥ ततोऽतिमोघं नृपवर्य्य कोकाजले प्रविष्ठ स्ति
दिवं गतश्च ॥ ५३ ॥ भूयो भवे वैश्यकुले यथार्त्तो जात ञ्च तीर्थप्र
वरप्रसादात् ॥ ततोऽह निर्विष्ट मनागतोऽहं कोकामुखं वाक्य
मचिन्तित श्च ॥ ५४ ॥ मृतं समाख्यायकलेवरञ्च संयोजयित्वा दि

वमारुरोह ॥ तस्मा च्च्युत स्ते भवने च जातो जातिस्मर स्तात ह
रिप्रसादात् ॥ ५५ ॥ सोऽहं समाराध्य वराहरूपं जगाम सिद्धिंपु
रुषर्षभेऽसौ ॥ इत्थं सकामदमनः सच वालपुत्रः कोकामुखे प्रवरती
र्थवरे सुपुण्ये ॥ त्यक्त्वा तनुं दोषमलं स्नानतस्तु गतो दिवं दिनक
रप्रतिमै र्विमानैः ॥ ५६ ॥ एवं मयोक्ता परमेश्वरस्य माया सुरा
णामपि दुर्विचिन्त्या ॥ स्वप्नेन्द्रजालप्रमुखा मुरारे र्यया जगन्मोह
मुपैति विप्राः ॥ ५७ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षि सम्वादे विष्णोर्माया संकीर्त्तनं
नामैकोनविंशत्युत्तरशततमोऽध्यायः ॥ ११९ ॥

—०—

मुनय ऊचुः ॥ श्रुतं चास्मि मुनिश्रेष्ठा यत्त्वया समुदाहृतं ॥
प्रादुर्भावाद्भुतं पुण्यं माया विष्णोश्च दुर्विदां ॥ १ ॥ श्रोतु मिच्छाम
हे त्वत्तो यथाव दुपसंहृतं ॥ महाप्रलय संज्ञा ञ्च कल्पान्तेच यथा
मुने ॥ २ ॥ व्यास उवाच ॥ श्रूयतां भो मुनिश्रेष्ठा यथावदुप संहृ
तिम् ॥ कल्पान्ते प्राकृत ञ्चैव प्रलयं जायते तथा ॥ ३ ॥ अहो
रात्रं पितॄणा ञ्च मासोऽब्दं त्रिदिवौकसां ॥ चतुर्युगसहस्रेतु
ब्रह्मणोहो द्विजोत्तमाः ॥ ४ ॥ कृतं त्रेता द्वापर ञ्च कलि ञ्चैव
चतुर्युगं ॥ दैवै र्वर्षसहस्रैस्तु तद्द्वादश भिरुच्यते ॥ ५ ॥ चतुर्युगा
न्यशेषाणि सदृशानि स्वरूपतः ॥ आद्यं कृतयुगं प्रोक्तं मुनयोन्तं
तथा कलिः ॥ ६ ॥ आद्येकृतयुगे स्वर्गं ब्रह्मणा क्रियते तपः ॥ क्रि

यते चोपसंहार स्तथान्ते च कलौ युगे ॥ ७ ॥ मुनय ऊचुः ॥ कल्पस्वरूपं भगवन् विस्तरा द्वक्तुमर्हसि ॥ धर्म्मश्च यस्मा द्भगवान् य स्मि न्विष्णुश्च तुष्यति ॥ ८ ॥ व्यासउवाच ॥ कलेःस्वरूपं भोविप्रा यत्पृच्छध्वं ममानघाः ॥ निबोधध्वं समासेन वर्त्तते यन्महत्तरं ॥ ९ वर्णाश्रमाचारवती प्रवृत्ति र्न कलौ स्मृता ॥ न सामऋग्ययुर्वेदविनि ष्पादनहेतुकी ॥ १० ॥ विवाहो न कलौ धर्मो न शिष्यगुरुसंस्थितिं ॥ नदीचोप क्रमश्चैव नैव वह्निक्रियाक्रमः ॥ ११ ॥ यत्र तत्र कुले जा तो भर्त्ता सर्वेश्वरः कलौ ॥ सर्वेभ्य एव वर्णेभ्यो ज्येष्ठः कन्यावरोध नो ॥ १२ ॥ येन तेनैव योगेन द्विजाति र्दीक्षितः कलौ ॥ येन प्रो क्तं च विप्रेन्द्राः प्रायश्चित्तं स्मृतं कलौ ॥ १३ ॥ सर्व्वमेव कलौ शास्त्रं यस्य तद्वचनं द्विजाः ॥ देवता श्च कलौ सर्वाः सर्वः सर्व्वस्य चाश्र मः ॥ १४ ॥ उपवास स्तथायासो चित्तोत्सर्ग स्तथा कलौ ॥ धर्मो यथाभिरुचितै रनुष्ठानै रनुष्ठितः ॥ १५ ॥ वित्तेन भविता पुंसां स्व ल्पेनैव मदः कलौ ॥ स्त्रीणां रूपमद श्चैव केशैरेव भविष्यति ॥ १६ ॥ सुवर्णमणिरत्नादौ वस्त्रे चोपक्षयंगते ॥ कलौ स्त्रियो भविष्यन्ति य दाकेशै रलंकृताः ॥ १७ ॥ परित्यजन्ति भर्त्तारं धनहीनं तथास्त्रि यः ॥ भर्त्ता भविष्यति कलौ वित्तवानेव योषितां ॥ १८ ॥ योयो द दाति बहुलं सःसः स्वामी तदा नृणां ॥ स्वामित्व मनुसम्बन्धो भा विना विजनं तदा ॥ १९ ॥ गृहान्ता द्रव्यसंघाता द्रव्यान्ताच तथा मतिः ॥ अर्था श्चैवानुभोगान्ता भविष्यन्ति तथा कलौ ॥ २० ॥ स्त्रि

यः कलौ भविष्यन्ति स्वैरिण्यो ललितस्पृहाः ॥ अन्याः यावाप्तचित्तेषु पुरुषेषु समस्पृहाः ॥ २१ ॥ अभ्यर्थितोपि सुहृदा स्वार्थहानिं न मानवाः ॥ पणं स्वार्द्धार्द्धमात्रेपि करिष्यन्ति तदाद्विजाः ॥ २२ ॥ नसदा पौरुषं चेतो भविता स्वेषुवै कलौ ॥ क्षीरप्रदानसम्बन्धि भाति गोषु च गौरवम् ॥ २३ ॥ अनावृष्टितया प्रायः प्रजासु क्षुद्र पातकाः ॥ भविष्यन्ति तदा सर्वो गगनासक्तदृष्टयः ॥ २४ ॥ मूल कन्दफलाहारा स्तापसा इव मानवाः ॥ आत्मानं घातयिष्यन्ति दुःखिता भारपीडिताः ॥ २६ ॥ दुर्भिक्षमेव सततं सदा क्लेशमति नराः ॥ उभाभ्या मेव पाणिभ्यां शिरः कण्डूयनं स्त्रियः ॥ २६ ॥ दुःशीला दुष्टशीलेषु कुर्वन्त्यः सततं स्पृहां ॥ असद्वृत्ता भविष्यन्ति पुरुषाणां कुलाङ्गनाः ॥ २७ ॥ वेदादानं करिष्यन्ति वटवश्च तथा व्रताः ॥ गृहस्थाश्च नहोष्यन्ति नदास्यन्त्युचितान्यपि ॥ २८ ॥ गृहवासिनो भविष्यन्ति ग्रामाहारपरिग्रहाः ॥ भिक्षवश्चापि पुत्रादि स्नेहसम्बन्धयन्त्रिणः ॥ २९ ॥ अरक्षितारो हर्त्तारः शुल्कव्याजेन पार्थिवाः ॥ हारिणो जनचित्तानां संप्राप्ते च कलौ युगे ॥ ३० ॥ यो योऽश्वरथनागाढ्यः स स राजाभविष्यति ॥ यश्च यश्चाबलः सर्वो स स भृत्यः कलौ युगे ॥ ३१ ॥ वैश्याः कृषिवाणिज्यादिसंत्यजन् कर्मवै ततः ॥ शूद्रवृत्तानि वर्त्स्यन्ति कारुकर्मोपजीविनः ॥ ३२ ॥ भैक्षवृत्ता स्तथा शूद्राः प्रव्रष्टालिङ्गिनोऽधमाः ॥ पाखण्डसंश्रयां वृत्तिं संश्रयिष्यन्ति संस्कृताम् ॥ ३३ ॥ दुर्भिक्षकरपीडाभि रतीवो

पद्गुना नराः ॥ गोधूमान्ता यवान्यांश्च देशान् पश्यन्ति दुःखि
ताः ॥ २४ ॥ वेदमार्गे प्रलीने च पाखण्डाढ्ये ततो जनैः ॥ अ
धर्मवृद्ध्या लोकाना मल्प मायु र्भविष्यति ॥ २५ ॥ अशास्त्रविहितं
घोरं ॥ तप्यमानेषु वै नरः ॥ नरेषु नृपदोषेण बालमृत्यु र्भविष्य
ति ॥ २६ ॥ भविन्नी योषितां सूती पञ्च सप्त च वार्षिकी ॥ न चा
ष्टदशवर्षाणि पुरुषाणां तथा कलौ ॥ २७ ॥ पलितोद्गम श्च भवि
ता तदा द्वादशवार्षिकः ॥ नतु जीवतिवै कश्चि त्कलौ वर्षाणि विंश
तिम् ॥ २८ ॥ अल्पतेजाः प्रथालिंगा दुष्टाचाकरणाः कलौ ॥ यत
स्ततो विमोक्ष्यन्ति कालेनाल्पेन मानवाः ॥ २९ ॥ यदा यदाहि
पाखण्डा वृद्धिशस्त्रोपलक्ष्यते ॥ तदा तदा कले र्वृद्धि रनुमेया वि
चक्षणैः ॥ ४० ॥ यदा यदा सतां हानि र्वेदमार्गानुसारिणां ॥ तदा
तदा कले र्वृद्धि रनुमेया विचक्षणैः ॥ ४१ ॥ प्रारम्भा श्चावसीदन्ति
यदा धर्मकृता नृणां ॥ तदानुमेयं प्राधान्यं कले र्विप्रा विचक्ष
णैः ॥ ४२ ॥ यदा यदा न यज्ञाना मीश्वरः पुरुषोत्तमः ॥ इज्यते
पुरुषै र्यज्ञै स्तदा ज्ञेयं कलेर्बलं ॥ ४३ ॥ न प्रीति र्वेदवादेषु पाख
ण्डेषु यदा रतिः ॥ कले र्वृद्धि स्तदा प्राज्ञै रनुमेया विचक्षणैः ॥ ४४॥
कलौ जगत्पतिं विष्णुं सर्वस्रष्टार मीश्वरम् ॥ नार्चयिष्यन्ति ते वि
प्राः पाखण्डोपहता नराः ॥ ४५ ॥ किन्देवैः किंद्विजै र्वेदैः किंशौ
चेनापि जल्पना ॥ इत्येवं प्रलपिष्यन्ति पाखण्डोपहता नराः ॥ ४६॥
स्वल्पवृष्टिश्च पर्ज्जन्यः स्वल्पं शस्यफलंतथा ॥ फलं तथाल्पसारञ्च विप्राः

प्राप्ते कलौयुगे ॥४७॥ अणुप्रायाणि धान्यानि अजप्रायं तथा पयः ॥
भविष्यति कलौ प्राप्ते औशीरं चानुलेपनं ॥ ४८ ॥ श्वश्रूश्वशुरभू
यिष्ठा गुरवश्च नृणां कलौ ॥ वाङ्मनः कायिकै र्दोषै रभिभूताः पु
नःपुनः ॥ ४९ ॥ नराः पापान्यनुदिनं करिष्यन्त्यल्पमेधसः ॥ निः
सत्वाना मशौचानां त्रिकोकाणां तथा द्विजाः ॥ ५० ॥ यद्य दुः
खाय तत्सर्वं कलिकाले भविष्यति ॥ निःस्वाध्यायवषट्कारे स्वधा
स्वाहाविवर्ज्जिते ॥ ५१ ॥ तथा क्वचिवला विप्राः क्वचि ल्लोको भवि
ष्यति ॥ तदाल्पेन च यत्नेन पुण्यस्कन्ध मनुत्तमं ॥ करोति यः कृत
युगे क्रियते तेपि साहिसः ॥ ५२ ॥ मुनय ऊचुः ॥ यस्मिन्काले
ल्पको धर्म्मो ददाति सुमहत्फलं ॥ वक्तुमर्हस्यशेषेण श्रोतुं वाञ्छा
प्रवर्त्तते ॥ ५३ ॥ व्यास उवाच ॥ धन्ये कलौ भवे द्विप्रा अल्पक्लेशै
र्महत्फलं ॥ तथा लभेते स्त्रीशूद्रौ धन्यौ वान्ये निवोधत ॥ ५४ ॥
यत्कृते दशभिर्वर्षै स्त्रेतायां हायनेनतत् ॥ द्वापरेतच्च मासेन ह्यहो
रात्रेण तत्कलौ ॥ ५५ ॥ तपसा ब्रह्मचर्य्येण देवार्च्चायां फलं द्वि
जाः ॥ प्राप्नोति पुरुष स्तेन काले साध्विति भाषितम् ॥ ५६ ॥
ध्यायन् कृते यजन् यज्ञै स्त्रेतायां द्वापरेऽर्च्चयन् ॥ यदाप्नोति तदा
प्नोति कलौ संकीर्त्य केशवम् ॥ ५७ ॥ धर्मो त्कर्षञ्च मतिमान् प्रा
प्नोति पुरुषः कलौ ॥ स्वल्पायासेन धर्मज्ञ स्तेन तुष्टोऽवसत्कुले ॥ ५८
व्रतचर्य्यापरै गृह्य वेदाः सर्वैन्द्रियादिभिः ॥ ततस्तु धर्मसंप्राप्तै र्यष्ट
व्यं व्याधिवर्द्धनः ॥ ५९ ॥ वृथा कथा वृथा भोज्यं वृथा यज्ञ द्विजन्म

नां ॥ चेतनाय तथा भाव्यं तैस्तु सम्पत्तिभिः सह ॥ ६० ॥ असच्च
क्करणोदायां यदा सर्वेषु वस्तुषु ॥ अभोज्यादिषु कं तेषां केच्छा प्र
मकरं द्विजाः ॥ ६१ ॥ पारतन्त्र्या त्समस्तेषु महद्दुःखञ्च चेतसः ॥
जयन्ति यान् द्विजा लोकान् प्राजापत्यादिकान् क्रमात् ॥ ६२ ॥
येऽधिशुश्रूषणं भर्त्तुः कर्मणा मनसा गिरा ॥ एत द्विषय माप्नोति य
त्सालोक्यं यतो द्विजाः ॥ ६३ ॥ नाति क्लेशेन महता तानेव पुरुषो
यथा ॥ तृतीयं व्याहृतं तेन मया साध्विति योषितः ॥ ६४ ॥ एत
द्वः कथितं विप्रा यन्निमित्त मिहागताः ॥ यत्पृच्छध्वं यथातथ्य म
हं वक्ष्यामि वः स्फुटम् ॥ ६५ ॥ अल्पेनैव प्रयत्नेन धर्मः सिध्यति वै
कलौ ॥ नरै रात्मगुणाम्भोभि स्क्षालिताशेषकिल्बिषैः ॥ ६६ ॥ शू
द्रैस्तु द्विजशुश्रूषातत्परै र्द्विजसत्तमाः ॥ तथा स्त्रीभि रनायासा त्प
तिशुश्रूषयैवहि ॥६७॥ तत स्तृतीयमध्येत न्ममधन्यनमोमतं ॥ कर्मसं
सरतः क्लेशो द्विजातीनां कृतादिषु ॥ ६८ ॥ तथाह्यल्पेन मनसा
सिद्धिं यास्यन्ति मानवाः ॥ धन्या धर्मं चरिष्यन्ति युगान्ते मुनिसत्त
माः ॥ ६९ ॥ भवद्भि र्यदभिप्रेतं तदेत त्कथितं मया ॥ एष्ट स्तेना
पि धर्मज्ञाः किमन्य त्क्रियते द्विजाः ॥ ७० ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे भविष्यफलकथने विंशत्यु
त्तरशततमोऽध्यायः ॥ १२० ॥

—०—

मुनय ऊचुः ॥ आसन्नं विप्रमन्नम्बा यदि कालं न विग्रहे ॥

ततो द्वापरविध्वंसं युगान्तं स्पृहयामहे ॥ १ ॥ प्राप्ता वयंहि तत्का
ल मनया धर्मतृष्णया ॥ आद्यामपरं धर्मं सुख मल्पेन कर्म
णा ॥ २ ॥ सन्त्रासोद्वेगजननं युगान्ते समुपस्थिते ॥ प्रणष्टधर्मं ध
र्मज्ञ निर्मन्त्वै वक्तुमर्हसि ॥ ३ ॥ व्यास उवाच ॥ अरक्षितारो ह
र्त्तारो कलिभागस्य पार्थिवाः ॥ युगान्ते च भविष्यन्ति रक्षणायपरा
यणाः ॥ ४ ॥ अक्षत्रिया श्च राजानो विप्राः शूद्रोपजीविनः ॥ शू
द्राश्च ब्राह्मणाचारा भविष्यन्ति युगक्षये ॥ ५ ॥ श्रोत्रियाः काण्ड
काराश्च निःकर्माणि हरिष्यथ ॥ एकपंक्त्या मशिष्यन्ति युगान्ते मु
निसत्तमाः ॥ ६ ॥ अप्यल्पवर्चोर्थपरा नरा मद्यामिषप्रियाः ॥ मि
त्रभार्य्यां हरिष्यन्ति युगान्ते पुरुषाधमाः ॥ ७ ॥ राजवृत्ते स्थिता
श्चौरा राजान श्चौरशीलिनः ॥ भृत्याह्यनिर्द्दिष्टभुजो भविष्यन्ति
युगक्षये ॥ ८ ॥ धनिनो अपनीयान्ति सतांवृत मपूजितम् ॥ अक्कु
त्सनाञ्च पतिते भविष्यन्ति युगक्षये ॥ ९ ॥ प्रणष्टवेष्टनाः पुंसो मु
क्तकेशा विरूपिणः ॥ ऊनषोडशवर्षाश्च प्रणष्यन्ति नरा स्तथा ॥ १०
अट्टशूला जनपदाः शिवशूला श्चतुष्पथः ॥ प्रमदाः केशशूलाश्च भ
विष्यन्ति युगक्षये ॥ ११ ॥ सर्वं ब्रह्म वदिष्यन्ति द्विजा वाजसनेय
काः ॥ शूद्रांभोवादिन श्चैव ब्राह्मणा श्चात्यवादिनः ॥ १२ ॥ शुक्ल
दन्तानि तीर्थ्यांश्च पुंड्राः काषायवाससः ॥ शूद्रा धर्म वदिष्यन्ति म
ध्या श्चान्ते निवासिनः ॥ १३ ॥ निन्हीकांश्च प्रजाः सर्वा निष्ठा स्त
त्र युगक्षये ॥ तपोयज्ञफलानाञ्च विक्रेतारो द्विजोत्तमाः ॥ १४ ॥

ऋतवो विपरीताश्च भविष्यन्ति युगक्षये ॥ तथा द्विहायना दन्या
स्तथा लाङ्गलधारकाः ॥ १५ ॥ चित्रवर्षी च पर्जन्यो युगे क्षीणे
भविष्यति ॥ सर्वे चौरकुले जाताः स्वल्पेनाद्य भवन्तिहि ॥ १६ ॥
यथा निम्नाः प्रजाः सर्वा भविष्यन्ति युगक्षये ॥ नच धर्मं चरिष्य
न्ति मानवा निर्गते युगे ॥ १७ ॥ पितृदायपदन्तानि विभजन्ति
तथा सुताः ॥ हरणाय प्रपश्यन्ति लोभादिभि र्विरोधिताः ॥ १८॥
सौकुमार्ये तथा रूपे रत्ने चोपचयं गते ॥ भविष्यन्ति युगस्यान्ते ना
र्य्यः केशै रलंकृताः ॥ १९ ॥ निर्बीजस्य रति स्तत्र गृहस्थस्य भवि
ष्यति ॥ युगान्ते समनुप्राप्ते नान्याभार्य्यासमारतिः ॥ २० ॥ कुशी
लानार्य्यभूयिष्ठा तथा रूपसमन्विताः ॥ पुरुषाल्पं बहुस्त्रीकं त
युगान्तस्य लक्षणं ॥ २१ ॥ वहुयाचनको लोको नदास्यति परस्पर
म् ॥ राजचौराग्निदण्डादि क्षीणः क्षय मुपैष्यति ॥ २२ ॥ अफ
लानिच शस्यानि तरुणावृद्धशीलिनः ॥ अशीलासुखिनोलोका भ
विष्यन्ति युगक्षये ॥२३॥ वर्षासु परुषा वाता नीराशर्करवर्षिणः॥
संदिग्धः परलोकश्च भविष्यन्ति युगक्षये ॥ २४ ॥ वैश्याचारा स
राजन्या धनधान्योपजीविनः ॥ युगोपक्रमणे पूर्वं नभविष्यन्ति वा
न्धवाः ॥ २५ ॥ अप्रवृत्ताः प्रपश्यन्ति समयाः शपथा स्तथा ॥ ऋ
णाश्च सञ्चितभ्रंशं युगक्षीणे भविष्यति २६ ॥ भविष्यत्यफलो हर्षः
क्रोधश्च सफलो नृणां ॥ अजा श्चापि विरोत्स्यन्ति यशसोर्थे युगक्ष
ये ॥ २७ ॥ अशास्त्रविहितो यज्ञ एवमेव भविष्यति ॥ अप्रमाणं

करिष्यन्ति नराः पण्डितमानिनः ॥ २८॥ शास्त्रोक्तस्य प्रवक्तारो भविष्यन्ति नसंशयः॥ सर्वे सर्वं विजानन्ति वृद्धा ननुपसेव्यते ॥ २९॥ नकश्चि दकवि र्नाम युगान्ते समुपस्थिते ॥ नक्षत्राणि वियोगानि विकर्मस्था द्विजातयः ॥ ३० ॥ चौरप्रायाश्च राजानो युगान्ते समु पस्थिते ॥ कुण्डीकानैः कृतिकाः सुरापा ब्रह्मवादिनः ॥ ३१ ॥ अ श्वमेधेन यजन्ते युगान्ते मुनिसत्तमाः ॥ मानयिष्यन्त्ययाज्यां श्च तथा भक्ष्यस्य भक्षिणः ॥ ३२ ॥ ब्राह्मणा ऋणकर्त्तारो तृष्णार्त्ता मुनिसत्तमाः॥ योजयिष्यत्यधाश्यामि नरः कश्चि त्पठिष्यति ॥ ३३ एकशंखा स्तथा नार्यो गवेधुकपिनद्धकाः॥ नक्षत्राणि विवर्णानि विपरीता दिशोदश ॥ ३४ ॥ संध्यारागोविदग्धांगो भविष्यति युग क्षये ॥ प्रेषयन्ति पितॄन् पुत्राः वध्वः श्वश्रूश्च कर्मसु ॥ ३५ ॥ युगे ष्वेवं निवर्त्स्यन्ति प्रमदाश्च नरा स्तथा ॥ अहुताग्राणितं भोज्यं द्वि जा श्चैवाहिताग्नयः ॥ ३६ ॥ भिक्षां वलिमदत्वा च भोक्ष्यन्ति पुरुषाः स्वयम्॥ वञ्चयित्वापतीन् सुप्तान् गमिष्यन्ति स्त्रियोऽन्यतः॥ ३७ नाव्याहतोपनक्षीत उच्च न्नोकानुसूयकः॥ नकृते प्रतिकर्त्ता च यु गेक्षीणेभविष्यति ॥ ३८ ॥ मुनय ऊचुः॥ एवं विलयिते धर्मे मानु षाः करपीडिताः ॥ निवसन्ति किमाचाराः किमाहारविहारि णः॥ ३९ ॥ किंकर्माणः किमीहंति किंप्रमाणं किमायुषः॥ कांच काष्ठां समासाद्य प्राप्स्यन्ति च कृतं युगम्॥ ४० ॥ व्यास उवाच॥ अतऊर्ध्वं च्युते धर्मे गुणहीनाः प्रजा स्तथा॥ शीलव्यसनमासाद्य

प्राप्स्यन्ति ह्रासमायुषः ॥ ४१ ॥ आयुर्हान्यावलग्नानि वैलग्न्याद्वि
र्णता ॥ वैवर्ण्या द्व्याधिसंपीडा निर्वेदो व्याधिपीडनात् ॥ ४२ ॥
निर्वेदादात्मसंबोधः सम्बोधा द्धर्मशीलता ॥ एवं गत्वा परां काष्ठां
प्रपत्स्यन्ति कृतं युगम् ॥ ४३ ॥ उद्देशतो धर्मशीलाः केचिन्मध्यस्थ
तांगताः ॥ किंधर्मशीलाः केचित्तु केचित्तु कुतूहलाः ॥ ४४ ॥ प्रत्य
च्च मनुमानञ्च प्रमाणमिति निश्चिताः ॥ अप्रमाणं करिष्यन्ति स
र्व्व मित्यपरे प्रजाः ॥ ४५ ॥ नास्तिकं परमा श्चापि केचि द्धर्मवि
लोपिताः ॥ तथाखिलागते धर्मे गताः श्रेष्टपुरस्कृताः ॥ अशुभं स
माचरिष्यन्ति दानशीलपरायणाः ॥ ४६ ॥ सर्व्वभक्ष्याः स्वयं गुप्ता
निर्घृणा निरपत्रपाः ॥ भविष्यन्ति नरा लोके तत्कषायस्य लक्षण
म् ॥ ४७ ॥ कषायोपप्लवे काले ज्ञानविद्याप्रणाशने ॥ सिद्धि मल्पेन
कालेन प्राप्स्यन्तिनिरुपस्कृताः ॥४८॥ विप्राणांशाश्वतीं वृत्तिं यदा
वर्णावरानराः ॥ संश्रयिष्यन्ति भो विप्रा स्तदा निष्ठा कलेः स्मृ
ता ॥ ४९ ॥ महायुद्धं महावर्षं महावातं महातपं ॥ भविष्यंति
युगे क्षीणे तत्कषायस्य लक्षणम् ॥ ५० ॥ विप्ररूपेण रक्षांसि रा
जानः कर्मवादिनः ॥ पृथिवी मुपभोक्ष्यंति युगांते समुपस्थिते ॥ ५१
निःस्वाध्यायवषट्काराः कुमताराभिमानिनः ॥ क्रव्यादा ब्रह्मरूपेण
सर्व्वभक्ष्य पथाहृताः ॥ ५२ ॥ मूर्खाः स्वार्थपरा लुब्धाः क्षुद्राः क्षु
द्रपरिग्रहाः ॥ व्यवहारोपवृत्ताश्च च्युता धर्मार्थशाश्वतात् ॥ ५३॥
हर्त्तारः पररत्नानां परदारप्रधर्षकाः ॥ कामात्मानो दुरात्मानः

स्रोपधाः प्रियसाहसाः ॥ ५४ ॥ तेषु प्रभवमानेषु जनेष्वपि च सर्व्व
शः ॥ अभिमानिनो भविष्यन्ति तथावै दायहारिणः ॥ ५५ ॥ चौ
रा श्चौरस्य हन्तारो हन्ता हन्तु र्भविष्यति ॥ चौर चौरक्षये चापि
कृते क्षेमं भविष्यति ॥ ५६ ॥ निःसारे क्षुभिते लोके निष्क्रिये संव्य
वस्थिते ॥ नरा वनं श्रयिष्यन्ति करभारप्रपीडिताः ॥ ५७ ॥ यज्ञ
कर्मण्युपरते रक्षांसि श्वापदानि च ॥ कीटमूषकसर्प्पाश्च धर्षयिष्य
न्ति मानवान् ॥ ५८ ॥ क्षेमं सुभिक्षमारोग्यं सामग्य्रञ्चैव बन्धुषु ॥
उद्देशेषु नरश्रेष्ठा भविष्यन्ति युगक्षये ॥ ५९ ॥ स्वयं पालाः स्वयं
चाराः स्वयं संभारसंभृताः ॥ मण्डलैः संभविष्यन्ति देशे देशे पृथ
क् पृथक् ॥ ६० ॥ स्वदेशेभ्यः परिभ्रष्टाः निःसाराः सहबन्धुभिः ॥
नराः सर्वे भविष्यन्ति तदा कालपरिक्षयात् ॥ ६१ ॥ ततः सर्वे समा
दाय कुमारान् प्रद्रुता भयात् ॥ कौशिकीं संश्रयिष्यन्ति नराः क्षुद्भ
यपीडिताः ॥ ६२ ॥ अंगा न्वंगान् कलिंगां श्च काश्मीरा नथ मेक
लान् ॥ ऋषिसत्वागिरिद्रोणीं संश्रयिष्यन्ति मानवाः ॥ ६३ ॥ कृ
त्स्नं च हिमवत्पार्श्वं कूल ञ्च लवणाम्भसः ॥ विविधं जीर्णपत्र ञ्च
वल्कलान्यजिनानि च ॥ ६४ ॥ स्वयं कृत्वा निवत्स्यन्ति तस्मिन्भूते
युगक्षये ॥ अरण्येषु च वत्स्यन्ति यथा म्लेच्छगणैः सह ॥ ६५ ॥ नैव
शून्याजनारण्या भविष्यंति वसुन्धराः ॥ अगोप्तार श्च गोप्तारो भ
विष्यंति नराधिपाः ॥ ६६ ॥ नरै र्मत्स्यै र्विहङ्गैश्च श्वापदैः सर्प्पकी
टकैः ॥ मधुशाकफलै र्मूलै र्वर्त्तयिष्यंति मानवाः ॥ ६७ ॥ शीर्णप

त्वञ्च विविधं वल्कलान्यजिनानि च ॥ स्वयं कृत्वा निवत्स्यंति यथा मुनिजना स्तथा ॥ ६८ ॥ बीजाना मकृतिस्नेहां हन्तुः काष्ठश्च शंकुभिः ॥ अजैडकं खरोष्ट्रश्वै क्रेयो भवति नित्यशः ॥ ६९ ॥ नदीस्रोतं शिरोत्स्यंति तोयार्थिकूल माश्रिताः ॥ पक्वान्नव्यवहारेण विपणां तस्परस्परम् ॥ ७० ॥ तनूरुहै र्यथाजातैः समलांतरसंवृतैः ॥ वहुपत्याः सुताहीनाः कुलचर्याविवर्जिताः ॥ ७१ ॥ एवं भविष्यंति तदा नरा स्वाधर्मजीविनः ॥ हीना हीनतया धर्म्मं प्रजा समनुवत्स्यते ॥ ७२ ॥ आयु स्तत्रतु मर्त्यानां परं विंशद्भविष्यति ॥ दुर्बला विषमग्लाना जराशोकैः परिप्लुताः ॥ ७३ ॥ भविष्यति तदा तेषां रोगै रिन्द्रियसंचयः ॥ आयुःप्रत्यवरोधाश्च विषयादुपरस्यते ॥ ७४॥ शुश्रूषवो भविष्यंति साधूनां दर्शने रताः ॥ सत्य ञ्च प्रतिपत्स्यंति व्यवहारोपसंचयात् ॥ ७५ ॥ भविष्यंति च कामाना मलाभा द्धर्मशीलिनः ॥ करिष्यंति च सत्कारं स्वपक्षक्षयपीडिताः ॥ ७६ ॥ एवं शुश्रूषवो दाने सत्ये प्रत्यभिरक्षणे ॥ चतुष्पादवतारस्तु धर्मयोनि रपस्यते ॥ ७७ ॥ तेषां लब्धानुमानानां गुणेषु परिवर्त्तते ॥ स्वादुकिञ्चित्तु विज्ञाय धर्म एवावदृश्यते ॥ ७८ ॥ यथा हीनाःक्रमंप्राप्ता स्तथा विधिक्रमं यताः ॥ प्रगृहीते ततो धर्मे प्रपत्स्यंति कृतंयुगम् ॥ ७९ ॥ प्राप्तावृत्तिः कृतयुगे कषाये हानि रुच्यते ॥ एक एव च तत्काले हितवर्णो यथाशशी ॥ ८० ॥ छन्नश्च तमसा मोहो यथा कलियुगं तथा ॥ युक्तस्तु तमसा सोम एवं कृतयुगं ततः॥८१॥

अर्थवादः परं ब्रह्म वेदार्थं इति तद्विदुः ॥ अविमुक्त मविज्ञातं दा जार्थमिव धार्यते ॥ ८२ ॥ इष्टवाद स्त्रयीनाम ततोहिस्त्याविरीकृ तम् ॥ गुणैः कर्मभि र्निर्वृत्ति गुणाः शुद्धयन्ति कर्मणा ॥ ८३ ॥ आ शीस्तु पुरुषं दत्वा देशकालानुवर्त्तिनी ॥ युगे युगे यथाकाल मृषि भिः समुदाहृता ॥ ८४ ॥ धर्मार्थकाममोक्षाणां देवानाञ्च प्रतिक्रि या ॥ आशिषश्च शिवाः पुण्या स्तथैवानुयुगे युगे ॥ ८५ ॥ तथा युगानां परिवर्त्तनानि यथा प्रवृत्तिं च विधिस्वभावात् ॥ क्षणं न ति ष्ठेदिह जीवलोकः क्षयोदयाभ्यां परिवर्त्यमानः ॥ ८६ ॥

इतिब्रह्मपुराणे व्यासर्षिसम्वादे भविष्यकथनं नामैकविंशो त्तरशततमोऽध्यायः ॥ १२१ ॥

—०—

व्यास उवाच ॥ सर्वेषामेव वर्णानां त्रिविधः प्रतिसञ्चरः ॥ नैमित्तिकः प्राकृतिक स्तथैवात्यन्तिकोमतः ॥ १ ॥ ब्राह्मो नैमित्ति क स्तेषां कल्पान्ते प्रतिसञ्चरः ॥ आत्यन्तिकस्तु मोक्षस्तु प्राकृतो द्वि परार्द्धकः ॥ २ ॥ मुनय ऊचुः ॥ परार्द्धसंख्यां भगव नाचचक्ष्व यथो दितम् ॥ द्विगुणीकृतो यथाज्ञेयः प्राकृतः प्रतिसञ्चरः ॥ ३ ॥ व्यास उवाच ॥ स्थाना त्स्थानं दशगुण मेकैकं गुण्यते द्विजाः ॥ तदाव्य क्तोऽखिलं व्यक्तं स्वहेतौ लयमेतिवै ॥ ४ ॥ निमेषो मानुषोऽयञ्च यो य स्मात्रप्रमाणतः ॥ तैः पञ्चदशभिः काष्ठा त्रिंशत्काष्ठा स्तथाक लाः ॥ ५ ॥ नालिकातु प्रमाणेन कलातु दशपञ्च च ॥ उन्मतेना

म्मसः स्यात् पला मर्द्धत्रयोदश ॥ ६ ॥ हेममाषैः कृतं छिद्रं चतुर्भि
श्चतुरंगुलैः ॥ मागधेन प्रमाणेन जलप्रस्थ सुसंस्कृतम् ॥ ७ ॥ नाडि
काभ्यामथ द्वाभ्यां मुहूर्त्तो द्विजसत्तमाः ॥ अहोरात्रं मुहूर्त्तास्तु
त्रिंशन्मासं दिनै स्तथा ॥ ८ ॥ मासै द्वादशभि र्वर्षं मानुषं परिकी
र्त्तितम् ॥ घाडिकाभ्यामथ द्वाभ्यां हायनं त्वसुरद्विषाम् ॥ ९ ॥ तैस्तु
द्वादशसाहस्रै श्चतुर्युग मुदाहृतम् ॥ चतुर्युग सहस्रन्तु कथ्यते ब्रह्म
णो दिनम् ॥ १० ॥ कल्पोऽस्ति तत्र मनव श्चतुर्दश द्विजोत्तमाः ॥
तदन्ते चैव भोविप्रा ब्राह्मो नैमित्तिको लयः ॥ ११ ॥ तस्य स्वरूप
मत्युग्रं द्विजेन्द्रा गदतो मम ॥ शृणुध्वं प्राकृतं भूय स्ततो वक्ष्याम
हं लघुम् ॥ १२ ॥ चर्तुयुगसहस्रांते क्षीणप्राये महीतले ॥ अनावृष्टि
रतीवोग्रा जायते वार्षिकी तथा ॥ १३ ॥ ततो यान्यल्पसाराणि
तानि सत्वान्यनेकशः ॥ क्षयं यान्ति मुनिश्रेष्ठाः पार्थिवान्यतु पीड
वान् ॥ १४ ॥ ततः सभगवान् कृष्णो रुद्ररूपधरोऽव्ययः ॥ क्षया
ययतते कर्त्तु मात्मस्थाः सकलाः प्रजाः ॥ १५ ॥ ततः सभगवद्वि
ष्णु र्भानोः सप्तसु रश्मिषु ॥ स्थितः पिवत्यशेषाणि जलानि मु
निसत्तमाः ॥ १६ ॥ पीत्वाम्भांसि समस्तानि प्राणिभूतगतानिवै ॥
शोषमायाति भोविप्राः समस्तं पृथिवीतलं ॥ १७ ॥ समुद्रान् सरि
तः शैलान् शैलप्रस्रवणानि च ॥ पातालेषु च यत्तोयं तत्सर्वं नयतिक्ष
यम् ॥ १८ ॥ तत स्तस्यास्तु वीर्जेन्धे तोयाहारोपवृंहिताः ॥ सहस्र
रश्मयः सप्त जायंते तत्र भास्कराः ॥ १९ ॥ अत्र चार्द्ध्वं वदते दीप्ता

स्ततः सप्तदिवाकराः॥ दहन्त्यशेषं त्रैलोक्यं सपातालतलं द्विजाः॥२०
भवत्येषा च वसुधा कूर्मपृष्ठोपमाकृतिः॥ ततः कालाग्निरुद्रोसौ भू
तसर्गहरोऽहरत्॥ २१ ॥ शेषाहि श्वाससन्तापात्पातालानि दह
त्यधः॥ पातालानि समस्तानि सदग्ध्वा ज्वलनो महान्॥ २२॥
भूमिमभ्येत्य सकलं सदग्ध्वा वसुधातलं॥ भुवो लोकं ततः सर्वं स्व
र्गलोकञ्च दारुणः॥ २३॥ ज्वालामाली तत स्ताभि र्लोकत्रयनि
वासिना॥ कृताधिकारा गच्छन्ति महर्लोकं द्विजा स्तदा॥ २४॥
तस्मादपि महातापतप्ता लोका स्ततः परं॥ गच्छन्ति जनलोकान्ते
दशा वृत्त्यापरोषिणः॥२५॥ ततो जग्ध्वा जगत्सर्वं रुद्ररूपी जना
र्दनः॥ मुखनिश्वासजा न्मेघान् करोति मुनिसत्तमाः॥ २६॥ त
तो गजकुलप्रख्या स्तडित्वंतोऽतिनादिनः॥ उत्तिष्ठन्ति ततोव्योम्नि
घोराः सम्वर्त्तका घनाः॥ २७॥ केचि दञ्जनसंकाशाः केचित्कुमु
दसन्निभाः॥ धूम्रवर्णा घनाः केचि त्केचि त्पीताः पयोधराः॥ २८
केचि द्धरिद्रा वर्णाभा लाक्षारसनिभा स्तथा॥ केचि द्वैडूर्य्यसंका
शा इन्द्रनीलनिभा स्तथा॥ २९॥ शंखकुन्दनिभा श्चान्ये जातीकु
सुमनिभा स्तथा॥ इन्द्रगोपनिभाः केचित् केचि न्मनशिलानि
भाः॥ ३०॥ पद्मपत्रनिभाः केचि त्केचि त्तिष्ठन् घना घनाः॥ के
चि त्तरुवराकाराः केचि त्पर्वतसन्निभाः॥ ३०॥ कूपागारनिभा
श्चान्ये केचि त्स्थलनिभा घनाः॥ महाकाया महारावाः पूरयन्तो
नभस्तलं॥ ३२॥ कर्षन्त स्ते महासारा स्तमग्निमति भैरवम्॥ श

मयंत्यखिलं विप्रा स्त्रैलोक्यान्तरविस्तृताः ॥ २३ ॥ नष्टे चाग्नौ शा न्तितेपि वर्षाणामधिकं घनाः ॥ भुवोलोकं तथैवोर्द्ध्वं प्लावयन्ति दिवं द्विजाः ॥ २४ ॥ अन्धकारी कृते लोके नष्टे स्थावरजङ्गमे ॥ वर्षन्ति ते महामेघा वर्षाणा मधिकं शतं ॥ २५ ॥

इतिब्रह्मपुराणे व्यासर्षिसम्वादे नैमित्तिको लयो नाम द्वाविं शत्युत्तरशततमोऽध्यायः ॥ १२२ ॥

—०—

व्यास उवाच ॥ सप्तर्षिस्थान माक्रम्य स्थिते सिद्धिं द्विजोत्तमाः ॥ एकार्णवं भवत्येव त्रैलोक्य मखिलं ततः ॥ १ ॥ मुखनिःश्वासजो विष्णो र्वायु स्तेजलदा स्तदा ॥ नाशयन्त्यति भोविप्रा वर्षाणामधिकं शतं ॥ २ ॥ सर्व्वभूतमयोऽचिन्त्यो भगवान् भूतभावनः॥ अनादि रादि र्विश्वस्य पीत्वा वायु मशेषतः ॥ ३ ॥ एकार्णवे पुन स्तस्मिन् शेषसय्या स्थितः प्रभुः ॥ ब्रह्मरूपधरः शेते भगवा नादिकृद्धरिः ॥ ४ ॥ जनलोकगतैः सिद्धैः सनकाद्यै रभिष्टुतः ॥ ब्रह्मलोकगतैश्चैव चिन्त्यमानो मुमुक्षुभिः ॥ ५ ॥ आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः ॥ आत्मानं वासुदेवाख्यं चिन्तये त्परमेश्वरम् ॥ ६ ॥ एष नैमित्तिको नाम विप्रेन्द्राः प्रतिसञ्चरः ॥ नैमित्तिकं यत्र गच्छे द्ब्रह्मरूपधरो हरिः ॥ ७ ॥ यदा जागर्त्तिसर्वात्मा तदा संचेष्टते जगत् ॥ निमीलत्येत दखिलं माया शय्याशयेऽच्युते॥ ८॥ पद्मयोने र्दिनं यत्तु चतुर्युगसहस्रकं ॥ एकार्णवकृते लोके तावती

रात्रिरिष्यते ॥ ९ ॥ ततः प्रवुद्धो रात्र्यन्ते ततः सृष्टिं करोद्विजाः ॥ ब्रह्मरूपधरो विष्णु र्यथावः कथितं पुरा ॥ १० ॥ इत्येष कल्पसंहारो अन्तरः प्रलयो द्विजाः ॥ नैमित्तिकश्च कथितः शृणुध्वं प्राकृतं परम् ॥ ११ ॥ अनृष्टयाग्न्यादिभिः सम्यक् तेन संचीयते द्विजाः ॥ समस्तेष्वेव लोकेषु पातालेष्वखिलेषु च ॥ १२ ॥ महदादे र्विकारस्य विशेषा स्तस्य संकुले ॥ कृच्छ्राकाररिते तस्मिन् प्रवृत्ते प्रतिसञ्चरे ॥ १३ ॥ आपो ग्रसन्ति वैपूर्वं भूमेर्गन्धादिकं गुणं ॥ आत्तगन्धा ततो भूमिः प्रलयाय प्रकल्पते ॥ १४ ॥ प्रणष्टे गन्धतन्मात्रे भविता च जलात्मिका ॥ प्राय स्तदा प्रवृत्तास्तु वेगवन्तो महास्वनाः ॥ १५ ॥ सर्व्व मापूरयन्तीदं तिष्ठन्ति विचरन्ति च ॥ सलिलेनैवार्मिमता लोका लोकस्य सन्ततः ॥ १६ ॥ अपा मपि गुणो यस्तु ज्योतिषि स्त्रीयतेतु सः ॥ नश्यन्त्यापः सुतप्ता स्च रसतन्मात्रसंचयात् ॥ १७ ॥ ततश्चापोऽहृतरसा ज्योतिष्कं प्राप्नुवन्तिवै ॥ अग्न्यवस्थेतु सलिले तेजसा सर्व्वतो वृते ॥ १८ ॥ सचाग्निः सर्व्वतो व्याप्य आदत्तेतु जलं तदा ॥ सर्व्व मापूर्य्यते विश्वं तदा जगदिदं शनैः ॥ १९ ॥ अर्च्चिभिः सतु तेतस्मि न्तिर्य्य गूर्द्ध्व मध स्तदा ॥ ज्योतिषोपि परं रूपं वायुभूतं प्रभाकरम् ॥ २० ॥ प्रलीने च तत स्तस्मिन् वायुभूतेऽखिलात्मके ॥ प्रणष्टे रूपतन्मात्रे कृतरूपो विभावसुः ॥ २१ ॥ सन्ध्येतत्तु तदा ज्योति र्वायुर्वा भूयते महान् ॥ निरालोके तदा लोके वायुसंस्थे च तेजसि ॥ २२ ॥ ततः प्रजल माश्राद्य वायुः सम्भव मात्मनः ॥ ज

द्धं वायुश्च तिर्य्यक् च दोधवीति पुनः पुनः ॥ २३ ॥ वायोरपि गुणं स्पर्शं माकाशं ग्रसते ततः ॥ प्रशाम्यति तदा वायुः खन्तु तिष्ठ त्य नावृतम् ॥ २४ ॥ अरूपमकरस्पर्श मगन्धव दमूर्त्तियत् ॥ सर्वं वायु नभ स्चैव महत्तन्न प्रकाशते ॥ २५ ॥ परिमण्डलं तत्तु पर माकाशं शब्दलक्षणं ॥ शब्दमात्र' तथाकाशं सर्व्व मावृत्य तिष्ठति ॥ २६ ॥ ततः शब्दं गुणं तस्य भूतादिर्ग्रसते पुनः ॥ भूतेन्द्रियेषु युगपद्भूता दौ संस्थितेषुवै ॥ २७ ॥ अभिमानात्मको ह्येष भूतादि स्तामसः स्मृतः ॥ भूतादिं ग्रसते वापि महाबुद्धि र्विचक्षणाः ॥ २८ ॥ उर्वी मही च जगतः प्रान्तेतु वाह्यत स्तथा ॥ एवं सप्तमहाबुद्धे क्रमा त्प्र कृतय स्तदा ॥ २९ ॥ प्रत्याहारेषु ताः सर्वाः प्रविशन्ति परस्परं ॥ येनेद मावृतं सर्वं मण्डलं यस्तु लीयते ॥ ३० ॥ सप्तद्वीपं ससुद्रन्तु सप्तलोकं सपर्व्वतं ॥ उदकावरणं यत्तु ज्योतिषापीयतेतु तत् ॥ ३१ ज्योति र्वायौ लयं याति यात्याकाशे समीरणः ॥ आकाश ञ्चैव भूतादि र्ग्रसते तत्तथा महान् ॥ ३२ ॥ महत्तमोपि सततं प्रकृत्या ग्रसते द्विजाः ॥ गुणसाम्यमनुद्रेक्त मनन्य ञ्च द्विजोत्तमाः ॥ प्रोच्य ते प्रकृति र्हेतुः प्रधानं कारणं परं ॥ ३३ ॥ इत्येषा प्रकृतिः सर्वा व्य क्ताव्यक्तस्वरूपिणी ॥ व्यक्तस्वरूप मव्यक्ते तस्मा विप्राः प्रलीयते ॥ ३४ ॥ एकः शुद्धोऽक्षरो नित्यः सर्व्वव्यापी तथा पुनः ॥ सोप्यंशः सर्व्वभूत स्य द्विजेन्द्राः परमात्मनः ॥ ३५ ॥ नश्यन्ति सर्वे यत्रामी नामजात्या दि कल्पनाः ॥ सत्तामात्रात्मको यस्मै यस्मै ज्ञानात्मकः परम् ॥ ३६ ॥

सब्रह्मतत्परं वासः परमात्मा सचेश्वरः ॥ सविष्णुः सर्व्व मेवेदं यतो
नावर्त्तते पुनः॥ ३७॥ प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी॥
पुरुष श्चाप्युभावेतौ लीयेते परमात्मनि ॥ ३८॥ परमात्माच सर्वेषा
माधारः परमेश्वरः॥ विष्णुर्नाम्ना सवेदेषु वेदान्तेषुच गीयते॥ ३९
प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म्म वैदिकं ॥ ताभ्या मुताभ्यां पुरुषः
सर्व्वमूर्त्तिः सइज्यते ॥ ४०॥ ऋग्यजुःसामभि र्मार्गैः प्रवृत्ते रीज्यते
ह्यसौ ॥ यज्ञेश्वरो यज्ञपुमान् यज्ञभुक् पुरुषोत्तमः ॥ ४१ ॥ ज्ञाना
त्मा ज्ञानयोगेन ज्ञानमूर्त्तिः सइज्यते॥ निवृत्ते योगिभि र्मार्गै र्विष्णु
र्मुक्तिफलप्रदः ॥४२॥ ह्रस्वदीर्घप्लुतै र्यच्च किञ्चिद्द स्त्वभिधीयते॥
यच्च वाचा मविषयं तत्सर्वं विष्णु रव्ययः ॥ ४३ ॥ व्यक्तः सएव चा
व्यक्तः सएव पुरुषोऽव्ययः ॥ परमात्मा च विश्वात्मा विश्वरूपधरो
हरिः ॥ ४४ ॥ व्यक्ताव्यक्तांशिका तस्मि न्प्रकृतिः सा प्रलीयते ॥
पुरुष श्चापि भोविप्रा यतो द्रव्यो महात्मनः ॥ ४५ ॥ द्विपरार्द्धात्म
कः कालः कथितो योमया द्विजाः ॥ तदहस्तस्य विप्रेन्द्रा विष्णो
रीशस्य कथ्यते ॥ ४६ ॥ व्यक्तेतु प्रकृतौ लीने प्रकृतौ पुरुषे तथा ॥
ततः स्थिते विनातेन तत्प्रमाणं तपोधनाः ॥ ४७ ॥ नैवाहस्तस्य न
निशा नित्यस्य परमात्मनः ॥ उपचारा त्तथाप्येत त्तस्येशस्यतु कथ्य
ते ॥ ४८ ॥ इत्येष मुनिशार्दूलाः कथितः प्राकृतो लयः ॥ ४९ ॥

इति ब्राह्मे पुराणे व्यासर्षिसम्वादे प्राकृतलयो नाम त्रयो
विंशत्युत्तरशततमोऽध्यायः ॥ १२३ ॥

व्यास उवाच ॥ आध्यात्मिकादितो विप्रा ज्ञात्वा तापत्रय
म्बुधः ॥ उत्पन्नज्ञानवैराग्यः संप्राप्नोत्यात्यन्तिकं लयम् ॥ १ ॥ अध्या
त्मिकोपि द्विविधः शारीरो मानस स्तथा ॥ शारीरो बहुभि र्भेदै
र्भिद्यते श्रूयताञ्च सः ॥ २ ॥ शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः ॥
गुल्मम र्शश्च श्वासश्च एथुदद्भि रनेकधा ॥ ३ ॥ तथाक्षिरोगातीसार
कुष्ठ चामयसंज्ञकैः ॥ भिद्यते देहज स्तापो मानसं श्रोतुमर्हथ ॥ ४॥
कामक्रोधभयद्वेषलोभमोहविषादजः ॥ शोकासूयापमानेर्ष्या मात्स
र्यांभिभव स्तदा ॥ ५ ॥ मानसोपि द्विजश्रेष्ठा स्तापो भवति नैक
धा ॥ इत्येव मादिभि र्भेदै र्भिद्यते मुनिसत्तमाः ॥ ६ ॥ सुकुमार
तनु र्गर्भे जन्तु र्बहुमलावृते ॥ वसते वेष्टितो भग्नः एष्टग्रीवा च संह
ति ॥ ७ ॥ अत्यम्लकटुतीक्ष्णैश्च लवणै र्मातृभोजनैः ॥ अतितापा
भिरत्यर्थं बाध्यमानोऽतिवेदनः ॥ ८ ॥ प्रसारणाकुञ्चनादौ नांगा
नां प्रभुरात्मनः ॥ सकृन्मूत्रमहापंकशया सर्व्वत्र पीडितः ॥ ९ ॥
निरुच्छ्वासः सचैतन्यः स्मरन् जन्मशतान्यथ ॥ आस्ते गर्भेऽतिदुःखेन
निजकर्मणि चेतसः ॥ १० ॥ जायमानः पुरीषास्रक्मूत्रशुक्राविला
ननः ॥ प्रजायत्येन वातेन पीड्यमानोऽस्थिबन्धनः ॥ ११ ॥ अधो
मुखोपि क्रियते प्रबलैः सूतिमारुतैः ॥ क्लेशै र्निष्क्रान्ति माप्नोति
जठरा त्तनु रातुरः ॥ १२ ॥ मूर्छा मवाप्य महतीं संस्पृष्टो व्याधि
ना पुनः ॥ विज्ञानभ्रंश माप्नोति जातश्च मुनिसत्तमाः ॥ १३ ॥
कटकै रिव चेष्टांगं क्रकचै रिव सारितः ॥ पूतिव्रणाच्च पतितो

सम्भक्ष्यमाणानां द्वीपिभि श्चोपभुञ्जतां ॥ ४१ ॥ क्वथ्यतां विलमध्ये च क्लियतां चारदर्शने ॥ गुह्यानि पात्यमानानां क्षिप्यतां चेप्ययन्त्र कैः ॥ ४२ ॥ नरके यानि दुःखानि पापहेतूद्भवानि च ॥ प्राप्यन्ते नारकै विंप्रा स्तेषां संख्या न विद्यते ॥ ४३ ॥ न केवलं द्विजश्रेष्ठा नरके दुःख सम्भनि ॥ स्वर्गेपि पापभीतस्य चयिष्णो र्नास्ति नि र्वृतिः ॥ ४४ ॥ पुनश्च गर्भे भवति जायते च पुन र्नरः ॥ गर्भे वि लीयते भूयो जायमानोऽस्तमेति च ॥ ४५ ॥ जातमात्र श्च म्रियते वालभावेऽथ यौवने ॥ यद्य त्प्रीतिकरं पुंसां वस्तु विप्राः प्रजायते ॥ तदेव दुःखवृक्षस्य वीजं तमुपगच्छति ॥ ४६ ॥ कलत्रपुत्रमित्रार्थगृ हक्षेत्रधनादिकैः ॥ क्रियते न तथा भूरि सुखं पुंसां यथासुख म् ॥ ४७ ॥ इति संसारदुःखार्क्तितापतापितचेतसां ॥ विमुक्तपादप च्छायामृते कुत्र सुखं नृणां ॥ ४८ ॥ तदस्य त्रिविधस्यापि दुःखजा तस्य पण्डितः ॥ गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥ ४९ ॥ नि रस्तातिशयाह्लादसुखभावैकलक्षणं ॥ भेषजं भगवत्प्राप्ति रेकान्ता त्यन्तिका मता ॥ ५० ॥ तस्मा त्तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितै र्न्न रैः ॥ तत्प्राप्तिहेतुर्ज्ञान ञ्च कर्म चोक्तं द्विजोत्तमाः ॥ ५१ ॥ आग मोक्तं विवेकाढ्यं द्विधा ज्ञानं तथोच्यते ॥ शब्दब्रह्मागममयं परंब्र ह्मविवेकजम् ॥ ५२ ॥ अन्धन्तम इवाज्ञानं दीपं वेदोदयोद्भवम् ॥ यथा सूर्य्य स्तथा ज्ञानं यद्वै विप्रा विवेकजम् ॥ ५३ ॥ मनु रप्याह वेदार्थं स्मृत्वायं मुनिसत्तमाः ॥ तदेत च्छ्रूयता मत्र सशब्दं गदतो

मम ॥ ५४ ॥ शब्दे ब्रह्मणि वेदितव्ये शब्दब्रह्मपरं च यत् ॥ शब्दब्र
ह्मणि निष्णातः परंब्रह्माधिगच्छति ॥ ५५॥ द्वेविधे वेदितव्येवै इति
चार्थवती श्रुतिः ॥ परया दुष्करप्राप्ति ऋग्वेदादि मथापरे ॥ ५६॥
प्रतद्व्यक्त मजर मचिन्त्य मज मव्ययम् ॥ अनिर्देश्य मरूप ञ्च
पाणिपादाद्यसंयुतम् ॥ ५७ ॥ विभुं सर्व्वगतं नित्यं भूतयोनिमिवा
रणिं ॥ व्याप्यव्याप्यं यतः सर्वं तम्वै पश्यन्ति सूरयः ॥ ५८ ॥ तद्ब्रह्म
तत्परं धाम तद्ध्येयं कांक्षमोक्षणः ॥ श्रुतवाक्योचितं सूक्ष्मं तद्वि
ष्णोः परमम्पदम् ॥ ५९ ॥ उत्पत्तिं प्रलय ञ्चैव भूताना मागतिं ग
तिम् ॥ वेत्ति विद्या मविद्या ञ्च सवाच्यो भगवानिति ॥ ६० ॥ ज्ञा
नशक्तिवलैश्वर्य्यवीर्य्यतेजांस्यशक्तितः ॥ भगवच्छब्दवाच्यानि विना
हेयै र्गुणादिभिः ॥ ६१ ॥ सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ॥ भू
तेषु वसते यत्तु सर्व्वत्र वसितानि यत् ॥ धाता विधाता जगतां वा
सुदेव स्ततः प्रभुः ॥ ६२ ॥ स सर्व्वभूतप्रकृति विंकारा गुणाश्च दो
षाश्च गुणै रतीतः ॥ अतीत्य सर्वावरणोऽखिलात्मा तेन स्मृतं यद्भ
वतान्तरालं ॥ ६३ ॥ समस्तकल्याणगुणोऽगुणात्मकः स्वशक्तिले
खाहृतमूर्त्तिसर्गः ॥ द्रष्टा गृहीताभिमतोनुदेहः ससाधिता शेषज
गद्धितोऽसौ ॥ ६४ ॥ तेजोवलैश्वर्य्य महावबोधः सवीर्य्य शक्त्यादिगु
णैकराशिः ॥ परावराणां सकलं न यत्र क्लेशादयः सन्ति परावरे
शे ॥ ६५ ॥ सईश्वरोऽव्यक्तसमस्तरूपो व्यक्तस्वरूपः प्रकटस्वरूपः ॥
सर्वेश्वरः सर्व्वदा सर्व्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥ ६६ ॥

धरण्यां कृमिको यथा ॥१४॥ कण्डूयनेऽपि नोशक्तः परिवर्त्तेप्यनी
श्वरः ॥ स्तनपानादिकाहार मवाप्नोति परेच्छया ॥ १५ ॥ अशु
चिप्रस्तरे शेते कीटदंशादिभि स्तदा ॥ भक्ष्यमाणोऽपि नैवेशो
निर्हतो विनिचारणे ॥ १६ ॥ जन्मदुःखान्यनेकानि जन्मनोऽन्य
न्तराणि च ॥ वालभावे यथाप्नोति अधिभौतादिकानि च ॥१७॥
अज्ञानतमसा छन्नो मुह्यतः कारणेन च ॥ न जानाति कुतः
कोऽहं कुत्र गत्वा किमात्मकः ॥ १८ ॥ केन वन्धेन वद्धोऽहं कार
णं किमकारणम् ॥ किं कार्य्यं मथवा कार्य्यं किं स्वाक्यं किञ्च नो
च्यते ॥ १९ ॥ को धर्मः कश्च वैधर्मः कस्मि न्वर्त्तेत वाकथं । किंक
र्त्ता किमर्त्तव्या किम्वा किंगुणदोषवित् ॥ २० ॥ एवञ्च सुसमै मू
ढै रज्ञानप्रभवं महत् ॥ अवाप्यते नरै र्दुःखं शिश्नोदरपराय
णैः ॥ २१ ॥ अज्ञानतामसो भावः कार्य्यारम्भप्रवृत्तयः ॥ अज्ञानि
नां प्रवर्त्तन्ते कर्मलोपस्तु भोद्विजाः ॥ २२ ॥ नरकं कर्मणां लोपा
त्फल माहु र्महर्षयः ॥ तस्मा दज्ञानदुःखानि हरचामुत्र चोत्त
माम् ॥२३॥ जराजर्जरदेहस्तु शिथिलावयवः पुमान् ॥ विचरन्क्षीण
दशनो वलिस्नायुशिराहतः ॥ २४ ॥ दूरप्रणष्टनयनो व्योमान्तर्गत
तारकः ॥ नासाविवरनिर्यातरोमपुञ्ज श्चलद्वपुः ॥ २५ ॥ प्रणाय
स्तैः समस्तैश्च करणै र्मरणोन्मुखः ॥ ततः क्षणेप्यनुभूतानां नस्म
र्त्तुं खलु वस्तुतां ॥ २६ ॥ सकृदुच्चरितै र्वाक्यैः समुद्भतमहाश्रमः ॥
श्वासकास मथायास समुद्भूतप्रजागरः ॥ २७ ॥ अनेनोत्याप्यते

भत्ये यथा संवेशते जरं ॥ भृत्यात्मापुत्रदाराणा मवमानपरिप्लु
तः ॥ २८ ॥ प्रचीणाखिलशौचै स्र विहाराहारसंस्पृहः ॥ हास्याप
रिजनस्यापि निर्विण्णाशेषबान्धवः ॥ २९ ॥ अनुभूतमिवान्यस्मिन्
जन्मन्यात्मविचेष्टितम् ॥ संस्मरे यौवनं दीर्घनिःश्वासपरितापि
तः ॥ ३० ॥ एवमादीनि दुःखानि जराया मनुभूयते ॥ मरणे
यानि दुःखानि प्राप्नोति शृणुतान्यपि ॥ ३१ ॥ श्लथग्रीवांघ्रिहस्तो
थ प्राप्नोति यातनान्तुषः ॥ मुहु ग्लानिपरश्चापि मुहु र्ज्ञानलवा
न्वितः ॥ ३२ ॥ हिरण्यधान्यतनयं सुतान् भृत्यगृहादिषु ॥ एते
कथं भविष्यन्ति तती च ममताकुलः ॥ ३३ ॥ मर्मभिद्भि र्महाघो
रैः क्रकचैरिव दारुणैः ॥ शरै रिवान्तकस्योग्रै र्विध्यमानोऽसुबन्ध
नः ॥ ३४ ॥ परिवर्त्तमानताराक्षि हस्तपादौ मुहुः क्षिपन् ॥ संशु
ष्यमाणताल्वोष्ठः कण्ठे घुरघुरायते ॥ ३५ ॥ निरुद्धकण्ठदेश
श्च उदानश्वासपीडितः ॥ तापेन महता व्याप्त स्तृषार्त्त श्च क्षुधातु
रः ॥ ३६ ॥ क्लेशा दुत्क्रान्ति माप्नोति याम्यकिङ्करपीडितः ॥ तत
श्च यातनादेहं क्लेशेन प्रतिपद्यते ॥ ३७ ॥ एतान्यन्यानि घोराणि
दुःखानि मरणे नृणां ॥ शृणुध्वं नरके यानि प्राप्यते पुरुषै र्मृ
तैः ॥ ३८ ॥ याम्यकिङ्करपाशादिग्रहणं दण्डताडनं ॥ यमस्य द
र्शनं घोर मुग्रमार्गविलोकनम् ॥ ३९ ॥ करम्भवालुकावह्नियन्त्र
शस्त्रादिभीषणम् ॥ प्रत्येकयातनाया श्च पातनादि द्विजोत्त
माः ॥ ४० ॥ क्रकचैः पीड्यमानानां व्याघ्रवक्त्रे प्रवेशनम् ॥ गृध्रैः

लीयते ॥ समाप्त योगयुक्तस्य तदाप्नोति परम्पदम् ॥ २३ ॥ असंशयं यदा चित्तं योगिनः सर्व्वकर्म्मसु ॥ भगवत्यानन्दमासाद्य तदा निर्वाणमृच्छति ॥ २४ ॥ शुद्धं सूक्ष्मं गुणातीतं सत्वाख्यं पुरुषोत्तमं ॥ प्राप्य योगवला योगी मुच्यते नात्र संशयः ॥ २५ ॥ निःस्पृहः सर्व्वकामेभ्यः सर्व्वत्र प्रियदर्शनः ॥ सर्व्वत्रानित्यवुद्धिस्तु योगी मुच्येत नान्यथा ॥ २६ ॥ इन्द्रियाणि न सेवेत वैराग्येन च योगवित् ॥ स च संन्यासयोगेन मुच्यते नात्र संशयः ॥ २७ ॥ न च पद्मासना योगो न नासाग्रनिरीक्षणात् ॥ मनसश्चेन्द्रियाणाञ्च संयोगो योगउच्यते ॥ २८ ॥ एव न्मया मुनिश्रेष्ठा योगः प्रोक्तो विमुक्तिदः ॥ संसारनाशहेतु श्च किमन्य च्छ्रोतु मिच्छत ॥ २९ ॥ लोमहर्षण उवाच ॥ श्रुत्वा तं वचनं तस्य साधु साधु तयेरितं ॥ व्यासं संपूज्य मुनयः पुनः प्रष्टुं समुद्यताः ॥ ३० ॥

इत्यादिब्रह्मपुराणे व्यासर्षि सम्बादे योगाध्यायो नाम पञ्चविंशत्युत्तरशततमोऽध्यायः ॥ १२५ ॥

—०—

मुनय ऊचुः ॥ तववक्त्राब्धिसम्भूत मम्टतं वाङ्मयं मुने ॥ पिवतां नोद्विजश्रेष्ठा नतृप्तिरिह दृश्यते ॥ १ ॥ तस्मा योगं मुने ब्रूहि विस्तरेण च मुक्तिदं ॥ सांख्य ञ्च द्विपदां श्रेष्ट श्रोतुमिच्छाम हे वयम् ॥ २ ॥ प्रज्ञावान् श्रोत्रियो यज्वा ख्यातः प्राज्ञोऽनसूयकः ॥ सभ्यसतमिति ब्रह्मन् कथं ब्रह्माधिगच्छति ॥ ३ ॥ तपसा ब्रह्मच

येण सर्व्वत्यागेन मेधया ॥ सांख्येन यदिवा योग मेत त्प्रष्टो वदस्व
नः ॥ ४ ॥ मनसा चेन्द्रियाणाञ्च यथैकाग्र मवाप्यते ॥ केनोपायेन
पुरुष स्तन्नो व्याख्यातु मर्हसि ॥ ५ ॥ व्यास उवाच ॥ नान्यत्र वि
द्यातपसो नान्यत्रेन्द्रियनिग्रहात् ॥ नान्यत्र सर्व्वसन्त्यागा त्सिद्धिं
विन्दति कश्चन ॥ ६ ॥ महाभूतानि सर्वाणि पूर्व्वसृष्टिं स्वयम्भुवः ॥
भूयिष्टं प्राणभिज्ञामे निविष्टानि शरीरिषु ॥ ७ ॥ भूमेर्देहो जला
त्स्नेहो ज्योतिष श्चक्षुषी स्मृते ॥ प्राणायामाश्रयो वायु श्चेष्टाकाशः
शरीरिणः ॥ ८ ॥ क्रान्तो विष्णु र्बलाशक्तः कोष्ठोऽग्निर्भोक्तु मिच्छ
ति ॥ कर्णयोः प्रदिशः श्रोत्रे जिह्वायां वा सरस्वती ॥ ९ ॥ कर्णत्व
क्चक्षुषी जिह्वा नासिका चैव पञ्चमी ॥ दर्शनानी न्द्रियोक्तानि
द्वारात्याहारसिद्धये ॥ १० ॥ शब्दस्पर्शौ तथा रूपं रसं गन्धं च प
ञ्चमं ॥ एवं सप्तदशं देहं वृतं षोडशभि र्गुणैः ॥ ११ ॥ मनीषी मन
सा विप्राः पश्ये दात्मान मात्मनि ॥ नह्येष चक्षुषा दृश्यो नापि स
र्वैरपीन्द्रियैः ॥ १२ ॥ मनसातु प्रदीपेन महानात्मा प्रकाशते ॥ अ
स्पर्शशब्दरूपन्तु रसगन्धविवर्जितम् ॥ अशरीरं शरीरेषु निरीक्षे
त निरिन्द्रियम् ॥ १३ ॥ विद्याभिजनसम्पन्ने ब्राह्मणे गवि हस्ति
नि ॥ शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १४ ॥ सहि स
र्वेषु भूतेषु जङ्गमेष्वपरेषु च ॥ वसत्येको महानात्मा येन सर्व्व मि
दंततम् ॥ १५ ॥ सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि ॥ यदा
पश्यति भूतात्मा ब्रह्म सम्पद्यते तदा ॥ १६ ॥ यावानात्मनि वेदात्मा

सञ्ज्ञायते येन तदस्तदोषा शुभं परं निर्मल मेकरूपं ॥ संदृश्यते वाप्यवगम्यतेवा नज्ज्ञान मज्ञानमतोऽन्यदुक्तम् ॥ ६७ ॥

इत्यादि ब्राह्मे पुराणे व्यासर्षिसम्वादे आत्यन्तिकलयवर्णनं नाम चतुर्विंशत्युत्तरशततमोऽध्यायः ॥ १२४ ॥

—०—

मुनय ऊचुः ॥ इदानीं ब्रूहि योगञ्च दुःखसंयोगभेषजम् ॥ यंविदित्वाव्ययं तत्र युंजामः पुरुषोत्तमम् ॥ १ ॥ सूत उवाच ॥ स श्रुत्वा वचनं तेषां कृष्ण द्वैपायन स्तदा ॥ अब्रवी त्परमप्रीतो योगं योगविदाम्वरः ॥ २ ॥ व्यास उवाच ॥ योगं वक्ष्यामि भोविप्राः शृ णुध्वं मदनाशनं ॥ यमभ्यस्याप्नुया द्योगी मोक्षं परमदुर्लभम् ॥ ३ ॥ श्रुत्वादौ योगशास्त्राणि गुरु माराध्य भक्तितः ॥ इतिहासं पुराण ञ्च वेदार्थं च विचक्षणः ॥ ४ ॥ आहारं योगदोषां स्च देशं कालंच बुद्धिमान् ॥ ज्ञात्वा स सम्यग्युञ्ज्यात्तं निर्द्वंद्वो निःपरिग्रहः ॥ ५ ॥ भैक्ष्यं भोक्तुं यवागू ञ्च पत्रं मूलफलं पयः ॥ यावकं कणपिण्याक माहारं योगसाधनम् ॥ ६ ॥ न मनो बहुधा धार्यं न श्रान्ते क्षुधि तेपि वा ॥ न द्वंद्वे नच शीतेन न चोष्णेन शिलात्मके ॥ ७ ॥ स शब्देन जलाभ्यासे जीर्णगोष्ठे चतुष्पथे ॥ सरीसृपे न श्मशाने नद्यां नाग्न्यर्य सन्निधौ ॥ ८ ॥ न शुष्कपर्णनिचये योगं युञ्जीत कर्हिचि त् ॥ देशा नेता ननादृत्य मूर्खत्वाद्यो युनक्तिवै ॥ ९ ॥ प्रविष्ठे तस्य येदोषा जायन्ते विघ्नकारकाः ॥ वाद्यक्यं जडतालापः स्मृतेरं खल्प

मूकता ॥ ज्वरश्च जायते सद्य स्तद्द ज्ञानतोद्भवः ॥ १० ॥ तस्मा त्स र्वात्मना कार्य्या रचा योगविदा सदा ॥ धर्मार्थकाममोचाणां शरी रं साधनं यतः ॥ ११ ॥ आश्रमे विजने गुह्ये निःशब्दे निर्भये नगे ॥ शून्यागारे शुचौ रम्ये चैकान्ते देवतालये ॥ १२ ॥ रजन्याः पश्चिमे भागे पूर्व्वे च्च सुसमाहितः ॥ पूर्वाह्णे मध्यमे वाह्णि युक्ताहारो जि तेन्द्रियः ॥ १३ ॥ आसीनः प्राङ्मुखो रम्ये आसने सुखनिश्चले ॥ नातिनीचे नचोच्छ्रेच निस्पृहः सत्यवाक् शुचिः ॥१४॥ जितनिद्रो जितक्रोधः सर्व्वभूतहिते रतः ॥ सर्व्वद्वंदसहो धीरः समकायांघ्रिम स्तकः ॥ १५ ॥ नाभौ निधाय हस्तौ द्वौ शान्तः पद्मासने स्थितः ॥ संस्थाप्य दृष्टिं नासाग्रे प्राणानायम्य वाग्यतः ॥ १६ ॥ समाहृत्येन्द्रि यग्रामं मनसा हृदये मुनिः ॥ प्रणवं दीर्घं मुद्दिश्य संभाव्यामुं सु निश्चलः ॥ १७ ॥ रजसा तमसोद्वत्तिं सत्येन रजस स्तथा ॥ संछाद्य निर्मलः शान्तः स्थितः संवृतलोचनः ॥ १८ ॥ हृत्पद्मकोटरे लीनं सर्व्वव्यापि निरञ्जनम् ॥ युञ्जीत सततं योगी मुक्तिदं पुरुषोत्तम म् ॥ १९ ॥ करणेन्द्रियभूतानि चेत्रज्ञे प्रथमं न्यसेत् ॥ चेत्रज्ञ ञ्च परे योज्य ततो युञ्जीत योगवित् ॥ २० ॥ वालाग्रशतधा भागं त त्सूक्ष्मं परम स्पदम् ॥ मनो दीपेन पश्यन्ति योगिनो ज्ञानतत्प राः ॥ २१ ॥ इन्द्रियाणि समाहृत्य कूर्मोङ्गानीव योगवित् ॥ मनो यस्यास्तमभ्येति परमात्मनि चञ्चलं ॥ सन्त्यज न्विषयां स्तस्य योग सिद्धिः प्रकाशिता ॥ २२ ॥ यदा निर्विषयं चित्तं परे ब्रह्मणि

तावानात्मा परात्मनि ॥ यएवं सततं वेद सोऽमृतत्वाय कल्पते ॥ १७
सर्व्वभूतात्मभूतस्य सर्व्वभूतहितस्य च ॥ देवापि मार्गे मुह्यन्ति अ
पदस्य पदैषिणः ॥ १८ ॥ शकुन्तानामिवाकाशे मत्स्यानामिव चोद
के ॥ यथागति र्नदृश्येत तथा ज्ञानविदां गतः ॥ १९ ॥ कालः पच
ति भूतानि सर्वाण्येवात्मनात्मनि ॥ यस्मिन्स्तु पच्यते कालः तन्न
वेद: कश्चन ॥ २० ॥ तदूर्द्ध्वं निर्यं चोर्द्ध्वं नचैवाभिमुखः पुनः ॥
नमध्ये प्रतिगृह्णीते नैव किञ्चिन्नकिञ्चनः ॥ २१ ॥ यदस्यग्रे समा
गच्छे दस्था वाणो गुणाच्चयुतः ॥ नैवादय: कारणस्यापि यदयपिस्या
न्मनोजवः ॥ २२ ॥ तस्मात्सूक्ष्मतरं नास्ति नास्ति स्थूलतरं तथा ॥
सर्व्वतः पाणिपादान्तं सर्व्वतोऽक्षिशिरोमुखं ॥ सर्व्वतः श्रुतिमल्लोके
सर्व्वमावृत्य तिष्ठति ॥ २३ ॥ तदेवाणोरणुतरं महद्भ्योपि महत्तर
म् ॥ तदन्तः सर्व्वभूतानां ध्रुवं तिष्ठन्नदृश्यते ॥ २४ ॥ अक्षरं चाक्ष
रञ्चैव द्वैधीभावो यमात्मनः ॥ क्षरः सर्वेषु भूतेषु दिव्यमस्तमक्ष
रम् ॥ २५ ॥ नवद्वारं पुरं कृत्वा हंसोहि नियतो वशी ॥ ईदृशः स
र्व्वभूतेभ्यः स्थावरस्य चरस्य च ॥ २६ ॥ हानेनागतिकल्पानां नरा
णां सञ्चयेन च ॥ शरीराश्रमजस्याहु र्हंसत्वं पारदर्शिनः ॥ २७ ॥
हंसोक्तं च क्षर ञ्चैव कूटस्थं यत्तदक्षरं ॥ तद्विद्वानक्षरं यायां ज्जहा
ति प्राणजन्मनी ॥ २८ ॥ व्यास उवाच ॥ भवद्भिः पृच्छितो विप्रा
यथावदिह तत्त्वतः ॥ सांख्यं ज्ञानेन संयुक्तं यदेत त्कीर्त्तितं म
या ॥ २९ ॥ योगकृत्यं ततो विप्रा वर्त्तयिष्याम्यतःपरम् ॥ एकत्वं बु

द्धिमनसो रिन्द्रियाणा ञ्च सर्वशः ॥ ३० ॥ आत्मनोध्यायिनोज्ञा
नं ज्ञानमेत दनुत्तमं ॥ तदेत दुपशान्तेन दांतेनाध्यात्मानुशालि
ना ॥ ३१ ॥ आत्मारामेण बोधेन बोधव्यं शुचिकर्मणा ॥ योगदो
षान्समुच्छिद्य पञ्चता न्कवयो विदुः ॥ ३२ ॥ कामं क्रोधं च लो
भं च भयं स्वप्नं च पञ्चमं ॥ क्रोधं शमेन जयति कामं संकल्पवर्ज्ज
नात् ॥ ३३ ॥ सत्त्वसंसेवना द्धीरो निद्रा मुच्छेत्तु मर्हति ॥ धृता
शिष्णोदरं रक्षे त्पाणिपादं च चक्षुषा ॥ ३४ ॥ चक्षुः श्रोत्रं च
मनसा मनो वाचं च कर्म्मणा ॥ अप्रमादा द्भयं जन्तु र्दंभं प्राज्ञोप
सेवनात् ॥ ३५ ॥ एव मेता ञ्जये द्दोषान् जये न्नित्य मतन्द्रितः ॥
अग्नींश्च ब्राह्मणां श्चार्थ देवताः प्रणमेत वा ॥ ३६ ॥ वर्ज्जये दस
तीं वाचं हिंसायुक्तां मनोनुगां ॥ ब्रह्मतेजोमयं शुक्रं यस्य सर्व्व मि
दं जगत् ॥ ३७ ॥ एतस्य भूतभूतस्य दृष्टं स्थावरजङ्गमं ॥ ध्यान
मध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ॥ ३८ ॥ शौचं चैवात्मनः शु
द्धि रिन्द्रियाणां च निग्रहं ॥ एतै र्विवर्द्धते तेजः पाप्मानं चापक
र्षति ॥ ३९ ॥ समः सर्वेषु भूतेषु लब्धा लब्धेन वर्त्तते ॥ धृतपा
प्मातु तेजस्वी लघ्वाहारो जितेन्द्रियः ॥ ४० ॥ कामक्रोधौ वशे
कृत्वा निषेवे द्ब्रह्मणः पदं ॥ मनस श्चेन्द्रियाणां च तत्त्वैकाग्र्यं स
माहितः ॥४१॥ पूर्वरात्रा त्पराद्धेंवा धारये न्मन आत्मना ॥ दान्त
पञ्चेन्द्रियस्यास्य यद्यकं छिद्रमिन्द्रियं ॥ ततोऽस्य चरति प्रज्ञा गि
रेः पादादिवोदकं ॥४२॥ मनसा पूर्वमादद्या त्कर्मणामिव यस्य च ॥

ततः श्रोत्रं तत स्वचु र्व्हिजाघ्राण ञ्च योगवित् ॥ ४३ ॥ तत एतानि संयम्य मनः संस्थापये द्धृदि ॥ तथैवायोज्य संकल्पं मनो ह्यात्मनि धारयेत् ॥ ४४ ॥ यश्चेन्द्रियाणि सर्वाणि मनः संस्थापये द्धृदि ॥ यथैतान्यवतिष्ठन्ते मनः षष्टान्यथात्मनि ॥ ४५ ॥ प्रसीदन्निव संस्था यां यदा ब्रह्म प्रकाशते ॥ विधूम इव दीप्ताग्नि रादित्य इव दीप्ति मान् ॥ ४६ ॥ वैद्युतोग्नि रिवाकाशे पश्यत्यात्मा तथात्मनि ॥ सर्व्वं तत्र ञ्च सर्व्वत्र व्यापकत्वा यदृश्यते ॥ ४७ ॥ तम्पश्यन्ति महात्मा नो ब्राह्मणा ये मनीषिणः ॥ धृतिमन्तो महाप्राज्ञाः सर्व्वभूतहिते रताः ॥ ४८ ॥ एवं परिमितं काल माचरन् शंसितव्रतः ॥ आसीनो हि रहस्येको गच्छेदक्षरसाम्यतां ॥ ४९ ॥ प्रमोहो भ्रासश्चावर्त्तो घ्रा णश्रवणदर्शने ॥ अद्भुतानि च संस्पर्शशीतोष्णं मारुताकृतिः ॥ ५० ॥ प्रतिभानुपसर्गां श्च प्रतिसंगृह्य योगतः ॥ तां स्तत्त्वविदनादृत्य सा त्म्येनैवातिवर्त्तयेत् ॥ ५१ ॥ कुर्य्यां त्परिचयं योगे त्रैलोक्ये नियतो मुनिः ॥ गिरिश्रृङ्गे तदा चैत्ये वृक्षमूलेषु योजयेत् ॥ ५२ ॥ सन्नि यम्येन्द्रियग्रामं कोष्ठे तादृक् मना इव ॥ एकान्ते चिन्तये न्नित्यं यो गान्यायोजये त्परः ॥ ५२ ॥ येनोपायेन शक्येत नियन्तुं चञ्चलं म नः ॥ तञ्च युक्तो निषेवेत नचैव विमले ततः ॥ ५४ ॥ शून्यागारा णि चैकाग्रो निवासार्थं मुपक्रमात् ॥ नातितिष्ठे त्परं वाचा कर्म्म णा मनसापि च ॥ ५५ ॥ उपेक्षकोपहारोपलब्धालब्धे समो भ वेत् ॥ यश्चैन मभिनिन्देत यश्चैन मभिवादयेत् ॥ ५६ ॥ समस्तयो

स्वाप्युभयो नाभिध्याये च्छुभाशुभे ॥ नप्रहृष्येत लाभेषु नालाभेन च
चिन्तयेत् ॥ ५७ ॥ समः सर्वेषु भूतेषु सधर्म्मामति रीश्वरः ॥ एवं
स्वस्थात्मनः साधोः सर्वत्र समदर्शिनः ॥ षण्मासा न्नित्ययुक्तस्य श
ब्दब्रह्माभिवर्त्तते ॥ ५८ ॥ वेदमार्गः प्रजाः स्पृष्टाः समलोष्टाश्मका
ञ्चनः ॥ एवन्तु निरतो मार्गं विरमे न्नविमोहितः ॥ ५९ ॥ ऋपिव
र्णा च कृत्यस्य नारी वाधर्मचारिणी ॥ तदप्येतेन मार्गेण गच्छेतां
परमां गतिम् ॥ ६० ॥ अजं पुराण मजरं यदिन्द्रियै र्मनो निवर्त्तै
स्तु विचारयन्ति ॥ अवेक्ष्य चेमं परमेष्ठिसाम्यतां प्रयान्त्यनावृत्तिग
ति न्मनीषिणः ॥ ६१ ॥

इतिब्राह्मे पुराणे व्यासर्षिसम्वादे सांख्ययोगोनाम षड्विंश
त्युत्तरशततमोऽध्यायः १२६ ॥

—०—

मुनय ऊचुः ॥ यदिदं वेदवचनं कुरु कर्म त्यजेतिवा ॥ का
न्दिशं विद्यया यान्ति काञ्च गच्छन्ति कर्मणा ॥ १ ॥ एते चान्येन
वैरूप्ये वर्त्तन्ते प्रतिकूलयात् ॥ व्यास उवाच ॥ शृणुध्वं मुनिशार्दूला
यत्पृच्छध्वं समासतः ॥ कर्मविद्यामयौ चैतौ व्याख्यास्यामि क्षराक्ष
रौ ॥ २ ॥ यान्दिशं विद्यया यान्ति यां गच्छन्ति च कर्मणा ॥ शृणु
ध्वं सांप्रतं विप्रा गहनं ह्येतदुत्तमं ॥ ३ ॥ अस्ति धर्म इतीत्युक्तं ना
स्ति तत्रैव योवदेत् ॥ पक्षद्वयस्य साद्दृश्य मिमं यन्त्र मवेक्ष्यथ ॥ ४ ॥
द्वाविमावेव पन्थानौ यत्र वेदाः प्रतिष्ठिताः ॥ प्रवृत्तिलक्षणो धर्म्मो

निवृत्तोवा विभाषितः ॥ ५ ॥ कर्मणा वध्यते जन्तु र्विद्ययातु विमु
च्यते ॥ तस्मा त्कर्म नकुर्वन्ति यतयः पारदर्शिनः ॥ ६ ॥ कर्मणा
जायते प्रेत्य मूर्त्तिमान् षोडशात्मकः ॥ विद्यया जायते नित्य मव्य
क्तं परमात्मकं ॥ ७ ॥ कर्मत्वेके प्रशंसन्ति स्वल्पवुद्धिरता नराः ॥
तेन ते देहजालानि रमयन्त उपासते ॥ ८॥ येतु वुद्धिं परां प्राप्ता
धर्मनैपुण्यदर्शिनः॥ न ते कर्म प्रशंसन्ति कूपे नद्यां पिवन्ति च॥९॥
कर्मणः फल माप्नोति सुखदुःखे भवाभवौ ॥ विद्यया तदवाप्नोति य
त्र गत्वा न शोचते ॥ १० ॥ यत्र गत्वा न म्रियते यत्र गत्वा न शो
चते ॥ न जीर्य्यते यत्र गत्वा यत्र गत्वा विवर्द्धते ॥ ११ ॥ यत्र त
द्ब्रह्म परम मव्यक्त मचलं ध्रुवं ॥ अव्यक्तं तमनायास मम्टतं वाधि
योगिता ॥ १२ ॥ द्वंद्वै र्यत्र न वध्येत मानसेन विकर्मणा ॥ समः स
र्व्वस्य मैत्रश्च सर्व्वभूतहिते रतः ॥ १३ ॥ विद्यामयो यः पुरुषो द्विजः
कर्ममयो परः ॥ विप्रा श्चन्द्रमसं दर्शा त्सूक्ष्मया कलया स्थितं ॥१४॥
तदेत दृषिणा प्रोक्तं विस्तरेणतु गीयते ॥ न चक्रं शशिनं दृष्ट्वा च
क्रतन्तुमिवाम्बरे ॥ १५ ॥ एका वासविकारात्मा कलासंसारसंभ्टत
म् ॥ मूर्त्तिमानिति तम्वेगा द्विप्राः कर्म्मगुणात्मकम् ॥ १६ ॥ देवो
यः संश्रित स्तस्मि न्स्तदिन्दुमिव पुष्करं ॥ क्षेत्रज्ञं त म्विजानीया
न्नित्यं योगजितात्मकं ॥ १७ ॥ तमो रजश्च सत्त्वञ्च ज्ञेयं जीवा
त्मकं गुणं ॥ जीव मात्मगुणं विद्या दात्मानं परमात्मनः ॥ १८ ॥
सचेतनं जीवगुणं वदन्ति सचेष्टते चापततेति सर्वः ॥ ततः परं क्षेत्र

विदो वदन्ति प्राकृत्य येषां भुवनानि सप्त ॥ १९ ॥ व्यास उवाच ॥
प्रकृत्यास्तु विकाराये क्षेत्रज्ञाश्च परिश्रुताः ॥ तेवै नैनं प्रजानन्ति
न जानाति सतानपि ॥ २० ॥ तै श्चैव कुरुते कार्य्यं मनः षष्टै रिन्दे
न्द्रियैः ॥ सुदान्तैरिव संयन्ता दृढैः परमवाजिभिः ॥ २१ ॥ अन
र्थेभ्यः पराह्यर्था अर्थेभ्यः परमं मनः ॥ मनसस्तु परा वुद्धि र्वुद्धेरा
त्मा महान् परः ॥ २२ ॥ महतः परमव्यक्त मव्यक्तात्परतोऽमृतं ॥
अमृताच्च परं किञ्चि त्साकाष्ठा परमा गतिः ॥ २३ ॥ व्यासउवाच ॥
एवं सर्वेषु भूतेषु गूढात्मा न प्रकाशते ॥ दृश्यते त्वग्र्यया वुद्ध्या सू
क्ष्मया सूक्ष्मदर्शिभिः ॥ २४ ॥ अन्तरात्मनि संलीय मनः षष्टानि
मेधया ॥ इन्द्रियाणा ञ्च सर्वेषां वश्यात्मा चलितस्मृतिः ॥ २५ ॥
आत्मनः संप्रदानेन मर्त्योऽमृतमवाप्नुते ॥ विहृत्य सर्व्वसंकल्पा न्स
त्वे चित्तं निवेशयेत् ॥ २६ ॥ सत्वे चित्तं समावेश्य ततः कालंजरो
भवेत् ॥ चित्तप्रसादेन जयति जहातीह शुभाशुभं ॥ २७ ॥ प्रस
न्नात्मात्मनि स्थित्वा सुख मत्यन्त मश्नुते ॥ लक्षणान्तु प्रसादस्य य
था स्वप्ने सुखं स्वयं ॥ २८ ॥ निर्वाते च यथा दीपो दीप्यमानो न
कम्पते ॥ एव म्पूर्वं परे रात्रे युञ्ज न्नात्मान मात्मनः ॥ २९ ॥ ल
घ्वाहारो विशुद्धात्मा पश्यत्यात्मान मात्मनि ॥ रहस्यं सर्व्ववेदाना
मनौपम्य मनामयं ॥ ३० ॥ आत्मप्रत्यापकं शास्त्र मिदं पुत्रानुशास
नमं ॥ धन्याख्यानेषु सर्वेषु सत्याख्यानेषु यद्दसु ॥ ३१ ॥ दश दश स
हस्राणि निर्मथ्यामृतमुद्धृतं ॥ नवनीतं यथा दध्नः काष्ठादग्नि र्यथैव

च ॥ ३२ ॥ तथैव विदुषा ज्ञानं मुक्तिहेतौ समुद्धृतं ॥ स्नातकाना
मिदं शास्त्रं वाक्यं पुत्राः प्रशासनं ॥ ३३ ॥ तदिदं नाप्रशान्ताय ना
दान्तायातपस्विने ॥ नावेदविदुषे वाच्यं तथा नानुगतायच ॥ ३४ ॥
नासूयकायानृजवे नचानिर्द्दिष्टकारिणे ॥ न तर्कशास्त्रदग्धाय तथै
व पिशुनायच ॥ ३५ ॥ श्लाघनीयाय शान्ताय तथा चैव तपस्विने ॥
इदं प्रियाय पुत्राय शिष्यायानुगताय च ॥ रहस्यं धर्म्मं वक्तव्यं ना
न्यस्मैतु कथञ्चन ॥ ३६ ॥ यद्यप्यस्य महीं दद्या द्रत्नपूर्णा मिमा न्न
रः ॥ इदमेव ततः श्रेयः इति मन्येत तत्त्ववित् ॥ ३७ ॥ ततो गुह्य
तरार्थंतु अध्यात्ममति मानुषं ॥ जन्तुगूढसमुद्दिष्टं वेदान्तेषु च गी
यते ॥ ३८ ॥ तद्युष्मभ्यं प्रवक्ष्यामि यन्मे पृच्छत सत्तमाः ॥ यद्वोर्मन
सि वर्त्तेत परन्तु हृदि संशयः ॥ ३९ ॥ श्रुतं भवद्भि र्यो देह कथि
तं विप्राः किमुकथयामि च पुन रिति ॥ मुनय ऊचुः ॥ अध्यात्म
म्विस्तरेणेह पुनरेव वदस्व नः ॥ यदध्यात्मप्रदो विप्र भगवा न्नृषि
सत्तम ॥ ४० ॥ व्यास उवाच ॥ अध्यात्मं यदिदं विप्राः पुरुषस्येह
मुच्यते ॥ युष्मभ्यं कथयिष्यामि यन्मां पृच्छत सत्तमाः ॥ यत्ते मन
सि वर्त्तेत तस्य व्याख्यातु श्रूयतां ॥ ४१ ॥ भूमि राप स्तथा ज्योति
र्वायु राकाशमेव च ॥ महाभूतानि पञ्चैव सर्व्वभूतेषु भूतकृत् ॥ ४२ ॥
मुनय ऊचुः ॥ आकाश स्तातवै यस्य यस्मि न्देहं नपश्यति ॥ आका
शस्य शरीरञ्च कथं तदुपवर्णयेत् ॥ ४३ ॥ इन्द्रियाणां विचरतां
कथं तानुपलक्षयेत् ॥ व्यास उवाच ॥ एतद्वै वर्णयिष्यामि यथार्थं

तदुपासनं ॥ इहगुध्वं तदिहैकाग्र्यं यथा तत्त्वं यथा तरः ॥ ४४॥
शब्दं श्रोत्रं तथा खानि त्रय माकाशलक्षणं ॥ प्राण श्चेष्टा स्तथा स्प
र्शो एते वायुगुणा स्त्रयः ॥ ४५ ॥ एतावा निन्द्रियग्रामो व्याख्या
तः पाञ्चभौतिकः ॥ वायोः स्पर्शो रसोऽद्भ्यश्च ज्योतिषो रूप मुच्य
ते ॥ ४६ ॥ आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः ॥ मनो
बुद्धिश्च भावश्च त्रय एते स्वयोनिजाः ॥ ४७ ॥ न गुणा नभिवर्त्तंते
गुणेभ्यः परनाशनाः ॥ यथा कूर्मइवाङ्गानि प्रसार्य्य सन्नियच्छ
ति ॥ ४८ ॥ एवमेवेन्द्रियग्रामं बुद्धिश्रेष्ठो नियच्छति ॥ तदूर्द्ध्वं पाद
तलयो रवाक्कृच्च प्रपश्यति ॥ ४९ ॥ एतस्मिन्नेव कृत्येवै वर्त्तते बुद्धि
रुत्तमा ॥ गुणा गुणायते बुद्धि र्बुद्धिरेवेन्द्रियाण्यपि ॥ ५० ॥ म
नः षष्ठानि सर्वाणि बुद्ध्यभावा त्कुतो गुणाः ॥ इन्द्रियाणि तथा प
ञ्च षष्ठञ्च मन उच्यते ॥ ५१ ॥ सप्तमीं बुद्धि मेवाहुः क्षेत्रज्ञं चा
ष्टमं पुनः ॥ चक्षुरालोकनायैव संशयं कुरुते मनः ॥ ५२ ॥ बुद्धि
रध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ रज स्तमश्च सत्वञ्च त्रय ए
ते स्वयोनिजाः ॥ ५४ ॥ समः सर्वेषु भूतेषु ता न्गुणानुपलक्षयेत्॥
तत्र यत्प्रीतिसंयुक्तं किञ्चि दात्मनि लक्षयेत् ॥ प्रशान्तमिव संयुक्तं
सत्त्वं तदुपधारयेत् ॥ ५५ ॥ यत्तु संतापसंयुक्तं काये मनसि वा भ
वेत् ॥ प्रवृत्तं रज इत्येव तत्र वाप्युपलक्षयेत् ॥ ५६॥ यत्तु व्यामो
हसंयुक्त मव्यक्तं विषमं भवेत् ॥ अप्रतर्क्य मविज्ञेयं तम स्तदुपधा
रयेत् ॥ ५७ ॥ सहर्षं प्रीति मानन्दं स्वास्थ्य मुत्थाप्य विद्यानां॥

अकस्मा यदि वाकस्मा द्वदन्ति सात्त्विकान् गुणान् ॥ ५८ ॥ अभिमानो विवादोवा लोभो मोह स्तथा क्षमा ॥ लिङ्गानि रजस स्तानि वर्त्तंते हेतुतत्त्वतः ॥ ५९ ॥ तथा मोहः प्रमाद स्व तन्द्रा निद्रा प्रवोधिता ॥ कथंचि दभिवर्त्तंते विज्ञेया स्तामसा गुणाः ॥ ६० ॥ मनः सृजति भावन्तु वुद्धि रध्यवसायिनी ॥ हृदय ञ्च प्रिय स्वेद त्रिविधा कर्मचोदना ॥ ६१ ॥ इन्द्रियेभ्यः पराह्यर्था ह्यर्थेभ्यः परमम्मनः ॥ मनसस्तु परा वुद्धि र्वुद्धे रात्मा परो मतः ॥ ६२ ॥ वुद्धि रात्मा मनुष्यस्य वुद्धि रेवात्मनात्मना ॥ यदा विकुरुतेवाचं तदा भवति सा मनः ॥ ६३ ॥ इन्द्रियाणां पृथङ् नानावुद्धि र्विक्रियते ह्यनु ॥ शृण्वतां तदपि श्रोत्रं स्पृशतां स्पृशतृप्यत ॥ ६४ ॥ पश्यन्तीव भवे द्दृष्टि रसती रसना भवेत् ॥ जिघ्रती भवती प्राणं वुद्धि र्विप्रायते पृथक् ॥ ६५ ॥ इन्द्रियाणि तु तान्याहु स्तेषु दृश्योऽवतिष्ठति ॥ तिष्ठते पुरुषे वुद्धि र्वुद्धिभाव व्यवस्थिता ॥ ६६ ॥ कदाचि ल्लभते प्रीतिं कदाचिदपि शोचति ॥ न सुखे नच दुःखेतु कदाचिदपि मुच्यते ॥ ६७ ॥ स्वयंभावात्मिकाभावा स्त्रीनेता नभिवर्त्तंते ॥ सरितां सागरो भर्त्ता महावेला मिवोर्म्मिमान् ॥ ६८ ॥ यदा प्रार्थयते किञ्चि त्तदा भवति साग रः ॥ आविष्ठानि च वैवुद्ध्या पृथ गेतानिवै स्मरेत् ॥ ६९ ॥ इन्द्रियाण्येव मेध्यानि विचेतव्यानि कृत्स्नशः ॥ सर्वाण्येतानुपूर्व्येण यद्यदा च विधीयते ॥ ७० ॥ आविभागमनोवुद्धि र्भावे मनसि

वर्त्तते ॥ प्रवर्त्तमानंतु रजः सत्त्व मप्यतिवर्त्तते ॥ ७१ ॥ येचैव
भावं वर्त्तते सर्व्व एव शुचं त्रिषु ॥ अन्यया संप्रवर्त्तते रथनेमिपरा
इव ॥ ७२ ॥ प्रदीपार्थं मनः कुर्य्यां दितिवै वुद्धिसत्तमैः ॥ नि
श्चरद्भि र्यथा योग मुदासीनै र्यदृच्छया ॥ ७३ ॥ एवं स्वभाव मेवेद
मिति वुद्ध्या न मुह्यति ॥ अशोचन्तं प्रहृष्यन्तन्नित्यं विगतमत्स
रः ॥ ७४ ॥ नित्यात्माव्यतरद्रष्टु मिन्द्रियैः कामगोचरैः ॥ पुत्र
मानै रनेकैश्च दुर्द्धरै रकृतात्मभिः ॥ ७५ ॥ तेषां सुमनसा रश्मीन्
यदा सम्यङ् नियच्छति ॥ तदा प्रकाशते ह्यात्मा दीपदृष्ट्या यथा
कृतिः ॥ ७६ ॥ सर्वेषामेव भूतानां तमस्यपगते यथा ॥ प्रकाशं भ
वते सर्वं तथैव ध्रुवधीयतां ॥ ७७ ॥ यथा वारिचरः पक्षी नलि
प्यति जले चरन् ॥ विमुक्तात्मा तथा योगी गुणदोषै र्नलिप्य
ते ॥ ७८ ॥ एवमेव कृत प्राज्ञो नदोषै र्विषयांश्चरन् ॥ आसन्नमानः
सर्वेषु न कथञ्चन लिप्यते ॥ ७९ ॥ त्यक्त्वा पूर्व्वकृतं कर्म रतिर्यस्य
महात्मनि ॥ सर्व्वभूतात्मभूतस्य गुणसाध्यो नदुःखदः ॥ ८० ॥ सत्त्व
यात्मा प्रवसति गुणेष्वपि कथञ्चन ॥ नगुणा विदुरात्मानं सगुणा
न्वेद सर्व्वदा ॥ ८१ ॥ परिदध्या गुणानां स द्रष्ट्वा चैव यथातथं ॥
तत्त्वदेत्त्वयो रेतदचरं विश्वसूक्ष्मया ॥ ८२ ॥ सृजते सगुणाने
को एकोन सृजते गुणान् ॥ पृथग्भूतौ प्रकृत्ये तौ संप्रयुक्तौ च सर्व्व
दा ॥ ८३ ॥ यथा स्मनो हिरण्यस्य संप्रयुक्तौ तथैवतौ ॥ मशकोदुम्ब
रौ वापि संप्रयुक्तौ यथासह ॥ ८४ ॥ इषिका वायथापुञ्जे पृथक्त्वे स

ह चैवह ॥ तद्वतः सहितावेतौ अन्योन्यस्मि न्प्रतितिष्ठौ ॥ ८५ ॥

इतिब्राह्मे पुराणे व्यासर्षिसम्वादे सांख्ययोगाध्यायो नाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥

—०—

व्यास उवाच ॥ सृजतेतु गुणा न्सत्त्वं क्षेत्रज्ञ स्त्वधितिष्टति ॥ गुणा न्विक्रियते सर्वा नुदासीनवदीश्वरः ॥ १ ॥ स्वभावयुक्तं तत्सर्वं यदि मान् सृजते गुणान् ॥ ऊर्णनाभि र्यथा सूत्रं सृजते तद्गुणां स्त था ॥ २ ॥ प्रवृत्ता ननिवर्त्तंते प्रवृत्ति र्नोपलभ्यते ॥ एव मेके व्यवस्य न्ति निवृत्तिरिति चापरे ॥ ३ ॥ उभयं संप्रधार्य्यैत व्यवसायं यथा मतिः ॥ अनेन च विधानेन भवेद्वै संशयो महान् ॥ ४ ॥ अनादि निधनो ह्यात्मा तम्बुद्ध्वा विहरे न्नरः ॥ अक्रुद्ध न्नप्रहृष्यंश्च नित्यं विगतमत्सरः ॥ ५ ॥ इत्येवं हृदये सर्वं बुद्धिचिन्तामयं दृढं ॥ अ नित्यं सुखमासीत अशाध्य छिन्नसंशयः ॥ ६ ॥ तरेयुः प्रच्युतां पृ थ्वीं यथा पूर्णा न्नरा नराः ॥ अवगाह्य च विद्वांसो विप्रा लोभ मि मं तथा ॥ ७ ॥ नतु तृप्यति वैविद्वान् स्थूले चरति तत्त्ववित् ॥ ए वं यो विन्दतात्मानं केवलज्ञानमात्मनः ॥ ८ ॥ तान्च बुद्ध्वा नरः स र्वां भूताना मगतिं गतिम् ॥ समवेक्ष्य च वैसम्यक् लभते समसुत्त मम् ॥ ९ ॥ एतद्द्विजन्मसामग्र्यं ब्राह्मणस्य विशेषतः ॥ आत्मज्ञान सम स्वेह पर्य्याप्तं तत्परायणं ॥ १० ॥ एत द्बुद्ध्वा भवे द्बुद्धा किमन्य द्बुद्धलक्षणं ॥ विज्ञायैत द्विमुच्यन्ते कृतकृत्या मनीषिणः ॥ ११ ॥ न

भवति विदुषां महद्भयं यदविदुषां सुमहद्भयं परत्र ॥ नहि गतिर
धिकास्ति कस्यचिद्भवति ह्रिया विदुषां सनातनी ॥ १२ ॥ लोके स
मातु रप्रसूयते नस्तत्तदेव सनिरीक्ष्य शोचते ॥ तत्र वेत्ति कुशलेन
शोचते येविदु स्तदुभयं कृताकृतम् ॥ १३ ॥ यत्करोत्यनभिसन्धिपू
र्व्वकं तच्च निर्दहति यत्पुराकृतं ॥ न प्रियं तदुभयं न चाप्रियं तस्य
तज्जनयतीह कुर्व्वतः ॥ १४ ॥ मुनयऊचुः ॥ यस्मा द्धर्मात्परो धर्मो
विद्यते नेह कश्चन ॥ योविशिष्टेषु भूतेभ्यः स्तद्भवान् प्रब्रवीतुनः ॥ १५ ॥
व्यास उवाच ॥ धर्म्म चाहं प्रवक्ष्यामि पुराण मृषिभिः स्तुतं ॥ वि
शिष्टं सर्व्वधर्मेभ्यः शृणुध्वं मुनिसत्तमाः ॥ १६ ॥ इन्द्रियाणि प्रमा
थीनि बुद्ध्या संयम्य तत्त्वतः ॥ सर्व्वतो निःप्रतिच्छानि पिता बाला
निवात्मजान् ॥ १७ ॥ मनस श्चेन्द्रियाणा ञ्चा प्यैकाग्र्यं परमंतपः ॥
तच्छ्रेष्ठं सर्व्वधर्मेभ्यः सधर्मः पर उच्यते ॥ १८ ॥ तानि सर्वाणि स
न्धाय मनः षष्टानि विद्यया ॥ आत्मतृप्तः सएवासी द्बहुचिन्त्य मचि
न्तयन् ॥ १९ ॥ गोचरेभ्यो निवृत्तानि यदास्थास्यन्ति वेश्मनि ॥ तदा
चैवात्मनात्मानं परं द्रक्ष्यसि शाश्वतं ॥ २० ॥ सर्वात्मानं महात्मा
नं विधूम मिव पावकम् ॥ प्रपश्यन्ति महात्मानं ब्राह्मणा ये मनीषि
णः ॥ २१ ॥ यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः ॥ आत्मनो
नाभिजानीते क्वमे पुष्पं क्वमे फलं ॥ २२ ॥ एव मात्मा न जानीते
क्वगमिष्ये कुतोन्वहं ॥ अन्योन्यश्चान्तरात्मा स्ते यः सर्व्व मनुपश्य
ति ॥ २३ ॥ ज्ञानदीप्तेन मनसा पश्यन्त्यात्मान मात्मना ॥ दृष्ट्वात्मा

नं तया यूयं निश्चेष्टाभवत द्विजाः ॥ २४ ॥ विमुक्ताः सर्व्वपापेभ्यो
मुक्तत्वच इवोरगाः ॥ परां वुद्धि मवाप्येह विन्नात्मा विगतज्व
रः ॥ २५ ॥ सर्व्वतः स्रोतसां घोरां नदीं लोकप्रवाहिनीं ॥ पंचेन्द्रि
यग्राहवतीं मनः संकल्परोधसां ॥ २६ ॥ लोभमोहतृणाछन्नां काम
क्रोधसरीसृपां ॥ सत्यतीर्थानृतक्षोभां क्रोधपंकां सरिद्वरां ॥ २७ ॥
अव्यक्तप्रभवां शीघ्रां कामक्रोधसमाकुलां ॥ प्रतरध्वं नदीं वुध्या दु
स्तरा मकृतात्मभिः ॥ २८ ॥ संसारसागरगमां योनिपातालदुस्त
रां ॥ आत्मजन्योद्भवां तात्तु जिह्वावर्त्तां दुरासदां ॥ २९ ॥ यान्त
रन्ति कृतप्रज्ञा धृतिमन्तो मनीषिणः ॥ तान्तीर्त्वा सर्व्वतो मुक्तो वि
धूतात्मात्मवा च्छुचिः ॥ ३० ॥ उत्तमां वुद्धि मास्थाय ब्रह्म भूयाय
कल्पते ॥ उत्तीर्णसर्व्वसंक्लेशान् प्रसन्नात्मा विकल्मषः ॥ ३१ ॥ भू
मिष्ठानीव भूतानि पर्वतस्था न्निरीक्ष्यथ ॥ अक्रुध्य न्न प्रसीदंश्च न
नृशंसमति स्तदा ॥ ३२ ॥ ततो द्रक्ष्यथ सर्व्वस्वं भूतानां प्रभवाप्य
यम् ॥ एतद्वै सर्व्वधर्मेभ्यो विशिष्टं मेनिरे वुधाः ॥ ३३ ॥ धर्मं धर्म
भृतां श्रेष्टा मुनयः सत्यवादिनः ॥ आत्मनो व्यापितं विप्रा इति पु
ण्यानुशासनं ॥ ३४ ॥ प्रयताय प्रवक्तव्यं हितायानुगताय च ॥ आ
त्मज्ञान मिदं गुह्यं सर्व्वगुह्यतमं महत् ॥ ३५ ॥ अध्रुवं यदहं वि
प्रा आत्मसाक्षिकमञ्जसा ॥ नैव स्त्री न पुमां श्चैव नवै वेद नपुंस
कः ॥ ३६ ॥ अदुःख मसुखं ब्रह्मन् भूतभव्यभवन्तिकं ॥ नैतद्ज्ञा
त्वा पुमां स्त्रीवा पुन र्भव मवाप्नुयात् ॥ ३७ ॥ सभावप्रतिपत्यर्थं मेतदाहं

विधीयते ॥ यथा मन्त्राणि सर्वाणि तथैव ध्यानितं तथा ॥ कथिता
नि मया विप्रा भवन्ति न भवन्ति च ॥ ३८ ॥ सत्प्रीतियुक्तेन गुणा
न्वितेन पुत्रेण सत्यु त्वदयान्वितेन ॥ नष्टं हितं प्रीतिमयाय सर्वं
ब्रूयात्स तथेह प्रयुक्त मेतत् ॥ ३९ ॥ मुनय ऊचुः ॥ मोक्षः पिता
महेनोक्त उपायं नतु पापतः ॥ तमुपायं यथा प्रायं श्रोतुमिच्छामहे
मुने ॥ ४० ॥ व्यास उवाच ॥ युष्माभि स्तन्महाप्राज्ञा युक्तं निपुण
दर्शनं ॥ यदुपायेन ता न्सर्वा न्मृगयध्वं सदा नघाः ॥ ४१ ॥ कारणे
घटस्य यावुद्धि घंटोत्पत्तौ नसम्मता ॥ एवं धर्म्माभ्युपायार्थं नाना
धर्म्मेषु कारणं ॥ ४२ ॥ पूर्वे समुद्रे यःपन्था स न गच्छति पश्चिमं ॥
एष पन्थाहि मोक्षस्य तं शृणुध्वं ममानघाः ॥ ४३ ॥ क्षमया क्रोध
मुच्छिंद्या त्कामं संकल्पवर्ज्जनात् ॥ सत्त्वसंसेवना द्धीरो निद्रा मु
च्छेत्तु मर्हति ॥ ४४ ॥ अप्रमादा द्भयं रक्षे द्वासं क्षेत्रज्ञशीलनात् ॥
इच्छा द्वेष ञ्च काम ञ्च धैर्य्येण विनिवर्त्तयेत् ॥ ४५ ॥ निद्राञ्च प्र
तिभा ञ्चैव ज्ञानाभ्यासेन तत्त्ववित् ॥ उपद्रवां स्तथा योगी अजी
र्णमिति शासनात् ॥ ४६ ॥ अनुक्रोशा द्धर्म्मं च जय धर्मसुपेक्षया ॥
आपत्यां विजये द्वासा मर्थसंगविवर्ज्जनात् ॥ ४७ ॥ अनित्यत्वेन च
स्नेहं क्षुधां योगेन पण्डितः ॥ कारुण्येनात्मनात्मानं तृष्णा ञ्च प
रितोषतः ॥ ४८ ॥ उत्थानेन जये त्तन्द्रां द्वापरं निश्चयाच्चयेत् ॥ मौ
नेन वज्जभाषं च शौर्य्येण च भयं जयेत् ॥ ४९ ॥ यच्छे द्वाक्श्रेयसीं
बुद्ध्या तांयच्छेत् ज्ञानचक्षुषा ॥ ज्ञान मात्ममहायच्छे ये तपन्ति त

थात्मनः ॥ ५० ॥ तद्देत द्दुपशान्तेन वोधव्यं शुचिकर्मणा ॥ योगदो षा न्समुच्छिद्य पञ्चका न्कवयो विदुः ॥ ५१ ॥ कामं क्रोधञ्च लोभ ञ्च भयं स्वप्नञ्च पञ्चमं ॥ परित्यज्य निषेवेत यथाव द्योगसाधना त् ॥ ५२ ॥ ध्यान मध्ययनं दानं नसत्त्यो राज्र्जवं क्षमा ॥ शौच माचारतः शुद्धि रिन्द्रियाणा ञ्च संयमान् ॥ ५३ ॥ एतै र्विवर्द्धते तेजः पापं तमुपहन्ति च ॥ सौदन्ति चास्य संकल्पा विज्ञान ञ्च प्रवर्त्तते ॥ ५४ ॥ धूतपापः सतेजस्वी लघ्वाहारो जितेन्द्रियः ॥ का मक्रोधौ वशे कृत्वा निर्विशे द्ब्रह्मणः पदम् ॥ ५५ ॥ अमूढत्व मसंग त्वं कामक्रोधविवर्जितम् ॥ अदैन्य मनुदासित्व मवृद्धिं गोष्ठवत्स्थि तिः ॥ ५६ ॥ एवं मार्गोहि मोक्षस्य प्रसन्नो विमलः शुचिः ॥ तथा वाक्कायमानस्य नियमान् कामतोव्ययः ॥ ५७ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे सांख्ययोगाध्यायो नामा ष्टाविंशत्युत्तरशततमोऽध्यायः ॥ १२८ ॥

—०—

मुनय ऊचुः ॥ सांख्ययोगं च भोविप्र विशेषं वक्तु मर्हसि ॥ तव धर्मज्ञ सर्वं हि विदितं मुनिसत्तम ॥ १ ॥ व्यास उवाच ॥ सां ख्याः सांख्यं प्रशंसन्ति योगा योगं द्विजातयः ॥ वदन्ति कारणैः श्रे ष्ठं स्वपक्षोद्भवनायवै ॥ २ ॥ अनीश्वरः कथं मुच्ये दित्येवं मुनिसत्त माः ॥ वदन्ति कारणैः श्रेष्ठा योगाः सम्यङ्मनीषिणः ॥ ३ ॥ वदन्ति कारणं चेदं सांख्यं सम्यक् द्विजातयः ॥ विज्ञायेह गतीः सर्वा विर

त्याविषयेषु यः ॥ ४ ॥ ऊर्ध्वं सदेहा त्सुव्यक्तं विमुच्ये इति मान्य
था ॥ एतदाहु र्महाप्राज्ञाः सांख्या वै मोक्षदर्शनाः ॥ ५ ॥ स्वपक्ष
कारणं ग्राह्यं समर्थवचनं हितं ॥ शिष्टानांहि मतं ग्राह्यं समर्थं व
चनं हितं ॥ ६ ॥ प्रत्यक्षे हेतुका योगाः सांख्यशास्त्रविनिश्चयः ॥ उ
भे चैते मते तत्त्वे समावेते द्विजोत्तमाः ॥ ७ ॥ उभे चैते मते ज्ञा
ते मुनिभिः शिष्टसम्मते ॥ अनुष्ठिते यथा शास्त्रं नयेतां परमां ग
तिम् ॥ ८ ॥ तुल्यं शौचं तयो र्युक्तं दयाभूतेषु मानवाः ॥ व्रतानां
धारणं तुल्यं दर्शनं नसमं तयोः ॥ ९ ॥ मुनय ऊचुः ॥ यदि तुल्यं
व्रतं शौचं दया चात्र महामुने ॥ तुल्यं नदर्शनं कस्मा त्तन्नो ब्रूहि
द्विजोत्तम ॥ १० ॥ व्यास उवाच ॥ रागं मोहं तथा स्नेहं कामं
क्रोधञ्च केवलं ॥ योगाश्छित्त्वा न्हिता न्दोषान् पञ्चैता न्प्राप्नुवन्ति
ते ॥ ११ ॥ यथा वाति कषाः स्थूला जालं छित्वा पुनर्जले ॥ प्रा
प्नुवन्ति तथा योगा स्तत्पदं वीतकल्मषाः ॥ १२ ॥ तथैव वागुरां
छित्वा बलवन्तो यथा मृगाः ॥ प्राप्नुयु र्विमलं मार्गं विमुक्ताः सर्व्व
बन्धनैः ॥ १३ ॥ नोपयान्ति तथा विप्रा वचनानि बलान्विताः ॥
छित्वा योगपरं मार्गं गच्छन्ति विमलं शुभम् ॥ १४ ॥ अबला स्तव
ला विप्रा वासुरासु तथापरे ॥ विनश्यन्ति न सन्देह स्तद्वद्योगबला
हताः ॥ १५ ॥ बलहीना श्च विप्रेन्द्रा यथा जालं गता द्विजाः ॥
धन्यास्च गच्छन्त्यनघा योगिन स्ते सुदुर्लभाः ॥ १६ ॥ यथा च शकु
नाः सूक्ष्माः प्राप्य जाल मरिन्दमाः ॥ तत्राशक्ता विपद्यन्ते मुच्यन्ते

च बलान्विताः ॥ १७ ॥ छित्वा योगा त्परं मार्गं गच्छन्ति विमलं
द्विजाः ॥ अबलावै विनश्यन्ति नमुच्यन्ते बलान्विताः ॥ १८ ॥ अल्प
कश्च यथा विप्रा वह्निः साम्यति दुर्लभः ॥ आक्रान्त इन्धनैः स्थूलै
स्तद्व योगवलः पुनः ॥ १९ ॥ समीरणगतः कृत्स्नां दहे त्क्षिप्रं
महीमिमां ॥ तत्त्वज्ञः प्रबलो योगी दीप्ततेजा महाबलः ॥ २० ॥
अन्तकाल इवादित्यः कृत्स्नं संशोषते जगत् ॥ दुर्बलश्च यथा विप्राः
श्रेतसादीयते नरः ॥ २१ ॥ बलहीन स्तथा योगी विषयैः क्रियते व
शः ॥ तदैवन्तु यथा श्रोतो विष्कं भयति वारणः ॥ २२ ॥ ययद्यो
गबलं लब्ध्वा विभवै र्विषयां स्वरन् ॥ विशन्तिवा वशाचार्य्यं योगा
त्मबलवर्त्तिताः ॥ २३ ॥ प्रजापतिकृता न्सर्वा न्महाभूतानि चेश्व
रः ॥ नयमो नान्तकः क्रुद्धो नमृत्यु र्भीमविक्रमः ॥ २४ ॥ दृश्यते
तु द्विजाः सर्वा योगस्यामिततेजसः ॥ आत्मना च सहस्राणि वहू
नि मुनिसत्तमाः ॥ २५ ॥ योगः कुर्य्या द्बलं प्राप्य तैश्च सर्वै र्महीं
चरेत् ॥ आप्नुया द्विषया न्कश्चि त्पुन श्चोग्रं तप श्चरेत् ॥ २६ ॥
ससंक्षिपे त्पुन र्विप्राः सूर्यतेजो गुणानि च ॥ बलस्यास्यहि योगस्य
बलार्थं मुनिसत्तमाः ॥ २७ ॥ विमोक्षप्रभवं विष्णु मुपपन्नं नसंश
यः ॥ बलानि योगप्रोक्तानि मयोक्तानि द्विजोत्तमाः ॥ निदर्शनार्थं
सूक्ष्माणि वक्ष्यामि च पुन र्द्विजाः ॥ २८ ॥ आत्मनश्च समाधाने
धारणाः प्रहिता द्विजाः ॥ निदर्शनानि सूक्ष्माणि श्रृणुध्वं मुनि
सत्तमाः ॥ २९ ॥ अप्रमत्तो यथा धन्वी लक्षं हन्ति समाहितः ॥

युक्तः सम्यक् तथा योगी मोक्षं प्राप्नोत्यसंशयं ॥ ३० ॥ स्नेहपूर्णे य
या नैव मन आधाय निश्चलं ॥ पुरुषो युक्तआरोहेत् सोपानं युक्त
मानसः ॥ ३१ ॥ युक्त स्तथायमात्मानं योग स्तद्व त्सुनिश्चलः ॥ क
रोत्यमल मात्मानं भास्करस्योपदर्शनं ॥ ३२ ॥ यथा च नावं विप्रे
न्द्राः कर्णधारः समाहितः ॥ महार्णवगतं शीघ्रं नये द्विप्रास्तु पत्त
नम् ॥ ३३ ॥ तद्व दात्मसमाधानं युक्तो युक्तेन योगवित् ॥ दुर्गसंस्था
न माप्नोति हित्वा देह मिमं द्विजाः ॥ ३४ ॥ सारथिश्च यथा विप्राः
सदश्वान् सुसमाहितः ॥ देहमिष्टं जगंत्यासु धन्विनं पुरुषर्षभ
म् ॥ ३५ ॥ तथैवच द्विजो योगी धारणा सुसमाहितः ॥ प्राप्नोत्या
शु वरं स्थानं लक्ष्यं मुक्त इवाशुगः ॥ ३६ ॥ आवेश्यात्मनि चात्मा
नं योऽवतिष्ठति सोवलः ॥ पाशं हत्वेव भीतानां पद माप्नोति
सोऽचिरं ॥ ३७ ॥ नाभ्यां शीर्षे च कुक्षौ च हृदि वक्षसि पार्श्वयोः ॥
दर्शने श्रवणे वापि घ्राणे वामितविक्रमाः ॥ ३८ ॥ स्थानेष्वेतेषु यो
योगी महाव्रतसमाहितः ॥ आतमना सूक्ष्म मात्मानं युक्तः सम्य
ग्द्विजोत्तमाः ॥ ३९ ॥ सुशीघ्र मचलप्रख्यं कर्म दग्ध्वा शुभाशुभं ॥
उत्तमं योग मास्थाय सयोगी विप्रमुच्यते ॥ ४० ॥ मुनय ऊचुः ॥
आहारान् कीदृशान् कृत्वा कानि जित्वा च सत्तम ॥ योगी वल
मवाप्नोति तद्भवा न्वक्तुमर्हति ॥ ४१ ॥ व्यास उवाच ॥ कणानां भ
क्षणे युक्तः पिण्याकस्य च भोद्विजाः ॥ स्नेहानां वर्जने युक्तो योगी
वल मवाप्नुयात् ॥ ४२ – कामा ञ्जित्वा तथा क्रोधं शीतोष्णं

वर्षं मेव च ॥ भयं शोकं तथा श्वासं पौरुषा न्विषयांस्तथा ॥ ४३ ॥
अरतीन् दुर्जयां श्चैव घोरान् दृष्ट्वा च भो द्विजाः ॥ श्वासं निद्रां
भयं तन्द्रां दुर्जयां मुनिसत्तमाः ॥ ४४ ॥ दीपयन्ति महात्मानं सू
क्ष्म मात्मान मात्मना ॥ वीतरागा महात्मानो ध्यानाध्ययनसंयु
ताः ॥ ४५ ॥ दुर्ग एव मतः पन्था ब्राह्मणानां विपश्चितः ॥ यःकश्चि
द्व्रजति चिप्रं चेमेन मुनिसत्तमाः ॥ ४६ ॥ यथा कश्चि द्वनं घोरं
बहुसर्पसरीसृपं ॥ श्वभ्रंगतोपहीन ञ्च दुर्गमं बहुकण्टकं ॥ ४७ ॥
अभुक्त मटवी प्रायं दावदग्धमहीरुहं ॥ पन्थानं तस्कराकीर्णं चेमे
नापि यतेतवा ॥ ४८ ॥ योगमार्गं समासाद्य यःकश्चिद्व्रजते द्विजाः ॥
चेमेन रमते प्राज्ञो द्वंद्वदोषाद्वि संयुतः ॥ ४९ ॥ आस्ते यः चुरधा
रासु निशितासु द्विजोत्तमाः ॥ मरणं जन्मदुःखित्वं सुखित्वं स
विशिष्यते ॥ ५० ॥ नानाशास्त्रेषु निष्पन्नं योगेष्वेव सदा कृते ॥ प
रयोगस्य पन्थानं निश्चितं तद्द्विजातिषु ॥ ५१ ॥ परं हितं ब्रह्ममयं
मुनीन्द्रा ब्रह्माण मीशं वरदं वरिष्ठं ॥ भव ञ्च धर्मं च महानुभा
वं यद्ब्रह्मपुत्रान् सुमहानुभावान् ॥ ५२ ॥ तमश्च कष्टं सुमहान् रज
श्च सत्वंस्च शुद्धं प्रकृतिं परेवं ॥ सिद्धि ञ्च देवीं वरुणस्य पत्नीं तेज
श्च कृत्स्नं सुमहच्च धैर्यं ॥ ५३ ॥ ताराधिपं ये विमलस्वभावं विश्वां
श्च देवानुरगान् पितृंश्च ॥ शैलांश्च कृत्स्ना नुदधीं श्च घोरान् न
दीश्च सर्वाः सवनाघना श्च ॥ ५४ ॥ नागांगनायचगणादिसंघान् ग
न्धर्वसंघान् पुरुषान् स्त्रियश्च ॥ परस्परं प्राय महं महात्मा विशेत

योगी नचिरा द्विमुक्तः ॥ ५५ ॥ कथा च सा विप्र वरात्मयुक्ता देवे महावीर्य्यपतौ शुभेयं ॥ योगान्तु सर्वा नभिभूय मर्त्यो नारायणे यै कुरुते महात्मनि ॥ ५६ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे योगविधिवर्णनं नामैको नत्रिंशदुत्तरशततमोऽध्यायः ॥ १२९ ॥

—०—

मुनय ऊचुः ॥ समुत्विपेयं विप्रेन्द्र वर्णिता शिष्टसम्मता ॥ योगमार्गो यथा मायां शिष्यायेह हितैषिणः ॥ १ ॥ सांख्ये त्विदानीं धर्मस्य विधिं प्रब्रूहि तत्त्वतः ॥ त्रिषु लोकेषु यद् ज्ञानं सर्व्वत्र विदितं हिते ॥ २ ॥ व्यास उवाच ॥ शृणुध्वं मुनयः सर्वे सांख्यानां विदितात्मनां ॥ विदितं यतिभिर्दृष्टैः कपिलादिभि रीश्वरैः ॥३॥ यस्मि न्न विभ्रमाः केचि दृश्यन्ते मुनिसत्तमाः ॥ गुणा श्च यस्मि न्न हवो दोषहानि श्च केवला ॥ ४ ॥ ज्ञानेन परिसंख्याय सदोषा न्विषयां द्विजाः ॥ मानुषान् दुर्जयान् कृत्वा पैशाचान् विषयां स्तथा ॥५॥ पित्ृणा न्विषयान् ज्ञात्वा तिर्यक्षु च्चरतां द्विजाः ॥ सुवर्णविषयान् ज्ञात्वा मरुतां विषयां स्तथा ॥ ६ ॥ महर्षिविषयां श्चैव राजर्षि विषयां स्तथा ॥ पित्ृणा न्विषयान् ज्ञात्वा वैश्वदेवां स्तथैव च ॥७॥ देवर्षिविषयान् ज्ञात्वा योगानामपि वैपरान् ॥ विषयां श्चाप्रमानस्य ब्रह्मणो विषयं तथा ॥ ८ ॥ आयुषस्तु परं कालं विज्ञाय मुनिसत्तमाः ॥ प्राप्ते काले च यद्दुःखं पततां नरके वसन् ॥ ९ ॥ स्वर्गस्य च

गुणान् कृत्स्नान् दोषान् सर्वांश्च भोद्विजाः ॥ वेदवादे च दोषा ये गुणा येचापि वैदिकाः ॥ १० ॥ ज्ञानयोगे च ये दोषा स्तथैव च गुणा द्विजाः ॥ सत्त्वं दशगुणं ज्ञात्वा बुद्धिं सप्तगुणां तथा ॥ ११ ॥ षड्गुण ञ्च रजो ज्ञात्वा तमश्च त्रिगुणं महत् ॥ द्विगुण ञ्च रजो ज्ञात्वा तमश्च त्रिगुणं गुणं ॥ १२ ॥ त्रिगुण ञ्च रजो ज्ञात्वा सत्व मेकगुणं पुनः ॥ मार्गं विज्ञाय तत्त्वेन प्रलये प्रेक्षणं तथा ॥ १३ ॥ ज्ञानविज्ञान सम्पन्नः कारणै र्भावितायुतैः ॥ आप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परम् ॥ १४ ॥ रूपेण दृष्टिः संयुक्ता घ्राणं गन्धगुणेन च ॥ शब्दशक्त्या तथा श्रोत्रं जिह्वारसगुणेन च ॥ १५ ॥ त्वक्स्पर्शेन यथा शक्तं वाकुच रश्रयिता तदा ॥ मोहं तमसि संयुक्तं लोभं मोहेषु सं.श्रतम् ॥ १६ ॥ विष्णुक्रान्ते वले शक्तं सुखे शक्तं तथा जलं ॥ अप्सु देवीं सदा युक्ता माप स्तेजसि संस्थिताः ॥ १७ ॥ तेजो वायौ तु संयुक्तं लोभं मोहेषु संश्रितम् ॥ नभ स्तमसि संयुक्तं ततो मोक्षञ्च न क्वचित् ॥ १८ ॥ ज्ञात्वा सत्त्वं गुणं देहं वृतं षोडशभिर्गुणैः ॥ स्वभावं भावन ञ्चैव ज्ञात्वा देहसमाश्रितम् ॥ १९ ॥ मध्यस्थमेव चात्मानं पापं यस्मिन्नविद्यते ॥ द्वितीयं कर्म्म विज्ञाय त्रिप्रेन्द्रा विषयैषिणां ॥ २० ॥ इन्द्रियाणीन्द्रियार्थांश्च सर्वा नात्मनि संस्थितान् ॥ दुर्लभत्व ञ्च मोक्षस्य विज्ञाय श्रुतिपूर्व्वकम् ॥ २१ ॥ प्राणापानौ समान ञ्च व्यानोदानौ च तत्त्वतः ॥ आद्य ञ्चैवाखिलं ज्ञात्वा प्रभवं चानिलं पुरा ॥ २२ ॥ सप्तता तापशेषान सप्तधा वि

धिव त्पुरा ॥ प्रजापती न्दृषीं श्चैव मार्गां श्चैव वसुन्धराम् ॥ २३ ॥ सप्तर्षीं श्च वह्नन् ज्ञात्वा राजर्षीं श्च परन्तपान् ॥ सुरर्षी न्भरत श्चान्यान् ब्रह्मर्षी न्सूर्य्यसन्निभान् ॥ २४ ॥ ऐश्वर्य्या त्पतितान् दृष्ट्वा कालेन महता द्विजाः ॥ महता भूतसंघानां श्रुत्वा नाश ञ्च भोद्विजाः ॥ २५ ॥ अगति ञ्चाशुभां ज्ञात्वा प्राप्तान् पश्यं श्च कर्म्मणा ॥ वैतरण्या ञ्च यद्दुःखं पतितानां यमक्षये ॥ २६ ॥ योनीषु च विचित्रासु संचारा नशुभां स्तथा ॥ जठरे वाशुचौ वासं शोणितो दकभाजने ॥ २७ ॥ श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते ॥ शुक्र शोणितसंघाते मज्जास्नायुपरिग्रहे ॥ २८ ॥ शिराशतसमाकीर्णे नवद्वारे पुरेऽयवे ॥ विज्ञाय हितमात्मानं योगां श्च विविधान् द्विजाः ॥ २९ ॥ तापसाना ञ्च जन्तूनां कुत्सितं मुनिसत्तमाः ॥ गर्हितं महतामर्थे सांख्यानां विदितात्मनां ॥ ३० ॥ उपद्रवां स्तथा घोरान् ग्रामिन स्तैजसीस्थिरान् ॥ ताराणां पतनं दृष्ट्वा नक्षत्राणा ञ्च पर्य्ययः ॥ ३१ ॥ द्वंद्वानां विप्रयोग ञ्च विज्ञाय क्षपणं द्विजाः ॥ अन्योन्यभक्षणं दृष्ट्वा भूतानामपि चाशुभं ॥ ३२ ॥ रागमोहवशं प्राप्ते क्वचित्सत्त्वं समाश्रितं ॥ सहस्रेषु नरः कश्चि त्मोक्षबुद्धिं समाश्रितः ॥ ३३ ॥ दुर्ल्लभत्व ञ्च मोक्ष ञ्च विज्ञानं श्रुतिपूर्व्वकं बहुमानमनायेषु लब्ध्वं मध्यं स्वयं पुनः ॥ ३४ ॥ विषयाना ञ्च दौरात्म्यं विज्ञाय च द्विजाः पुनः ॥ गताशुभा च संस्थानां देहार्थत्वा त्तथा सुतां ॥ ३५ ॥ वासं कुलेषु जन्तूनां रमणीयं धृतात्मनां ॥ गुरुदार

प्रसक्तानां ब्राह्मणानां दुरात्मनां ॥ ३६ ॥ गुरुदारप्रसक्तानां गतिं विज्ञाय चाशुभां ॥ रजनीषु च वर्त्तते येन सम्यग्द्विजोत्तमाः ॥ ३७ ॥ ते दैवकेषु लोकेषु येन वर्त्तन्ति मानवाः ॥ तेन ज्ञानेन विज्ञाय गति ञ्चाशुभकर्मणां ॥ ३८ ॥ तिर्य्यग्योनिगतानाञ्च विज्ञाय गतयः पृथ क् ॥ वेदविद्या स्तथा चित्रा भूतानां पर्य्यय स्तथा ॥ ३९ ॥ चयं स म्वत्सराणा ञ्च मासाना ञ्च चयं तथा ॥ पचचयं तथा दृष्ट्वा दिव सानाञ्च संचयं ॥ ४० ॥ चयं वृद्धिं च चन्द्रस्य दृष्ट्वा प्रत्यच्त स्तथा ॥ वृद्धिं दृष्ट्वा समुद्राणां चयं तेषां तथा पुनः ॥ ४१ ॥ चयं धनानां दृ ष्ट्वा च पुन र्वृद्धि स्तथैव च ॥ संयोगानां तथा दृष्ट्वा युगाना ञ्च विशेषतः ॥ ४२ ॥ अद्दं वक्तव्यता ञ्चैव सम्यग्विज्ञाय यन्ततः ॥ आ त्मदोषान्हि विज्ञाय सर्वा नात्मनि संस्थितान् ॥ ४३ ॥ स्वदेहा दु त्थिता न्दोषा न्तथा विज्ञाय चाशुभान् ॥ मुनय ऊचुः ॥ का तुत्पा तोद्भवा न्दोषान् पश्यसि ब्रह्मवित्तम ॥ ४४ ॥ व्यास उवाच ॥ काम क्रोधौ भयं निद्रा पञ्चमः श्वाप उच्यते ॥ योगविध्वंसकर्त्तारो व र्त्तंते सर्व्वदेहिनां ॥ ४५ ॥ छिन्दन्ति चमया क्रोधं कामं संकल्पव र्ज्जनात् ॥ सत्त्वसंसेवना न्निद्रां अप्रमादा द्भयं तथा ॥ ४६ ॥ छिन्द न्ति पञ्चमं श्वाप मल्पाहारतया द्विजाः ॥ गुणान् गुणशतै र्ज्ञात्वा दोषा न्दोषशतै रपि ॥ ४७ ॥ हेतून् हेतुशतै श्चित्रै श्चित्रा न्विज्ञा य तत्त्वतः ॥ अपां फेनोपमं लोकं विष्णो र्मायाशतैः कृतं ॥ ४८ ॥ तमसः सन्निभं दृष्ट्वा वर्षाबुद्बुदसन्निभं ॥ नाशप्रायं सुखासीनं ना

श्यान्तरमहाभयं ॥ ४९ ॥ सरजस्तमसौ मग्नं पंके द्विपमिवाम्भसां ॥
सांख्या द्विप्रा महाप्राज्ञा तानाहतप्रजापतिः ॥ ५० ॥ अनेन दोषा
न्सांख्येन व्यापिनासह ता न्द्विजाः ॥ सात्त्विकान् राजसां श्चैव ता
मसांश्च तथाश्रितान् ॥ ५१ ॥ पुरुष्यान्वै सात्विका न्सर्वान् स्पर्शजा
न्देहसंश्रितान् ॥ छित्वा यद्ज्ञानशस्त्रेण तपोदण्डेन सत्तमाः ॥ ५२
ततो दुःखोदकं घोरं चिन्ताशोकमहाह्रदं ॥ अविसृज्य महाघोरं
महाभयमहोरगं ॥ ५३ ॥ तमः कूर्मं रजोमीनं प्रज्ञया सन्तरन्त्य
ये ॥ स्नेहपंकं जरादुर्गं स्पर्शद्वीपं द्विजोत्तमाः ॥ ५४ ॥ कर्मणा स
त्यमासज्य नीरं धृतमनीषिणः ॥ हिंसा शीघ्रमहावेगं नानारसस
माकरं ॥ ५५ ॥ नानाप्रीतिमहारत्नं दुःखज्वरसमीरणं ॥ शोकतृ
ष्णामहावर्तं तीक्ष्णव्याधिमहारुजं ॥ ५६ ॥ अस्थिसंघातसम्बद्धं
श्लेष्मयोगं द्विजोत्तमाः ॥ दानं मुक्ताकरं घोरं शोणितं ह्रदविद्रु
मम् ॥ ५७ ॥ हसितोत्क्रुष्टनिर्घोषं नानाज्ञानसुदुष्करं ॥ रोदना
श्रुमलक्षारं संयोगस्य परायणं ॥ ५८ ॥ पुनर्वा जन्मलोकोयं पुत्रव
न्धु च यत्परं ॥ अहिंसा सत्यमर्यादा प्राणयोगमयोर्म्मिणं ॥ ५९ ॥
वेदानुयायिनं चौरं सर्व्वभूतपयोदधिः ॥ मोक्षदुर्ल्लभविषय स्वाडवा
सुखसागरं ॥ ६० ॥ तंघ्नन्ति यतयः सिद्धा ज्ञानयोगेन चानघाः ॥
भित्वा च दुस्तरं जन्म विशन्ति विमलं नभः ॥ ६१ ॥ तत स्तानाग
तान् दृष्ट्वा सूर्य्यो वहति रश्मिभिः ॥ तानेव प्रवहो वायुः प्रतिगृह्णाति
चानघाः ॥ ६२ ॥ वीतरागान् यती न्सिद्धा न्विमुक्तांस्तु तपोधनान् ॥

सूक्ष्मः शीतः सुगन्धश्च सुखस्पर्शश्च भोद्विजाः ॥ ६३ ॥ सप्ताना
म्मरुतां श्रेष्ठो लोका न्गच्छति यः शुभान् ॥ सता न्वहति विप्रेन्द्रा
नभसः परमागतिः ॥ ६४ ॥ तमो वहति लोकेशो रजसः परमां
गतिम् ॥ रजो वहति विप्रेन्द्राः सत्त्वस्य परमां गतिम् ॥ ६५ ॥ स
त्त्वं वहति शुद्धात्मा परं नारायणं शुभं ॥ प्रभुं वहति शुद्धात्मा प
रमात्मान मात्मना ॥ ६६ ॥ परमात्मान मासाद्य गतदोषाः सदा
मलाः ॥ अमृतत्वाय कल्पन्ते निवर्त्तन्ते नभो द्विजाः ॥ ६७ ॥ पर
मा सा गति र्विप्रा निर्द्वन्द्वानां महात्मनां ॥ सत्यार्ज्जवरतानां च
सत्यभूतदयावतां ॥ ६८ ॥ मुनय ऊचुः ॥ स्थान मुत्तम मासाद्य भ
गव न्नस्थिरव्रताः ॥ आजन्ममरणम्वा ते स्मरणं येन चानघ ॥ ६९ ॥
यदत्र दृत्तता तन्नो यथाव द्वक्तु मर्हसि ॥ त्वद्दते मानवं नान्यं प्रष्टु
मर्हामि सत्तम ॥ ७० ॥ मोक्षो दोषो महानेष प्राप्य सिद्धिं गतह
षाः ॥ यदि तत्रैव प्रज्ञाने वर्त्तन्ते यतयः परे ॥ ७१ ॥ प्रवृत्तिलक्ष
णं धर्म्मं पश्याम परमं द्विज ॥ मग्नस्यहि परे ज्ञाने किन्न दुःखा
न्तरं भवेत् ॥ ७२ ॥ व्यास उवाच ॥ यथान्यायं मुनिश्रेष्टाः प्रश्नः
पृष्टश्च संकटः ॥ बुधानामपि संमोहः प्रश्नेऽस्मि न्मुनिसत्तमाः ॥ ७३ ॥
अत्रापि तत्त्वं परमं शृणुध्वं वचनं मम ॥ बुद्धिश्च परमा यत्र का
पिलानां महात्मनां ॥ ७४ ॥ इन्द्रियाण्यपि बुद्ध्यन्ते स्वदेहे देहि
नं द्विजाः ॥ करणान्यात्मन स्तानि सूक्ष्मः पश्यति तैस्तु सः ॥ ७५ ॥
आत्मना विप्रहीनानि पापकर्मकृतानि च ॥ विनश्यन्ति न सन्देहो

वेला इव महार्णवे ॥ ७६ ॥ इन्द्रियैः स्वहस्तुप्रस्य देहिनो व्याकुल
स्यवा ॥ मनो भ्रमति सर्व्वत्र नभसीव समीरणः ॥ ७७ ॥ सपश्य
ति यथान्यायं स्पर्शान्स्पृशति चानघ ॥ वुध्यमानो यथापूर्वं मखि
लेनेह भोद्विजाः ॥ ७८ ॥ इन्द्रियाणि च सर्वाणि स्वस्वस्थाने च
भोद्विजाः ॥ अनीशत्वा प्रलीयन्ते सर्पाहतविषा इव ॥ ७९ ॥ इ
न्द्रियाणान्तु सर्वेषां स्वस्थाने वद सर्वशः ॥ आक्रम्य गतयः सूक्ष्मा
श्चरत्यात्मा न संशयः ॥ ८० ॥ सत्त्वस्य च गुणा न्तां स्तान् रज
स श्च गुणा न्पुनः ॥ गुणां श्च तमसः सर्वान् गुणा न्वुद्धे श्च सत्त
माः ॥ ८१ ॥ गुणां श्च मनस श्चापि मनस श्च गुणां स्तथा ॥ गु
णान्वायोश्च धर्म्मज्ञाः स्वेदजां श्च गुणानपि ॥ ८२ ॥ सर्वेषा ञ्च
गुणै र्वापि क्षेत्रज्ञे शुद्धिजोत्तमाः ॥ आत्मा चरति क्षेत्रज्ञः कर्म
णा च शुभाशुभम् ॥ ८३ ॥ शिष्याइव महात्मान मिन्द्रियाणि च
भोद्विजाः ॥ प्रकृतिं चाप्यतिक्रम्य शुद्धं सूक्ष्मं परायणम् ॥ ८४ ॥
नारायण महात्मान मिन्द्रियाणि च भोद्विजाः ॥ विमुक्तः सर्व्व
पापेभ्यः प्रविष्टं च मनोमयम् ॥ ८५ ॥ परमात्मान मगुणं ननिव
र्त्तिस्य सत्तमाः ॥ श्रेष्ठं तत्र मनो विप्रा इन्द्रियाणि च भोद्वि
जाः ॥ ८६ ॥ आगच्छन्ति यथाकालं गुरोःसन्देहकारिणः ॥ सर्वं
चाल्पेन कालेन प्राप्तुं प्राप्तागुणात्मताम् ॥ ८७ ॥ एवं युक्तेन विप्रे
न्द्राः सांख्ययोगेन मोचिणाम् ॥ शीतोष्णादि यदि त्यक्ता गच्छन्ति
परमां गतिं ॥ ८८ ॥ ज्ञानेनानेन विप्रेन्द्राः खलज्ञानं न विद्यते॥

अत्रैव संशयो माभूद् ज्ञानं सांख्यं परं मतं ॥ ८९ ॥ अक्षरं ध्रुवम
व्यक्तं पूर्णं ब्रह्म सनातनं ॥ अनादिमध्यनिधनं निर्द्वंद्वं कर्तृ शाश्व
तम् ॥ ९० ॥ कूटस्थञ्चैव नित्यञ्च यद्वदन्ति शमात्मकाः ॥ यतः
सर्वाः प्रवर्त्तंते सर्गप्रलयविक्रियाः ॥ ९१ ॥ एवं संशन्ति शास्त्रेषु प्रव
र्त्तंते महर्षयः ॥ सर्वे विप्राश्च वेदाश्च तथा समविदो जनाः ॥ ९२ ॥
ब्रह्मार्णं ब्रह्मपरममनन्तं परमच्युतं ॥ प्रार्थयन्तश्च तं विप्रा वदन्ति
गुणबुद्धयः ॥ ९३॥ समायुक्ता स्तथा योगाः सांख्याश्चामितदर्शनाः॥
अमूर्त्तस्यास्य विप्रेन्द्राः सांख्यमूर्त्ति रिति श्रुतिः ॥ ९४ ॥ अभिज्ञा
नानि तस्याज्ञ मतंहि मुनिसत्तमाः ॥ द्विविधानीह भूतानि पृथि
व्यां द्विजसत्तमाः॥ अगम्यागम्यसंज्ञानि जंगमन्तु विशिष्यते॥९५॥
ज्ञानं महान्तं हि महत्सु विप्रा वेदेषु शास्त्रेषु तथैवयोगे ॥ यच्चापि
दृष्टं विविधं पुराणं सांख्यागम स्तन्निखिलं मुनीन्द्राः ॥ ९६ ॥
यच्चेतिहासेषु महत्सु दृष्टं यच्चार्थ शास्त्रेषु च शिष्टतुष्टे॥ ज्ञानञ्च
लोके यदिहास्ति किञ्चि त्सांख्यागतं तच्च महामुनीन्द्राः ॥ ९७॥
समश्च दृष्टः परमं बलश्च ज्ञानं च मोक्षं च यथावदुक्तं ॥ तपोसि
सूक्ष्माणि तपोविधिर्वै सांख्ये यथाव द्विहितानि विप्राः ॥ ९८ ॥ वि
पर्ययं तस्य हितौ यदैवं गच्छन्ति सांख्याः सततं सुखेन ॥ तांस्वै स
मासाद्य ततः कृतार्था यतन्ति विप्रेषु यतेष्टभूयः ॥ ९९ ॥ भित्वा च
देहं प्रविशन्ति मोक्षं दिवौकसा चापि च योगसांख्याः ॥ अतोधि
कान्तेभिरतामहार्हाः सांख्या द्विजाभो त्विह शिष्टतुष्टे ॥ १०० ॥ ते

षां च निर्भयमतं हि दृष्टं नाधोगतिः पापकृतो निवासः ॥ नवाप्रधा
ना अपि भोद्विजाश्च यद्ज्ञानमेत न्मुनयोनुशक्ताः ॥ १०१ ॥ सांख्यं
विशालं परमं पुराणं महार्णवं विमल सुदारकान्तं ॥ कृत्स्नंतु भू
म्यां मुनयो महात्मनि नारायणे धारयतेऽप्रमेये ॥ १०२ ॥ एत न्म
योक्तं परमं हि तत्त्वं नारायणा द्विश्वमिदं पुराणं ॥ संसर्गकाले च
करोति सर्गं संहारकाले च वदन्ति तद्ज्ञाः ॥ १०३ ॥

इत्यादि ब्रह्मपुराणे व्यासर्षिसम्वादे सांख्यवर्णनं नाम
त्रिंशदुत्तरशततमोऽध्यायः ॥ १३० ॥

—०—

मुनय ऊचुः ॥ कस्मा दक्षर मित्युक्तं यस्मा न्नावर्त्तते पुनः ॥
किम्वदक्षर मित्युक्तं यस्मा दावर्त्तते पुनः ॥ १ ॥ अक्षरक्षरयो र्व्यक्तिं
पृच्छामि त्वां महामुने ॥ उपलब्धं मुनिश्रेष्ठ तत्त्वेन मुनिपुङ्गव ॥ २ ॥
त्वंहि ज्ञानविदां श्रेष्ठ प्रोवाच वेदपारग ॥ ऋषिभि स्व महाभागै
र्यतिभिश्च महात्मभिः ॥ ३ ॥ तदेत च्छ्रोतुमिच्छाम त्वत्तः सर्वं म
हामुने ॥ नतृप्ति मधिगच्छाम शृण्वन्तोऽमृतमुत्तमम् ॥ ४ ॥ व्यास
उवाच ॥ अत्र तेवर्त्तयिष्यामि इतिहासं पुरातनं ॥ वशिष्ठस्य च
सम्वादं करालजनकस्य च ॥ ५ ॥ वशिष्टं श्रेष्ठ मासीन मृषीणां
भास्कराकृतिं ॥ पप्रच्छ जनको राजा ज्ञानं निःश्रेयसं परं ॥ ६ ॥

पर मध्यात्मकुशल मध्यात्मगुण मिच्छया ॥ मैत्रावरुण मासीन
मभिवाद्य कृताञ्जलिः ॥ ७ ॥ सुचेत्रं सूनृत ञ्चैव मधुरं वा
प्यलच्चणम् ॥ पप्रच्छ जनको राजा करालजनकः पुरा ॥ ८ ॥
जनक उवाच ॥ भगन् श्रोतु मिच्छामि परं ब्रह्म सनातनं ॥ यस्मा
न्न पुनरावृत्ति माप्नुवन्ति मनीषिणः ॥ ९ ॥ एत दच्चर मित्युक्तं
यद्देत दच्चरं जगत् ॥ यच्चाप्यच्चर मित्युक्तं शिवं चेम मनाम
यम् ॥ १० ॥ वशिष्ट उवाच ॥ श्रूयतां पृथिवीपाल चरतीदं यथा
जगत् ॥ यन्न चरति पूर्वेण यावत्कालेन वाप्यथ ॥ ११ ॥ युगद्वाद
शसाहस्रं कल्पितं द्विचतुर्युगं ॥ चतुःकल्पशतावर्त्तमह स्तद्ब्राह्ममुच्य
ते ॥ १२ ॥ रात्रि स्चैतावती राजन् यस्यांते प्रतिबुद्ध्यते ॥ भजन्त्य
नन्त्यकर्माणि महाभूतं तमग्रजाः ॥ १३ ॥ मूर्त्तिमन्त ममूर्त्तात्मा
विश्व ञ्चैव स्वयम्भुवः ॥ यथोत्पन्नं प्रवच्यामि शृणुष्व नृपसत्त
म ॥ १४ ॥ अणिमा लघिमा प्राप्ति मीशानज्योति रव्ययः ॥ स
र्व्वतः पाणिपादन्तं सर्व्वतोच्चिशिरोमुखम् ॥ सर्व्वतः श्रुतिमँल्लोके
सर्व्वमावृत्य तिष्ठति ॥ १५ ॥ हिरण्यगर्भो भगवा नेष वुद्धि रिति
स्मृतः ॥ महानिति च योगेषु विरिञ्चिरिति वाप्यथ ॥ १६ ॥ सां
ख्यं च पठ्यते शास्त्रं नामभि र्वहुधात्मकः ॥ विचित्ररूपो विश्वा
त्मा एकाच्चर इति स्मृतः ॥ १७ ॥ धृत मेकात्मकं येन कृत्स्नं त्रैलो
क्यमात्मना ॥ तत्रैव वहुरूपात्मा विश्वरूप इति स्मृतः ॥ १८ ॥
एषवै विक्रिया यत्र सृज त्यात्मान मात्मना ॥ प्रधाना त्तस्य संयो

गा दुत्पन्नं सुमहत्परम् ॥ १९ ॥ अहंकारो महातेजा जात स्तत्र प्रजापतिः ॥ अव्यक्ताव्यक्त मापन्नं विद्यासर्गं वदन्ति तं ॥ २० ॥ महान्तं चाप्यहंकार मविद्यासर्गमेव च ॥ अचर श्च चर श्चैव सतूत्यत्यै तथैव च ॥ २१ ॥ विद्या विद्येति विख्याते श्रुतिशास्त्रानुचिन्तकैः ॥ भूतसर्ग महंकारं तृतीयं विद्धि वैकृतं ॥ अहंकारेषु नृपते चतुर्थां स्विद्धि वैकृतं ॥ २२ ॥ वायुं ज्योति रथाकाश मापोऽथ पृथिवी तथा ॥ शब्दस्पर्शं च रूपं च रसो गन्ध स्तथैव च ॥ २३ ॥ एवं युगप दुत्पन्नं दशसर्ग मसंशयं ॥ पंचमं विद्धि राजेन्द्र भौतिकं सर्ग मर्थवत् ॥ २४ ॥ श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमेव च पंचमः ॥ वाक् च हस्तौ च पादौ च पायुमेत त्तथैव च ॥ २५ ॥ बुद्धीन्द्रियाणि चैतानि तथा कर्मेन्द्रियाणि च ॥ संभूतानीह युगप न्मनसासह पार्थिव ॥ २६ ॥ एष तत्त्व चतुर्विंश त्सर्वाकृतिप्रवर्त्तते ॥ यं ज्ञात्वा नातिशोचन्ति ब्राह्मणा स्तत्त्वदर्शिनः ॥ २७ ॥ एवमेत त्समुत्पन्नं त्रैलोक्यमिद मुत्तमं ॥ वेदितव्यं नरश्रेष्ठ सदैव नरकार्णवे ॥ २८ ॥ सयक्षभूतगन्धर्व्वसकिन्नरमहोरगैः ॥ सचारणगणै श्चैव सर्व्वदेवनिशाचरैः ॥ २९ ॥ सदंशकीटमशक मपूतिकृमिमूषके ॥ शुनि श्वपाके चैणेये सचाण्डालेषु पुल्कसे ॥ ३० ॥ हस्त्यश्वखरथशार्दूले सवृके गवि चैवह ॥ याचमूर्त्तिस्तु यत्किञ्चि त्सर्व्वत्रैत न्निदर्शनं ॥ ३१ ॥ जले भुवि तथाकाशे नान्यत्रेति विनिश्चयः ॥ स्थानं देहवता मासीदित्येव मनुशुश्रुम ॥ ३२ ॥ कृत्स्न मेतावत स्तत्र परमव्यक्तसंज्ञकम् ॥

अहन्यहनि भूतात्मा तदक्षरमिति स्मृतम् ॥३३॥ एतदक्षरमित्युक्तं
क्षरतीदं यतो जगत् ॥ जगन्मोहात्मकं चाहु रव्यक्ताव्यक्तसंज्ञ
कं ॥३४॥ महांश्चैवाक्ष योनित्व मेतत्क्षरनिदर्शनं ॥ कथितं ते महा
राज यस्मा न्नावर्त्तते पुनः ॥ ३५ ॥ पञ्चविंशतिमा विष्णोर्मूर्त्तिं स्व
सत्त्वसंज्ञका ॥ सत्त्वसंश्रयणा त्तेजः सत्त्व माक्ष र्मनीषिणः ॥ ३६ ॥
पञ्चमूर्त्तिः सृजे द्व्यव्यक्तं तन्मूर्त्तिं मधितिष्ठति ॥ चतुर्विंशतिमो
व्यक्तो ह्यमूर्त्तः पञ्चविंशकः ॥३७॥ सएव हृदि सर्वासु मूर्त्तिष्वाति
ष्ठतात्मवान् ॥ चेतयं श्चेतनो नित्यं सर्व्वमूर्त्तौ रमूर्त्तिमान् ॥ ३८ ॥
सर्गप्रलयधर्मेण स सर्गप्रलयात्मकः ॥ गोचरे वर्त्तते नित्यं निर्गुणो
गुणसंज्ञितः ॥ ३९ ॥ एवमेव महात्मा च सर्गप्रलयकोटिशः ॥ वि
कुर्वाणः प्रकृतिमा न्नातिमन्येत वुद्धिमान् ॥ ४० ॥ तमःसत्त्वरजो
युक्त स्तासु तास्विह योनिषु ॥ लीयते प्रतिवुद्धित्वा दवुद्धजनसेव
नात् ॥ ४१ ॥ सहवासनिवासत्वा न्नान्योहमिति मन्यते ॥ योहं न
सोह मित्युक्तो गुणा नेवानुवर्त्तते ॥ ४२ ॥ तमसा तामसान् भावा
न्विविधान् प्रतिपद्यते ॥ रजसा राजसां श्चैव सात्त्विका न्सत्त्वसंश्र
यात् ॥ ४३ ॥ शुक्ललोहितकृष्णानि रूपाण्येतानि त्रीणितु ॥ सर्वा
ण्येतानि रूपाणि जानीहि प्राकृतानितु ॥ ४४ ॥ तामसा निरयंया
न्ति राजसा मानुषा स्तथा ॥ सात्त्विका देवलोकाय गच्छन्ति सुख
भागिनः ॥ ४५ ॥ स्वाकुष्मिकेन पापेन तिर्यग्योनि मवाप्नुयात् ॥ पुण्य
पापेषु मानुष्यं पुण्यमात्रेण देवताः ॥४६॥ एव मव्यक्तविषय म्मोक्ष

माहु र्मनीषिणः ॥ पञ्चविंशतियोगोऽयं ज्ञानादेव प्रवर्त्तते ॥ ४७॥

इत्यादि ब्रह्मपुराणे वशिष्टकरालजनकसम्वादे एकत्रिंशदुत्त रशततमोऽध्यायः ॥ १३१ ॥

—०—

वशिष्ट उवाच ॥ एव मप्रतिबुद्धित्वा द्बुद्धिमेव प्रवर्त्तते ॥ देहा देहसहस्राणि तथा च न स भिद्यते ॥ १ ॥ तिर्यग्योनिसहस्रेषु क दाचि द्देवनास्वपि ॥ उत्पद्यति च यो योगा द्गुणैः सह गुणचया त् ॥ २ ॥ मनुष्यत्वा द्दिवं यान्ति दिवो मानुष्यमेव च ॥ मनुष्या न्नि रयस्थान मालयं प्रतिपद्यते ॥ ३ ॥ कोशकारो यथात्मानं कीटः स मभितुन्वति ॥ सूत्रतन्तुगुणै र्नित्यं तथायं सगुणै र्गुणैः ॥ ४ ॥ द्व न्द्वमेति च निर्द्वन्द्व स्तासु तास्विह योनिषु ॥ शीर्षभागेऽचिरोगे च दन्तशूले गलग्रहे ॥ ५ ॥ जलोदरेऽतिसारीरे गण्डमालाविचर्चि के ॥ श्विचे कुष्टानिदग्ध ञ्च सिध्यापस्मारयो रपि ॥ ६ ॥ यानि चान्यानि द्वन्द्वानि प्राकृतानि शरीरिषु ॥ उत्पद्यन्ते विचित्राणि ता न्येवात्माभिगच्छति ॥ ७ ॥ अभिमानातिमानानां तथैव सुकृतान्य ति ॥ एकवासाश्च दुर्वासा शायी नित्य मध स्तथा ॥ ८ ॥ चीरवास नमाक्रोशं तथा शयन मेवच ॥ इष्टकाप्रस्तरे चैव चक्रे च प्रस्तरे तथा ॥ ९ ॥ भस्मप्रस्तरशायी च भूमिशय्याप्रलम्पनः ॥ वीरस्थान तु पाके च शयनं फलकेषु च ॥ १० ॥ विविधासु च शय्यासु फलै र्गृद्ध्यान्वितासु च ॥ उद्याने खलु लग्ने त्वक्चौमकृष्णाजिनानि

च ॥ ११ ॥ शालावालिपरीधाने व्याघ्रचर्मपरिच्छदः ॥ सिंहचर्मप
रीधानः पट्टवासा स्तथैव च ॥ १२ ॥ फलकं परिधान श्च तथा पद
कवस्त्रधृक् ॥ कटकावसन श्चैव चीरवासा स्तथैव च ॥ १३ ॥ वसना
नि विचित्राणि रत्नानि विविधानि च ॥ एकरात्रत्रराश्रित्व सेक
कालिकभोजनः ॥ १४ ॥ चतुर्थाष्टमकाल श्च षष्टकालिक एवच ॥
षष्टाह्नभोजन श्चैव तथैवाष्टाहभोजनः ॥ १५ ॥ मासोपवासी मूला
शी फलाहार स्तथैव च ॥ वायुभक्षोथ पिण्याक दधिगोमयभोज
नः ॥ १६ ॥ गोमूत्रभोजनै श्चैव तथा चात्मा नवर्त्तयन् ॥ शीर्णपत्रै
श्च पुष्पैश्च प्रकीर्णफलभोजनैः ॥१७॥ विविधानिच कृच्छ्राणि सेवते
सिद्धिकांक्षया ॥ चान्द्रायणानि विधिव ल्लिंगानि विविधानि
च ॥ १८ ॥ चतुराश्र म्य युक्तानि धर्माश्रयाश्रयाण्यपि ॥ उपाश्रयानप्यप
रानूपाखण्डविविधानपि ॥ १९ ॥ विविक्तां श्च शिलोंछाया स्तथा प्रश्रव
णानि च ॥ पुलिनानि विविक्तानि विविधानि वनानिच ॥२०॥ का
रणं यो विविक्त श्च शैलाना ञ्च गुहासु च ॥ नियमा न्विविधां चा
पि विविधानि तपांसि च ॥ २१ ॥ यज्ञांश्च विविधाकारान् विद्या श्च
विविधा स्तथा ॥ वणिक्पथद्विजक्षत्र वैश्यशूद्रास्तथैव च ॥ २२ ॥
दान ञ्च विविधाकारं दीनान्धकृपणादिषु ॥ अभिमन्यपसत्धातुं त
थैव विविधान् गुणान् ॥ २३ ॥ सत्त्वं रज तम श्चैव धर्मार्थौ काम
एव च ॥ सत्कृत्यात्मान मात्मावा एवं प्रविभजे त्पुनः ॥ २४ ॥ स्व
धाकारवषट्कारौ स्वाहाकार नमस्क्रिया ॥ यजनाध्ययने दानं त

थैवाङ्गः प्रतिग्रहम् ॥ २५ ॥ याजनाध्यापने चैव यच्चान्यदपि कि
ञ्चन ॥ जन्ममृत्युविवाहे च तथा विप्रप्रनेपि च ॥ २६ ॥ शुभाशुभ
मयं सर्व्व मेतदाहुः क्रिया स्तथा ॥ प्रकृतिः क्रियते देवि भयं प्रल
य मेवच ॥ २७ ॥ दिवसान्ते गुणा नेता नश्यत्येकोऽवशिष्ठते ॥ रश्मि
जाल मिवादित्ये यथाकालं नियच्छति ॥ २८ ॥ एव मेव सकृत्सर्वं
क्रीडार्थ मभिमन्यते ॥ आत्मरूपगुणा नेता न्विविधान् हृदयप्रिया
न् ॥ २९ ॥ एव मेतानि कुर्वाणः सर्गप्रलयधर्मिणां ॥ क्रियाः क्रिया
पथे रथैं स्त्रिगुणो त्रिगुणाधिपः ॥ ३० ॥ क्रियाः क्रिया यथा यत्त
स्तथा तदिति मन्यते ॥ प्रकृत्या सर्व्व मे वेदं जगदिदं विकृतं वि
भो ॥ ३१ ॥ रजसा तमसा चैव व्याप्तं सर्व्व मनेकधा ॥ एवं द्वंद्वान्य
तीतानि मम वर्त्तन्ति नित्यशः ॥ ३२ ॥ ममैवैतानि जायन्ते प्रलये
यान्ति मामपि ॥ निर्मूर्त्तव्यान्यथैतानि सर्वाणीति नराधिप ॥ ३३॥
मन्यतेयः सुबुद्धित्वा त्तथैव सुकृतान्यपि ॥ भोक्तव्यानि मयैतानि दे
वलोकगतेनवै ॥ ३४ ॥ इहैव चैव भोक्ष्यामि शुभाशुभफलोदयम् ॥
सुखमेव च कर्त्तव्यं सकृत्कृत्यासुखं मम ॥ ३५ ॥ यावदनन्तं मेसौख्यं
जात्या तत्रभविष्यति ॥ नमे दुःखं कृतेनेह तत्रचैवाप्यनन्तकं ॥ ३६॥
सर्व्वदुःखंहि मानुष्यं निरये चापि मज्जनं ॥ निरयाच्चापि मानुष्यं
काले यास्याम्यहं पुनः ॥ ३७ ॥ मनुष्यत्वाच्च देवत्वं देवत्वादनपौरु
षः ॥ मनुष्यत्वा द्यनित्यन्त त्तत्रैव परिवर्त्तते ॥ ३८ ॥ स्वर्गकोटिस
हस्राणि मरणां तासुमूर्त्तिषु ॥ यएवं कुरुतेकर्म्म शुभाशुभफलोत्सुकं ॥

सएव फल मश्नाति त्रिषु लोकेषु मूर्त्तिमान् ॥ ३९ ॥ प्रकृतिः कुरु
तेकर्म्म शुभाशुभफलात्मकं ॥ प्रकृतिश्च तथाश्नाति त्रिषुलोकेषु काम
गा ॥ ४० ॥ नयाभ्येनां मनुष्यत्वे देवलोके तथैवच ॥ नगानि त्रीणि
स्थानानि चैतानि प्राकृतानिह ॥ ४१ ॥ अलिंगप्रकृतित्वाच्च लिंगैर
प्यनुमीमहे ॥ तथैव पौरुषंलिंगं मद्मानाद्धि मन्यते ॥ ४२ ॥ सलि
ङ्गान्तरमासाद्य प्राकृतं लिङ्गमच्युतम् ॥ प्राणद्वाराण्यधिष्ठाय कर्म्मं
णात्मनि मन्यते ॥ ४३ ॥ श्रोत्रादीनितु सर्व्वाणि पञ्चकर्मेन्द्रियाण्य
थ ॥ रागादीनि प्रवर्त्तंते गुणेष्विह गुणैःसह ॥ ४४ ॥ अहमेतानि
वैकुर्व्वन् ममैतानीन्द्रियाणिच ॥ निरिन्द्रियोहि मन्येत प्राणवा न
स्मिनिर्व्रणः ॥४५॥ अलिङ्गो लिङ्गमात्मानं लिङ्गकालं महात्मनः॥
अस्त्वत्युं म्रत्युमात्मा च परश्च परमात्मनः ॥ ४६ ॥ अचेत्रः चेत्र मा
त्मान मसंगा त्सर्ग मात्मना ॥ आत्माय सर्व्व मात्मान मभवो भव
मात्मनः ॥ अचरं चर मात्मान मबुद्धि स्त्विह मन्यते ॥ ४७ ॥
वशिष्टउवाच ॥ एव मप्रतिबुद्धित्वा द्बुद्धजनसेवनात् ॥ स्वर्गकोटि
सहस्राणि मरणांतानि गच्छति ॥ ४८ ॥ तिर्य्यंग्योनि मनुष्यत्वे देव
लोके तथैवच ॥ चन्द्रमा इव कोशानां पुन स्तत्र सहस्रशः ॥ ४९ ॥
लीयते प्रतिबुद्धित्वा देवमेव कुबुद्धिमान् ॥ कलाप ञ्च दशयोनि
स्तद्धामइव पद्यते ॥ ५० ॥ नित्य मेत द्विजानीहि सोमस्वे षोडशीं
शकं ॥ कला कलापा जायन्ते जन्तूनान्तु पुनः पुनः ॥ ५१ ॥ बुद्धि
नाश कलाप ञ्च दशयान्तपसत्तम ॥ धाम तस्याभियुञ्जंति भूय एव

तु जायते ॥ ५२ ॥ षोडशीतु कला सूक्ष्मा सा सोमउपधीमंता ॥ नभूगो युज्यते देवै दैवा नुपयुनक्तिसा ॥ ५३ ॥ समत्वं चपयित्वा हि जायते नृपसत्तम ॥ प्रकृते स्त्रिगुणायास्तु सएवं चिगुणो भवेत् ॥५४॥

इतिब्रह्मपुराणे वशिष्टजनकराजकसम्वादे द्वात्रिंशदुत्तरशत तमोऽध्यायः ॥ १३२ ॥

—०—

जनकउवाच ॥ अचरचरयोरेव द्वयोः सम्बन्ध इष्यते ॥ स्त्री पुंसयो र्द्वयोर्वापि नसम्बन्धः सउच्यते ॥ १ ॥ ऋतेतु पुरुषं नेह स्त्री गर्भं धारये त्युनः ॥ ऋते स्त्रियं नपुरुषो रूपं निर्वर्त्तते तथा ॥ २ ॥ अन्योन्यस्याभिसम्बन्धा दन्योन्यगुणसंश्रयात् ॥ रूपं निर्वर्त्तये देत देवं सर्वासु योनिषु ॥ ३ ॥ गत्यर्था नभिसंयोगा दन्योन्यगुणसंश्र यात् ॥ ऋतौ निवर्त्तते रूपं तम्बच्यामि निदर्शनम् ॥ ४ ॥ येगुणाः पुरुषस्येह येच मातृगुणा स्तथा ॥ अस्थिस्ना युच मज्जानि जानीमः पितृतो गुणाः ॥ ५ ॥ त्वङ्मांसं शोणितं चापि मातृजान्यपि शुश्रु म ॥ एवमेत द्विजश्रेष्ठ वेदशास्त्रेषु पठ्यते ॥ ६ ॥ प्रमाणञ्च यदोक्त ञ्च शास्त्रोक्तं यच्च पठ्यते ॥ वेदशास्त्रप्रमाण ञ्च प्रमाणं तत्सनात नम् ॥ ७ ॥ एव मेवाभिसम्बन्धो नित्यं प्रकृतिपौरुषे ॥ यच्चापि भग वंस्तस्मा न्मोच धर्म्मो नविद्यते ॥ ८ ॥ अथवा नन्तरं कञ्चि त्किञ्चि देव निदर्शनं ॥ तन्ममाचच्व तत्त्वेन प्रत्यचोह्यसि सर्व्वदा ॥ ९ ॥ मोचकामा वय ञ्चापि कांचामो यदनामयं ॥ अजेय मजरं नित्य

मतीन्द्रिय मनीश्वरम् ॥ १० ॥ वशिष्ट उवाच ॥ यदेतदुक्तं भवता वेदशास्त्रनिदर्शनं ॥ एवमेत यथा पक्षे तत्त्वग्राही यथा भवान् ॥ ११॥ धार्यतेहि त्वया ग्रन्थ उभयो र्वेदशास्त्रयोः ॥ भव ग्रन्थस्य तत्त्वज्ञो यथा तत्त्वं नरेश्वर ॥ १२ ॥ येऽपि वेदे च शास्त्रे च ग्रन्थधारणत त्पराः ॥ नच ग्रन्थार्थतत्त्वज्ञा स्तेषां तद्धारणं वृथा ॥ १३ ॥ भारं सवहते तस्य ग्रन्थस्यार्थं नवेत्ति यः ॥ यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्र न्थागमो वृथा ॥ १४ ॥ ग्रन्थस्यार्थं यथाएष्ट स्तादृशो वक्तुमर्हति ॥ यथातत्त्वाभिगमनो वृत्तंतस्य नविन्दति ॥ १५ ॥ नयः समुत्सुकः क श्चि द्ग्रन्थार्थं स्थूलवुद्धिमान् ॥ स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात् ॥ १६ ॥ अज्ञानत्वा द्ग्रन्थतत्त्वं व्याख्यां यः कुरुते नरः ॥ लोभाद्वा अथवा दम्भा त्सपापी निरयं व्रजेत् ॥ १७ ॥ निर्णयञ्चा पिछिद्रात्मा नित्यं द्रक्ष्यति तत्त्वतः ॥ सोपीहास्यार्थतत्त्वज्ञो यास्या न्नेशात्मवानपि ॥ १८ ॥ तस्मा त्त्वं शृणु राजेन्द्र यथैत दनुदृश्यते ॥ याथातथ्येन सांख्येषु योगेषु च महात्मसु ॥ १९ ॥ यदेव योगाः प श्यन्ति सांख्ये तदनुगम्यते ॥ एकं सांख्य ञ्च योगञ्च यः पश्यति स वुद्धिमान् ॥ २० ॥ त्वङ्मांसं रुधिरं मेदपित्तमज्जास्थिस्नायुषु ॥ ए तदैन्द्रियकं नाम यद्भवा नित्य मात्थमां ॥ २१ ॥ द्रव्याद्रव्यस्य नि र्वृत्ति रिन्द्रिया दिन्द्रिय स्तथा ॥ देहा द्देह मवाप्नोति वीजा द्वी जं तथैवच ॥ २२ ॥ निरिन्द्रियस्य वीजस्य निर्द्रव्यस्यापि देहिनः ॥ कथं गुणा भविष्यन्ति निर्गुणत्वा न्महात्मनः ॥ २३ ॥ गुणा गुणेषु

जायन्ते तत्रैव विरमन्ति च ॥ एवं गुणाः प्रकृतिनो जायन्ते च नस्व स्थिरः ॥ २४ ॥ त्वङ्मांसरुधिरं तेजः पित्तमज्जास्थिस्नायुषु ॥ अष्टौ तान्यभिशुक्रेण जानीहि प्राकृतेनवै ॥ २५ ॥ पुमां स्त्रैवा पुमां स्चैव स्त्रीलिङ्गं प्राकृतं शुभं ॥ नैवापुमां पुमां स्चैव सच इत्यभिधीयते ॥ २६ ॥ आलिङ्गा प्रकृति र्लिङ्गै रुपलभ्यति सात्मजैः ॥ यथा पुष्पफलै र्नीता प्रकृतिः प्रसवात्मिका ॥ २७ ॥ तत्र क्षेत्रं महानात्मा पञ्चविंशोऽवतिष्ठति ॥ अधिष्ठानेति राजेन्द्र प्रोच्यते यतिसत्तमैः ॥ २८॥ अधिष्ठाना दधिष्ठानं क्षेत्राणामिति नःश्रुतं ॥ क्षेत्रं जानाति चाव्यक्तं ज्ञेयोवै पञ्चविंशकः ॥ २९ ॥ अव्यक्तिके पुरे शेते पुरुष स्चेति कथ्यते ॥ अन्यदेव च क्षेत्रं स्या दन्यः क्षेत्रज्ञ उच्यते ॥ ३० ॥ क्षेत्र मव्यक्त मित्युक्तं ज्ञातारं पञ्चविंशकं ॥ अन्यदेव च ज्ञानंस्या दन्यद्ज्ञेयं तदुच्यते ॥ ३१ ॥ ज्ञान मव्यक्त मित्युक्तं तथासंघ स्तथैश्वरं ॥ अनीश्वरमतत्त्वञ्च तत्त्वमेकविंशकं ॥ ३२॥ संख्यां प्रकुरुते चैव प्रकृतिञ्च प्रवक्ष्यते ॥ चत्वारिंश चतुर्विंश त्प्रतिसंख्याय तत्त्वतः ॥ ३३ ॥ संख्यासहस्रं प्रकृत्या निस्तत्त्वं पञ्चविंशकः ॥ पञ्चविंश प्रवुद्धात्मा वुद्ध्यमान इति स्मृतः ॥ ३४ ॥ यदा वुद्ध्यति चात्मानं तदा भवति केवलः ॥ सम्यो दर्शन मेताव द्वाषितन्तव तत्त्वतः ॥ ३५ ॥ एवमेत द्विजानन्तः साम्यतां प्रतियान्त्युत ॥ सम्यग्निदर्शनं ताव त्प्रत्यचं प्रकृते स्तथा ॥ ३६ ॥ गणवत्त्वा यथैतानि निर्गुणेभ्य स्तथा भवेत् ॥ तत्त्वे च वर्त्तमानाय माद्दति र्वर्त्तते

पुनः ॥ ३७ ॥ विद्यते चरभावत्व मपरस्पर मव्ययम् ॥ पश्यकं मत
यो येन नसम्य क्तेषु दर्शनं ॥ ३८ ॥ तेव्यक्तिं प्रतिपद्यन्ते पुनः पुन
ररिन्दम ॥ सर्व्वमेत द्विजानीते भवा न्सर्व्वप्रवोधनात् ॥ ३९ ॥
व्यक्तीभूताः प्रविश्यन्ति व्यक्तस्यैवानुवर्त्तनात् ॥ सर्व्व मव्यक्त मित्यु
क्तं ससर्वं पञ्चविंशकं ॥ यएव मभिजानन्ते नभयं तेषु विद्यते ॥ ४० ॥

इति ब्रह्मपुराणे वशिष्ठकरालजनकसम्बादे त्रयस्त्रिंशदुत्तर
शततमोऽध्यायः ॥ १३३ ॥

—०—

वशिष्ट उवाच ॥ सांख्यदर्शन मेताव दुक्तं ते न्रृपसत्तम ॥ वि
द्यां वेद्यं त्विदानीं च त्वन्निवोधानुपूर्व्वशः ॥ १ ॥ अभेद्यमाहु रव्य
क्तं सर्गः प्रलयधर्म्मिणः ॥ सर्गप्रलय इत्युक्तं विद्या वेद्येन विंश
कः ॥ २ ॥ परस्परस्य विद्यास्वै त्वं निवोधानुपूर्व्वशः ॥ यथोक्त मृ
षिभि स्तात सांख्यस्याभिनिवेदनं ॥ ३ ॥ कर्मेन्द्रियाणां सर्वेषां विद्या
द्वुत्यभिधीयते ॥ अहंकारस्तु भूतानां पञ्चानां नात्र संशयः ॥ ४ ॥
अहंकार स्तथा विद्या वुद्धिर्व्याख्या निरीश्वरः ॥ सवुद्ध्या व्यक्ति र
व्यक्तं तत्त्वानां परमेश्वरं ॥ ५ ॥ विद्या ज्ञेया नरश्रेष्ट विधि स्स प
रमः स्मृतः ॥ अव्यक्तस्य परं प्राहु र्विद्यावै पञ्चविंशकं ॥ ६ ॥ स
र्व्वस्य सर्व्व मित्युक्तं ज्ञेयं ज्ञानस्य पारगः ॥ ज्ञान मव्यक्त मित्युक्तं
ज्ञेयस्वै पञ्चविंशकं ॥ ७ ॥ तथैव ज्ञान मित्युक्तं विज्ञाता पञ्चविं
शकः ॥ विद्या विद्येतु तत्त्वेन मयोक्तेवै विशेषतः ॥ ८ ॥ अक्षर ञ्चैव

यंयुक्तं तदुक्तं तन्निबोध मे ॥ उभावेतौ चरावुक्ता वुभावेतावनच
रौ ॥ ९ ॥ कारणन्तु प्रवक्ष्यामि यथा विज्ञानज्ञानतः ॥ अनादि
निधनावेतौ तावुभावीश्वरौ मतौ ॥ १० ॥ तत्त्वसंज्ञा वुभावेव प्रो
च्यते ज्ञानचिन्तकैः ॥ सर्गप्रलयधर्मित्वा दव्यक्तं प्राहु रव्ययं ॥ ११ ॥
तदेत द्गुणसंगाय विकुर्वाणं पुनः पुनः ॥ गुणानां महदादीना मु
त्पद्यन्ति परस्परं ॥ १२ ॥ अधिष्ठानक्षेत्रमाहु रेतद्वै पञ्चविंशकं ॥
यदन्त र्गुणजातन्तु तद्व्यक्तात्मनि निक्षिपेत् ॥ १२ ॥ तदाहतद्गुणै स्तै
स्तु पंचविंशे विलीयते ॥ गुणा गुणेषु लीयन्ते तदेका प्रकृति र्भ
वेत् ॥ १३ ॥ क्षेत्रज्ञोपि तदा ताव त्क्षेत्रज्ञा तं परिक्षयेत् ॥ प्रकृ
त्या निर्गुण स्त्वेष इत्येवमनुशुश्रुम ॥ १४ ॥ चरो भवत्येष यदा गु
णवन्तो गुणेष्वथ ॥ प्रकृति स्त्वथ जानाति निर्गुणत्वं तथात्मनः ॥ १५ ॥
तथाभिशुद्धो भवति प्रकृतेः परिवर्ज्जनात् ॥ अन्योह मन्येय मिति
यदा वुद्ध्यति वुद्धिमान् ॥ १६ ॥ तदेषो व्यगता मेति नच मिश्रत्व
माचरेत् ॥ प्रकृत्या चैन्द्रजालस्वै मिथ्यान्येषु स दृश्यते ॥ १७ ॥ त
दातु गुणजालं त त्प्राकृतंहि जुगुप्सते ॥ पश्यते च वरं पश्यं तद
पश्यं च संसृजेत् ॥ १८ ॥ किं मया कृतमेताव द्योहंकार मिम ज्ज
नः ॥ यथा मत्स्यो प्रविज्ञाना दनुवर्त्तित वाञ्जले ॥ १९ ॥ अह मे
वहि सम्मोहा दन्यमन्यं जनं तथा ॥ मत्स्यो यथोदकाज्ञाना दनुव
र्त्तितवानिह ॥ २० ॥ मत्स्यो मत्वा मयाज्ञाना दुदकानाभिमन्यते ॥
आत्मानं तदवज्ञाना दन्यत्वं चैव वेद्म्यहं ॥ २१ ॥ मम त्वं

धिगबुद्धस्य योऽह मद्यइमं पुनः ॥ अनुवर्त्तिं भवान्मोहा दन्यसन्यं
जनाजनं ॥ २२ ॥ अयमत्र भवे देवं दुरानतसहचरं ॥ साध्यमेव
त्वया जातो यादृश स्तादृश स्त्विह ॥ २३ ॥ तुल्यता मिह पश्या
मि सदृशो महतेनवै ॥ अहं प्रकृतयो व्यक्त मह मीदृशक स्तथा ॥ २४॥
योऽह मज्ञानसंमोहा दज्ञाना त्वंप्रवर्त्तवान् ॥ ससर्गानिह संसर्गं स्थि
तकालमिमं त्विह ॥ २५ ॥ सोऽह मेवं वर्षभूतं काल मेतं न बुद्धि
वान् ॥ मध्यमोत्तमहीनाना महं कथमथास्तसे ॥ २६ ॥ समानया
मया चैव सहवास महं कथं ॥ गच्छाम्यबुद्धभावत्वा दस्त्विदानीं
स्थिरो भव ॥ २७ ॥ सहवासं नयास्यामि कालमेतद्धि वंचनात् ॥
वंचितो ह्यनया विद्धि निर्विकारो विकारया ॥ २८ ॥ नतावदप
राधोयं ह्यपराधः स्वयं नमे ॥ योऽह मन्यभयं यक्तां पराङ्मुख स्तु
पस्थितः ॥ २९ ॥ ततोस्य बहुरूपोयं स्थितो मूर्त्तिषु मूर्त्तिमान् ॥
अमूर्त्ति श्चापि मूर्त्तात्मा ममत्वेन प्रधर्षितः ॥ ३० ॥ प्रकृत्या च त
या तेन तासु तास्विह योनिषु ॥ निर्ममस्य ममत्वेन विकृतं तासु
तासु च ॥ ३१ ॥ योनिषु वर्त्तमानेन नष्टसंज्ञेन चेतसः ॥ समता
नमया काचि दहंकारि कृता मया ॥ ३२ ॥ आत्मानं बहुधा कृत्वा
सेयं भूयो युनक्ति मां ॥ तदिदानी मबुद्धोस्मि निर्ममो निरहंकृ
तः ॥ ३३ ॥ ममत्वं मनसा नित्य महंकारकृतात्मनां ॥ अयनेऽस्मि
निमां हित्वा संश्रयिष्ये निरामयम् ॥ ३४ ॥ अनेन साम्यं यास्यामि
नानयाह मचेतसा ॥ क्षेमं मम सहानेन नैक त्व मनयारुह ॥ ३५॥

एव म्परमसम्बोधा त्पंचविंशोनुबुद्धवान् ॥ अक्षरत्व न्निगच्छेति त्यक्त्वाक्षर मनामयम् ॥ ३६ ॥ अव्यक्तं व्यक्तधर्माणं सगुणं निर्गुणं गता ॥ निर्गुणं प्रथमं दृष्ट्वा तादृग्भवति मैथिल ॥ ३७ ॥ अक्षरक्षरयो रेतदुक्तं तवनिदर्शनं ॥ मयेह ज्ञानसम्पन्नं यथा श्रुतिनिदर्शनात् ॥ ३८ ॥ निःसंदिग्धं च सूक्ष्मं च विशुद्धं विमलं तथा ॥ प्रवक्ष्यामितु देहप स्तन्निबोध यथाश्रुतं ॥ ३९ ॥ सांख्ययोगौ मया प्रोक्तः शास्त्रद्वयनिदर्शनात् ॥ यदेव सांख्यशास्त्रोक्तं योगदर्शन मेव तत् ॥ ४० ॥ प्रबोधनपरं ज्ञानं सांख्याना मवनीपते ॥ विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया ॥ ४१ ॥ बृहच्चैव मिदं शास्त्र मित्याहु र्विदुषो जनाः ॥ अस्मिंश्च शास्त्रयोगानां पुन र्दधे पुरः सरम् ॥४२॥ पंचविंशा त्परं तत्त्वं पठ्यते यो नराधिप॥ सांख्यानान्तु परं तत्र यथा वदनुवर्णितं ॥ बुद्ध मप्रतिबुद्धत्वं प्राज्ञ योगनिदर्शनम् ॥ ४३ ॥

इति ब्रह्मपुराणे वशिष्ठकरालजनकसम्वादे चतुस्त्रिंशदुत्तर शततमोऽध्यायः ॥ १३४ ॥

—०—

वशिष्ठ उवाच ॥ अप्रबुद्ध मथाव्यक्त मिमं गुणनिधिं सदा ॥ गुणानां धार्यतां तत्त्वं सृजत्याक्षिपते तथा ॥ १ ॥ अजस्रं त्विह क्रीडार्थं विकुर्वंति जनाधिप॥ आत्मानं बहुधा कृत्वा तान्येव प्रतिपद्यते ॥ २ ॥ एतदेवं विकुर्वाणो बुद्ध्यमानं नबुद्ध्यसे ॥ गुणान्

वाचरत्ताच्चेष सृजत्याचिपते तथा ॥ ३ ॥ अव्यक्तवोधना च्चैव वुध्य
मानं वदत्यपि ॥ नत्वेव वुध्यते व्यक्तं सगुणं नच निर्गुणं ॥ ४ ॥ त
दाविष्टच्च यद्बुद्ध्ये त्तदाहुः प्रतिवुद्धकं ॥ वुद्ध्यते यदि वाव्यक्त मेतद्वै
पञ्चविंशकं ॥ ५ ॥ वुद्धिमानो भवत्येव ममात्मक इति श्रुतिः ॥ अ
न्योन्यं प्रतिवुद्ध्येत वदत्यव्यक्त मच्युतम् ॥ ६ ॥ अव्यक्तवोधना च्चैव
वुद्धिमानं वदत्वितः ॥ पञ्चविंशं महात्मान मात्मानमपि वुद्ध्यते ॥७॥
षड्विंशं निर्मलं वुद्ध मप्रमेयं सनातनं ॥ सततं पञ्चविंशेतु चतुर्वि
शञ्च वुद्ध्यते ॥ ८ ॥ दृश्यादृश्यं ह्यनुगत मुभावेव महाद्युते ॥ अव्य
क्तञ्चैव तद्ब्रह्म वुद्ध्यते भावकेवलं ॥ ९ ॥ पञ्चविंशं चतुर्विंश मात्मा
न मनुपश्यति ॥ वुद्ध्यमानो यदात्मान मन्योन्य मतिमन्यते ॥ १० ॥
तदा प्रकृतिवानेष भवत्यव्यक्तलोचनः ॥ वुद्ध्यतेच परां वुद्धि मशुद्धा
ममलो यथा ॥ ११ ॥ षड्विंशं राजशार्दूल तदा वुद्धः कृतो व्रजेत् ॥
तत स्त्यजति सोव्यक्तं सर्गप्रलयधर्म्मिणं ॥ १२ ॥ निर्गुणांप्रकृतिं वेद
गुणयुक्ता मचेतनां ॥ ततः केवलधर्म्मोऽसौ भवत्यव्यक्तदर्शनात् ॥१३॥
केवलेन समागम्य विमुक्तात्मान माप्नुयात् ॥ एवन्तु तत्त्व मित्याहु
र्निस्तत्त्व मजरामरं ॥ १४ ॥ तत्त्वसंश्रवणादेत त्तत्त्वं भुवञ्च मान
द ॥ पञ्चविंशतितत्त्वेन प्रवदन्ति मनीषिणः ॥ १५ ॥ न चव तत्त्व
वांस्तात निरत स्तत्त्व वुद्धिमान् ॥ एकत्व ञ्चैव किन्तस्य वुद्धातु ध्या
नवुद्ध्यनः ॥ १६ ॥ वुद्धमानो वुधेनत्वं ममतां यासि मैथिल ॥ सङ्ग
धर्म्मा ह्यवत्येष निःसङ्गात्मा नराधिप ॥ १७ ॥ निःसङ्गात्मान मा

साद्य षड्विंशः कर्मजं विदुः ॥ विमु स्त्यजति चाव्यक्तं यदा त्वेतद्वि
बुद्ध्यते ॥ १८ ॥ चतुर्विंश मगाधञ्च षड्विंशं तस्य बोधनात् ॥ एवं ह्य
प्रतिबुद्धस्य बुद्ध्यमानस्य तेऽनघ ॥ १९ ॥ प्रोक्तो बुद्धस्य तत्त्वेन यथा
श्रुतिनिदर्शनात् ॥ मशकोदुम्बरे यद्व दन्यत्वं तस्य मेतयोः ॥ २० ॥
मत्स्योदके यथा तस्य मन्यत्व मुपलभ्यते ॥ एवमेव च मन्तव्यं नाना
त्वैकत्व मेतयोः ॥ २१ ॥ एताव न्मोक्ष इत्युक्तं ज्ञानसंज्ञितचेतसः ॥
पञ्चविंशति कस्याशु योयं देहेषु वर्त्तते ॥ २२ ॥ एष मोचयितव्येति
प्राहु रव्यक्तगोचरात् ॥ सोऽय मेवं विमुच्येत नान्यथेति विनिश्च
यः ॥ २३ ॥ परस्य परधर्म्मा च भवत्येष समेत्यवै ॥ विशुद्धधर्म्मा शु
द्धेन नाशुद्धेन च बुद्धिमान् ॥ २४ ॥ विमुक्तधर्म्मा बुद्धेन समेत्य पुरु
षर्षभ ॥ वियोगधर्म्मिणा चैव विमुक्तात्मान तेन्यथा ॥ २५ ॥ विमो
क्षणोऽपि मोक्षस्य समेत्येह तथा भवेत् ॥ शुचिकर्म्मा शुचि श्चैव भव
त्यमितदीप्तिमान् ॥ २६ ॥ विमलात्मा तथा चैव केवलेन समेत्यवै ॥
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्व मवाप्यते ॥ २७ ॥ एतावदेत त्कथितं
मया ते तथ्यं महाराज यथार्थतत्त्वं ॥ अमत्सर स्त्वं परिगृह्य चार्थं
सनातनं ब्रह्मविशुद्ध माद्यं ॥ २८ ॥ नावेदनिष्ठस्य जनस्य राजन् प्र
देयमेत त्परमत्वया भवेत् ॥ विधित्समानाय विबोधनाय प्रबोधहेतोः
प्रणतस्य शासनं ॥ २९ ॥ नदेयमेत च्च तथा नृषात्मने शठाय क्ली
वाय न जिह्मबुद्धये ॥ न पण्डितज्ञानपरोपतापिने देयन्तु देयन्तु
विबोधनाय ॥ ३० ॥ शुद्धान्विनायाथ गुणान्विताय परापवादा

ह्रिरताय नित्यं॥ विशुद्धयोगाय वुधाय चैव चमावतेऽप्यच्च निशोहिता
य॥२१॥ विविक्तशीलाय विधिप्रियाय विवादहीनाय वहुश्रुताय॥
विनीतवेशाय नहेतुकात्मने सदैव गुह्यं त्विदमेव देयम्॥२२॥ ए
ते गुणै र्हीनतमेन देयं ततः परं ब्रह्मविशुद्ध माहुः॥ न श्रेयसे सो
च्यत्ता दृशैकृतं धर्म्मेषु वक्तार मपात्रदानात्॥२३॥ पृथ्वी मिमां
वायदि रत्नपूर्णां दद्या ददेयं त्विद मव्रताय॥ जितेन्द्रियायै तद
संयते भवे त्प्रदेयमेत त्परमं नरेन्द्र॥२४॥ करालमाते भयमस्तु
किञ्चि देत च्छ्रुतं ब्रह्मपरं त्वयाद्य॥ यथावदुक्तं परमं विचित्रं वि
शोकमत्यन्त मनादिमध्यं॥२५॥ अनाद्य मेत दजरामरं य न्निरा
मयं वीतभयं शिवञ्च॥ समीक्ष्य मोहं त्यज वादसंज्ञ मेतस्य तत्त्वा
र्थमिमं विदित्वा॥२६॥ अवाप्त मेतद्धि पुरा सनातना द्धिरण्यग
र्भाद्धि ततो नराधिप॥ प्रसाद्य यत्नेन तमुग्रतेजसं सनातनं ब्रह्म य
थाद्यवै त्वया॥२७॥ पृष्टस्त्वया चास्मि यथा नरेन्द्र यथा मयेयं
त्वयि नोक्त मन्यते॥ तथावाप्तं ब्रह्मणो मे नरेन्द्र महाज्ञानं मोक्ष
विदां परायणं॥२८॥ व्यासउवाच॥ एतदुक्तं परं ब्रह्म यस्मा न्ना
वर्त्तते पुनः॥ पञ्चविंशो मुनिश्रेष्ठा वशिष्ठेन यथा पुरा॥२९॥ पु
रावृत्ति माप्नोति परमं ज्ञान मव्ययं॥ ततो वुद्धत्वति तत्त्वेन वुद्धत्व
मानोऽजरामरं॥४०॥ एत न्निःश्रेयसकरं ज्ञानम्बा परमं मया॥
कथितं तत्त्वतो विप्राः श्रुत्वा देवर्षितो द्विजाः॥४१॥ हिरण्यग
र्भा दृषिणा वशिष्ठेन महात्मना॥ वशिष्ठा दृषिशार्दूलो नारदोऽवा

प्रवानिदं ॥४२॥ नारदादुदितं मह्य मेतदुक्तं सनातनं ॥ माशुचध्वं मुनिश्रेष्टाः श्रुत्वैत त्परमं पदम् ॥ ४३ ॥ येनाचरचरे भिन्ने भयं तस्य नविद्यते ॥ विद्यतेतु भयं तस्य योनैनं वेत्ति तत्त्वतः ॥ ४४ ॥ अविज्ञानविमूढात्मा पुनः पुनरुपद्रवान् ॥ प्रेत्य जातिसहस्रेण मरणान्तान्युपाश्नुते ॥ ४५ ॥ देवलोकं तथा तिर्यङ् मानुष्यमपि चाश्नुते ॥ यदि वा मुच्यते वापि तस्मादज्ञानसागरात् ॥ ४६ ॥ अज्ञानसागरे घोरे ह्यव्यक्तामय उच्यते ॥ अहन्यहनि मज्जन्ति यत्र भूतानि भो द्विजाः ॥ ४७ ॥ यस्मा दगाधा दव्यक्ता दवतीर्णाः सनातनात् ॥ तस्मा यूयं विरजसो मितभचाश्च भोद्विजाः ॥ ४८ ॥ एवं मया मुनिश्रेष्टाः सारा त्सारतरं परं ॥ कथितं परमं मोचं यंज्ञात्वा ननिवर्त्तते ॥ ४९ ॥ ननास्तिकाय दातव्यं नाभक्ताय कदाचन ॥ न दुष्टविप्रियमते न श्रद्धाविमुखायवा ॥ ५० ॥

इति ब्राह्मे पुराणे वशिष्टकरालजनकसम्वादे पञ्चत्रिंशदुत्तरशततमोऽध्यायः ॥ १३५

—०—

लोमहर्षण उवाच ॥ एवं पुरा मुनि व्यासः पुराणं श्लक्ष्णया गिरा ॥ दशाष्टदोषरहितं वाक्यैः सारतरै र्द्विजाः ॥ १ ॥ पूर्णं गंतमलैः शुद्धै र्नानाशास्त्रसमुच्चयैः ॥ अतिशुद्धसमायुक्तं सांख्यशब्दोपशोभितं ॥ २ ॥ पूर्णपचोक्तिसिद्धान्त परिनिष्टासमन्वितं ॥ श्रोचयित्वा यथान्यायं विरराम महामतिः ॥ ३ ॥ तेपि श्रुत्वा मुनिवराः

पुराणं वेदसम्मितम् ॥ आद्यं ब्रह्मनिधान ञ्च सर्व्ववाञ्छाफलप्रद
म् ॥ ४ ॥ तुष्टा वभूवुः सुप्रीता विस्मिताश्च पुनःपुनः ॥ प्रशशंसु स्त
दा व्यासं हृष्टरोमा स्तदाब्रुवन् ॥ ५ ॥ मुनय ऊचुः ॥ अहो त्वया
मुनिश्रेष्ठ पुराणं श्रुतिसम्मितं ॥ सर्वाभिप्रेतफलदं सर्व्वपापहरं प
रम् ॥ ६ ॥ प्रोक्तं तथा श्रुतो स्माभि र्विचित्रपद मक्षरं ॥ न तेस्त्य
विदितं किञ्चि द्विद्यास्थानेषु सर्व्वसु ॥ ७ ॥ सर्व्वज्ञस्त्वं महाभाग
देवेष्विव बृहस्पतिः ॥ नम स्यामो महाप्राज्ञं ब्रह्म ज्ञात्वा महामु
निम् ॥ ८ ॥ येन त्वयानुवेदार्था भारते प्रकटी कृताः ॥ कः शक्नोति
गुणा न्वक्तुं तव चात्र महामुने ॥ ९ ॥ अधीत्य चतुरो वेदा न्सांगा
न्व्याकरणानि च ॥ कृतं हि भारतं येन तस्मै ज्ञानात्मने नमः ॥१०॥
नमोस्तु ते व्यास विशालबुद्धे फुल्लारविन्दायतपत्रनेत्र ॥ येन त्वया
भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः ॥ ११ ॥ अज्ञानतिमि
रान्धस्य नान्तर्ज्ञानं कुदृष्टिभिः ॥ ज्ञानाञ्जनशलाकाभि स्त्वया चो
न्मीलिताहृशः ॥ १२ ॥ एवमुक्त्वा समभ्यर्च्य व्यासं तेनैव पूजिताः ॥
जग्मु र्यथागताः सर्वे कृतकृत्याः स्वमाश्रयं ॥ १३ ॥ तथा मया मुनि
श्रेष्ठाः कथितं हि सनातनं ॥ यथा भवद्भिः पृष्टोऽहं संप्रश्नं द्विजस
त्तमाः ॥ व्यासप्रसादा त्तत्सर्वं मया तत्परिकीर्त्तितं ॥ १४ ॥ इदं गृ
हस्थैः श्रोतव्यं यतिभि र्ब्रह्मचारिभिः ॥ धारणीयं हि यत्नेन सर्व्वपा
पप्रणाशनं ॥ १५ ॥ तथा धर्मपरै र्व्रात्यै र्ब्राह्मणाद्यैः सुसंयतैः ॥
श्रोतव्यं सुप्रयत्नेन सम्यक् श्रेयोभिकांक्षिभिः ॥ १६ ॥ प्राप्नोति ब्राह्म

णो विद्यां क्षत्रियो विजयी रणे ॥ वैश्यस्तु धनमक्षय्यं शूद्रः सुख मवाप्नुयात् ॥ १७ ॥ यंयं काममभिध्यायन् शृणोति पुरुषः सदा ॥ तंतं काम मवाप्नोति नरो नास्त्यत्र संशयः ॥ १८ ॥ पुराणं वैष्ण वंत्वेत त्सर्वः किल्बिषनाशनं ॥ विशिष्टं सर्व्वशास्त्रेषु पुरुषार्थोपपाद कम् ॥ १९ ॥ एतद्वरेयं मया ख्यातं पुराणं वेदसम्मितं ॥ श्रुतेस्मि न्सर्व्वदोषार्थः पापराशिः प्रणश्यति ॥ २० ॥ प्रयागे पुष्करे चैव कु रुक्षेत्रे तथापरे ॥ उपोष्य यदवाप्नोति तदस्य श्रवणा द्विजाः ॥ २१ ॥ यदग्निहोत्रे सुहुते वर्षेणाप्नोति वैफलं ॥ महापुण्यमयं विप्रा स्तद स्य श्रवणा त्सकृत् ॥ २२ ॥ प्रौष्ठपद्या न्तु द्वादश्यां स्नात्वावै यमुना जले ॥ मथुरायां हरिं दृष्ट्वा प्राप्नोति विपुलं फलं ॥ २३ ॥ तथाप्नो ति फलं सम्य क्समाधानेन कीर्त्तनात् ॥ पुराणस्यहि गोविप्राः केश वार्पितमानसः ॥ २४ ॥ यत्फलं क्रियमाणस्य पुरुषोऽय लभेन्नरः ॥ तत्फलं समवाप्नोति यः पठे च्छृणुया दपि ॥ २५ ॥ इदं यः श्रद्धया नित्यं पुराण ंवेदसम्मितं ॥ यः पठे च्छृणुया न्मर्त्यः स याति भ वनं हरेः ॥ २६ ॥ श्रावये द्ब्राह्मणो यस्तु सदा पर्व्वसु संयतः ॥ ए कादश्या न्तु द्वादश्यां विष्णुलोकं स गच्छति ॥ २७ ॥ इदं यशस्य मायुष्यं सुखदं कीर्त्तिवर्द्धनं ॥ वलपुष्टिप्रदं विप्रा धन्यं दुःस्वप्ननाश नम् ॥ २८ ॥ त्रिसंध्यंयः पठेद्विद्वान् श्रद्धया सुसमाहितः ॥ इदं विशिष्ट माख्यानं ससर्व्व मीप्सितं लभेत् ॥ २९ ॥ रोगार्त्तो मुच्यते रोगाद्बद्धोमुच्ये त वन्धनात् ॥ भयाद्विमुच्यतेभीत श्चोरान्मुच्ये न्मह

